अनन्तश्रीविभूषितजगद्गुरुशङ्कराचार्याणां मठाम्नायोपनिषद्वर्णितसुप्रसिद्ध-
काशीस्थोर्ध्वाम्नायसुमेरुपीठाधीश्वराणाम्

## स्वामिश्रीमहेश्वरानन्दसरस्वतीमहाभागानाम्

### शुभाशीर्वचांसि

( १ )

श्रीशङ्कराचार्यजगद्गुरूणाम्, विश्वोच्चसिंहासनसंश्रितानाम् ।
अद्वैतसिद्धान्तमतप्रतिष्ठा, तत्पूर्वकाले प्रबभूव नो वा ॥

( २ )

प्राच्यप्रतीच्योत्तरशेमुषीका विमर्शकाः सन्दिहतेऽत्र भूयः ।
तायागतेभ्यः सुगृहीत एष विज्ञानमार्गं क्षुरन्धरेभ्यः ॥

( ३ )

ईशाद्वितीये शतके यतोऽमून्नागार्जुनः सौगतसेविताङ्घ्रिः ।
तत्कारिकाश्चात्र समुल्लसन्ति, विज्ञानमार्गोज्ज्वलजागरूकाः ॥

( ४ )

श्रुतिप्रवाहे तु ततोऽपि पूर्वम्, महत्तरः स्थापित एष मार्गः ।
श्रीनासदीयादिविविक्तसूक्ते, विवेचितो गर्जति भूरिभूति ॥

( ५ )

शुभंयुना श्रीमुरलीधरेण, विद्वद्वरेण्येन तलार्थदृष्ट्या ।
स्वीयेऽनुसन्धानभरे निबन्धे, विवेचनैषा रचिता निगूढा ॥

( ६ )

शङ्का. समाधाननयुः समग्राः, सिद्धान्तनिर्भ्रान्तिविदीप्तिरैन्धि ।
तर्का. प्रमाणान्यधियुक्तयश्च, सत्यावता सन्निहितं प्रचक्रे ॥

( ७ )

श्रुतो मयाऽयं बहुशो निबन्धः, गुणाशिषा संस्फुरितोऽद्वितीयः ।
विरोचमानो विदुषां समाजु, प्रकाशयन् भासा शरदां सहस्रम् ॥

## वाराणसेयसंस्कृतविश्वविद्यालये वेदान्तविभागाध्यक्षपदमलङ्कुर्वताम्
## श्रीमतां देवस्वरूपमिश्राणाम्
## शुभाशंसनम्

"सता प्रतोमेप पुनरयममीमा विजयते" इतिशिष्टोक्तेर्ज्ञानमपारम्। यदापि नेद भ्रमितव्य यद् यावल्लिखितं पठितं तावदेव ज्ञानं वर्तते इति। प्रत्युत ततोऽप्यधिकमेव ज्ञानमस्ति। ज्ञानविषयकमिदमेव यथार्थज्ञानं यज्ज्ञानमशारम परिच्छिन्नमनन्तञ्च। अत एव ब्रह्मसूत्रे 'शास्त्रयोनित्वात्" इत्यस्मिन्नधिकरणे "यद्विस्तराय शास्त्रं यस्मात्पुरुषविशेषात्सम्भवति यथा व्याकरणादि पाणिन्यादेर्ज्ञेयैकदेशार्थमपि स ततोऽप्यधिकतरविज्ञान इति प्रसिद्धं लोके" इति श्रीमद्भिराद्यशङ्कराचार्यैर्भाषितम्। सम्यग्विवेचितश्चायं विषयस्तत्र भामती-वेदान्तकल्पतरुकल्पतरुपरिमलाख्यासु व्याख्यासु श्रीवाचस्पतिमिश्रप्रभृतिमि-र्मनीषिभिः। तथा च सामान्यत इदमेव सिद्ध्यति यत् "यो यद्वाक्यप्रमाणकर्ता स ततोऽप्यधिकविषयज्ञ, यथा पाणिन्यादि।" एवञ्च यावदेव लिख्यते विविच्यते ततोऽप्यधिकविषयकज्ञानस्य व्याप्तिसिद्धत्वात् ज्ञानस्यापरिमितत्वं सिद्ध्यति।

प्रकृतग्रन्थश्च "श्रीशङ्करात्प्रागद्वैतवादः" (श्रीमच्छङ्कराचार्यात्पूर्वमद्वैतवादस्वरूपम्) इतिनामा तत्रैव प्रमाणम्। अत्र प्रतिपादिता विषया न पूर्वज्ञानविषया किन्तु ग्रन्थकर्तॄणामेव प्रथमज्ञानविषयताजुषः इति धीमुषीजुषः प्रमाणम्। भवन्तु नामान्यैरपि विदिताः, किन्तु न प्रतिपादिता इत्यमिति तु भवन्तु प्रभवाम एव। कस्यापि विदुषो व्याख्याने लखने प्रवृत्ति किमर्थं भवतीत्यपेक्षायां प्रेक्षावन्त इदमेव प्रतिपादयन्ति यत् "अप्रतिपत्तेरन्यथाप्रतिपत्तेर्वा व्याख्यानं कुर्वन्ति सन्तः" इति। सा च परिपाटी सम्यगारक्षिता प्रकृतग्रन्थकर्तृभिः। यतो हि ग्रन्थेऽस्मिन् ये विषयाः श्रीशङ्कराचार्याविर्भावकालशाङ्करसिद्धान्तप्रभृतयः, अवच्छेदप्रति-बिम्बाभासवादाः, श्रीशङ्कराचार्यस्य प्रच्छन्नबौद्धत्वनिराकरणं श्रीमद्भिरस्मत्सुहृन्मू-र्धन्यैर्वैयाकरणवेदान्तसाहित्याचार्यैर्वाचस्पत्युपाधिविभूषितैः श्रीमुरलीधरपाण्डेय-महोदयैः स्वासाधारणधिषणया प्रतिपादितास्ते नूनमसाधारणविदुषामपि चेतःसु चिरादरं तुदानां संशयशङ्कूनामुच्छेदे दक्षा इति स्वसाक्षिकमत्र ब्रूमः।

एतादृशलोकोत्तरग्रन्थप्रणयनेन दुराग्रहशून्यसत्यपक्षपातिबुद्ध्या पदार्थानां प्रतिपादनेन च वेदान्तशास्त्रस्य या रक्षा पण्डितवरेण्यैः पाण्डेयमहोदयैः कृता तदर्थं तेभ्यो नैकान् हार्दिकान् धन्यवादान् वितरामि प्रार्थयामि च भगवन्तं सर्वशक्तिमन्तं श्रीविश्वनाथं तेषामारोग्यदीर्घायुष्यश्रेयोऽभ्युदयाय। यद्यपि सत्यानृतमिथुनीभावात्प्रपञ्चस्यात्रापि केचनांशाः प्रत्यालोचनीयास्तथापि तथा न क्रियते शान्तिकर्मणि वेतालोदयन्यायप्रसङ्गात् कवलान्तर्यवान्वषोपस्य। ग्रन्थरत्नस्यास्य लोकव्यापिनं विस्तारं कामये। इति शम्।

देवस्वरूप मिश्र

# आमुखम्

अथेदानीम् "श्रीशङ्करात्प्रागद्वैतवाद" ( श्रीमच्छङ्कराचार्यात् पूर्वमद्वैतवादस्वरूपम् ) इति निबन्ध अवतार्यते । उपनिषत्सु, भगवद्गीतासु, महाभारते, अष्टादशपुराणेषु काव्येषु, आगमेषु च सर्वत्र भारतीयैतिहासिकग्रन्थेषु च अद्वैतभावा समुपलभ्यन्ते । एते ग्रन्था सर्वे श्रीशङ्कराचार्येभ्य पूर्वकालिका एवेत्यत्र न काचन सशीति ।

अस्य ग्रन्थसन्दर्भस्याद्वैते तात्पर्यमित्यत्रेमानि लिङ्गानि आत्मन निर्गुणत्वम्, जीवेश्वरैक्यम्, प्रपञ्चमिथ्यात्वम्, ईश्वरस्य शुद्धत्वम्, प्रपञ्चस्य मायिकत्व शिवविष्ण्वभेद इत्यादीनि । आत्मनो विभुत्वोक्तिरपि अद्वैतपर्यवसाय्येव, द्वैतविशिष्टाद्वैतवादिना जीवाणुत्वाभ्युपगमात् । तार्किकाणा यद्यपि ईश्वराद्भिन्नो जीवो विभुस्तथापि बहूना विभूनामेकदेशस्थत्वासम्भवादद्वैतमेव बलात् स्वीकार्यं भवति । यद्यपि निर्गुणत्व हेयगुणरहितत्वेन, ऐक्यश्रुति शरीरशरीरिभावेन, शुद्धत्व निर्दोषत्वेन च द्वैतविशिष्टाद्वैतवादिन समर्थयितुमीहन्ते, परन्तु तेषा श्रुतिमुख्यार्थत्याग गौणीकल्पना च प्रसज्यते । ननु अद्वैतश्रुतार्थग्रहणेपि लोकव्यवहारस्य बन्धमोक्षादेश्चाद्वैतिभिरप्युपपादनादिति चेत्, अत्राहु प्रत्यक्षशास्त्रयोर्विरोधे प्रत्यक्षप्राबल्यात् प्रत्यक्षानुरोधेन शास्त्र नेतव्यम् । अत एव मीमांसकै आदित्यो यूप, यजमान प्रस्तर इत्यादौ यूपादित्यादिभेदग्राहिप्रत्यक्षाविरोधाय तत्र तत्र गौणी वृत्ति तत्सिद्धयधिकरणे व्युदपादि । यदि प्रत्यक्षापेक्षया श्रुतिप्राबल्य तदा यूपादित्यभेदग्राहिप्रत्यक्षापेक्षया तदभेदावगाहिश्रुते पारमार्थिकाभेदविषयकत्वेन प्रामाण्यापत्ते । इत्थमेव च नाह ब्रह्मेति प्रत्यक्षस्य अह ब्रह्मास्मीतिश्रुतेश्च विरोधे प्रसक्ते प्रत्यक्षप्राबल्यात् शास्त्रमेव शरीरशरीरिभावेन नेयमिति वदन्ति । वेदान्तिनस्तु प्रत्यक्षशास्त्रयोर्विरोधे अपौरुषेयत्वेन अप्रामाण्यशङ्काविरहात् श्रुते प्राबल्य प्रत्यक्षस्य तु बहुशो दृष्टव्यभिचारादप्रामाण्यम् अप्रामाण्य च न सर्वथा त्याग, अपि तु व्यावहारिकविषयसमर्पणेन कथञ्चिदुपपादनम् । अत एव तत्त्वमसीतिश्रुते, जीवब्रह्माभेदावगाहिन नाह ब्रह्मेति प्रत्यक्षस्य च विरोधे प्रत्यक्षस्य श्रुत्या बाध स्वीक्रियत इति अद्वैतिना मते विशेष ।

वस्तुतस्तु अद्वैतश्रुतीना प्रत्यक्षादिविरोध एव नास्तीति 'उत्पादकाप्रनिरुद्धत्वात्' इतिभामत्या समाहितम्, प्रपञ्चित चाद्वैतसिद्धयादाविति नास्माक मते किमपि दूषणम् । तत्रापौरुषेयी श्रुतिर्न लक्षणादिना बाधनमर्हति न विधौ

पर शब्दार्थ इति न्यायाद् । विधा=तात्पर्यवति वाक्य इत्यर्थ । तथा च श्रीशङ्कराचार्यात् पूर्वकाले अद्वैतमुपनिषत्सु सुस्थितमासीदिति निश्चप्रचम् ।

तथाहि–ईशावास्योपनिषदि यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति । सर्वभूतेषु चात्मान तता न विजुगुप्सते ॥ इति श्रूयते । तत्रात्मशब्द प्रत्यगात्मपरस्तत्रैव तस्य रूढत्वात् । तथा चात्मन जीवाख्यस्य सर्वजगदाधारत्व सर्वशरीरेषु एकस्यैव वर्तमानत्व चाद्वैतसिद्धान्त स्फारयति । प्रत्र जगदाधारत्वेन जीवस्येश्वराभिन्नत्व ध्वन्यते जगत्स्रष्टु जगदुपादानस्येश्वरस्यैव जगदाधारत्वसम्भवात् ।

यस्तु सर्वाणि भूतान्यात्मैवाभूद्विजानत. ।
त न को मोह क शोक एकत्वमनुपश्यत ॥

अस्यार्थ यस्मिन् काले सर्वाणि भूतानि जीवान् विजानतस्तत्त्वज्ञस्य आत्मैव सवृत्तानि जीवाना स्वव्यतिरेकेणाभावात् शरीराणा मिथ्यात्वेनात्मनि कल्पितत्वात् आत्मव्यतिरेकेणाभावात् तत्र तदा एकत्वमनुपश्यत. अद्वितीयमात्मान पश्यत शोकमोहाद्यभाव, इति–अद्वैतज्ञानस्य ससारनिवर्तकत्वमुक्तम् । मतान्तरेतु द्वैतज्ञानस्यैव तथात्वादसामञ्जस्यम् । केनोपनिषदि श्रोत्रस्य श्रोत्र मनसो मन इत्यनेन इन्द्रियाणा स्वविषये प्रेरक शुद्धमात्मानमुक्त्वा—

यच्चक्षुषा न पश्यति येन चक्षूषि पश्यन्ति ।
तदेव ब्रह्म त्व विद्धि नेद यदिदमुपासते ॥

इत्यनया श्रुत्या प्रेरकस्य साक्षिण ब्रह्माभेद उक्त इत्यद्वैतवाद । न च जीवातिरिक्तस्यान्तर्यामिण ब्रह्मत्वोक्तिरत्र इति शङ्कनीयम् तस्य ईश्वरतया भेदेनोपास्यत्वात् 'नेद यदिदमुपासते' इत्यस्य तस्मिन्नसामञ्जस्यात् ।

कठोपनिषदि—"येय प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नायमस्तीति चैके । एतद्विद्याम्" इत्यनेन शरीरादिव्यतिरिक्तस्य जीवस्य सद्भावविषयक प्रश्न क्रियते इति श्रीशङ्कराचार्या । श्रीरामानुजाचार्यास्तु तत्र नचिकेतस पितृकोपाद्यमसदन प्रविश्य तत्र प्रसन्नेन यमेन वरत्रयेणोपच्छन्दितस्य भूलोकगतपितृसौमनस्यप्रार्थनात् स्वर्गफलकाग्निविद्याप्रार्थनाच्च आस्तिकाग्रेसरत्वावगमात् । तेन च तस्य शरीरव्यतिरिक्तात्मनिश्चयवत्त्वावगमात् नाय प्रश्न शरीरव्यतिरिक्तात्मविषय, तस्य ज्ञातत्वात् अपि तु सर्वबन्धविनिर्मुक्ते जीवे मोक्षाधिकृते मोक्षसाधनज्ञानविषयपरमात्मविषय प्रश्न इत्याहु । तदेतद् शाङ्करा

न मन्यन्ते। तथा हि यद्यपि नचिकेता द्वितीयपित्रादिवचनाद् शरीरव्यतिरिक्त-जीवज्ञानवानेव, तथापि तादृशज्ञानदृढीकरणाय प्रश्न उपपद्यते। तस्य द्वितीयपि-वचनजातस्य परोक्षज्ञानत्वात् प्रत्यक्षदेहाभेदभ्रमनिवर्तकत्वानुपपत्तेः। दृश्यन्ते हि पारलौकिककर्मानुष्ठाननिष्ठा देहात्मवादनिराकरणाय युक्तौ जिज्ञासमानाः। अत एव च देहे व्याध्यादिभि पीड्यमाने वैदिककर्मनिरता अपि दुःखिनो भवन्ति शरीर-निन्दाया कुपिताश्च दृश्यन्ते। मृत्युस्तु अस्य प्रश्नस्योत्तरं यथावदात्मस्वरूप-विवेचननोच्यमानः परब्रह्मोपदेश पर्यवस्येत्, वस्तुत प्रत्यग्ब्रह्मणोरैक्यात्, तदुपदेशस्च विषयासक्तचित्ताय मध्ये पतिष्यावे न कर्तव्य इत्यभिसन्धाय धनादिभि-र्लोभयित्वा तदीय दृढवैराग्य वेदान्तोपदेशयोग्यता च निर्णीय 'अय लोको नास्ति पर इति मानी पुन पुनर्वशमापद्यते मे' इत्यनेन यथा श्रुतस्य प्रश्नस्योत्तर देह-व्यतिरिक्तत्वं आत्मन उपपाद्य मुमुक्षवेऽस्मै "त दुर्दर्शं गूढमनुप्रविष्टम्" इति-मन्त्रेण जीव देवं स्वप्रकाश ब्रह्म विदित्वा हर्षशोकौ जहाति इति ऐक्यज्ञानस्य मोक्षसाधनत्वमुक्तवान्। उत्तरत्र च "अङ्गुष्ठमात्र पुरुषो मध्ये आत्मनि तिष्ठति ईशानो भूतभव्यस्य" अङ्गुष्ठमात्रं जीव देहादिभ्य पृथक्कृत्य त शुक्रममृतं ब्रह्म विद्यात् इत्यादौ बहुशः अभेदः प्रतिपाद्यत इति कठोपनिषदः स्पष्टमभेदपरत्वम्।

प्रश्नोपनिषदश्चाभेदपरत्व च षोडशकल पृथिव्यादिप्रपञ्चस्रष्टारं प्रक्रम्य स ईक्षाञ्चक्रे कस्मिन्नहमुत्क्रान्त उत्क्रान्तो भविष्यामि" इत्यादिना तस्य जीवरूपत्वन प्रतिपादनादवगम्यते। मुण्डके च पुरुषात् परब्रह्मण प्रपञ्चसृष्टि-मुक्त्वा पुरुष एवेद विश्वम् इति प्रपञ्चस्य उपादानाभेद उच्यत यथा मृद्घट इति। तत्राभेदश्च ब्रह्मव्यतिरेकेण प्रपञ्चाभावे पर्यवस्यति, तदुक्त छान्दोग्ये मृत्तिकेत्येव सत्यमिति। इद सर्वं पुरुष एवेति च बाधाया सामानाधिकरण्यम्, तथा च प्रपञ्च-मिथ्यात्व सिद्ध भवति। अपि च "यस्मिन् द्यौ पृथिवी चान्तरिक्षमोत मन सह प्राणैश्च सर्वै। तमेवैकं जानथ आत्मानम्" इत्यनेन आत्मन पृथिव्यादिसमाधाना-धार ब्रह्माभेदएवोच्यते।

माण्डूक्ये तु सुषुप्त्यवस्थस्य प्राज्ञजीवस्य एष सर्वेश्वर एष सर्वज्ञ इत्यादिना ब्रह्माभेद स्पष्टमेवोक्त। तैत्तिरीये "स यश्चाय पुरुषे यश्चासावादित्ये स एक" इति अध्यात्माधिदैवतोपाधिभेदभिन्नयो जीवब्रह्मणो कण्ठत एवैक्य निर्दिष्टम्।

ऐतरेये च 'ज्ञानभन पुरुष ब्रह्म ततमपश्यत्' इति मूर्धद्वाराऽन्त प्रविष्टस्य जीवस्य ब्रह्माभेद बोधयति। छान्दोग्ये च 'वाचारम्भण विकारो नामधेय मृत्तिकेत्येव सत्यम्' इति उपादानसत्यत्व विकारानृतत्व च स्पष्टमुक्तम्। न च इति शब्दवैयर्थ्यं

परोक्त युक्तम्; इतिशब्दस्य आद्यर्थकत्वेन मृत्तिकादि सत्य इत्यर्थात् घटापेक्षया मृदः सत्यत्व तदपेक्षया तत्कारणस्येत्येवं ब्रह्ममात्रसत्यत्वे पर्यवसानात्, प्रधानादग्नेरग्नित्वं इत्यत्र विकारानृतत्वस्य स्वशब्देनैवोक्तेः। अपि च तत्त्वमसिवाक्यं जीवब्रह्मैक्यं बोधयति । न च शरीरवाचकानां शरीरिवाचित्वात् त्वमित्यस्य त्वच्छरीरकमित्यर्थं इति वाच्यम्। तावतापि असिपदानुपपत्तेः। नवधारमभ्यस्ते लक्षणानुपपत्तेः । अपि च अनृताभिसन्धस्य बन्धः, सत्याभिसन्धस्य च मोक्षः इति वदन् दृष्टान्तद्वारा ब्रह्मज्ञानवतो मोक्षो ब्रह्मणः सत्यत्वं प्रपञ्चाभिनिविष्टस्य बन्धः प्रपञ्चस्यानृतत्वं च सूचयति ।

अपि च प्रजापतिविद्यायाम् "य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मेति होवाच एतदमृतमभयमेतद्ब्रह्म" इत्यादिषु पर्यायेषु जाग्रदाद्यवस्थावतः ब्रह्मत्वमुपदिश्यते ।

बृहदारण्यके च मैत्रेयीब्राह्मणे 'न वा अरे पत्युः कामाय पतिः प्रियो भवति आत्मनस्तु कामाय पतिः प्रियो भवति' इत्यादिना आत्मनः अनौपाधिकप्रेमविषयत्वमुक्त्वा आत्मा वा अरे द्रष्टव्य इत्यनेन तस्यैव द्रष्टव्यत्वमुक्त्वा तस्यैवात्मनः "अस्य निःश्वसितमेतदृग्वेदो यजुर्वेद" इत्यादिना वेदमूलत्वं जगदुपादानत्वं च वदति । तेन ज्ञायते जीव एवावस्थान्तरगतः ब्रह्मेति । यत्तु विशिष्टाद्वैतभाष्यकारैरुक्तम्— अमृतत्वस्य तु नाशास्ति वित्तेन इति बोधितायै अमृतत्वप्राप्त्युपायमेव प्रार्थयमानायै मैत्रेय्यै तदुपायतया द्रष्टव्यत्वेनोपदिष्टपरमात्मैव तमेव विदित्वाऽमृतत्वमेति इत्यादिश्रुतेः, यत्तु पतिजायाद्यन्वयिनः जीवस्योपक्रमेऽन्वेष्टव्यतया प्रतिपादनाद् जीवविषयमिदं वाक्यमिति, तन्न, आत्मनस्तु कामाय इत्यत्रात्मशब्देन जीवोक्तौ आत्मा वा अरे द्रष्टव्य इत्यनेनानन्वयप्रसङ्गात्। अतोऽयमर्थः— आत्मनस्तु कामाय इष्टसम्पत्तये। न च जीवात्मनः इष्टसम्पत्तये पत्यादयः प्रिया भवन्ति इत्युक्ते जीवस्यान्वेष्टव्यत्व भवति। प्रियमन्वेष्टव्यं न प्रियशेषो अन्वेष्टव्य । अतो यथास्य प्रकरणप्रतिपाद्यः जीवातिरिक्तः परमात्मा भवति तथा वाक्यार्थो वर्णनीय इत्युक्तम् । एवं गीतार्थवर्णनं क्लिष्टं अनुपपादकं चेति शाङ्कराः ।

अस्मन्मते तु अयमर्थः—सर्वेषां स्वात्मा प्रियः पत्यादयोऽपि प्रिया इत्यनुभवसिद्धम् । तत्र पत्यादीनां प्रियत्वं न पतित्वादिप्रयुक्तम् अपि स्वेष्टसंपादकत्वप्रयुक्तम् । अतः स्वात्मनः सर्वदा प्रियत्वात् पत्यादेः स्वेष्टसम्पादकत्वादशायामेव प्रियत्वात् निरतिशयप्रीतिविषयत्वम् अत एव द्रष्टव्यत्वं च सिद्ध्यति । तस्य पर-

मात्माभिन्नत्वाच्च जगदुत्पत्तिस्थितिरूपहेतुत्वमेतत्प्रकरणोक्तं संगच्छते। बृहदारण्यके नेति नेति इत्यादिकं प्रपञ्चमिथ्यात्वबोधकम्। ज्योतिर्ब्राह्मणमपि जीवेनोपक्रम्य पश्चात् सर्वस्य वशीत्यादिना तस्य परमात्मत्वबोधकम्। अहं ब्रह्मास्मि इति महावाक्यमत्रैव वर्तते। प्रतिपदमप्यद्वैतानुकूल्यं न केनापयपह्नोतुं शक्यते। मतान्तरीयास्तु स्वाभिप्रायेण विलष्टकल्पनया व्याकुर्वन्तीत्येतावता नोपनिषदा द्वैतादिपरत्वं स्वरसम्। ततश्च शङ्कराचार्यात्पूर्वकालीनाद्वैतमनादिसिद्धमित्येव ज्ञातव्यम्।

अद्वैतस्योपनिषदत्वमेव श्रीगौडपादा अपि स्फुटीचक्रुः तत्तदुपनिषदामद्वैतपरत्वनिदर्शनेन। यत्तु आधुनिकेन विशिष्टाद्वैतसिद्धिनामके स्वग्रन्थे कथितम्—अद्वैतं गौडपादोपज्ञमिति, तन्न, अद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेय इति अद्वैतशब्देनैवाद्वैताभिधानात् कुत्रापि श्रुतिस्मृतिपुराणेषु विशिष्टाद्वैतशब्दाश्रवणाच्च। अपि च "आभास एव च" इति सूत्रम्। "ननु भ्रान्तब्रह्मजीववादेऽप्यविद्याकृतोपाधिभेदाद् भोगव्यवस्थादय उपपद्यन्ते अत आह"—इत्येवमवतारितं रामानुजाचार्येण। तदेतत्सूचयति अद्वैतरीत्या श्रुत्यर्थवर्णनं व्यासाचार्यात्पूर्वमप्यासीदिति, तत्खण्डनार्थं व्यासाचार्यं सूत्रं प्रणिन्ये। अत अद्वैतस्यातिप्राचीनत्वं न केनाप्यपह्नोतुं शक्यते।

अपि च व्याससूत्रात्पूर्वतने साङ्ख्यसूत्रे प्रथमाध्याये "नाविद्यातोऽप्यवस्तुना बन्धायोगाद् वस्तुत्वे सिद्धान्तहानिः" इत्यादिसूत्राणि अद्वैतप्रतिक्षेपपराणि अद्वैतस्यातिप्राचीनत्वं द्योतयन्ति। तथा भामत्या साङ्ख्यशास्त्रप्रणेता भगवान् वार्षगण्यः-गुणानां परमं रूपं न दृष्टिपथमृच्छति। यत्तु दृष्टिपथं प्राप्तं तन्मायैव सुतुच्छकम् इति ब्रह्मणः परमार्थता प्रपञ्चस्य मिथ्यात्वं च दर्शयति तथा अनिरुद्धवृत्तौ "एक आत्मेति वेदान्तिनः" इति ऐकात्म्यं वेदान्त्यभिमतं श्रूयते। तथा वैशेषिकसूत्रे तृतीयाध्याये द्वितीयाह्निके सुखदुःखज्ञाननिष्पत्त्यविशेषादैकात्म्यं सर्वशरीराणामिति एकात्मवादं पूर्वपक्षयित्वा नानात्मानो व्यवस्थातः इति स्वाभिप्रेतमात्मभेदमाह। एषु ग्रन्थेषु अद्वैतस्य प्राचीनत्वं सुव्यक्तम्।

तथा मीमांसाश्लोकवार्तिके ( पृ० ६६३ )" स्वयं च शुद्धरूपत्वादभावाच्चान्यवस्तुनः। स्वप्नादिवदविद्यायाः प्रवृत्तिस्तस्य किंकृता"—इत्यादिना अद्वैतवादः पूर्वपक्षत्वेनोपन्यस्यते तथा मीमांसाभाष्यटीकाकृता प्रभाकरेण—'यदि पर ब्रह्मविद्यामेव निश्चयो यदुपलभ्यते तदसद् यन्नोपलभ्यते तत्तत्त्वमिति नमस्तस्मै। विदुषि नास्ति वाच्यम् इत्यत्र परिहार" इति अद्वैतमतं स्पष्टं निर्दिशति।

वैयाकरणाश्च शब्दविवर्तत्वं जगत आमनन्त शब्दाद्वैतं तस्य स्फोटरूपत्वं चामनन्ति। यदि स्फोटस्य चैतन्यमभ्युपगम्यते नास्माकं विवादस्ते। तदुक्तं भगवता बादरायणेन—अन्यभावव्यावृत्तेः इति। स्फोटस्य चेतनत्वे ब्रह्मान्यत्वव्यावृत्तेरित्यर्थः। ( न्यायरक्षामणौ )

कुम्भकोणाद्वैतसभाप्रकाशित स्वर्णमहोत्सवकुसुमनिबन्धे प्रदर्शितमेवाद्वैतस्याति प्राचीनत्वम्, द्वैतविशिष्टाद्वैतवादो श्रुतिबाह्य इति च तत्र स्पष्टं भवति।

यत्तु शरीरवाचकपदानां शरीरिपरत्वाद् जीवपदानां जीवशरीरक-ब्रह्मपरत्वमिति। अत्रोक्तं रामानन्दाचार्यैः—एवं सति घटं जगदर्तेत्यत्रापि चारिकत्वव्यवहारापत्तेः। अपि च उक्तनियमस्य सार्वत्रिकत्वे पुरुषे ह वा प्रथमतो गर्भो भवति" (ऐ उ) श्वेतकेतुर्हारुणेय इत्यादावपि तदापत्तिरिति भूयान् विप्लवः स्यात्। यदि कादाचित्कत्वं तदा कुत्र केवलशरीरपरत्वं कुत्र शरीरिपरत्वमित्यत्र नियामकाभावः। तादृशव्युत्पत्तेः शास्त्रेष्वदर्शनात् स्वकपोलकल्पितस्य श्रुत्यर्थनिर्णयेऽनुपयोगाच्च। ब्रह्मसूत्रेऽपि प्रत्तनूद्यमानेऽद्वैतमतं भगवत्पादसम्मतं स्पष्टं भवति। तत्र च शास्त्रदृष्ट्या तूपदेशो वामदेववत्, इति सूत्रं विचारणीयम्। इन्द्र प्रतर्दनाय मामेव विजानीहि इति अहङ्कारवादेन ब्रह्मोपदेशं कृतवान्। ततश्च सगच्छतश्च प्रकरणे ब्रह्मैवोपास्यमिति निर्णये इत्याशयस्य समाधानमिदम्। तत्र शास्त्रं तत्त्वमसि, अहं ब्रह्मास्मि, इत्यादिकं तज्जन्यया अहं ब्रह्मास्मि इतिदृष्ट्या इन्द्रः मामित्यवोचत्। अतो नासङ्गति-रित्युक्तम्। अत्र शास्त्रपदेन तत्त्वमस्यादिवाक्यमेव धृतमिति भवशास्त्रसारभूतमिदं महावाक्यम्। तदयमेव शास्त्रार्थ इति तात्पर्याज्जीवब्रह्मैक्यमेव शास्त्रार्थं इत्युक्तं भवति।

यत्तु विशिष्टाद्वैतिभिः शास्त्रं य आत्मनि तिष्ठन् यस्यात्मा शरीरम् इत्यादि वाक्यं तज्जन्यज्ञानं जीववाचिशब्दानां जीवशरीरके ब्रह्मणि पर्यवसानमिति मानं तदाश्रित्य मामुपास्वेत्यवोचत्। मच्छरीरकं ब्रह्म जानीहि तदेव इति व्याचक्षुः। अत्रेदं चिन्तनीयम्—भवतु शास्त्रपदेन उक्तवाक्यग्रहणम्। शरीरवाचिना शरीरिवाचित्वमिति क्व तत्र वाच्यते। जीवः ईश्वरशरीरमित्युच्यते तत्र। न तु भवदुक्तव्युत्पत्तिः तत्र प्रकटीक्रियते। भवदुक्तव्युत्पत्तिस्तु कस्मिन्नपि शक्तिग्राहकं प्रमाणं नोपलभ्यते। अपि च तत्त्वमस्यादौ त्वंपदस्य जीवशरीरकं परमात्मरूपम् इत्युच्यते भवदुक्तव्युत्पत्त्या। तथा च तादृशव्युत्पत्त्यैव मामुपास्वेत्यर्थग्रहणसम्भवे न तदर्थं सूत्रमारम्भणीयमिति सूत्रवैयर्थ्यमेव। न च शक्तिग्राहकं सूत्रम्। अपि च वामदेवदृष्टान्तोऽसिद्धः। मामुपास्वेतिवाक्यसजातीयमहं मनु

रमत्रमिति वाक्यम्, नहि असिद्धेन दृष्टान्तेनासिद्धस्य साधनमङ्गीकुर्वन्ति शास्त्रकाराः। तत्रापि अहमित्यस्य मच्छरीरकं ब्रह्मेत्यर्थकरणे अभवमित्युत्तमपुरुषप्रयोगानुपपत्तिः। अपि च दृष्टिपदं साक्षात्कारे रूढं व्युत्पत्तिग्रहस्तु अनुमित्यात्मक इति न दृष्टिपदेन व्यवहारमर्हति। अतो भगवत्पादीय व्याख्यानमेव साधु।

न भेदादिति चेन्न प्रत्येकमतद्वचनात् इतिसूत्रमप्यद्वैतपरम्। तस्यार्थः ब्रह्म निर्विकल्पकमेकलिङ्गमिति यदुक्तम्, तन्न, प्रतिविद्य ब्रह्मण आकारभेदाद् चतुष्पाद् ब्रह्म षोडशकलं ब्रह्म वामनीत्वादिगुणं ब्रह्मेति। तस्मात्सविशेष ब्रह्म वाच्यमिति चेन्न, प्रत्येकमतद्वचनात् प्रत्युपाधिभेदं ब्रह्मणः अभेदवचनात् यश्चायमस्यां पृथिव्यां तेजोमयः—यश्चायमध्यात्मं शारीरः पुरुषोऽयमेव सः—इत्यादौ—इति। अत्र चाद्वैतमायो व्यक्तः।

अत्र विशिष्टाद्वैतमाप्यकाराः—भेदादिति चेन्न प्रत्येकमतद्वचनात् इत्यादौ नञ्रहितं सूत्रं पठित्वा व्याचक्रुः—ईश्वरस्य उभयलिङ्गस्य तत्तद्देवताशरीरयोगरूपावस्थाभेदाद् अपुरुषार्थयोगः स्यादिति चेन्न। प्रत्येकं यः पृथिव्यां तिष्ठन् य आत्मनि तिष्ठन् इत्यादौ अमृतत्ववचनेन तत्सम्बन्धप्रयुक्तापुरुषार्थप्रतिषेधात्—इति।

अत्रेदं चिन्त्यमीश्वरस्य तत्तद्देहावस्थाननिमित्तसुखादिप्राप्तिः संभोगप्राप्तिरिति चेन्न वैशेष्यादितिसूत्रेणैव प्रत्युक्तमिति पुनरुक्तिप्रसङ्गः। न च संभोगप्राप्तिसूत्रे अकर्मवश्यत्वेन कर्माधीनदु:खाभाव उक्तः। अत्र तत्तद्देशावस्थाननिमित्तापुरुषार्थसंबन्धः निराक्रियत इति भेद इति वाच्यम्। अपुरुषार्थ इत्यस्य हि दुःखादिरर्थः। सर्वोऽप्यपुरुषार्थः कर्माधीन एव। पुण्येन पुण्यो भवति पापः पापेनेति श्रुतेः। अतोऽवस्थानिमित्तकस्यापि कर्माधीनत्वाद् पौनरुक्त्यमेव। अपि अतद्वचनदित्यत्रत्यतच्छब्दस्य पूर्वप्रकृतभेदपरत्वं स्वरसं तद्विहाय अपुरुषार्थप्रतिषेध इत्यर्थकरणमयुक्तम्, अपि च अमृतत्ववचनेन कथमपुरुषार्थनिषेधः सम्भवति अमृतस्यापि जीवस्य भवन्मते अपुरुषार्थसंबन्धसप्रतिपत्तेः। अस्मन्मते तु अभेदवचनं प्रतिपर्यायं मधुब्राह्मणे विद्यत एव—आत्मनि चैव विचित्राश्च हि अनेन पूर्वमाक्षिप्तस्य ब्रह्मपरिणामवादस्य ब्रह्मविवर्तत्वं प्रपञ्चस्य स्वप्नदृष्टान्तेनोक्त्या विवर्तवादः स्थापितः।

अरूपवदेव हि तत्प्रधानत्वात्—इदं सूत्रं शङ्कराचार्यरीत्या अनाकारमेव ब्रह्म प्रतिपत्तव्यमुपनिषदा निराकारब्रह्मप्राधान्यात्। साकारवाक्यानामुपासनापरत्वात्। ततश्च अस्थूलादिवाक्यैर्ब्रह्म निर्गुणमेवेत्यर्थः।

विशिष्टाद्वैतिना तु—उभयलिङ्गत्वं निर्दोषत्वं कल्याणगुणवत्त्वं च स्थापयितुमिदमधिकरणम्, तत्र पृथिव्यादिस्थानस्थत्वप्रयुक्तदोषो नास्तीत्यनेन सूत्रेणोच्यते । सूत्रार्थस्तु अल्पवत्=अल्पसदृशं तद् ब्रह्म प्रधानत्वात्–निर्वाहकत्वेन प्रधानत्वादिति व्याख्यानम् । अल्पसदृशमित्यनेन कर्मवश्यत्वरहितमित्यर्थः प्रधानत्वात्=निर्वाहकत्वादित्यर्थं ।

अत्रेदं चिन्त्यम् अल्पवद् इत्यस्य अल्पसदृशमित्यर्थे सादृश्यं केन रूपेणेत्याकाङ्क्षाया' अपूरणाद् अल्पाणामाकाशादीना ब्रह्मणश्च साम्य केन रूपेणेति प्रश्ने भवदुक्तिरेव नियामिका वाच्या । अपि च प्रधानत्वं निर्वाहकत्व भवतु तेन कर्मवश्यत्वराहित्यं कथं सिध्यति । लोके देशप्रधानाना राज्ञा तदभावात् । अपि च स्थानतोऽपि इत्यत्र दोषरहित्यं माध्यम् अध्याहार्यं नानुवृत्तम् । अपि च अल्पवदेवेत्युक्ते उभयलिङ्गपद माकारानाकारपरत्वे यथा स्वरसं तथा अल्पसादृश्ये न स्वरसम्, स्वशब्देनापि सूत्रकारेण अकर्मवश्यत्वोक्तिसमवेन लाक्षणिकप्रयोगायोगात्, इति संक्षेपः ।

एवं भगवद्गीतास्वपि अद्वैतमेव स्वरसं दृश्यते । तथाहि—मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः । न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम्—इत्यत्र प्रपञ्चमिथ्यात्व स्वरसत प्रतीयते । प्रतिपन्नोपाधौ त्रैकालिकप्रतिषेधप्रतियोगित्वरूपमिथ्यात्वस्य अत्र भानात् । मत्स्थानीतिप्रतीत्यभिप्रायम् । नचेति प्रतिषेध, क्षेत्रज्ञ चापि मा विद्धि इति जीवब्रह्माभेदप्रतिपादकम् । अत माम् इत्यस्य मच्छरीरं भविष्यम्यमित्यर्थकरण श्रुतिबाह्यम् । गीताचार्यैस्तथैव कथनस्य युक्तत्वात् । शरीरिवाचिन' शरीरपरत्वस्य भवन्मतेऽप्यभावात् ।

इत्थ च प्रस्थानत्रय भगवत्पादेभ्यः पूर्वं स्वरससिद्धार्थकत्वेनैव व्याख्यानम् । प्रपञ्चसत्यत्वे ब्रह्मसगुणत्वे च निर्भरयुक्तं अन्यथानीतमिति स्पष्टं प्रतीयत इति । श्रीशङ्कराचार्येभ्यः पूर्वकालेप्यद्वैतमेवमेवासीद्यथा तैः व्याख्यातमिति निर्णेतु भवयते ।

यत्तु मण्डनमिश्रं जीवन्मुक्तिमनङ्गीकृत्यैव ग्रन्थो रचित इति तदपि न *शङ्कराचार्यमतविरुद्धम् । शङ्कराचार्यैरेव केनोपनिषदि "प्रतिबोधविदितम् इत्यत्र"* (१-२-१२) इति तत्पक्षसूचनात् । वार्त्तिककारैरपि–संस्कारवृत्त्या वृत्तानि क्रियाकारवरूपभृत् इत्यनेन तत्परिपोषणात्—

यच्च मण्डनमिश्रैः ज्ञानकर्मसमुच्चयाङ्गीकरण तदपि वाक्यार्थज्ञानेन सहैव ननु साक्षात्कारेणेति न शङ्करमतादत्यन्त भेदभाव इति ।

यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।
आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते ।।

इति भगवद्वचनं स्पष्टमेव शङ्करमतस्योपोद्बलकम् । वेदाविनाशिनं नित्यं य एनमजमव्ययम् । कथं स पुरुषः पार्थ कं घातयति हन्ति कम्—इति च सर्वकर्माभावोक्तिः हननस्योपलक्षणत्वात् ।

भगवत्पादाश्च बृहदारण्यकभाष्ये केषाञ्चिद् भर्तृप्रपञ्चप्रभृतीनां व्याख्यामुपक्षिप्य "शोभनेयं कल्पना न तु श्रौती" "सर्वमेतदवाहंदारण्यकम्" इति वदन्तः स्वीयव्याख्यां श्रुत्यनुसारिणीं निरूपयन्ति, परव्याख्याश्च श्रुत्यर्थबाह्यत्वेन कथयन्ति ।

श्रीशङ्कराचार्यैः पोषितः विस्तारितश्च योऽद्वैतवादः स न नूतनः अपि तु वेदमूनिसकलप्रमाणग्रन्थमूलकः इत्यवबोद्धुमयं ग्रन्थः परमोपकारी भवति ।

बहुभ्यो ग्रन्थेभ्यो वचनानि समुद्धृत्य अद्वैतस्य प्राचीनत्वं बौद्धमतादत्यन्तभिन्नत्वं च सम्यङ्निरूपयन्त इमे ग्रन्थकाराः श्रीमुरलीधरपाण्डेयमहोदया विदुषां श्लाघनीया भवन्ति । माण्डूक्यकारिका बौद्धमतावलम्बिना केनचिद्विदा इति बौद्धमतप्रभाविता इति वा वचनं न युक्तिसहमिति एतत्पठितॄणां मुव्यक्तं भवति । ब्रह्मनन्दिद्रविडाचार्यप्रभृतयः प्राचीनाचार्याः अद्वैताचार्या एवेति सप्रमाणमत्र निर्णेतुं शक्यते । अवच्छेदप्रतिबिम्बाभासवादानामुपयोगित्वं पार्थक्यञ्च, ब्रह्मसूत्रोक्तनानामार्षवेदान्तिनामाश्मरथ्यादीनां वेदान्तमतं तथोपवर्षभर्तृप्रपञ्चब्रह्मदत्तसुन्दरपाण्ड्यानामद्वैतमतं सप्रमाणमत्र निरूपितम् । भर्तृप्रपञ्चादीनां मूलग्रन्था न कोऽप्युपलभ्यते, अतस्तत्तद्भाष्यटीकादिग्रन्थतः एतेषां मतस्वरूपनिरूपणे महान् प्रयासः कृता वर्तते । आचार्यभर्तृहरिमण्डनमिश्रयोरद्वैतसिद्धान्तस्वरूपावलोकनेन तयोविषयेऽध्ययनं सुकरं भविष्यति । अयं निबन्धो भगवत्पादशङ्कराचार्यतः प्राक्कालिकाद्वैतस्वरूपज्ञानाय महानुपकारको भवतीति दृढ विश्वासमिति—

श्रीएस् सुब्रह्मण्यमशास्त्री

मीमांसाशिरोमणि एम ए, अनुसन्धानप्राध्यापक,

वाराणसेयसंस्कृतविश्वविद्यालये ।

— ॐ —

# प्रस्तावना

प्रयाष्टौ वर्षाणि व्यतीतानि । वाराणसेयसंस्कृतविश्वविद्यालये शाङ्करवेदान्तशास्त्रमध्यापयता मयेदमनुभूतं यद् शाङ्करवेदान्ते सौगतानां शून्यवादस्य विज्ञानवादस्य च बहवः सिद्धान्ताः प्रक्रियाः शब्दाश्च समानरूपाः सन्ति । तेन भास्कर-यादवप्रकाश-रामानुजानन्दतीर्थवालिवनाथप्रभृतयः पूर्वोत्तरमीमांसाविद्वांसः पाश्चात्याः श्रीपुलिनजाकोबीमैक्समूलरप्रभृतयो विद्वांसश्चाक्षिपन्ति यद् भगवान् श्रीशङ्कराचार्यः प्रच्छन्नबौद्ध आसीत्, तेन शून्यवादविज्ञानवादयोरेव रूपान्तरमौपनिषदसंस्करणं वेदान्तशास्त्रं प्रणीतम्, तत्र च केवलं विज्ञानशून्यशब्दस्थाने ब्रह्मशब्दं सन्निवेश्य ब्रह्माद्वैतवाद उपस्थापितः। इदमित्थं प्रतीयतेऽपि,यतः श्रीशङ्करात्प्राचीनं प्रामाणिकं पूर्णमुपनिषद्भाष्यं ब्रह्मसूत्रभाष्यं श्रीमद्भगवद्गीताभाष्यमर्थाद् वेदान्तशास्त्रस्य जीवातुभूतं प्रस्थानत्रय्याः भाष्यमनुपलभ्यत एव नहि । यद्यपि उपलभ्यन्त उपनिषदः, किन्तूपनिषत्सु सद्वादोऽस्त्यसद्वादोऽप्यस्ति । एवमेव कथा ब्रह्मसूत्रगीतयोरपि । तेनेदमाशङ्क्यते यद् भगवान् श्रीशङ्कराचार्य एव गृहीतसौगतदर्शनतत्त्वो शून्याद्वयविज्ञानाद्वयवादयोरौपनिषदसंस्करणरूपस्य ब्रह्माद्वयवादस्याद्यः प्रवर्तकस्तथायमेव सर्वप्रथमं वेदान्तशास्त्रं प्रणीतवानिति । यद्यपि शाङ्करभाष्ये टीकायां च तत्र तत्र केषाञ्चित्प्राचीनाचार्याणां यत् किमपि मत वाक्यं नाम वापलभ्यते । तेनेदं तु ज्ञायते यत् पुरापि वेदान्ताचार्या आसन्, वेदान्तग्रन्थोऽपि कश्चिदासीत्, किन्त्वनेन पूर्णं समाधानं न जायते यदाचार्यशङ्करात्पूर्वं वेदान्तशास्त्रस्य परिष्कृतं सुव्यवस्थितं रूपमासीन्नवेति । यद्यासीत्तर्हि किंस्वरूपकम्, केनाप्याचार्येण वेदान्तशास्त्रं पूर्वं प्रणीतमासीन्नवेत्यादि ।

तदैवैकदा सुगृहीतनामधेयानां सर्वविद्यावताराणां श्रीमतां रामचन्द्रदीक्षितमहाभागानां पुरतः जिज्ञासुभावेनेयं शङ्कोपस्थापिता । वेदान्तशास्त्रस्य पारदृश्वानो विद्वांस इमे तदानीं वाराणसेयसंस्कृतविश्वविद्यालयेऽनुसन्धानसञ्चालका आसन् । एतद्विषये दत्तावधानास्ते क्षणं विचार्य तद्विषयेऽनुसन्धानकामना प्रकटितवन्तः । स्वयमेवेमिमंहाशयं रनुसन्धानपत्ररूपेण मम नामाङ्कनमित्यादि कारितमनुग्रहेण मम निर्देशकत्वमप्यङ्गीकृतम् । एतेषां प्रेरणया चाहमनुसन्धानकर्मणि प्रवृत्तः । ममानुसन्धानविषयनाम च, भगवच्छङ्कराचार्यात्पूर्वमद्वैतवादस्वरूपमिति निर्दिष्टम् । अशीतिवर्षवयस्का जरातुरा अपि नवीनोत्साहेन ममेदमनुसन्धानं प्रोत्साहितवन्तोऽलभ्यग्रन्थादिप्रदानेनापि सौकर्यमुपपादितवन्तः । किन्तु कालवशान्मध्य एव

त ग्रहीमावपपत्रा । ग्रहमाउनापि तस्य परिपूर्णं नैज कर्म दृष्ट्वा परितुष्यन्ति, आशीर्भिर्मां नियुञ्जते च ।

तदनन्तर निर्विण्णमनसो निरुत्साहस्य ममानुसंधान मध्यऽवरुद्धमिवाभूत् । किञ्चित्कालानन्तर प्रमितयशस्त प्राच्यपाश्चात्यामयविद्यापारदर्शिन श्रीमन्तो गापीनाथपाण्डिमहोदया वाराणसेयसंस्कृत विश्व विद्यालयस्योपकुलपतिपदमलङ्कृतवन्त । कदाचिदवसरानुसार मत्कृतानुसंधानक्रम तैरवलोकितम । तेन सन्तुष्टैस्तैरवशिष्टमेतदनुसंधानक्रम पूरयितुमुत्साहिताऽहम । विद्यारसिका, गुण ग्राहिण शासनकर्मणि विशपतो यतनविश्वविद्यालयशासनकर्मणि व्यापृता अपि प्राय प्रतिदिन घटिकाद्वयसमयप्रदानेनावरुद्धस्निग्दर्शनेन मल्लिखितनिबन्धनिरीक्षणन दुष्प्राप्यग्रन्थसाहाय्यकरणेन च महतायमेणदमनुसंधानमपूरयन् ।

एतद्ग्रन्थप्र ण्यने मध्य पूज्यपादाना सर्वविद्यानिधाना महामहोपाध्यायश्री गोपीनाथकविराजमहाभागानाम् श्रीमना कमलाकान्तमिश्राणाम् श्रीमता रघुनाथशर्ममहाभागानाम श्रीमता लालविहारिमिश्राणाञ्च शास्त्रीय परमार्ह साहाय्य प्राप्यैवैतन्निबन्ध पूर्णतामगादतस्तेषामेव कृपाफलमेतदिति एवेभ्यो विनिवेदयाऽऽत्मान कृतकृत्य मन्ये ।

मनन निरूपन पूर्वोक्तजिज्ञासाविषय मे मनस्योशाऽऽयत । शून्य इव विनानाद्वयवादाख्यात्प्रोक्तन तदुभयवादसमशालिक च अद्वैत तत्प्रक्रिया चात्र प्रादर्शि । वस्तुन पूर्वोक्तजिज्ञासाया नियत्समाधान जातमिति विद्वद्भिरेव निर्णेष्यत ।

अस्य मुद्रण प्रकाशने च ग्रह—( वर्मा ) देशाभिन्ना श्रीमन्तो रेवतयम महाभागा एम ए, पी एच ड न्यायवेदान्तमीमांसाचार्या जामनगर स्थाणद्वारावासिद्धपीठाधीश्वरा श्रीमन्त शान्तिलालमहाभागा, सौराष्ट्रप्रदेश स्थितशपनठाधीश्वरा श्रीमन्ता रामप्रपन्नाचार्यमहाभागाश्च सर्वविध सौविध्य मुपपादितवन्त । अत एतदर्थमतेभ्य ससाधुवाद कृतज्ञता विज्ञापयामि ।

अन्त सर्वविघ्नहर्तु श्रीसाम्बसदाशिवस्य श्रीचरणयो साञ्जलिप्रणामान् विनिवद्यान्य साफल्य प्रार्थये ।

२०२६ वं० मं० विजयदशम्याम । विनयावनत

मुरलीधरपाण्डेय

साङ्ख्ययोगविभागाध्यक्ष वदान्तव्याख्याता च वाराणसेयसंस्कृतविश्वविद्यालय ।

# विषयसूची

— ॐ —

॥ श्रीगणेशायनमः ॥

॥ श्रीसाम्बशिवायनमः ॥

# श्रीशङ्करात्प्रागद्वैतवादः

## अथ प्रथमोऽध्यायः

### उपोद्घातः

अनादिशक्तिसम्पन्नं विभुं सर्वहृदि स्थितम् ।
वन्दे बोधमयं नित्यं विश्वेशं लोकशङ्करम् ॥१॥

श्रीसूर्यनाथतनुजेन मगद्विजेन,
श्रीरामरत्यभिधया जनिमाश्रितेन ।
प्राक् शङ्कराद् यतिवरान् मुरलीधरेण,
व्यातन्यतेऽद्वयनयस्य जवि स्वरूपम् ॥२॥

× × ×

अनिर्वाच्याविद्याद्वितयसचिवस्य प्रभवतो,
विवर्ता यस्यैते वियदनिलतेजोऽवनयः ।
यतश्चाभूद्विश्वं चरमचरमुच्चावचमिदं,
नमामस्तद् ब्रह्मापरिमितसुखज्ञानममृतम् ॥३॥

( भामत्या मङ्गलाचरणं श्रीवाचस्पतिमिश्रस्य )

भारत आत्मजगतो मीमांसातीव पुरातनी । लोकस्य सर्वप्राचीन ग्रन्थाद् वेदादारभ्याद्यापि विरच्यमानग्रन्थेष्वनया विचारो निर्बाध-

रूपेण प्रचलति। एतद् विचारकं शास्त्रं दर्शनमित्युच्यते। दर्शनानां शाखोपशाखा भेदाश्च पुराप्यासन् अद्यत्वेऽपि वर्तन्ते। छान्दोग्योपनिषदि देवविद्याब्रह्मविद्याभूतविद्यानां नाम श्रूयते।[1]

महाभारते—

*साङ्ख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा।*
*ज्ञानान्येतानि राजर्षे विद्धि नानामतानि वै॥*[2]

इत्यादिना मुनीना नानामतानि पठ्यन्ते। पालिवाङ्मयस्य दीघनिकायग्रन्थस्य ब्रह्मजालसूत्ते अजित, केसकम्बल, पूरण, कस्सप, पकुध कच्चायन, मंखलि, गोसाल, संजयवेल्लठिपुत्त निगंठनाथपुत्त इत्यादिदार्शनिकानां परिचयः प्राप्यते। कौटलीयार्थशास्त्रे—

*'साङ्ख्यं योगो लोकायतं चेति आन्वीक्षकी।*[3]

इत्यभ्यस्यते। जैनवाङ्मयस्य षड्दर्शनसमुच्चयग्रन्थस्य गुणरत्नटीकाया त्रिषष्ट्युत्तरत्रिशतसङ्ख्याका दार्शनिकदृष्टयः परिगण्यन्ते— यथा सूत्रकृदाख्ये द्वितीयेऽङ्के परप्रावादुकानां त्रिषष्ट्यधिकत्रिशतसङ्ख्याकानि मतानि—

तदर्थसङ्ग्रहगाथेयम्—

*असि इसयं करियाए अकिरियवाईए होई चुलसुई।*
*अन्नाणि अ सतट्ठी वेणइयाणं च बत्तीसं॥*

( संस्कृतच्छाया ) अशीत्यधिकं शत क्रियावादिनामक्रियावादिनां च भवति, चतुरशितिः अज्ञानिनां सप्तषष्टिर्वैनयिकानां च द्वात्रिंशत्। महाकविबाणभट्टकालेऽपि दार्शनिकाना त्रयोदशी संख्योपलभ्यते— भागवतम्, कापिलम्, जैनम्, लौकायतिकम्, काणादम्, पौराणिकम्,

---

१—द्र० छान्दोग्योपनिषदि—७-१-२।

२—द्र० महाभारते शान्तिपर्वणि मो० ध० ३४९ अ० ६४ श्लो०।

३—द्र० कौटलीयेऽर्थशास्त्रे विद्यासमुद्देशे १।१।१।

ऐश्वरकारणिकम्, कारन्धमिन्, सप्ततान्तवम्, शाब्दिकम्, बौद्धमं पाञ्चरात्रिकम्, औपनिषदं च।[४]

कालप्रभावादेतेषु केषाञ्चन नाममात्रं स्मर्यते, केषाञ्चनांशिकं स्वरूपमात्रमेवावशिष्यते, सम्प्रदायबलेन केषाञ्चनैव साङ्गोपाङ्ग स्वरूपमवलोकयितुं शक्यते। येषां साङ्गोपाङ्ग स्वरूपमवलोकयितुं शक्यते, तेषामप्यारम्भकालादविच्छिन्नपरम्परयैतत्स्वरूप सम्मुखमुपतिष्ठत इति वक्तुं न शक्यते। यथायत्वे केवलं द्वादशदर्शनानां स्वरूपमुपलभ्यते। तत्र षट् श्रुतिसापेक्षाणि षट् च श्रुतिनिरपेक्षाणि। श्रुतिसापेक्षाणि दर्शनानि–साङ्ख्य योगो न्यायवैशेषिक पूर्वमीमांसोत्तरमीमांसा (वेदान्तः) च। श्रुतिनिरपेक्षाणि सौत्रान्तिकवैभाषिकयोगाचारमाध्यमिकभेदेन चत्वारि सौगतदर्शनानि, पञ्चमं जैनदर्शनम्, षष्ठं चार्वाकदर्शनम्। एष्वपि चार्वाकदर्शनस्य न कोऽपि ग्रन्थः प्राप्यते, केवलं तत्तच्छास्त्रेषु तत्तच्छास्त्रटीकासु च खण्डनाय तन्मतानुवाद एवोपलभ्यते। साङ्ख्ययोगौ प्राप्येते अपि किन्तु स्वसर्गौ कृशकायावेव। यान्यपराणि साङ्गोपाङ्गतयाद्यत्वे प्राप्यन्ते तान्यपि नानवच्छिन्नपरम्परया, किन्तु मध्ये मध्ये उत्थानपतने सहमानान्यधुना यावत्समागतानि।

आधुनिका इतिहासविदः कथयन्ति यद् भारतीयसंस्कृतपालिप्राकृतभाषानिबद्धदर्शनानां क्रमबद्ध इतिहासो भगवद्बुद्धकालाद् विक्रमपूर्वषष्ठशताब्दीतः (अर्थात् ईसापूर्वपञ्चमशताब्दीत) प्राप्यते। एतत्कालादारभ्य भगवत्पादशङ्कराचार्यकालपर्यन्तमेतेषां दर्शनानां वारद्वयमुत्थानपतने समभवताम्। प्रथमं मौर्यमहाराजानां काले विशेषतः प्रियदर्शिमहाराजाशोकस्य शासनकाले बौद्धधर्मेण सह बौद्धदर्शनस्य महती प्रतिष्ठाऽजायत तथा श्रुतिसापेक्षदर्शनानां सविशेष ह्रासोऽभवत्। एतत्प्रतिक्रियारूपेण महाराजपुष्यमित्रशासनकाल

४—हर्षचरिते ( जीवानन्दसम्पादिते ) पृ० ६३२।

वदिकधर्मोज्जीवनेन सह वैदिकदर्शनानामभ्युदयोऽभवद् बौद्धदर्शनानि च ह्रासमन्वभवन्। प्रायोऽयमेव काल साङ्ख्ययोगयो र्न्यायवैषिकयो. पूर्वमीमासादर्शनस्य च प्राय समग्ररूपेण (न सर्वेषामेव) समुपलभ्यमानग्रन्थाना क्रमशो निर्माणकाल —यथोच्यतेऽस्मिन्नेव काले ईश्वरकृष्णेन साङ्ख्यकारिका, पतञ्जलिना पातञ्जलयोगसूत्रम, गोतमेन कणादेन च न्यायसूत्र वैशेषिकसूत्र च शबरस्वामिना (ई० पूर्वतृतीयशताब्द्याम्) च जैमिनीयसूत्रस्य शावरभाष्य व्यरचिषत्।

तत काल. पुन शिपयवर्तन। शकवशीयो महाराजकनिष्को भारतस्य शासकोऽभवत्। अयमेव कश्मीरे बौद्धाना चतुर्थी धमसङ्गतिमकारयद, यत्र महाविद्वान् अश्वघोषोऽध्यक्ष असीत। अस्मिन् काले बौद्धधर्मदर्शनयो पुनरभ्युदयो जात नागार्जुन आर्यदेवादयश्चाकाट्यतर्क प्रबलयुक्तिभिश्च माध्यमिकमत शून्यवाद समर्थितवन्तो बौद्धदर्शनवाङ्मय च समेधितवन्त.।

कालक्रमाद गुप्तवशीयना महाराजाना शासनकाल समागत। गुप्तवशीया महाराजा सन्तोऽपि धर्मसहिष्णवः समभूवन्। येषा शासनकाले तृतीयचतुर्थशताब्दयो दर्शनक्षेत्रे किञ्चिद् वर्णनीय महदद्भुत परिवतन नावलोक्यते। अस्मिन काले शैववैष्णवबौद्धजैनभागवतादिधर्मदर्शनानि सर्वाण्यपि स्वीया स्वीया स्थितिं सुदृढामकुर्वन्। किन्तु चतुर्थशतान्द्या अन्ते बौद्धदर्शनस्य महानभ्युदयोऽजायत। अयमेव स कालो यस्मिन् आचार्योऽसङ्गस्तस्यानुजा वसुबन्धु, वसुबन्धो शिष्यो महातार्किको दिङ्नागोऽपरे च स्थिरमतिधर्मकीर्तिप्रभृतयो बौद्धदर्शनाचार्या जनिमलभन्त। येन योगाचारमतस्य विज्ञानाद्वयवादस्य समुत्थान जात सहव वैदिकधर्मदशनाना च ह्रास समपद्यत।

कालप्रभावात्पुन भारते शासन पर्यवर्तत। वर्द्धनवशीया राजान शासका अभवन्। वर्द्धनवशीयेषु राजसु सम्राड् हर्षवर्द्धनोऽतीव योग्यो धर्मसहिष्णु सन्नपि बौद्धधमदशनपक्षपात्यासीत्। एवभूतस्यापि

तस्य विचारो धर्मदर्शनविचारे समन्वयात्मकोऽभवत् । यत्प्रभावेण विज्ञानाद्वयवादसमृद्ध्या सह वैदिकधर्मदर्शनयोरप्यभ्युदयः प्रारब्धः । अयमेव कालः सप्तमाष्टमशताब्द्योः, यत्र श्रीकुमारिलभट्ट-मण्डनमिश्रभगवत्पादशङ्कराचार्याणामाविर्भावोऽजायत । आचार्य-कुमारिलभट्टो बौद्धे विध्वस्तस्य वैदिककर्मकाण्डभागस्य पूर्वमीमांसाया उद्धाराय स्वजीवनं समर्पयत् । अनयोः सप्तमाष्टमशताब्द्योराचार्य-कुमारिलभट्टस्य तथा तच्छिष्यप्रशिष्याणां लेखनीभ्यः प्रसूतैर्ग्रन्थरत्नैः पूर्वमीमांसाशास्त्रस्य तथा भगवत्पादश्रीमच्छङ्कराचार्यस्यैवं तच्छिष्य-प्रशिष्याणां श्रीपद्मपादसुरेश्वरविज्ञानात्ममुनिप्रभृतीनां लेखनीभ्यः प्रसूतैर्ग्रन्थरत्नैश्चोत्तरमीमांसाशास्त्रस्य वेदान्तस्य कोषः समपूर्यत ।

भगवता श्रीशङ्करेणोत्तरमीमांसाशास्त्रस्य वेदान्तस्यौपनिषदस्य ब्रह्माद्वैतवादस्योद्धारायेशादिदशोपनिषदां बादरायणप्रणीतब्रह्मसूत्रस्य श्रीमद्भगवद्गीतायाश्च प्रस्थानत्रय्यास्तथान्येषां महाभारतान्तर्गत-सनत्सुजातीयस्य माण्डूक्यकारिकाग्रन्थस्य च ब्रह्माद्वैतप्रतिपादकानां भाष्यं नवीनो ग्रन्थश्च निरमायिषाताम् । उक्तग्रन्थभाष्यादिषु श्रीशङ्करेण निर्विशेषब्रह्माद्वैतवादः सिद्धान्तितः । यत्र सजातीय-विजातीयस्वगतभेदशून्यं चिन्मात्रं सदेवैकं नित्यं परमार्थतत्त्वम्, तदन्यत्सर्वं दृश्यमानमनित्यमाविद्यकम्, ज्ञानेनाज्ञानापगमो मोक्षः, जीवब्रह्मणोरैक्यमिति वर्णितम् । अयं ब्रह्माद्वैतसिद्धान्तोऽस्य भगवत्पाद-श्रीशङ्करस्य प्रबलैस्तर्कैरकाट्ययुक्तिभिः पदार्थप्रतिपादनविलक्षण-प्रतिभया बौद्धैः पराहतोऽपि पुनरुज्जीवितः । एतन्महिम्नैवौपनिषदोऽपि ब्रह्माद्वैतवादः शङ्करनाम्ना शाङ्करवेदान्त इति रूपेण प्रथितः ।

श्रीशङ्करात्पूर्वतनेषु बौद्धजैनगौतमीयकाणादादिदर्शनग्रन्थेषु तट्टीकादिषु च ब्रह्माद्वैतवादस्य च संक्षिप्तपर्यालोचनचर्चा चोपलभ्यते, किन्तूपनिषदो गीता ब्रह्मसूत्रं माण्डूक्यकारिका च विहायान्याः कोऽपि तद्विषयकः प्रामाणिको ग्रन्थष्टीका वा न प्राप्यते । प्राप्यते च

ब्रह्माद्वैतनिकटवर्ती शब्दाद्वैतप्रतिपादकः श्रीभर्तृहरिप्रणीतो वाक्यपदीयनामको ग्रन्थः, श्रीशङ्करात् किञ्चित्पूर्वभवश्रीमण्डनमिश्रप्रणीतो ब्रह्मसिद्धिनामको ग्रन्थः। यद्यपि वेदान्तशास्त्रस्य पूर्वापरग्रन्थोद्धरणरूपनिपदां ब्रह्मसूत्रस्य च भाष्यप्रणेतारोऽपरेऽप्यभूवन्निति प्रतीयते यथा छान्दोग्योपनिषदः सूत्रभाष्यकर्ता ब्रह्मनन्दी, एतत्सूत्रभाष्यस्य भाष्यकर्ता द्रविडाचार्यः, वेदान्तसूत्राणां वृत्तिकर्ता कश्चिद्बुपवर्षो बोधायनः कृतकोटिर्वा, कश्चिद् वेदान्तवार्तिककर्ता वेदान्तव्याख्याता वा सुन्दरपाण्ड्यः, कश्चिद् वेदान्ताचार्यो ब्रह्मदत्तः, बृहदारण्यकोपनिषदो विस्तृतवृत्तिकर्ता विस्तृतभाष्यकर्ता वा भर्तृप्रपञ्चः। किन्त्वेषामद्यत्वे केवलमुद्धरणरूपेण वाक्यखण्डानि, यत्र तत्र नामानि, यत्र कुत्रापि वानूदिताः सिद्धान्ता एव प्राप्यन्ते। अद्यत्वे वेदान्तार्थप्रतिपादकेषूपलभ्यमानेषूपनिषद्ब्रह्मसूत्रभगवद्गीताभाष्येषु पूर्णं प्रामाणिकं सर्वतः प्राचीनं श्रीशङ्कराचार्यप्रणीतमेव भाष्यं प्राप्यते। श्रीशाङ्करभाष्यात्परमेव श्रीभास्कररामानुजनिम्बार्कवल्लभमध्वाचार्यप्रभृतिभिः प्रणीतं ब्रह्मसूत्रादिभाष्यमवाप्यते। एभिराचार्यैर्ब्रह्मसूत्रादिभाष्यप्रणयनद्वारा क्रमशो भेदाभेदविशिष्टाद्वैतद्वैताद्वैतशुद्धाद्वैतद्वैतरूपा वेदान्तभेदा उपस्थापिताः। श्रीशङ्करात्परमेका परम्परैव जाता यत् स्ववेदान्तमतप्रतिष्ठापनायोक्तप्रस्थानत्रय्या उपनिषद्ब्रह्मसूत्रभगवद्गीतारूपाया स्वानुकूलभाष्यप्रणयनम्। अत एभिराचार्यैः स्वयमथवैतद्शिष्यप्रशिष्यैः प्रस्थानत्रय्या भाष्यं प्रणीतम्।

आचार्यशङ्करात् परवर्तिन इमे सर्वेऽपि भास्कररामानुजनिम्बार्कवल्लभमध्वादय आचार्या अंशतः पूर्णतो वा द्वैतमतसमर्थका अद्वैतमतविरोधिनश्चासन्। एतेषामाक्षेपस्यैकं लक्ष्यमाचार्यशङ्कर एव। इमे सर्वेऽपि भास्करप्रभृतय आचार्याः श्रीशङ्कराभिमत निर्विशेषाद्वैतसिद्धान्तं विज्ञानाद्वयवादस्य शून्याद्वयवादस्य च निकटवर्तितमं बुद्ध्वा विज्ञानाद्वयवादशून्याद्वयवादयोरुपनिषत्संरक्षणं

निश्चित्य तथा विज्ञानशून्यशब्दद्वयस्थाने ब्रह्मशब्दं सन्निवेश्य विज्ञानाद्वयवादशून्याद्वयवादयो र्नामान्तरमात्रं शाङ्करसिद्धान्तमित्यभिप्रेत्याचार्यशङ्करं प्रच्छन्नबौद्ध इतिशब्देनाक्षिपन्ति। केचन मीमांसका नैयायिका अप्येवमेवाक्षिपन्ति। अत्रेदं महदद्भुतं यदेकोऽपि बौद्धदार्शनिको विद्वान् आचार्यशङ्करं प्रच्छन्नबौद्धं स्वीकर्तुं नोद्यतः। नचैकोऽपि बौद्धविद्वान् प्रच्छन्नबौद्धरूपेणाचार्यशङ्करमाद्रियते न वा निराक्रियते।

श्रीशङ्करात्परवर्तिनः शान्तरक्षितप्रभृतयो बौद्धविद्वांसः 'अपरे' इति पदेन ब्रह्माद्वैतवादिमतमुपस्थापयन्ति, तट्टीकाकाराश्च कमलशीलादयः "अपरे=औपनिषदिकाः" इति रूपेण व्याचक्षते। यदि बौद्धदर्शनस्यैवापरं संस्करणं ब्रह्माद्वैतदर्शनं स्यात्तदा प्रतिभावद्भिः प्रगल्भै बौद्धदार्शनिकै विद्वद्भिर्नैतत्तिरोहितं भवेत्, तथा नैव खण्डनप्रयासः कृतो भवेत्, परं च ससखित्वेन सयूथ्यत्वेन च शाङ्करमतं समादृतमेव स्यात्।

अत आचार्यशङ्करसमर्थितो ब्रह्माद्वैतवादो बौद्धसमर्थितविज्ञानाद्वयवादस्याथवा बौद्धसमर्थितशून्याद्वयवादस्य नवीनं ब्रह्मपरकमौपनिषदं संस्करणं न, अपि तु बौद्धदर्शनाभ्युदयकालाद् अतिपूर्वकालभव उपनिषत्प्रभवो ब्रह्मसूत्रसमर्थितो भगवद्गीतोद्वलितो निर्विशेषब्रह्माद्वैतवादोऽस्ति।

अद्यत्वे सामान्यत इदं प्रतीयते यदाचार्यशङ्करात् पूर्वमद्वैतप्रतिपादकं मतद्वयमेवासीद् विज्ञानाद्वयवादः शून्याद्वयवादश्च। किन्तु गभीरया शास्त्रपर्यालोचनयाऽपरेषामप्याचार्याणामनेकेऽद्वैतवादा दृष्टिपथमायान्ति। यथार्षवेदान्तिषु—आश्मरथ्यस्यौडुलोमेश्च भेदाभेदवादः, आर्षवेदान्त्यतिरिक्तेषु भर्तृप्रपञ्चस्य द्वैताद्वैतवादः, ब्रह्मदत्तस्याद्वैतवादो यत्र जीवस्य जन्माप्यङ्गीक्रियते, भर्तृहरेः शब्दाद्वैतवाद, सत्ताद्वैतवादः, भावाद्वैतवादो वा, एवमेव मण्डनमिश्रस्यापि शब्दाद्वैतवादः, सत्ताद्वैतवादः, भावाद्वैतवादो वा।

एतदतिरिक्ता अपि सन्ति शिवाद्वैतवादशक्त्यद्वैतवादादयः। एतेषु आश्मरथ्यस्यौडुलोमेर्भर्तृप्रपञ्चस्य ब्रह्मदत्तस्य भर्तृहरे मण्डनस्य च तत्तदद्वैतवादस्य सङ्केतो ब्रह्मसूत्रस्य शाङ्करभाष्ये, उपनिषदां शाङ्करभाष्ये, सुरेश्वराचार्य-पद्मपादाचार्यसर्वज्ञात्ममुन्यादिग्रन्थेषु चोपलभ्यते। शिवाद्वैतशक्त्यद्वैतयोस्तु कालप्रस्थानसम्प्रदायस्वरूपादिभेदेनानयोरन चर्चा न क्रियते। एतेषामद्वैतवादानां कालसिद्धान्तादिनिर्णयेनेद स्पष्टीभविष्यति यद्भगवत्पादसमर्थितनिर्विशेषब्रह्माद्वैतवादेन सहैतेषामद्वैतवादानां कियान् सम्बन्धः, कियत्साम्यम्, कियच्च वैषम्यम्।

अत एतस्मिन् निबन्धे एतत्स्पष्टयितुं यत्नः क्रियते यदाचार्यशङ्करात्पूर्वतनानामद्वैताचार्याणामद्वैतवादस्वरूपं कीदृशमासीत्। तेषु तेष्वद्वैतवादेषु ब्रह्मजीवमायामोक्षमुक्तिसाधनज्ञानादीनां विचारो वर्तते नवा, वर्तते चेत् किंस्वरूपः, कस्मिन्नंशे आचार्यशङ्करसिद्धान्तात्तेषां सिद्धान्ता साम्यमावहन्ति, कस्मिन्नंशे वैषम्यमावहन्ति। तेनात्र श्रीशङ्करात्पूर्वतनाः सर्वे ब्रह्माद्वैतनिकटवर्तिनोऽद्वैतवादा विवेचयिष्यन्ते। पूर्वकथनानुसारमुक्तहेतुना शिवाद्वैतशक्त्यद्वैतवादयो विचारोऽत्र न प्रस्तोष्यते। विज्ञानाद्वयशून्याद्वयवादयोरपि सामान्यचर्चामात्र विधास्यते।

यद्यपि विज्ञानाद्वयवादः शून्याद्वयवादश्च निर्विशेषब्रह्माद्वैतवादस्यातिनिकटवर्तिनौ। एतयोरपि स्वरूपप्रदर्शनमत्र विधेयम्। किन्तु विज्ञानवादस्य शून्यवादस्य च विपुलं वाङ्मयमुपलभ्यते। तत्र नास्ति किञ्चित् तिरोहितम्। अतो विज्ञानाद्वयवादस्य शून्याद्वयवादस्य च स्वरूपप्रदर्शनमत्र नापेक्षितम्। अत्र तेषामेवाद्वैतवादानां स्वरूपप्रदर्शनमावश्यकं येषां ग्रन्थादिकं नोपलभ्यते किन्तु केवलं यत्र तत्र ग्रन्थेषु टीकासु च सङ्केतमात्रमुपलभ्यते। यथा श्रीभर्तृप्रपञ्चस्य बृहदारण्यकोपनिषदः शाङ्करभाष्ये पञ्चदशस्थलेषु 'केचित्' 'पण्डितम्मन्याः' 'औपनिषदिकाः' इत्यादिशब्दैरस्य मतान्युपन्यस्य खण्डितानि। एवमेवोपवर्षब्रह्मनन्दिद्रविडसुन्दरपाण्ड्यब्रह्मदत्तादीनां

मतानि ब्रह्मसूत्रादीनां व्याख्यानोपव्याख्यानेषु तन्त्रवार्त्तिकादिषु व्याकरणमहाभाष्यादिषु च यत्र तत्रांशत उपलभ्यन्ते। अत एतेषामेवाचार्याणां यतस्ततो मतान्याहृत्यैतेषां मते ब्रह्मजीवादीनां किं स्वरूपमित्यत्र प्रदर्शयिष्यते। विज्ञानाद्वयशून्याद्वयवादयोस्तु स्वरूप स्पष्टमेव। तेन विज्ञानाद्वयवादस्य कृते शून्याद्वयवादस्य च कृते पृथगध्यायो न निर्धारितः। अनयोः स्वरूप विशेषरूपेण 'श्रीगौडपादाचार्यः' इति नामक एकादशेऽध्याये श्रीगौडपादसिद्धान्तस्य सौगतसिद्धान्तेन सह साम्यवैषम्यविचारावसरे यथाप्रयोजन प्रदर्शयिष्यते।

एवमाचार्यशङ्करात्पूर्ववर्त्तिनामाचार्याणामद्वैतवादस्वरूपप्रदर्शनात् पूर्वमाचार्यशङ्करस्याविर्भावकालस्य तत्सिद्धान्तस्य च परिचय आवश्यक इति मत्वाचार्यशङ्करस्य स्थितिकालनिर्णयस्तत्सिद्धान्तस्य च संक्षिप्तः परिचय उपस्थाप्यते। ततः क्रमशः श्रीशङ्कराचार्यस्य प्रच्छन्नबौद्धत्वनिराकरणम्, वेदान्तस्य प्राचीनता, आर्षवेदान्तः, (आत्रेयः, आश्मरथ्यः, औडुलोमिः, कार्ष्णाजिनिः, काशकृत्स्नः, जैमिनिः, बादरिः, काश्यपः) उपवर्ष, बोधायन, कृतकोटि. ब्रह्मनन्दी (नन्दी, टङ्कः, आत्रेयः) द्रविडः, भर्तृहरि, ब्रह्मदत्त, सुन्दरपाण्ड्य, गौडपादाचार्य, मण्डनमिश्रः,[४] इत्येतेषामाचार्याणा तत्तन्नामकेष्वध्यायेषु तेषां कालनिर्णयपूर्वकं तेषा वेदान्तविषयका ब्रह्मजीवजगन्मायामोक्षमुक्तिसाधनविचारा उपस्थाप्यन्ते। तदनन्तर परिशिष्टे ब्रह्माद्वैतसम्प्रदाये प्रचलितगुरुपरम्परानुसारम्—

४—श्रीमण्डनमिश्रश्रीसुरेश्वराचार्ययोरभेदोऽस्माभि र्नाङ्गीक्रियते। श्रीमण्डनः श्रीशङ्करात् प्राचीनस्तथा तस्य प्रस्थानं च श्रीशङ्करप्रस्थानाद् भिन्नं, एतद् श्रीकुप्पूस्वामिशास्त्रिभिः ब्रह्मसिद्धिभूमिकायां साध्वनुसहितम्। यदि केषाञ्चन विदुषां मते द्वयोरभेदस्तर्हि श्रीमण्डनस्य प्रस्थानभेदप्रदर्शनाय, तस्य ब्रह्माद्वैतधाराप्रदर्शनाय चैष प्रयासो इति मत्वा विद्वद्भिः क्षन्तव्यः।

नारायणं पद्मभवं वसिष्ठं शक्तिं च तत्पुत्रपराशरं च।
व्यासं शुकं गौडपदं महान्तं गोविन्दयोगीन्द्रमथास्य शिष्यम् ॥

इति रीत्या क्रमेण नारायणस्य, ब्रह्मणः, वसिष्ठस्य, (शक्तेः) पराशरस्य, व्यासस्य, (शुकस्य) गौडपादस्य (गोविन्दपादस्य) चाभिमताद्वैतवादस्य स्वरूपं महाभारतभागवतयोगवासिष्ठविष्णुपुराणसूतसंहितोक्तमुपन्यस्यते। तत्रैव परिशिष्टे महाकविकालिदासाश्वघोषभारवीणामप्यद्वैतवाद उपस्थापयिष्यते।

एतेनाचार्यशङ्करात्पूर्वतनानां ब्रह्माद्वैतनिकटवर्तिनामद्वैतवादानां स्वरूपपरिशीलनेन विद्वद्भिरेतत् स्पष्टमवगन्तुं शक्यते यद् भगवता श्रीशङ्कराचार्येण कियतांशेन निर्विशेषब्रह्माद्वैतवाद उद्भावितः, अथवा कियतांशेनोपनिषदाद्वैतवादः केवलं व्याख्यातः समर्थितश्चाथवा विज्ञानाद्वयस्य विज्ञानपदस्थाने शून्याद्वयवादस्य च शून्यपदस्थाने ब्रह्मपद संस्थाप्य, विज्ञानाद्वयशून्याद्वयसिद्धान्त एव यत् किञ्चित्परिवर्त्य विज्ञानाद्वयवादाय शून्याद्वयवादाय चोपनिषद रूप परिधान च प्रदाय विज्ञानाद्वयवाद एव शून्याद्वयवाद एव च निर्विशेषब्रह्माद्वैतरूपेण प्रतिष्ठापित इति। एवं श्रीमच्छङ्कराचार्यात्पूर्वमद्वैतवादस्वरूपम् इत्यस्य परिशीलनं श्रीशङ्करसमर्थितनिर्विशेषब्रह्माद्वैतवादस्य विज्ञानाद्वयशून्याद्वयवादाभ्यां प्राचीनताम्, पार्थक्यम्, उपनिषन्मूलकताम्, वैशिष्ट्यम्, पारमार्थ्यं चाभिव्यनक्तीति।

# श्रीशङ्करस्याविर्भावकालः

भगवत आचार्यशङ्करस्याविर्भावकालविषये बहुवैमत्यमस्ति। ईशाब्दत पूर्वं पञ्चमशताब्दीत आरभ्य ईशाब्दस्याष्टमशताब्दीमध्येऽस्याविर्भावकालो दोलायमानो वर्तते। कालनिर्णये शृङ्गेरीकाञ्चीकामकोटिद्वारकागोवर्द्धनपीठानामाम्नायेष्वपि मतैक्यं नास्ति। काञ्चीकामकोटिपीठाम्नायानुसारमाचार्यस्य जन्म २५९३ कल्यब्दे तिरोभावश्च २६२५ कल्यब्दे (४७६ ई० पू०) द्वारकामठाम्नायानुसारमस्य जन्म २६३१ कल्यब्देऽभवत्। गोवर्द्धनशृङ्गेरीज्योतिष्पीठाना परम्परावलोकनेनाविर्भावकालस्य स्पष्टनिर्णयो नोपलक्ष्यते।

आधुनिका इतिहासविदः सप्तमेशाब्दतोऽष्टमेशाब्दमध्येऽस्य जन्म मन्वते। यथा—

१—श्रीमैक्समूलर[1] ७८८ ई०
२—श्रीमैकडानल ,, ,,
३—श्री के०बी० पाठक[2] ,, ,,

---

१—इण्डियनफिलोसोफी—भाग २, पृ० ४४७, ले० श्रीराधाकृष्णन् महोदय।

२—डा० के० बी० पाठकमहोदयाना लेखा द्रष्टव्या —
(क) धर्मकीर्ति एण्ड शङ्कराचार्य (बी० बी० आर० ए० एस०, भा० १८ पृ० ८८–९६)
(ख) भर्तृहरि एण्ड कुमारिल (बी०बी०आर०ए०एस०, भा० १८, पृ० २१७–२३८)

४—श्री कीथ महोदयः[3] ८२० ई०

५—श्रीरामावतारशर्मा[4] ७०१ शकाब्दतः ७६५ श० पर्यन्तम्

६—श्रीतिलकमहोदयः[4] ६८८ ई०

७—श्रीराजेन्द्रघोषः[4] ६८६ ई०

८—श्रीस्वामिप्रज्ञानानन्दः[5] ईशाब्दतः पूर्वं द्वितीयशताब्द्याम्।

अत आचार्यस्याविर्भावकालविषये कानिचिदान्तरङ्गप्रमाणान्युपयुज्यन्ते। यथा—

न्यायसूचीनिबन्धोऽयमकारि विदुषां मुदे।
श्रीवाचस्पतिमिश्रेण वस्वङ्कवसुवत्सरे॥
(८ ९ ८)

इतिश्रीवाचस्पतिमिश्रोक्तः 'वत्सर' शब्दो शकमानपरो यतो हि श्रीवाचस्पतिमिश्रकृतायाः न्यायवार्तिकतात्पर्यटीकायाः 'परिशुद्धि' व्याख्याकार उदयनाचार्यः स्वलक्षणावल्यामाह—

तर्काम्बराङ्कप्रमितेष्वतीतेषु शकान्ततः।
(६ ० ९)
वर्षेषूदयनश्चक्रे सुबोधां लक्षणावलीम्॥

यदि उदयनाचार्यः ९०६ शकाब्देऽवर्तत तदा द्वयोः श्रीशङ्कराचार्योदयनयो मध्येऽष्टौ वर्षाणि अनर्हाण्यानि। अतः पूर्वोक्तवाचस्पति-

---

(ग) पोजीसन आफ कुमारिल एण्ड दिगम्बर जैन लिटरेचर। (ट्रांसेक्सन आफ दी नाइन्थ इण्टरनेशनल कांग्रेस आफ ओरिएण्टलिस्टस्, पृ० १८७–२१४)।

३—ए हिस्टोरी आफ संस्कृत लिटरेचर, पृ० ४७६, ले० कीथ।

४—द्र० श्रीशङ्कराचार्यः ले० श्रीबलदेवोपाध्याय। अत्रान्येषामपि बहूनां मतान्युल्लिखितानि।

५—द्र० 'वेदान्तदर्शनेर इतिहास' ले० स्वामी श्रीप्रज्ञानानन्दः।

मिश्रश्लोके उक्तो वत्सरो वैक्रम एव। एवं आचार्यशङ्करः ८९८ वैक्रमाब्दात् परवर्ती न भवितुमर्हति।

एवमेव ब्रह्मसूत्रे शाङ्करभाष्ये द्वितीयाध्याये तर्कपादे ( अ० सू० २।२।२८ ) बौद्धमतानामुल्लेखावसरे उक्तम्—

'न हि कश्चिदुपलब्धिमेव स्तम्भः कुड्यं वेत्युपलभते, उपलब्धिविषयत्वेनैव तु स्तम्भः कुड्यादीन् सर्वे लौकिका उपलभन्ते। अतश्चैवमेव सर्वे लौकिका उपलभन्ते यत् प्रत्याचक्षाणा अपि बाह्यार्थमेव व्याचक्षते'—यदन्तर्ज्ञेयरूपं तद् बहिर्वदवभासते।

अस्मिन् भाष्येऽभिहितोऽर्थः पूर्वार्द्धरूपा कारिका च दिङ्नागप्रणीतायाम्-आलम्बनपरीक्षायमित्थमस्ति—

"यदन्तर्ज्ञेयरूपं तद् बहिर्वदवभासते।
सोऽर्थो विज्ञानरूपत्वात् प्रत्ययतयापि च ॥"

( आलम्बनपरीक्षायाम् ६ का० )

आचार्यकमलशीलेनापि "तत्वसङ्ग्रह" टीकायामियं कारिका ससन्दर्भमुपस्थापिता—"आचार्यदिङ्नागपादैः आलम्बन-प्रत्ययव्यवस्थार्थमुक्तम्" इत्यादिना।

आचार्यदिङ्नागो वसुबन्धोः शिष्य आसीत्। अस्य च कालः पञ्चमशताब्दी सुनिश्चितः। अत आचार्यशङ्करः पञ्चमशताब्दीतः पूर्ववर्ती भवितुं नार्हति।

धर्मकीर्त्तेरयं श्लोकः सुप्रसिद्ध—

"सहोपलम्भनियमादभेदो नीलतद्धियोः।
भेदश्च भ्रान्तविज्ञानै र्दृश्येतेन्दाविवाद्वये ॥"

अस्य पूर्वार्द्धो धर्मकीर्तेः प्रमाणविनिश्चये तथोत्तरार्द्धस्तस्यैव प्रमाणवार्त्तिके उपलभ्येते।

अयमेवार्थः शब्दान्तरेण ब्रह्मसूत्रशाङ्करभाष्ये इत्थमस्ति—

"इह तु यथा स्व सर्वैरेव प्रमाणै र्बाह्योऽर्थ उपलभ्यमानः कथ व्यतिरेकाव्यतिरेकादिविकल्पै र्न सम्भवतीत्युच्येत उपलब्धेरेव । न च ज्ञानस्य विषयसारूप्याद् विषयनाशो भवति । असति विषये विषयसारूप्यानुपपत्तेः बहिरुपलब्धेरेव विषयस्य । अत एव सहोपलम्भनियमोऽपि प्रत्ययविषययोरुपायोपेयभावहेतुकः, नाभेदहेतुक इत्यभ्युपगन्तव्यम् ।" (ब्र०सू०शा०भा० २।२।२८)

धर्मकीर्त्तेः कालः ६३५–६५० सुनिश्चितः । अत आचार्यशङ्करो धर्मकीर्त्तेः परवर्ती सिद्ध्यति ।

आचार्यशङ्करेणाचार्यकुमारिलभट्टस्य नाम न कुत्रापि गृहीतम् । किन्तु शङ्करदिग्विजयादिषु लोके चानयो सम्बद्धकथा अतीव प्रसिद्धा । आचार्यशङ्करस्य साक्षाच्छिष्येणाचार्यसुरेश्वरेण तैत्तरीयभाष्यवार्तिके आरम्भे[६] आचार्यकुमारिलभट्टो 'मीमांसकमन्य.' इति पदेनोक्तस्तदीय 'श्लोकवार्तिक' ग्रन्थस्यैक. श्लोकोऽप्युद्धृतः ।[७]

कुमारिलभट्टेन धर्मकीर्त्तेः प्रत्यक्षलक्षणस्य खण्डन तथा श्रीमतृ हरिसम्मतस्फोटवादस्य च खण्डनं श्लोकवार्तिके[८] कृतमस्ति । कुमारिलभट्टस्य तन्त्रवार्तिके[९] श्रीमतृ हरे र्वाक्यपदीयस्यैक श्लोक[१०] उद्धृतोऽस्ति । इत्सिमलेखानुसार श्रीमतृ हरे. स्वर्गारोहणकाल. ६५१–६५२ ई० अस्ति ।

इत्थ चाचार्यशङ्करकुमारिलभट्टौ समकालिकौ किञ्चित्पूर्वापरवर्तिनौ वा सिद्ध्यत. ।

६—तैत्तरीयभाष्यवार्तिके आनन्दाश्रममुद्रिते, पृ० ५ ।
७—श्लोकवार्तिके, श्लो० ११० ।
८—श्लो० वा० १, ३, ३७ ।
९—तं० वा० १, ३, ३० सूत्रे ।
१०—वा० प० का० २, श्लो० १२१ ।

जैनविदुषा श्रीमदकलङ्कशिष्येण श्रीविद्यानन्देन स्वीये अष्टसहस्रीग्रन्थे श्रीसुरेश्वराचार्यप्रणीतस्य बृहदारण्यकोपनिषद्भाष्यवार्तिकस्यांश उद्धृतः। अकलङ्कशिष्यपट्टावल्यनुसारं विद्यानन्दः ७२१ ईसवीये आचार्यपदे प्रतिष्ठापित आसीत्। जिनसेनेनापि स्वीये हरिवंशग्रन्थेऽस्य विद्यानन्दस्य नाम निर्दिष्टम्।

एवं विद्यानन्दात्पूर्ववर्ती श्रीसुरेश्वराचार्यः, श्रीसुरेश्वराचार्यात्पूर्ववर्ती आचार्यशङ्करः सुतरां सिद्ध्यति। अतोऽष्टमशताब्द्याः पूर्वभाग एवाचार्यशङ्करस्याविर्भावकालो मन्तुं शक्यते।

अनेन प्रकारेण मैक्समूलरमैकडानलकृष्णस्वामि के०बी० पाठकमहोदयैर्निर्णीतोऽतिप्रसिद्धिमागतः ७८८ ई० आचार्यशङ्करस्याविर्भावकालो विचारार्ह एव।[११]

आचार्यशङ्करस्य जीवनेतिवृत्तविषये स्वयंप्रकाशमुनिरेकश्लोकीव्याख्यायामिदमुक्तवान्—

अष्टवर्षे चतुर्वेदी द्वादशे सर्वशास्त्रवित्।
षोडशे कृतवान् भाष्यं द्वात्रिंशे मुनिरभ्यगात्॥

एतावत्यल्पीयसि जीवनकाले आचार्यशङ्करो वैदिकवर्णाश्रमधर्मस्य संरक्षणप्रसारार्थमारामेश्वराद्धिमालयमाकश्मीरात्प्राग्ज्योतिष्पुरं पद्भ्यामेव पर्यटितवान्। भारते तदानीन्तनप्रसिद्धबौद्धजैनकापालिकधातुकर्मादिवादिभिः सह शास्त्रार्थविचारं कृतवान्। औपनिषदाद्वैतवादस्य पुनरुज्जीवनाय ईशादिदशोपनिषदां ब्रह्मसूत्रस्य श्रीमद्भगवद्गीतायाश्च भाष्यं प्रणीतवान्। श्रीशङ्कराचार्यनाम्ना एतदतिरिक्तानामन्येषामपि विष्णुसहस्रनाममहाभारतान्तर्गतसनत्सुजातीयललितात्रिशतीप्रभृतिग्रन्थानां भाष्यप्रणयनमुपदेशसाहस्रीप्रभृतिग्रन्थानां प्रणयनं च प्रसिद्धम्, किन्त्वस्मिन् विषये इतिहासविदां

११—कालनिर्णयविषये विशेषपरिज्ञानाय श्रीबलदेवोपाध्यायप्रणीतः श्रीशङ्कराचार्यग्रन्थोऽवलोकनीयः।

मतभेदः। एतेषां संरक्षणार्थं च तेन भारतस्य चतुर्षु भागेषु काञ्चीशारदागोवर्द्धनज्योतिर्मठाश्चत्वारस्तथा पञ्चमः शृङ्गेरीपीठः स्थापिताः। एतेषु च विद्वांसः स्वशिष्याः श्रीपद्मपादसुरेश्वरहस्तामलकतोटकनामानः प्रध्यक्षत्वेन प्रतिष्ठापिताः। एते क्रमश ऋग्यजुःसामाथर्ववेदाध्यायिन आसन्। अत एव ऋग्वेदादिक्रमेण पूर्वादिदिग्क्रमेणैव तेषां निर्वाचनं कृतम्।[१२]

भगवत्पादशङ्कराचार्यस्य सर्वतो महत्त्वपूर्णं कार्यं निर्विशेषब्रह्माद्वैतवादस्यौपनिषदाद्वैतवादस्य वा प्रतिष्ठापनं पुनरुज्जीवनं च। यो हि मध्ये बौद्धादिदार्शनिकप्रभावैं विरलप्रचारोऽभवत्। भगवत्पादस्य प्रतिभायाः प्रयासस्य चायं परिणामो यदद्यत्वे सर्वदर्शनेषु प्राधान्यं निर्विशेषाद्वैतवाद एवार्हति।

श्रीमद्भगवत्पादानन्तरं श्रीभट्टभास्कररामानुजनिम्बार्कवल्लभमध्वप्रभृतिप्रवर्तितप्रचारा भेदाभेदविशिष्टाद्वैतद्वैतशुद्धाद्वैतद्वैतनामानो वेदान्ता अस्य निर्विशेषब्रह्माद्वैतवादस्य प्रतिपक्षित्वेन लोके स्थानमलभन्त। एषु भेदाभेदादिवेदान्तेषु केचन प्राधान्येन केचनाप्राधान्येन चेमं निर्विशेषब्रह्माद्वैतमवश्यं समालोचयन्ति। स्वीयालोचने च भगवन्तं श्रीमच्छङ्कराचार्यं प्रच्छन्नबौद्धत्वेन परिगणयन्ति। अतोऽत्र इदमवश्यविचाराङ्गतामापतति यदयं श्रीशङ्कराचार्यः प्रच्छन्नबौद्ध आसीन्नवा।

१२—आचार्यस्य जीवनेतिवृत्तविषये विशेषज्ञानाय श्रीमाधवविरचित-शङ्करदिग्विजय, श्रीराजचूडामणिविरचितः शङ्कराभ्युदयः श्रीवेंकटेशमखिरचितः शङ्करसम्बन्धी ग्रन्थः, श्रीवसदेवोपाध्यायविरचित-श्रीशङ्कराचार्य डा० राममूर्तिशर्मप्रणीत शङ्कराचार्यः ग्रन्था अवलोकनीया।

शङ्करदिग्विजयस्य प्रणेता माधवो वेदभाष्यकर्तुः प्रसिद्धाद् माधवाद् भिन्नः। एतदर्थं म०म० श्रीगोपीनाथकविराजविरचित 'भारतीय संस्कृत और साधना' नामको ग्रन्थो द्रष्टव्यः।

## २—श्रीशङ्कराचार्यो न प्रच्छन्नबौद्धः

श्रीशङ्कराचार्यसमर्थितेऽद्वैतवादे बौद्धदर्शने च प्रतीयमानं भूयः सिद्धान्तसाम्यं प्रक्रियासाम्यं चावलोक्याचार्यशङ्करात् परवर्तिनो भास्करयादवप्रकाशरामानुजश्रीकृष्णमिश्रप्रभृतयो वेदान्ताचार्याः शालिकनाथादयः पूर्वमीमांसकाश्च श्रीशङ्करं प्रच्छन्नबौद्धममन्यन्त। योगीतमसूत्रवृत्तौ मायावादो वेदान्तवादश्च परिहसितः। केचन विद्वांसः पद्मपुराणे शङ्कराचार्यविरोधिनं श्लोकमेव न्यवेशयन्। अनेन सिद्धान्तसाम्येन प्रक्रियासाम्येन च न केवलमिमे प्रतीपा एवाचार्या अन्यथाबुध्यन्त किन्तु स्वयं शङ्कराचार्यस्तदनुयायिनश्च स्वीयं सिद्धान्तमापाततो बौद्धमतपक्षपातिनं बुद्ध्वा तदुद्धाराय प्रयतितवन्तः। अत आक्षेप्तकर्तृणां तदुद्धारकर्तृणां च वचांस्यवोद्धृत्य भगवत्पादशङ्कराचार्यस्य वास्तविकं रूपं प्रदर्शयितुं प्रयत्यते।

श्रीशङ्कराचार्यानन्तरं सर्वप्रथमं नवमशताब्द्यां भास्कराचार्यो भेदाभेदसिद्धान्तप्रतिपादकं भाष्यं ब्रह्मसूत्रस्य रचितवान्। स आचार्यः शङ्करसमर्थितं मायावादं माहायानसम्प्रदायिकं मन्यते।

यथा :—

'विगीतं विच्छिन्नमूलं माहायानिकबौद्धगाथितं मायावादं व्यावर्णयन्तो लोकान् व्यामोहयन्ति।'

(ब्र०सू० १–४–२५ भास्करभाष्ये पृ० ८५)

अपरं च तत्रैव—

ये तु बौद्धमतावलम्बिनो मायावादिनस्तेऽप्यनेन न्यायेन सूत्रकारेणैव निरस्ता वेदितव्याः। (ब्र० सू० २–२–२९ भा० भा० पृ० १२४)

यादवप्रकाशोऽपि—

'वेदोऽनृतो बुद्धकृतागमोऽनृतः, प्रामाण्यमेतस्य च तस्य चानृतम्।
बोद्धानृतो बुद्धिफले तथानृते, यूयं च बौद्धाश्च समानसंसदः॥'

(शतदूषण्यां शास्त्रप्रामाण्यानुपपत्तिसमर्थने ४३ वादे)

अनेन शाङ्करा बौद्धाश्च समाना एव प्रतिपादिताः ।

श्रीरामानुजाचार्योऽपि भगवत्पादशङ्करं प्रच्छन्नबौद्धं कथयति—

'एवंरूपेण सकर्मकेण सकर्तृकेण ज्ञातृत्वेन सर्वलोकसाक्षिकमपरोक्षमवभासमानेनैव ज्ञानमात्रमेव परमार्थ इति साधयन्तः सर्वलोकोपहासकारण भवन्ति वेदवादच्छद्मप्रच्छन्नबौद्धनिराकरणे निपुणतरं प्रपञ्चितम् । (ब्र० सू० २–२–२७श्रीभाष्ये)

गौतमसूत्रवृत्तौ—

"मायावादतमोव्याप्तं 'जगत्' इत्यादौ त्वद्न्यायशार्दूलसिंहनादे सपदि ददशिरे मायिगोमायवस्ते । माया तु परवञ्चनेच्छा ।"

( गौ० सू० वृ० ४।१।३ )

श्रीकृष्णमिश्रः प्रबोधचन्द्रोदये रूपके वेदान्तिनो बौद्धाना समानकोटावेवोपवेशयति—

प्रत्यक्षादिप्रमासिद्धविरुद्धार्थाभिधायिनः ।
वेदान्ता यदि शास्त्राणि बौद्धैः किमपराध्यते ॥

( प्र० च० अ०-२ श्लो०४ )

पूर्वमीमांसाप्रसिद्धग्रन्थे शास्त्रदीपिकायां मायावादाद् बौद्धदर्शनं वरमिति कथयति—

तस्माद वरमस्माद् मायावादान् माहायानिकवादः ।

( शा० दी०अद्वैतमतखण्डने पृ० १११ )

एवमेव प्रकरणपञ्चिकायां शालिकनाथेनोक्त यद् वेदान्तिना माहायानिकसम्प्रदाये मोह आसीत् ।

यथा—

तस्मादेषोऽपि माहायानिकपक्षप्रवेशो ब्रह्मवादिनां मोह एव ।
(प्र० प० तत्त्वालोकनामकेऽष्टमे प्रकरणे ब्रह्माद्वैतखण्डने पृ० १५६)

पद्मपुराणेऽपि ब्रह्मवादिन प्रच्छन्नबौद्धमकथयत्—

'मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमेव च ।'

( पद्मपुराणे ६।२६३।७० )

वेदार्थवन् महाशास्त्रं मायावादमवैदिकम् ।

( तत्रैव ६।२६३।७४ )

एषु पूर्वोक्ताक्षेपेषु कियती तथ्यता तथेमानाक्षेपान् प्रति भगवाञ्छङ्कराचार्य एव तदनुयायिनश्च कियत् सावधानाङजागरूका-श्चासन्निति प्रदर्शयितुं कानिचिद् वाक्यान्यत्रोद्ध्रियन्ते—

यथा भगवाञ्छङ्करः—

'शून्यमेव तर्हि तत् (ब्रह्म) दिग्देशगुणगतिफलभेदशून्य हि पर-मार्थसत् अद्वय ब्रह्म मन्दबुद्धीनामसदिव प्रतिभाति ।

( छान्दोग्ये शा० भा० ८।१।१ )

एवमेव पुनः —

'सदभावमात्र तत्त्वं परिकल्पयन्ति बौद्धाः, नतु सत्प्रतिद्वन्द्विवस्त्व-न्तरमिच्छन्ति ।' ( तत्रैव ६।२।१ )

पुनः शून्यवादब्रह्मवादयोरन्तर ब्रह्मसूत्रभाष्ये प्रतिपादयति—

'ब्रह्मावसानोऽय प्रतिषेध. नाभावावसान ।'

( ब्र० सू० ३–२–२२ शा० भा० )

बौद्धैस्तु सर्वमेव निषिध्यते तद् विपरीत श्रीशङ्करेण तु जगतो दृश्यमानरूपप्रपञ्चमेव निषिध्यते—

'तस्माद् ब्रह्मणः रूपप्रपञ्च प्रतिषेधति परिशिनष्टि ब्रह्मेत्यव-गन्तव्यम् ।' ( ब्र० सू० ३।२।२२ शा० भा० )

शून्यवादनिराकरणे बद्धकटि भगवान् शङ्कर आह—

'न ह्यय सर्वप्रमाणसिद्धो लोकव्यवहारः अन्यत्तत्त्वमनधिगम्य शक्यतेऽपह्नोतुम् ।' ( ब्र० सू० २।२।३१ शा० भा० )

माण्डूक्यकारिकाभाष्येऽपि भगवान् शङ्कर आह—

'ज्ञानज्ञेयज्ञातृभेदरहित परमार्थतत्त्वमद्वयमेतन्न बुद्धेन भाषितम्। यद्यपि बाह्यार्थनिराकरणं ज्ञानमात्रकल्पना चाद्वयवस्तुसामीप्यमुक्तम्। इदं तु परमार्थतत्त्वमद्वैतं वेदान्तेष्वेव विज्ञेयमित्यर्थः'।

(मा० का० ४।९९ शा० भा०)

अपरञ्च तत्रैव—

'तथा च सति अद्वैतस्य वस्तुत्वे प्रमाणाभावात् शून्यवादप्रसङ्गः, द्वैतस्य चाभावात् न रज्जुसर्पादिकल्पनाया निरास्पदत्वानुपपत्तिरित्युक्तमेतत्।' (मा० का० २।३२ शा० भा०)

उपर्युक्तम् २।२।३१ ब्रह्मसूत्रस्य शाङ्करभाष्यं भामतीकारो वाचस्पतिमिश्र इत्थं व्याचष्टे—

'अपि चारोपितं निषेद्धनीयम्। आरोपश्च तत्त्वाधिष्ठानो दृष्टः यथा शुक्तिकादिषु रजतादेः। न चेदस्ति किञ्चित्तत्त्वं कस्य कस्मिन्नारोपः, तस्माद् निष्प्रपञ्चं परमार्थं सत् ब्रह्म अनिर्वाच्यप्रपञ्चात्मनाऽऽरोप्यते। तच्च तत्त्वं व्यवस्थाप्य प्रतातिकत्वेन सांव्यवहारिकतत्त्व-प्रमेयाणां चानवतत्त्वोपपद्यते इति युक्तमुत्पश्याम'।

(ब्र० सू० २।२।३१ शा० भा० भामत्याम्)

एतावदेव नहि इतोऽपि स्पष्टं शून्यवादात् ब्रह्मवादं सावधानतया पृथक् स्थापयति यथा—

'नहि ब्रह्मवादिनो नीलाद्याकारां वित्तिमभ्युपगच्छन्ति किन्तु अनिर्वचनीयं नीलादिमिति।' (ब्र० सू० २।२।२८ भामत्याम्)

आनन्दबोधभट्टारकाचार्यो न्यायमकरन्दे वाचस्पतिमिश्रशब्दमेवानुकरन्नाह—'तथा सत्येषोऽपि माध्यमिकपक्षानुप्रवेशो ब्रह्मवादिना मोह एवेति व्यामूढभाषितम्, नहि वयं नीलाद्याकारां वित्तिमभ्युपगच्छाम, येन माध्यमिकपक्षानुप्रवेशः किन्तु अनाद्यविद्याविकोडितमलीकनिर्भासमाकारं प्रपञ्चमाचक्ष्महे।

(न्या० म० मोक्षनिरूपणे पृ० ३०५)

अपरञ्च—

"तथा सत्येतस्मादेषोऽपि महायानिकपक्षानुप्रवेशो ब्रह्मवादिनां मोह एव।" ( न्या० म० मोक्षनिरूपणे पृ० २९४ )।

पञ्चपादिकाविवरणे आचार्यप्रकाशात्मा बौद्धवादब्रह्मवादयोः साम्यकथनं निषेधन्नाह—

"दुर्जनरमणीयां वाचं जल्पति सुगतविज्ञानवादसमानोऽयं वेदान्तवादः स शोचनीयः।" (पञ्चपादिकाविवरणे पृ० ८४)

सर्वज्ञात्ममुनिः ( ९०० ई० ) संक्षेपशारीरके बौद्धब्रह्मवादयोः पार्थक्यमित्थं निरूपयति—

"ननु शाक्यभिक्षुसमयेन समः प्रतिभात्ययं च भवतः समयः।
यदि बाह्यवस्तु वितथं नु कथं समयाविमौ न सदृशौ भवतः॥"

( सं० शा० २।२५ )

"यदि बोध एव परमार्थवपुः न तु बोध्यमित्यभिमतं भवति।
ननु चाश्रितं भवति बुद्धमुनेः मतमेव कृत्स्नमिह मस्करिभिः॥"

( सं० शा० २।२६ )

"परमार्थसंश्रयतया जनितं प्रविभक्तमेव तु परस्परतः।
स्थिरत्वमभ्युपेतमिह नः समये ननु मातृमातविषयप्रभृति॥"

( सं० शा० २।२८ )

श्रीहर्षः खण्डनखण्डखाद्ये सौगतब्रह्मवादयोः पार्थक्यमित्थमाह—

"एवं च सति सौगतब्रह्मवादिनोः को विशेष इति चेदयं विशेषः यदादिमः सर्वमेवानिर्वचनीयं वर्णयति—विज्ञानव्यतिरिक्तं पुनरिदं विश्वं सत्त्वासत्त्वाभ्यामनिर्वचनीयं ब्रह्मवादिनः संगिरन्ते।

(ख०ख० पृ० ३६ अच्युतग्रन्थमालाप्रका०, बनारस)

इत्यञ्च प्रतीयते यद् भास्कररामानुजाचार्यादयः श्रीशङ्कराचार्यस्याशयमबुद्ध्वैव केवलं स्वमतप्रतिष्ठापनार्थं मत्सरग्रस्ततया आचार्य-

शङ्करं प्रच्छन्नबौद्धत्वेन तत्समर्थितमद्वैतं चावैदिकत्वेनाचिक्षिपुः। पद्मपुराणे च केचन विरोधिश्लोकाः प्रक्षिप्तवन्तः। अतो नायं शङ्कराचार्यः प्रच्छन्नबौद्धो न वा तत्समर्थितो निर्विशेषब्रह्माद्वैतवादो बौद्धदर्शनेन प्रभावितः। वस्तुतो निर्विशेषब्रह्माद्वैतवाद औपनिषदाद्वैतवादः, यो हि उपनिषत्सु वर्णितः, स एव भगवता शङ्करेण समर्थितः प्रचारितश्च। मध्ये बौद्धदर्शनप्रभावेण च यो हि विरलप्रचारोऽजायत स पुनरुज्जीवितः। भगवत्पादशङ्कराचार्यात् पूर्वमप्यनेके ब्रह्माद्वैतवादिन आचार्या अभूवन्। येषां सिद्धान्तज्ञानायाचार्यशङ्करस्य सिद्धान्तज्ञानमावश्यकमिति हेतोः प्रथमं शाङ्करसिद्धान्तोऽग्रे निरूप्यते।

## २—शाङ्करसिद्धान्तः

पूर्वमुक्तं यद्भगवत्पादशङ्कराचार्यसमर्थितोऽद्वैतवादो नापूर्वः। ततः पूर्वमप्यनेके वेदान्ताचार्या अभूवन्। येषां नामानि ब्रह्मसूत्रे[1] यामुनाचार्य[2]रामानुजाचार्या[3]दिग्रन्थेषूपलभ्यन्ते। येषु आत्रेयाश्मरथ्यौडुलोमिकार्ष्णाजिनिकाशकृत्स्नजैमिनिबादरिकाश्यपोपवर्ष (बोधायनः कृतकोटिः) गुहदेवकपर्दिभारुचिब्रह्मनन्दि (आत्रेयः, नन्दी, टङ्कः) द्रविडमतृ प्रपञ्चमतृ मित्रमतृ हरिब्रह्मदत्तसुन्दरपाण्ड्यगौडपादमण्डनमिश्रादयः प्रसिद्धाः। एतेषु कतिपयान् केवलं चतुरो मतृमित्रभारुचिकपर्दिगुहदेवान् विहायान्येषां सर्वेषां सिद्धान्ताः सिद्धान्तलवो वा यत्र तत्र वेदान्तग्रन्थेषु वेदान्तग्रन्थटीकासु चोपलभ्यन्ते। अतो भगवत्पादशङ्करसमर्थितनिर्विशेषब्रह्माद्वैतसिद्धान्तेन सह साधर्म्यवैधर्म्यविचारणायामौपयिकत्वेनैतेषामाचार्याणां सिद्धान्तोपस्थानात्पूर्वं

---

१—ब्रह्मसूत्रे—३।४।४४, १।२।२९, १।४।२१, ३।१।९, १।४।२२, १।२।२८, १।२।३०।

२—श्रीयामुनाचार्यग्रन्थे—सिद्धित्रये पृ० ४-५।

३—श्रीरामानुजाचार्यग्रन्थे वेदार्थसङ्ग्रहे पृ० १४८।

शाङ्करसिद्धान्तोपस्थापनमावश्यकमिति बुद्ध्या प्रथमं श्रीशङ्कराचार्यस्य निर्विशेषब्रह्माद्वैतवादस्य मूलभूताः केचन सिद्धान्ता संक्षेपेणात्रोपन्यस्यन्ते ।

(श्रीमता भगवता शङ्कराचार्येण समर्थितोऽद्वैतवादः, केवलाद्वैतवादः, निर्विशेषाद्वैतवादः, ब्रह्माद्वैतवादः, औपनिषदाद्वैतम् इत्यादिनामभिः प्रसिद्धः । यतो ह्यत्र केवलं निर्विशेषं ब्रह्मैवैकं तत्त्वमुपनिषत्प्रतिपादितं सत्यमिति स्वीकृतम् । ब्रह्मातिरिक्तं सर्वं दृश्यमानं जगज्जीवश्च मिथ्या । दृश्यमदृश्यं च सर्वं ब्रह्मैव । ब्रह्मणो जगतो जीवस्य च तावदेव द्वैततया भानं यावद् ब्रह्मज्ञानं नोदेति । ब्रह्मणो जगतो जीवस्य च द्वैततया भानेऽज्ञानमविद्या वा कारणम् । अज्ञाने नष्टे भेदबुद्धेरपगमे सति जगज्जीवरूपस्य प्रपञ्चस्याभावो भवति । प्रपञ्चाभावे एकमद्वैतं ब्रह्मावभासते ।

एतदर्थं भगवत्पादैस्तदनुयायिभिश्च—अध्यासवादः, विवर्तवादः अविद्या ( माया ), अनिर्वचनीयख्यातिः प्रातिभासिकसत्ता, व्यावहारिकसत्ता, पारमार्थिकसत्ता, अभिन्ननिमित्तोपादानवादः, बिम्बप्रतिबिम्बवादः, अवच्छेदवादः, आभासवादः, अजातिवादः, दृष्टिसृष्टिवादादयश्च प्रतिष्ठापिताः ।

### अध्यासः

सकलप्रपञ्चस्य मूलकारणमध्यास एव । अयमध्यासो नैसर्गिको मिथ्याप्रत्ययस्वरूपः, कर्तृत्वभोक्तृत्वप्रवर्तकः, लोकव्यवहारहेतुः ।[४] अध्यासबलेनैव प्रमाणप्रमेयरूपः समस्तलोकव्यवहारः प्रवर्तते ।

---

४—एवमनादिः अनन्तो नैसर्गिकोऽध्यासो मिथ्याप्रत्ययरूपः कर्तृत्वभोक्तृत्वप्रवर्तकः सर्वलोकप्रत्यक्षः । अस्यानर्थहेतोः प्रहाणाय आत्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्ते । ( ब्र० सू० शा० भा० उपोद्घाते )

मतस्मिंस्तद्बुद्धिरध्यासः कथ्यते। अध्यासमविद्यामपि मन्यते।[1] अनेनाध्यासेन रज्जौ सर्पत्वारोपः, शुक्तौ च रजतत्वारोपो जायते। तेन रज्जौ सर्पबुद्धिः शुक्तौ च रजतबुद्धिरुदेति। अविद्याया निवृत्तौ च रज्ज्वाः शुक्तेश्च वास्तविकं ज्ञानं जायते। एवमेव नित्यशुद्धबुद्धसच्चिदानन्दरूपे स्वप्रकाशे परमार्थरूपे ब्रह्मणि दृश्यमानः सकलश्चराचररूपः प्रपञ्चोऽवभासते। अस्यावभासनेऽध्यासोऽविद्याऽज्ञानं वैव कारणम्। अविद्योपगमे ब्रह्मसाक्षात्कारे जाते जागतिकः प्रपञ्चो विलीयते; पारमार्थिकं सद्रूपं ब्रह्म च केवलमद्वैतमवतिष्ठते।

अध्यासस्य सर्वमान्यं लक्षणं ब्रह्मसूत्रशाङ्करभाष्यस्योपोद्घाते उक्तम्—स्मृतिरूपः परत्र पूर्वदृष्टावभासः। सोऽयमध्यासः षड्विधः—

१–धर्माध्यासः, २–धर्मसहितधर्मिणोऽध्यासः, ३–सम्बन्धाध्यासः, ४–सम्बन्धसहितसम्बन्धिनोऽध्यासः, ५–अन्यतराध्यासः, ६–अन्योन्याध्यासः। प्रकारान्तरेणाध्यासस्य भेदद्वयमपि क्रियते—१–स्वरूपाध्यासः, २–संसर्गाध्यासश्च। अत्र द्वयोरेव षण्णामन्तर्भावः यथा—स्वरूपाध्यासे पूर्वोक्तानां प्रथमद्वितीयपञ्चमानामन्तर्भावः। पूर्वोक्तस्तृतीयः संसर्गाध्यासेऽन्तर्भूतः। चतुर्थषष्ठौ स्वरूपाध्याससंसर्गाध्यासयोः समिश्रणरूपौ। अध्यासजनने कारणत्रयम्—१–प्रमेयदोषः, २–प्रमातृदोषः, ३–प्रमाणदोषः।

विवर्तवादः—

अध्यासेन सद्ब्रह्मणि असतः प्रपञ्चस्य प्रतीतिः भ्रान्तिरूपा। अत इयं प्रतीतिर्न ब्रह्मणो विकारः परिणामो वा किन्तु विवर्तः। विकारः परिणामो वा तात्त्विकोऽन्यथाभावो भवति। यथा पयसो दधिरूपेण परिणामः। विवर्तश्च अतात्त्विकोऽन्यथाभावो यथा रज्जौ सर्पः शुक्तौ रजतं च। एवमेव दृश्यमानमखिलं जगज्जीवश्च ब्रह्मणो विवर्तरूपं

१–सर्वत्र अध्यासभाष्ये।

न परिणामरूपम् । यतो हि यथा रज्जौ सर्पबुद्धौ सत्यां भ्रान्त्यपगमे च रज्जुरेवावतिष्ठते तथैव अविद्यानिवृत्तौ ब्रह्मसाक्षात्कारे जाते प्रपञ्चापगमे केवलं ब्रह्मैवावतिष्ठते ।

एवञ्च जगदिदं ब्रह्मणो विवर्तरूपम् । विवर्तवादस्वीकारेणैव ब्रह्मणो निर्विकारत्वसिद्धिः[६], जगतोऽपारमार्थिकत्वसिद्धिः, ब्रह्मणश्चाद्वैतत्वसिद्धिः ।

## अविद्या

प्रपञ्चाध्यासो विवर्तश्चाविद्यया सिद्धयति । अविद्या अज्ञानम् । सा चाविद्या ब्रह्मणः शक्तिर्मायाप्रकृत्यादिशब्दव्यपदेश्या, अनादि, न भावरूपा न चाभावरूपा किन्तु भावाभावविलक्षणा, तत्त्वातत्त्वाभ्यामनिर्वचनीया, ब्रह्मणो भिन्नत्वाभिन्नत्वाभ्यां चानिरूपणीया त्रिगुणात्मिका जगन्मूलभूता ।[७] सा च विशुद्धसत्त्वप्रधानतया माया, मलिनसत्त्वप्रधानतया चाविद्येत्युच्यते । अस्मिन्मते मायाऽविद्ययोर्वास्तविको भेदो न मन्यते । इयमेव ईश्वरजीवयोर्भेदं जनयति-

६—ब्र० सू० २।१।१४ शा० भा० ।

७—अव्यक्ता हि माया तत्त्वान्यत्वनिरूपणाशक्यत्वात् । (ब्र० सू० १।४।३ ) शा० भा० अविद्याप्रत्युपस्थापित०—( तत्रैव २।२।२ ) अविद्याप्रत्युपस्थापितस्वभावत्वाच्च । ( त० १।२।१३ ) अविद्याकृतनामरूपादि—( त० ४।३।१४ ) उपाधीनां चाविद्याप्रत्युपस्थापितत्वात् ( त० ३।२।१५ ) अविद्याकृतनामरूपोपाधिकतया ( त० ४।३।१४ ) अविद्याकल्पितनामरूप—( त० २।१।३३ ) अविद्योपाधिपरिच्छेद—( त० २।१।१४ ) तस्यात्विद्याप्रत्युपस्थापितमपारमार्थिकं जैवं रूपम् । ( त० १।३।२० ) एवमविद्यादिदोषवताम्—समारम्पम् ( त० २।१।१४ ) देहादिषु—आत्मबुद्धिरविद्या ( त० १।३।२ ) ।

मायोपाधिक आत्मेश्वरः अविद्योपाधिक आत्मा जीवः।[८] अविद्याया द्वे शक्ती स्तः —

१—आवरणशक्तिः

२—विक्षेपशक्तिश्च[९]।

आवरणशक्त्या नित्यं शुद्धं बुद्धं मुक्तमप्यात्मानमनित्यमशुद्धमबुद्धं बद्धं च मन्यते लोकः। स्वप्रकाशस्य चैतन्यरूपस्यात्मनः स्वरूपबोधे बाधिका भवतीयं शक्तिः। विक्षेपशक्त्या[१०] समस्तोऽयं जागतिकः प्रपञ्चो जायते। अविद्ययैव नामरूपात्मकं जगत्प्रति-

८—( क ) मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्।
( श्वे० उ० ४।१० )

( ख ) अनादित्वेन जीवाविद्ययोः।
(ब्र० सू० १।२।७ शा० भा० भामत्याम्)

( ग ) ब्र० सू० १।३।३० शा० भा० भामत्याम्।

( घ ) एक एव परमेश्वरः कूटस्थनित्यः विज्ञानधातुरविद्यया मायया। माया……अनेकधा विभाव्यते नान्या विज्ञानधातु-रस्ति। ( ब्र० सू० १।३।१९ शा० भा० )

( ङ ) बृ० भा० उ० भा० वा० सा० २१६।

( च ) वाक्यसुधायाम् १३ ( श्रीदामोदरशास्त्रिसम्पादिता बनारस १९०१ ई० )

९—( क ) कर्मविक्षेपकाविद्या० (ब्र०सू० १।३।३० शा०भा० भामत्याम्)

( ख ) हस्तामलके १२।

( ग ) अव्याकृतम् अविद्या, माया, प्रकृति……आच्छादनविक्षेप-संस्कारमात्ररूपस्थितिरनादिरविद्या। (पञ्चपादिका—वि० पृ० ९८, म० ग० ओ० सीरिज १९५८ ई० )

१०—शक्तिद्वयं हि मायाया विक्षेपावृत्तिरूपकम्।
विक्षेपशक्तिर्लिङ्गादि ब्रह्माण्डान्तं जगत् सृजेत्।
अन्तर्दृग्दृश्ययोर्भेदं बहिश्च ब्रह्मसर्गयोः।
आवृणोत्यपरा शक्तिः सा संसारस्य कारणम् ( दृग्दृश्यविवेके १३।१५। ) ईश-केन-कठ-मुण्डक-माण्डूक्य-तैत्तिरीय-छान्दोग्य-बृहदारण्यकोपनिषदां भाष्ये गीताभाष्ये च।

भाति। जगतो विवर्तने उपादानादि—कारणमित्थमाचार्यैर्निरूपितम्—संक्षेपशारीरकानुयायिभिः—ईश्वरस्य चैतन्यमेव विवर्ततयोपादानकारणं माया तु केवलं द्वारकारणम्। वाचस्पतिमिश्रैस्तु—रज्जुसर्पदृष्टान्तेन ईश्वरस्य चैतन्यभाग एव विवर्ततयोपादानकारणं माया तु नैव कारणं किन्तु सहकारिमात्रं न किमपि परिणाम्युपादानकारणम्। सिद्धान्तमुक्तावलीकारैस्तु माया परिणामितयोपादानकारणं विवर्ततयोपादानकारणं न किमपि। सर्वेषां मतेऽयं सारो यत् प्रपञ्चस्य कारणं चैतन्यं विवर्ततया, माया तु परिणामितया।

एवम्भूताया अविद्याया मूलं शतपथब्राह्मणे एवमुपलभ्यते :—

'अथ ब्रह्मैव परार्द्धमगच्छत्। तत्परार्द्धं गत्वा ऐक्षत कथं न्विमांल्लोकान् प्रत्यवेयामिति। तद् द्वाभ्यामेव प्रत्यवैद् रूपेण च नाम्ना च। (शतपथ ब्रा० ११।२।३)

भगवता शङ्करेण अविद्याया कृते इमे शब्दाः प्रयुक्ताः—मिथ्याज्ञानम्, मिथ्याप्रत्ययः, मिथ्याबुद्धिः[11] अव्यक्तम्[12] महासुषुप्तिः[13],

११—"मिथ्याज्ञाननिमित्तः" "नैसर्गिकोऽयं लोकव्यवहारः।" (ब्र० सू० १।१।१ शा० भा०)

'तदवगत्या मिथ्याज्ञानस्य संसारहेतोर्निवृत्तिः। (ब्र० सू० १।१।४ शा० भा०)

'मिथ्याज्ञानकल्पित उपभोगः—मिथ्याज्ञानकल्पितेनोपभोगेन"

(ब्र० सू० १।२।८ शा० भा०)

"मिथ्याज्ञानविजृम्भित नानात्वम्" (ब्र०सू० २।१।१४ शा०भा०)

"मिथ्याज्ञानपुरस्सर—नच मिथ्याज्ञानस्य सम्यग्ज्ञानादन्यत्र निवृत्तिः।'

(ब्र० सू० २।३।३१ शा० भा०)

"मिथ्याज्ञानं सम्यग्ज्ञानेन दग्धम्" (ब्र० सू० ४।१।१६ शा० भा०)

१२—"अविद्यात्मिका हि बीजशक्तिरव्यक्तशब्दनिर्देश्या।" (ब्र०सू० १।४।३ शा० भा०)।

१३—"परमेश्वराश्रया मायामयी महासुषुप्तिः, यस्यां स्वरूपप्रतिबोधरहिताः शेरते संसारिणो जीवाः।" (ब्र० सू० १।४।३ शा० भा०)

आकाश[१४], अक्षर[१५], अध्यास[१६], माया च[१७]। पञ्चपादिकायाम् (९८ पृ०) अविद्यायाः पञ्चदशनामानि लिखितानि :—तदुच्यते—येषां श्रुतिस्मृतीतिहासपुराणेषु नामरूपम्, अव्याकृतम्, अविद्या, माया, प्रकृति, अग्रहणम्, अव्यक्तम्, तमः, कारणम्, लयः, शक्तिः, महासुषुप्तिः, निद्रा, अक्षरम्, आकाशम्।

अविद्याश्रयणादेव अद्वैतश्रुतीनाम्—पुरुष एवेदं विश्वं कर्म तपो ब्रह्म परामृतम्, ब्रह्मैवेदममृतं पुरस्ताद् ब्रह्म पश्चाद् दक्षिणतश्चोत्तरेण, नेह नानास्ति किञ्चन, एकमेवाद्वितीयम् द्वैतश्रुतीनाम्, यतो वा इमानि भूतानि जायन्ते सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते, ज्यायान् पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान्दिवो ज्यायानेभ्यो लोकेभ्य इत्यादीनां च समन्वयो जायते। अविद्यास्वीकारादेव च ब्रह्मणो द्वे रूपे प्रतिपद्येते—"द्विरूपं हि ब्रह्मावगम्यते। नामरूपविकारभेदोपाधिविशिष्टं तद्विपरीतं च सर्वोपाधिविवर्जितम्।" (ब्र०सू० १।१।१२ शा०भा०)

अविद्या तथा माया परस्परं भिन्ना, अभिन्ना वेत्यत्र मतभेदः। अध्यासभाष्येण, कृत्स्नप्रसक्त्यधिकरणभाष्येण, २।१।२७ ब्र० सू० भाष्येण तथा पञ्चपादिकाविवरणेन (प० पा० वि० पृ० ३२) मायाविद्ययोरभेदः प्रतीयते। कैश्चन मायाविद्ययो र्भेदोऽपि मन्यते। एतन्मते माया शुद्धसत्त्वप्रधाना, अविद्या मलिनसत्त्वप्रधाना। मायाया

---

१४—"यदेतदव्यक्तं क्वचिदाकाशशब्दनिर्दिष्टम्। एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च।" (बृ० भा० उ० ३।८।११)

१५—"अक्षरात्परतः परः" (मु० २।१।२)।

१६—"तमेतमेवं लक्षणमध्यासं पण्डिता अविद्येति मन्यन्ते।" (ब्र० सू० १।१।१ शा० भा० उपोद्घाते)

१७—(क) "मायामात्रं ह्येतत् परमात्मनः ·······।" (ब्र० सू० २।१।९ शा० भा०)

(ख) "एक एव परमेश्वरः कूटस्थनित्यो विज्ञानधातुरविद्यया मायया।" (ब्र० सू० १।३।१९ शा० भा०)

ईश्वरेण सम्बन्ध, अविद्यायाश्च जीवेन सम्बन्धः। पञ्चपादिका-विवरणे सक्षेपशारीरके चानयो भेदवादः खण्डितः। श्रीसुरेश्वराचार्य आचार्यविद्यारण्यस्वामी चानयोरभिन्नत्वमेवाङ्गीकुरुतः। श्रीमाधवाचार्य. सर्वदर्शनसङ्ग्रहेऽनयो भेद प्रतिपादितवान्।[१८]

*अविद्याया भेदः*

इयमविद्या द्विविधा-एका मूला अपरा तूला। यथा हि "अनिर्वाच्याविद्याद्वितयसचिवस्य" इतिभामतीमङ्गलश्लोकव्याख्याने कल्पतरौ—एका ह्यविद्या अनादिभावरूपा देवताधिकरणे वक्ष्यते। अन्या पूर्वपूर्वभ्रमसंस्कारः, तदुभयाद्वितय सत्त्वासत्त्वाभ्यामनिर्वाच्यम्। एवमेव-अनावृत्यधिकरणे—"सम्यग्दर्शनविध्वस्ततमसाम्" इतिभाष्यपदव्याख्याने भामत्याम्—"द्विधा अविद्यातम." अत्र कल्पतरौ—द्विधा कार्यकारणरूपा। रचनानुपपत्त्यधिकरणे प्रवृत्तेश्च (ब्र० सू० २।२।२) इतिसूत्रभामत्यामपि अविद्याया विक्षेपशक्तेर्वर्णनमस्ति। बृहदारण्यकभाष्यवार्तिके—मूलाविद्यामाह—अविद्या प्रथते मौली व्यक्ताव्यक्तात्मनाऽनिशम्। (१।२।१३६) मूलाज्ञानस्य तूलाज्ञानहेतुत्वात्[१९]। (प० पा० पृ० २९)

*मूलाविद्याया नानात्वमेकत्वं च*

नानाजीववादिमण्डनमिश्रमतानुवर्तिवाचस्पतिमिश्रमते प्रतिजीवं मूलाविद्याया नानात्वम्। यथा—

"अयमभिसन्धि.—न वय प्रधानवदविद्यां सर्वजीवेष्वेकामाचक्ष्महे, येनैवमुपालभेमहि, किन्त्वियं प्रतिजीव भिद्यते। तेन यस्यैव जीवस्य

१८—श्री वा० अभ्यङ्कर सम्पादिते सर्वदर्शनसंग्रहे पृ० ४७७ प० ७ तथा पृ० ४४६ प० ४।

१९—अत्रत्ये चित्सुखाचार्यप्रणीततात्पर्यदीपिका व्याख्या, अखण्डानन्द प्रणीत तत्वदीपन व्याख्यान चावलोकनीये।

विद्योत्पन्ना तस्यैवाविद्यापनीयते न जीवान्तरस्य, भिन्नाधिकरणयोर्विद्याविद्ययोरविरोधात्। ( ब्र० सू० १-४-३ भा०शा० )

यथा हि बिम्बस्य मणिकृपाणादयो गुहाः एवं ब्रह्मणोऽपि प्रतिजीवं भिन्ना अविद्या गुहा। ( ब्र० सू० १।४।६ शा० भा० )

एकजीववादीष्टसिद्धिकाराचार्यमत इव विवरणकाराणां मते मूलाविद्यायाः एकत्वम्।

यथा—

"ब्रह्मैकमेव स्वाविद्यया जगदाकारेण विवर्तते स्वप्नादिवदिति मतान्तरम्। तस्मात् ब्रह्मैव स्वमायया अविद्यया विवर्तते इति।" (प० पा० वि० सप्तमे वर्णके पृ० ६६३) अत्र चित्सुखाचार्यः—ब्रह्मसिद्धिकाराणां मतमाह–जीवा एवेति। इष्टसिद्धिकाराणां मतमाह ब्रह्मैकमेवेति। अन्त्यं पक्षमुपसंहरति—तस्मादिति। (तात्पर्यदीपिकायाम्) अत्राखण्डानन्द —सिद्धान्तरहस्यमाह ब्रह्मेति। किन्तर्हि उपादेयमित्यत्राह–तस्मादिति। न चैकमुक्तौ सर्वमुक्तिप्रसङ्गः, इष्टापत्तेः। शिष्टमिष्टसिद्धौ द्रष्टव्यम्। (तत्त्वदीपने) एवमेवापरत्राप्येतत् स्फुटीकृतम्।[२०]

*अविद्याया आश्रयो विषयश्च*

अविद्याया आश्रयस्तथा विषय एक एव उत द्वाविति विषये शाङ्करसिद्धान्ते मतद्वयमस्ति। भामतीप्रस्थानेऽविद्याया आश्रयो जीवः, ब्रह्म तु विषयः, विवरणप्रस्थानेऽविद्याया आश्रयो विषयश्च जीव एवेत्यङ्गीकृतम्।

यथा भामतीप्रस्थाने—

'अन्तःकरणाद्यवच्छिन्नः प्रत्यगात्मा इदमनिदंरूपश्चेतनः कर्ता

२०—प० पा० वि० प्रथमवर्णके पृ० ९७ तथा ९९, अत्रत्ये तात्पर्यदीपिका तत्त्वदीपनं चावलोकनीये।

भोक्ता कार्यकारणाविद्याद्वयाधार अहङ्कारास्पदं संसारी सर्वानर्थसम्भारभाजन जीवात्मा। ( अध्यासभामत्याम् )

अत्र 'अविद्याद्वयाधार' इतिपदेन जीवस्याविद्याया आश्रयत्व स्पष्टीकृतम्।

पुनश्चाग्रे—

'नाविद्या ब्रह्माश्रया, किन्तु जीवे, सा त्वनिर्वचनीया।'

( समन्वयाधिकरणभामत्याम् १।१।४ )

अपरत्रापि श्रीवाचस्पतिमिश्रेणेतदुपपादितम्।[२१]

विवरणप्रस्थाने तु अविद्याया आश्रयविषयभेदविषयपरिहारेण तत्रैक्य प्रतिपादितम। यथा हि—

'न तावदज्ञानम् आश्रयविषयभेदापेक्षम्, किन्तु एकस्मिन्नेव वस्तुनि आश्रयत्वमावरणत्व चेतिकृत्य द्वय सम्पादयति। स्वाश्रयापवरकप्रदेशे कृत्यद्वयसम्पादिततमोवत् प्रक्रियात्मकत्वादावरणत्वाच्च। नहि तमो वस्तुद्वयापेक्षमवभासते।

एवमेवान्यत्रापि विवरणकारैः प्रतिपादितम्। मधुसूदनसरस्वतीभिः सिद्धान्तबिन्दौ प्रथमश्लोके श्रीपद्मपादाचार्यश्रीवाचस्पतिमिश्रश्रीसर्वज्ञात्ममुनीना त्रयाणामपि एतद्विषयकः पक्षः सुष्ठु वर्णित।[२२]

## सत्तात्रयम्

लोकव्यवहारसिद्धये सत्तात्रयमङ्गीकृतम्—( १ ) प्रातिभासिक-

२१—(क) समन्वयाधिकरणभामत्याम्—१।१।४
(ख) सर्वत्रप्रसिद्धाधिकरणभामत्याम्—१।२।१
(ग) अनुमानाधिकरणभामत्याम्—१।४।१
(घ) वाक्यान्वयाधिकरणभामत्याम्—१।४।६

२२—सिद्धान्तबिन्दौ पृ० २२६–२३४ विद्याविलास, चौखम्बा, वाराणसी मुद्रणे १९२८ ई०।

सत्ता[२३], (२) व्यावहारिकसत्ता, (३) पारमार्थिकसत्ता च।

### १—प्रातिभासिकसत्ता

यत्र प्रतीतिकालेऽसतोऽपि वस्तुनः सत्यवद् भासनं तदोत्तरकाले च बाधो भवति तत्र प्रातिभासिकसत्ता। यथा शुक्तौ रजतम्, रज्जौ च सर्पः। चाकचिक्याधिक्येन शुक्तौ रजतज्ञानं जायते, अन्धकाराधिक्ये च रज्जौ सर्पबुद्धिरुदेति। किन्तूत्तरकाले रजतव्यवहाराभावेऽन्धकारापगमे च रजतसर्पबुद्ध्यो बाधो जायते।

### २—व्यावहारिकसत्ता

ब्रह्मण्यध्यस्तस्य जगतः सत्यवद्व्यवहारो व्यावहारिकसत्ताया उदाहरणम्, पारमार्थिकदृष्ट्या जगतो मिथ्यात्वात्। ब्रह्मसाक्षात्कारात्पूर्वमेव जगतः सत्यत्वप्रतीतिस्तदानीमेव सर्वेऽपि लौकिकवैदिकव्यवहाराश्च सत्यवत्प्रतीयन्ते सिद्ध्यन्ति च[२४]। जाते च ब्रह्मसाक्षात्कारे दृश्यमानस्य जगतो बाधो भवति, अद्वैतमं ब्रह्मैवैकमवतिष्ठते।

### ३—पारमार्थिकसत्ता

यस्य त्रिकालाबाध्यत्वं तस्य पारमार्थिकसत्ता यथा परब्रह्मणः। भूते भविष्यति वर्तमाने च परब्रह्मणो बाधो न भवति, यथोत्तरकाले भ्रान्तिकारणापगमे प्रातिभासिकसत्तायास्तथा ब्रह्मसाक्षात्कारे सति व्यावहारिकसत्ताया बाधो भवति।

### अभिन्ननिमित्तोपादानवादः

अभिन्ननिमित्तोपादानवादोऽभिन्निमित्तादुपादानकारणाच्च कार्यस्यापार्थक्यं तच्च विवर्तवादस्वरूपमेव। विवर्तवादश्च पूर्वं व्याख्यातः।

---

२३—पञ्चपादिकाविवरणे प्रमेयवर्णके पृ० ८७, २१०, २११ (म० गो० सी० मद्रास १९५८ ई०)।

२४—तस्मात् प्राक् ब्रह्मात्मताप्रतिबोधादुपपन्नः सर्वो लौकिको वैदिकश्च व्यवहारः। (ब्र० सू० २।१।१४ शा० भा०)।

अवच्छेदप्रतिबिम्बाभासवादाः

जीवपरमात्मनो नं पारमार्थिको भेदोऽपि तु औपाधिको भेद । इममौपाधिक भेद व्यवस्थापयितुं शाङ्करसिद्धान्ते त्रयः पक्षा प्रतिपादिताः १—अवच्छेदवादः, २—प्रतिबिम्बवाद, ३—आभासवाद इत्येति। भगवतश्शङ्करस्य तु जीवपरमात्मनोरभेदनिरूपक वाक्य सामान्यमेव किन्तु भगवत्पादानुयायिनो व्याख्यातारो भिन्नभिन्नरूपेण तत्तद्वाक्य व्याख्यातवन्तः ।

तत्र भामतीकारस्य श्रीवाचस्पतिमिश्रस्य ( ८५० ई० ) अवच्छेदवादः पक्षः, पञ्चपादिकाविवरणकारस्य श्रीप्रकाशात्मस्वामिनः (१२०० ई०) प्रतिबिम्बवादपक्ष, आचार्यसुरेश्वरस्य (८२५ ई०) चाभासवादपक्ष प्रसिद्ध ।

यद्यप्येतेषामेव नाम्ना इमे वादा प्रसिद्धाः किन्त्वेषा वादानामुद्भावका समर्थका पोषकाश्चापरेऽप्याचार्या अभूवन् । यथाचार्यवाचस्पतेः पूर्वं मण्डनमिश्रेणावच्छेदवाद उद्भावितः[२४], पश्चाद् श्रीवाचस्पतिमिश्रेण स एव पक्ष प्रतिष्ठापितः सुदृढीकृतश्च । एवमेव श्रीपद्मपादाचार्येण प्रतिबिम्बपक्ष उद्भावितः, पश्चाद् श्रीप्रकाशात्मस्वामिना स पक्ष समर्थित सुदृढीकृतः । तथैवाचार्यश्रीसुरेश्वरेणाभासपक्ष उद्भावितः, श्रीसर्वज्ञात्मना, आनन्दानुभवेन, आनन्दगिरिणा विद्यारण्यस्वामिना चाभासपक्षः समर्थितः दृढीकृतश्च । अत एवैष प्रसिद्धिः —

---

२४—तस्मादात्मप्रकाशप्रकृष्टानन्दस्वभावमेव ब्रह्मेति युक्तम् ।
एव लौकिकानन्द एतस्य मात्रेति युज्यते, अवच्छेदात् ।।
( ब्रह्मसिद्धौ १ का० पृ० ५ )
स्वच्छे परिशुद्धे स्वरूपे जीवोऽवतिष्ठते । अविद्यायं तु ब्रह्मणो जीवो विभक्त, तन्निवृत्तौ ब्रह्मस्वरूपमेव भवति, यथा घटादिभेदे तदाकाशं परिशुद्ध परमाकाशमेव भवति ।
( ब्र० सि० १ का० पृ० १२ )

वाचस्पतेरवच्छेद आभासो वार्त्तिकस्य च।
संक्षेपशारीरकृतां प्रतिबिम्बमिहेष्यते ॥

अवच्छेदवादः

एकस्मादपरिच्छिन्नात् परब्रह्मणो मायाकृतोपाधिवशात् सकल-प्रपञ्च परिच्छिद्यते। यथा अपरिच्छिन्नादाकाशादुपाधिवशाद् घटाकाशपटाकाशादय. परिच्छिद्यन्ते।

यथाह भगवाञ्छङ्करः—

'सत्यमेवैतत् पर एवात्मा देहेन्द्रियमनोबुद्ध्युपाधिभिः परिच्छिद्यमानो बालैः शारीर इत्युपचर्यते। यथा घटकरकाद्युपाधिवशादपरिच्छिन्नमपि नभः परिच्छिन्नवदवभासते, तद्वत्।'

(ब्र० सू० १।२।६ शा० भा०)

*भगवता शङ्करेण निम्नस्थलेषु वादोऽयं सङ्केतितः —*

(१) घटकरकागिरिगुहाद्युपाधिसम्बन्ध इव व्योम्नः। (ब्र० सू० १।१।५) (२) एकस्यैव तु भेदव्यवहार उपाधिकृतः, यथा घटाकाशो महाकाश इति। (ब्र० सू० १।२।२०), (३) यस्तु सर्वशरीरेषूपाधिभिर्विनोपलक्ष्यते परमात्मैव स भवति। यथा घटादिच्छिद्राणि घटादिभिरुपाधिभिर्विनोपलक्ष्यमाणानि महाकाश एव भवन्ति तद्वत् प्राणभृतः। (ब्र० सू० १।३।७) (४) उपाधिनिमित्तो विभाग आकाशस्येव घटाद्युपाधिनिमित्तः। (ब्र० सू० २।१।१३), (५) घटाकाशन्यायेनोभयसम्भवस्य तत्र तत्र प्रतिष्ठापितत्वात्। (ब्र० सू० २।१।२२), (६) घटाद्युपाधिनिमित्त इवास्य अविभागप्रतिभानमाकाशस्येव घटादिसम्बन्धनिमित्तम्। (ब्र० सू० ३।२।१७) (७) यथा चाकाशो घटादिषु गच्छत्सु गच्छन्निव विभाव्यमानोऽपि न परमार्थतो गच्छति (ब्र० सू० २।३।४६) एवमेव निम्नाङ्कितसूत्रेष्वपि शाङ्करभाष्येऽवच्छेदवाद सङ्केतित —

(८) स्मृतेश्च—ब्र० सू० १।२।६ (९) तदनन्यत्वमारम्भणशब्दादिभ्य.। (ब्र० सू० २।१।१४), (१०) अंशो नानाव्यपदेशादन्यथा

चापि दाशकितवादित्वमधीयत एके। ( २।३।४३ )

(१) अवच्छिन्न इवाज्ञानात्। ( आत्मबोधे )

श्रीवाचस्पतिमिश्रैस्त्वेव स्पष्टीकृतः —

(क) 'यथा घटाकाशो नाम न परमाकाशादन्यः, अथ चान्य इव यावद् घटमनुवर्तते। न चासौ दुर्विवेचनः, तदुपाधेर्घटस्य विविक्तत्वात्। एवमनाद्यनिर्वचनीयाविद्योपाधानकल्पितो जीवः न वस्तुतः परमात्मनो भिद्यते, तदुपाध्युद्भवाभिभवाभ्यां च उद्भूत इव अभिभूत इव च प्रतीयते। (ब्र० सू० २।३।२ शा० भा० भामत्याम्)।

(ख) स एव तु (परमात्मा) अविद्योपाधानभेदात्-घटकरका—द्याकाशवत् भेदेन प्रथते।

( ब्र० सू० २।१।७ शा० भा० भामत्याम् )।

(ग) औपाधिकत्वाच्च भेदस्य घटकरकाद्याकाशवद् विरुद्धधर्म—संसर्गस्योपपत्तेः। ( ब्र० सू० २।३।११ शा० भा० भामत्याम् )

एवमेव श्रीमिश्रैः रचनानुपपत्त्यधिकरणे, वाक्यान्वयाधिकरणे, अंशाधिकरणे च प्रतिबिम्बवादो निराकृतः।[२६]

श्रीवाचस्पतिमिश्राः श्रीसुरेश्वराचार्याभिमतमाभासवादं नाङ्गीकुर्वन्ति। यतो हि सोपाधिकोऽपि चेतनो जीवो न काल्पनिको भवितु-

२६—( क ) अविद्योपाधानकल्पितावच्छेदो जीवः परमात्मप्रतिबिम्बकल्पः। ( रचनानुपपत्त्यधिकरणभामत्याम् २।२।१ )

( ख ) अविद्योपाधानं च यद्यपि विद्यास्वभावे परमात्मनि न साक्षादस्ति तथापि तत्प्रतिबिम्बकल्पजीवद्वारेण परस्मिन्नुच्यते। ( ब्र० सू० १।४।६ शा० भा० भामत्याम् ) तथा ब्र० सू० २।२।१० शा० भा० भामत्याम्।

( ग ) प्रतिबिम्बानामिव श्यामतादि. जीवानामेव नानावेदनाभिसम्बन्धः। ब्रह्मणस्तु बिम्बस्येव न तदभिसम्बन्ध ( ब्र० सू० २।३।१७ शा० भा० भामत्याम् )

अत्र 'कल्प' 'इव' इति पदाभ्यां सादृश्योक्त्या प्रतिबिम्बरूपं निराकृतम्।

मर्हन्ति किन्तु जीवस्य स्वरूप सत्यमेव। अत एव मुक्त्यै प्रयतमानो जीवो मुक्तिं लभते। आभासवादस्वीकारे जीवस्य सर्वथा नाश एव स्यात् तथा जीवस्वरूपविषये माध्यमिकमत प्रवेशोऽपि स्यात्।

### प्रतिबिम्बवादः

ब्रह्मसूत्रशाङ्करभाष्यस्य व्याख्या श्रीपद्मपादाचार्येण (८५० ई०) विरचिता पञ्चपादिका, एतस्या श्रीप्रकाशात्मविरचिता व्याख्यास्ति विवरणम्। अस्मिन् विवरणग्रन्थे श्रीप्रकाशात्मस्वामिना (१२०० ई०) शाङ्करभाष्य पञ्चपादिकावाक्यन्याधारीकृत्य तथा श्रीसर्वज्ञात्म-मुनिकृतम् (९०० ई०) संक्षेपशारीरकमाधृत्य च प्रतिबिम्बवाद उद्भावितः।

अस्मिन् पक्षे बिम्बस्थानीय ब्रह्म प्रतिबिम्बस्थानीय आत्मा। यथा भगवत्पादाना शब्देषु–'तदुच्यते वृद्धि ह्रासभाक्त्वमिति' जलगतो हि सूर्यप्रतिबिम्बो जलवृद्धौ वर्धते, जलह्रासे ह्रसति, जलचलने चलति, जलभेदे भिद्यते, इत्येव जलधर्मानुविधायी भवति न तु सूर्यस्य तथात्वमस्ति। (ब्र० सू० ३।२।२० शा० भा०)

यथा चोदशरावादिकम्पनात्तद्गते सूर्यप्रतिबिम्बे कम्पमानेऽपि न तद्वान् सूर्यः कम्पते। (ब्र० सू० २।३।४६ शा० भा०)।

'बुद्धयुपाधिस्वभावानुविधायी हि स चन्द्रादिप्रतिबिम्ब इव।

(बृ० आ० उ० २।१।१९ शा० भा०)

तस्य प्रतिबिम्बाख्यपुरुषस्य निष्पत्ति।

(बृ०आ० उ० शा० भा० पृ० ४५८ वि० वि० प्र० भा०प्र०)।

अथास्मिन्नात्मनि हि निरुपाधिके जलसूर्यप्रतिबिम्बभेदा इवा दित्ये प्राणाद्युपाधिकृता विशेषा प्राणादिकर्मजनामधेया यथोक्त ह्यत एवमभिन्नता भवन्ति प्रतिपादयन्त।

(बृ० आ० उ० १।४।७ शा० भा०)

एवमेव प्रश्नोपनिषद्भाष्ये, कठोपनिषद्भाष्ये, मुण्डकोपनिषदैतरेयोपनिषद्भाष्ये भगवत्पादैः प्रतिबिम्बपक्षः सूचितः।[२७]

प्रबोधसुधाकरे, शतश्लोक्याम्, आत्मबोधे विवेकचूडामणौ च प्रतिबिम्बवादोऽवलम्बितः।[२८] पञ्चपादिकायां पञ्चपादिकाविवरणे च स्पष्टतरं प्रतिबिम्बपक्षः समर्थितः।

'बिम्बस्थानीयब्रह्मस्वरूपतया प्रतिबिम्बस्थानीयस्य जीवस्योपदिश्यते।' (प० पा० प्रथमवर्णके पृ० १०८ ग० ओ० सी० मद्रास १९५८ ई० )

जीवः पुनः प्रतिबिम्बकल्पः सर्वेषां न प्रत्यक्षश्चिद्रूपः नान्तःकरणे जाड्येनाऽकल्पितः। स चाह कर्तृत्वमात्मनो रूपं मन्यते। न

२७—( क ) 'स च जलसूर्यकादिप्रतिबिम्बस्य सूर्यादि—वदशेषवद् जगदाधारे शेषे परेऽक्षरे आत्मनि सम्प्रतिष्ठते। ( प्रश्नोपनिषदि ४।६ शा० भा० )।

( ख ) सर्वदेशकालपुरुषाद्यवस्थमेकमेव ज्ञानं नामरूपाद्यनेकोपाधिभेदात् सवित्रादिजलादिप्रतिबिम्बवदनेकधाऽवभासते।
(कठोप० ६—२ शा० भा०)

( ग ) स एते ...... विज्ञानमयश्चात्मोपाध्यपनये सति परेऽव्ययेऽनन्तेऽक्षये ब्रह्मण्याकाशकल्पेऽजेऽजरेऽनन्तरेऽमृतेऽभयेऽपूर्वेऽनपरेऽबाह्येऽद्वये शिवे शान्ते सर्वं एकीभवन्त्यविशेषतां गच्छन्ति जलाधाराद्यपनये इव सूर्यादिप्रतिबिम्बाः सूर्ये। (मुण्डको० ३।६ शा० भा० )।

( घ ) स एष प्रज्ञानरूप आत्मा ब्रह्मापरं सर्वशरीरस्थः प्राणः प्रज्ञात्मान्तःकरणोपाधिष्वनुप्रविष्टो जलभेदगतः प्रतिबिम्बवद्धिरण्यगर्भ प्राणः प्रज्ञात्मा। (ऐ० उ० ३।१ शा० भा०)

२८—( क ) प्रतिफलति भानु — तद्वदसौ परमात्मा (प्रबोधसु० म०प्र०)

( ख ) प्रतिफलनवशात्प्रातिस्विकं प्रवेदे ( श० श्लो० )

( ग ) जीवत्वं यात्यकस्मात्प्रतिबिम्बिततरे विम्बितं बुद्ध्युपाधौ।
( श० श्लो० )

( घ ) सदा सर्वगतोऽप्यात्मा—स्वच्छेषु प्रतिबिम्बवत्। (आत्मबोधे)

बिम्बकल्पब्रह्म कल्पताम्। अतो युक्तस्तदरूपावगमे मिथ्यापगमः।

(तत्रैव प्र० व० )

अमूर्तस्य चाकाशस्य साभ्रनक्षत्रस्य जले प्रतिबिम्बवदमूर्तस्य ब्रह्मणोऽपि प्रतिबिम्बसम्भवात्, जानुमात्रप्रमाणेऽपि जले दूरविशाला-काशदर्शनात् जलान्तरप्रकाश एवाभ्रादिप्रतिबिम्बयुक्तो दृश्यत इति वक्तुमशक्यत्वात्। तत्प्रतिबिम्बत्व चिद्रूपत्व च शास्त्रप्रतिपन्न प्रत्यक्षप्रतिपन्न च न निराकर्तुं शक्यते-इति भावः।

(तत्रैव प्र० व० पृ० २८९)

'ननु घटाकाशवदुपाध्यवच्छिन्नो जीव किं न स्यात्' इत्यादिना अवच्छेदवादमुपस्थाप्य तत्र दूषण चाभिधाय 'प्रतिबिम्बपक्ष एव श्रेयान्' इत्युक्तम्। ( तत्रैव प्र० व० पृ० २९१ )

एवमेवाग्रेऽपि—

'ननु कोऽय जीवो नाम, यस्य स्वरूप त्व पदेन लक्ष्यमाण ब्रह्म व वाक्यार्थः सम्पद्यते। ब्रह्म वाविद्याप्रतिबिम्बितमिति वदाम।

(तत्रैव प्र० व० पृ० ७६०)

आभासवादेऽवच्छेदवादे च काले काले भिद्यमानेनोपाधिना विभिद्यमानस्य जीवस्य कृतकर्मफलानुभवे कृतहानाकृताभ्यागमादयो दोषा प्रसज्येरन्। इमे दोषा प्रतिबिम्बवादे न सम्भवन्ति। बहवो वेदान्तिनोऽवच्छेदवादाभासवादापेक्षया प्रतिबिम्बवाद सविशेष समर्थयन्ति। प्रकटार्थविवरणतत्त्वविवेकपञ्चपादिकाविवरण कृता-मयमेव पक्ष।

आभासवादः

भगवत्पादश्रीशङ्कराचार्यस्य साक्षाद् शिष्येण श्रीसुरेश्वराचार्येण[२६]

२६—गृहस्थाश्रमे या हि मण्डनमिश्र स एव संन्यासाश्रमे भगवत्पादशिष्य सन् स्वामिश्रीसुरेश्वराचार्यरूपेण प्रथित उत इमौ द्वौ भिन्नाविति-विषयेऽग्रिमे श्रीमण्डनमिश्रनामकेऽध्याये द्रष्टव्यम्।

आभासवाद उद्भावितः। आभासवादे परमात्मन आभास एव जीव इति प्रतिपद्यते। यथाह भगवाञ्छङ्करः—

'आभास एव चैषजीवः परमात्मनो जलसूर्यादिवत् प्रतिपत्तव्यः।'

(ब्र० सू० २।३।५० शा० भा०)

'जीवो हि नाम देवताया आभासमात्रः।'

(छा० उ० ६।३।२ शा० भा०)

एवमेवान्यस्थलेष्वपि।[३०]

आभासशब्दास्यार्थोऽप्यासमामस्यामयमुक्तो यत् 'अवसन्नोऽवमतो वा भासोऽवभासः' अत्र कल्पतरौ व्याख्याताम्—अवसादः=उच्छेद, अवमानः=तिरस्कारः।

आनन्दगिरिणा चाभासशब्दार्थं एवमुक्तः—

'आभिमुख्येन अहमित्यपरोक्षेण भासत इत्याभासः' प्रत्यक् चितोऽवमतो भासो नाम आभासः।'

(बृ० आ० उ० भा० वा० २।१।२१६ टीका)

आभासेन कल्पितविषयस्यावभासनं भवति। यथा—

'अनाभासं न केनचित् कल्पितेन विषयेणावभासते।'

(मा० का० ३।४ शा० भा०)

श्रीमद्गौडपादाचार्येण जगतः प्रतीतावाभासस्य प्रयोजनमुक्तम्। येनाजातं जातवद्, अक्रियं सक्रियवद्, अवस्तु वस्तुवत्प्रतीयते। यथा—

जात्याभासं चलाभासं वस्त्वाभासं तथैव च।

(मा० का० ४।४५)

जात्याभासो यथा देवदत्तो जायते, चलाभासो यथा देवदत्तो गच्छति,

---

३०—ब्र० सू० शा० भा० १।३।१९, २।३।४३, २।३।४६ एषुस्थलेषु आभासशब्दो लक्षितः। एवमेव बृ० आ० उ० शा० भा० ४।३।३० एतत्राप्युक्त आभासपदम्।

वस्त्वाभास यथा—स एव देवदत्तो गौरो दीर्घ अत्र वस्तुशब्दो द्रव्यपरो धर्मपरश्च ।

श्रीसुरेश्वराचार्य आभासपक्षमित्यमवर्णयत्—यश्चाय क्रिया-कारकफलात्मक आभास ईषदपि परमार्थवस्तु न स्पृशति तस्य मोह-मात्रोपादानत्वात् ।' (नैष्कर्म्यसिद्धौ अ० २ श्लो० ५१)

'परिणामो हि मोहादेश्चिदाभास मदेष्यते ।'

(बृ० भा० उ० भा० वा० ४।३।३६४)

एवमत्र आभास क्रियाकारकफलस्वरूपोऽविद्यायाश्च परिणाम इत्युक्तम् । आभासस्यानात्मत्व बृहदारण्यकोपनिषद्भाष्यवार्तिके-ऽनेकस्थलेषूक्तम् ।[31]

यथा दर्पणस्थो मुखाभासो ग्रीवास्थमुखाद् भिन्नो भवति तथैवा-भासोऽप्यात्मनः पृथग् भवति । यथाह—

'नात्माभासत्वसिद्धिश्चेदात्मनो ग्रहणात्पृथक् ।
मुखादेश्च पृथक् सिद्धिरित्यन्योन्यसंश्रयः ॥'

( उ० सा० २।१८।११५ )

आभासस्य मिथ्यात्वमपि तत्रैवोक्तम्—

मुखाभासो यथादर्शे आभासश्चोदितो मृषा ।

( उ० सा० २।१८।८८, यथा च २।१८।४३, २।१८।४८, २।१८।११४ )

भगवता शङ्करेण आभासपदार्थ- अवस्तु[32], अनात्मा[33] तथा

३१—बृ० भा० उ० भा० वार्तिके—१।२।१५७, १।४।१३२८, ३।४।४२४, ३।४।४२५, ३।४।१०५ ।

३२—उपदेशसाहस्याम् २।१८।४४

३३—विवेकचूडामणौ श्लो० १६५, २२० २२२, तथा उ० सा० २।१८।१०८ ।

दृच्छायेति[३४] रूपेण वर्णितः। बृहदारण्यकभाष्यवार्त्तिके चिदतिरिक्त वस्तु नामरूपात्मक चिदाभास इत्युक्तम्—

तदन्यद् यत् तदाभासम्।
(बृ० भा० उ० भा० वा० २।३।१८१)

चिदाभासस्याविचारितससिद्धत्वमप्युक्तम्—

अविचारितसंसिद्धतमोवत्स्यात्तदुद्भवम्।
(बृ० भा उ० भा० वा० २।१।४)

अज्ञाने नष्टे आभासोऽपि नश्यति—

बुद्ध्यादिकार्यसंहारे प्रत्यक्चैतन्यरूपिणः।
चिद्बिम्बस्यापि संहारो जलार्कप्रविलापवत्॥
(बृ भा० उ० भा० वा० ४।३।११७४)

अयमाभास एव कर्तृत्वभोक्तृत्वरूपसर्वानर्थमूलभूत.।[३५]

श्रीसुरेश्वराचार्येणाभासस्य कृते चिदाभासत्वेन चिद्बिम्ब, कूटस्थाभास' शब्दो प्रयुज्येते एव किन्तु महिमा[३६], अभिप्रायः,[३७] प्रसाद.[३८], आकृतिः[३९] वृत्तिः[४०] शब्दा अपि प्रयुज्यन्ते।

आभासस्य चैतन्यच्छायारूपत्वेन न स चैतन्यधर्मको नापि अज्ञानोपाधिधर्मकः।[४१] अस्य स्वातन्त्र्यमपि नाङ्गीक्रियते—

'आभासस्त्वं न बिम्बधर्मो नाप्युपाधिधर्मो नापि स्वतन्त्र इत्यत्र प्रतिपादितम्। ( वा० सु० श्लो० ३६ आ० गि० व्या०)

---

३४—उ० भा० २।१।२६।
३५—बृ० भा० उ० भा० वा० ४।३।७३।
३६—बृ०भा०उ०भा०वा० २।३।२२२, ३।१।७०, ३।२।१३६, ३।८।११५।
३७—तत्रैव १।३।३१२।
३८—तत्रैव ४।३।७४, ४।३।२६५।
३९—तत्र ४।३।२२६, ४।४।६५१।
४०—तत्रव १।४।६३६।
४१—वाक्यसुधाश्लो० ६ आ० गि० व्या०।

आभासस्य कार्यकारणतया वक्तुमशक्यत्वेन मायामयो मिथ्या वा कथ्यते—

आभासाना विज्ञानस्य च कार्यकारणतया दुर्वचनत्वादाभासा. सर्वदैव निरूपयितुमशक्यत्वान्मायामया सन्तो मिथ्यैव भवन्तीत्यर्थ —यत. सदैवाचिन्त्या अतो मृषैवेति शेष ।

(मा० का० ४।५१-५२ शा० भा० आ० गि० व्या०)

श्रीमधुसूदनसरस्वती अस्यानिर्वचनीयत्वमुक्तवान्—आभासस्यापि जडाजडविलक्षणेनानिर्वचनीयत्वात् । (सि० वि० १ श्लो०)

श्रीविद्यारण्यस्वामी आभास मिथ्याभूत मायिक भ्रम कल्पित च कथयति—

आभासस्य मिथ्यात्वात् । (पञ्चदश्याम ७।१५)

मायिकोऽय चिदाभास. । (तत्रैव ७।२१७)

दधद् विभाति पुरत आभासोऽतो भ्रमो भवेत् । (तत्रैव ८।५२)

ईषद्भासनमाभास प्रतिबिम्बस्तथाविध ।

बिम्बलक्षणहीन सन बिम्बवद्भासते स हि । (तत्रैव ८।३२)

एवमेव अनुभूतिप्रकाशे—१।३८ तथा ७।३९ ।

बृहदारण्यकवार्तिकसारेऽपि—वा० ३७३ ।

सिद्धा.तबि.दावस्यानिर्वचनीयत्वमुक्तम—आभासस्यापि जडाजड-विलक्षणत्वेनानिर्वचनीयत्वात । (सि० बि० १ श्लो०)

इत्थमिदमायात　　■दाभासश्चतन्यगतसत्त्वाविलक्षणहीनोऽपि सत्त्वादिरूपतया प्रतीयते यथा मुखलक्षणहीनोऽपि मुखाभासो मुख-धर्मवान् अवभासते । एव मुखाभासो मिथ्या, अनिर्वचनीय , आपात-रमणीय दर्पणाद्युपाधिस्थितिसमकालो विनाश्य तद्वत् आभा-सोऽपि मिथ्या, अचिन्त्य , आपातरमणीय , अज्ञानाद्युपाधिस्थिति-समकालो निवर्त्य ।

*आभासभेदः*

अज्ञाने तथा अज्ञानजन्यकार्ये चायमाभास द्विप्रकारेणानुभूयते

कारणाभासरूपेण तथा कार्याभासरूपेण। एवञ्चाभासो द्विविधः— कारणाभासः कार्याभासश्च। यथोक्तमाचार्यसुरेश्वरेण—

'आत्माभासोऽपि योऽज्ञाने तत्कार्ये चावभासते।
कार्यकारणतारूपः................।'

(बृ० भा० उ० भा० वा० ४।३।१३२०)

कारणाभासश्चैतन्यमात्रोपादानकः, कूटस्थात्मैकहेतुकः प्रत्यक्-प्रज्ञोपस्थितो भवति—

कूटस्थात्मैकहेतूत्थो चिद्बिम्बो मोहगस्तु यः।
(तत्रैव ४।३।४१५)
प्रत्यक्प्रज्ञास्थिताभास...............।
(तत्रैव २।४।३६०)

कारणाभासः

आत्मनः कारणत्वादिप्रयोजकेऽज्ञाने स्थितया अय चिदाभासः कारणाभास उच्यते—

आत्माज्ञानमतः प्रत्यक् चैतन्याभासवत् सदा।
आत्मनः कारणत्वादेः प्रयोजकमिहेष्यते॥
(तत्रैव ४।३।३५५, तथा ४।३।६६,१।४।८३४)

चैतन्यानुरोधित्वेन चेतनाभासपदेनाप्ययं व्यपदिश्यते —

चेतनाचेतनाभास आत्मानात्मत्वलक्षणः।
(तत्रैव २।४।४२४)

अयमज्ञानज-योऽत एव मोहोत्थः कथ्यते—

न तु मोहोत्थचिद्बिम्बहेतुत्वत्र्यपेक्षया।
(तत्रैव—४।३।४१५)

अयं चिज्जन्यः, मोहजन्यः इत्युभयमप्युक्तम्, अस्यायमाशयो यदत्र आभासजनने चित् प्रतियोगित्वेन तथा अज्ञानम् अनुयोगित्वेन

कारणम् । अयमाभासः चित्प्रतियोग्यज्ञानानुयोगुभयोपादानक । प्रतियोगित्वेनोपलक्षितस्य ब्रह्मणो निर्धर्मकत्वे न विरोध ।

### कार्याभासः

अज्ञानजन्यकार्यमात्रे प्रतीतोऽवभास कार्याभासः। अत एव श्रीसुरेश्वराचार्येण —क्रियाकारकफलरूपोऽयमुक्तः—

क्रियाकारकफलात्मक आभासः ''·'' ''········''।

(नैं० सि० २।५१)

समस्तजगत्कार्यावभासकत्वेन कार्याभास उच्यते । अयमज्ञानस्य परिणामः।[४२] जागतिकप्रपञ्चस्योद्भासकत्वेन कार्याभासस्यानेकत्वम्।[४३] वस्तुतो नाभासस्य भेदद्वय किन्तु पूर्वापररूपेण प्रतीतिद्वयम् । यथा—कारणाभास.—अज्ञानगत, कार्याभासश्च अज्ञानजन्यवस्तुगतः। कारणाभास- प्रथम जायते, कार्याभास पश्चाज्जायते।

### कारणाभासकार्याभासयोर्वैलक्षण्यम्

पूर्वमुक्त यत् कारणचिदाभास पूर्वकालिक, कार्यचिदाभास. पश्चात्कालिक, कारणाभास अज्ञानगत, कार्याभासश्च अज्ञानजन्यवस्तुगत । कारणाभासस्योपादान चैतन्य कार्याभासस्योपादानमविद्या। प्रथम आभासश्चैतन्यानुरोधी·द्वितीय आभासोऽज्ञानाद्युपाध्यनुरोधी। प्रथम आत्मरूपोऽर्थादात्मानमनुसरति, द्वितीयोऽनात्मरूपोऽर्थादज्ञानजन्यजगत्प्रपञ्चसुखदुःखाद्युत्पादक । वस्तुतस्तु कारणाभासकार्याभासयोर्न कोऽपि भेद केवलमवस्थागतभेदेन भेद उच्यते। यदा चिदाभासोऽविद्यायां भासते तदा कारणाभासो यदा चाविद्याकार्येषु भासते तदा कार्याभास । एव क्रियाकारकफलात्मकस्य

४२—बृ० भा० उ० भा० वा० ४।३।३६४ ।

४३—तत्रैव १।२।१६०, १।४।१२२८ २।४।४२५, ३।४।१०५ ।

कार्याभासस्य कारणं कारणाभासः। अज्ञानेऽज्ञानकार्ये चानयोर्द्वयोर्वृत्त्या आभासोऽसङ्गस्य परमात्मनः मायामयी द्वयी वृत्तिरुच्यते। यथाह आनन्दगिरिः —

'कृत्स्नस्य द्वैतस्य मूलकारणमज्ञानं तस्य कार्यं वियदादि तत्रोभयत्र वृत्तिराभासस्तद्रूपोपाध्यवष्टम्भादसङ्गस्यापि मायामयी द्वयी वृत्तिः।' (बृ० भा० उ० भा० वा० १।४।६३६ टीकायाम्)

एवञ्चात्र निष्कर्षो यदाभासश्चैतन्यस्य सत्त्वादिलक्षणहीनोऽपि सत्त्वादिरूपतया प्रतीयते यथा दर्पणस्थो मुखाभासो ग्रीवास्थमुखलक्षणहीनोऽपि ग्रीवास्थमुखधर्मवान् प्रतीयते। यथा च मुखाभासो मिथ्या, अनिर्वचनीयः, आपातरमणीयः, दर्पणाद्युपाधिनाशसमकालो विनाश्यश्च तथैवाभासोऽपि मिथ्या, अचिन्त्यः, आपातरमणीयः, अज्ञानाद्युपाधिनाशसमकालो निवर्त्यश्चेति। आभासस्य मिथ्यात्वेऽपि तल्लक्ष्यस्य सन्मात्रस्य सत्यत्वेनाभासस्यापि यथाकालिक सत्यत्वमिति छान्दोग्यभाष्यटीकायामानन्दगिरिणा स्पष्टीकृतम्।

## आभासप्रयोजनम्

आत्मातिरिक्तस्य समस्तस्यानात्मवस्तुनः स्वरूपनिष्पत्तिः सिद्धिश्चाभासस्यैव फलम्। संसारप्रयोजिकाया अविद्यायाः[४४], अविद्याकार्यस्य जगतश्च सत्तालाभ आभासद्वारैव भवति। अत आभास आत्मज्योतिरपि कथ्यते।[४५] आभासं विना जडया अविद्यया

---

४४—यत्प्रसादादविद्यादि सिध्यतीव दिवानिशम्।
(बृ० भा० उ० भा० वा० ४।३।७४)
चिदाभासैकमात्रेण तम सिद्धिर्न मानतः (तत्रैव ३।४।१०५)।
अथानन्दगिरिः—"चैतन्यस्तदाभासाभ्यामज्ञानसिद्धिमुक्त्वा मातृसिद्धिप्रकारमाह।" एवमेव ४।३।३५६ तथा १।४।२३ बृ० भा० उ० भा० वा० भा० गि० टी० अपि।
आभासवदात्मा सिद्धिरित्यनुभव स्माभ्यामिति नेति। (तत्रैव १।४।२४ भा० गि० टी० तथा ४।३।२६६ भा० गि० टी०)

जगतः सत्ताप्यसम्भवा । आभासेनैवाज्ञानसमुद्भूतस्य जगतः सत्तालाभः ।[४५] आभासिनो वस्तुन आभासातिरिक्ता कापि सत्तैव नास्ति । यथोक्तम्—

नचाभासस्याभासिनोऽन्यत्र सत्त्वम् ।

( बृ०भा०उ०भा०वा० १।४।५०८ आ०गि०टी० )

निर्विशेषाद्वैतवेदान्तनये निष्प्रपञ्च निर्विकारं निर्गुणं निष्कलं निरंशं ब्रह्म जगतः कारणतामभ्युपेतुं नार्हति, जडा अविद्यापि च जगतः कारणतामभ्युपेतुं नार्हति, न चापि जडा अविद्या ब्रह्म संस्रष्टुमर्हति । अस्यां स्थितावाभास एव एवंविधं अस्म[४७] येन चित्तोऽज्ञानसम्बन्धो ब्रह्मणश्च जगत्कारणत्वं सिद्ध्यति । यथा—

अज्ञानं तदुपाश्रित्य ब्रह्म कारणमुच्यते ।

( बृ०भा०उ०भा०वा० १।४।३७१ )

अयमेवार्थं आनन्दगिरिणापि स्पष्टीकृतः ।[४८]

एवमेवाप्तकामं सकलप्रवृत्तिनिवृत्तिहीनं कार्यकारणातीतं ब्रह्म दृश्यमानसर्वप्रपञ्चप्रकाशनाय नालम्, तथावरणविक्षेपशक्तिका तमोरूपाऽविद्यापि प्रपञ्चप्रकाशनाय नालम्, तदा स्वाभासद्वारैवे-नैवात्मा विषयान् प्रकाशयति ।[४९]

---

४५—ध्वान्तादिविषयान्तोऽर्थो जडत्वादात्मसिद्धिकृत् ।
आत्मज्योतिरभावेऽसौ नामापमपि विन्दति । (तत्रैव १।३।५६)

४६—न च जाड्यातिरेकेण ह्यविद्या काचिदिष्यते । ( तत्रैव १।४।२५६ )
एवमेव—बृ० भा० उ० भा० वा० १।४।३४१, ३।३।४१, ४।३।३६२
तथा बृ० भा० उ० भा० वा० टी० १।४।५०१, १।४।१४०५ ।

४७—बृ० भा० उ० भा० वा० १।२।१२७, ३।४।६०, ३।८।१२८, ४।३।३५२, ४।३।३८४, ४।३।३६८, ४।३।१००४ ।

४८—अज्ञानस्याभासद्वारा कूटस्थसंबंधे तस्य कारणत्वमिष्टं स्वतस्तद-योगात् । (बृ० भा० उ० भा० वा० टी० ४।३।३६८५) ।
एवमेव—बृ० भा० उ० भा० वा० २।१।३६५ ।

४९—बृ० भा० उ० भा० वा० ४।३।८६, ४।३।१८६, ४।३।३६१ ।

*आभासवादप्रतिबिम्बवादयोर्वैलक्षण्यम्*

आभासस्य तावदिद लक्षणम्—चिद्वदवभासमानत्वे सति चिल्लक्षणरहितत्वम् ।

सिद्धान्तबिन्दौ—८ श्लोकस्य न्यायरत्नावलीटीकायां श्रीब्रह्मानन्देन बिम्बप्रतिबिम्बयोर्लक्षणमित्यमुक्तम्—

प्रतिबिम्बस्येदं लक्षणम्—दर्पणाद्युपाध्यन्तर्गतत्वे सत्यौपाधिकपरिच्छेदशून्यत्वे च सति बहि:स्थितस्वरूपकत्वम् प्रतिबिम्बत्वम् ।

बिम्बस्येदं लक्षणम्—उपाध्यनन्तर्गतत्वे सति उपाध्यान्तर्गतरूपाभिन्नबहि:स्थितत्व बिम्बत्वम् ।

अन्यत्रापि — प्रतिबिम्बस्योपाध्यन्तर्गतत्वाविशिष्टबिम्बरूपत्वमिति । (सि० बि० १ श्लो० न्या० र० पृ० ८५ कुम्भकोणम्, प्र० १८९३ ई० )

एव प्रतिबिम्बवादे आभासवादे चेयान् भेदो यत् प्रतिबिम्बवादे बिम्बप्रतिबिम्बयोरभेदो मन्यते यथा दर्पस्थमुखस्यग्रीवास्थमुखादभिन्नता । अनेन प्रकारेण बिम्बभूताच्चितः प्रतिबिम्बभूतो जीवोऽभिन्नः । आभासपक्षेतु आभासस्य न चितो भिन्नत्वम्, अभिन्नत्वम्, तदुभयरूपत्व वा, अतोऽनिर्वचनीयत्वम् । इत्थं च प्रतिबिम्बस्य सत्यत्वम्, आभासस्य च मिथ्यात्व समायातम् ।[५०]

अत एव सिद्धान्तबिन्दावुक्तम्—

तस्य च प्रतिबिम्बस्य सत्यत्वमेवेति श्रुतिबिम्बवादिनः । मिथ्यात्वमेवेत्याभासवादिनः । स्वरूपे तु न विवाद एवेत्यन्यदेतत् ।

(सि० बि० १ श्लो०)

---

५०—(क) उपाधिस्थितत्वविशिष्ट्येन प्रतिबिम्बस्य सत्त्वम् । आभासस्य न बिम्बधर्मो नाप्युपाधिधर्मो नापि स्वतः ।

( वाक्यसुधाटीकायाम् २६ )

(ख) पञ्चपादिकाप्रथम-वर्णके पृ० १०४ ।

(ग) माण्डूक्यकारिका—शा०भा०आ०गि० व्या० ४।५२ ।

पारमार्थिकबिम्बे करूपे प्रतिबिम्बे सर्वथा सत्यत्वम्[५१], आभासः स्वरूपतो मिथ्या लक्ष्यत्वेन सत्यः।[५२] अतः प्रतिबिम्बे उपाधे बाधः, प्रतिबिम्बस्याभेदः, सामानाधिकरण्यं च। आभासे त्वेतद्वैपरीत्येनाभासस्योपाधेश्च द्वयोरपि बाधः।[५३] अत एव प्रतिबिम्बवादे 'तत्त्वमसि' इति महावाक्यस्याखण्डार्थबोधे जहदजहल्लक्षणा, अभेदे सामानाधिकरण्यं चाङ्गीक्रियेते। आभासवादे तु 'तत्त्वमसि' इति महावाक्यस्याखण्डार्थबोधे जहल्लक्षणा बाधायां च सामानाधिकरण्यं स्वीक्रियेते।

आभासप्रतिबिम्बयो द्वयोरपि चैतन्यमूलकत्वमङ्गीक्रियते। किन्त्वाभासस्य चैतन्यमूलकत्वं चितोऽधिष्ठानतया प्रतीयते न तु चैतन्यस्वरूपावगाहितया। प्रतिबिम्बस्य तु चैतन्यमूलकत्वं बिम्बमूलकत्वेन तथा स्वरूपतो बिम्बैकस्वरूपलक्षणेनापि प्रतीयते। एवमेव चिल्लक्षणराहित्येनाभासो न हि वस्तुसंस्पर्शं लभते किन्तु बिम्बलक्षणानुगतत्वेन प्रतिबिम्बं बिम्बसंस्पर्शि भवति. तथापि यथार्थस्वरूपाग्रहणेन बिम्बाद् भिन्नं प्रतिबिम्बं प्रतीयते।

आभासप्रतिबिम्बयोरयं महान् भेदो यदाभासवादे आभासस्योपाधेश्चैकरूप्येणाज्ञानाद्युपाधिरपि आभास एव मन्यते। किन्तु प्रतिबिम्बवादे प्रतिबिम्बस्योपाधिकपरिच्छेदशून्यत्वेन अज्ञानाद्युपाधिः प्रतिबिम्बं न मन्यते।

श्रीमण्डनमिश्रेणापि बिम्बप्रतिबिम्बयोरभिन्नत्वं भिन्नत्वं चोक्तम्—

'दर्पणतलस्थमात्मानं विभक्तमिवात्मनः प्रत्येति।' ( ब्र० सि० का० १ पृ० ८) अत्र शङ्खपाणि र्व्याचष्टे—

'यथा बिम्बात् प्रतिबिम्बमभिन्नमपि भिन्नं प्रत्येति तद्वत्।'

---

५१—पञ्चपादिकाप्रथमवर्णके पृ० १०८।

५२—छान्दोग्योपनिषदः शाङ्करभाष्ये आ० गि० व्याख्यायाम् ६।४।३ तथा बृ० भा० उ० भा० वा० १।४।३८३ आ० गि० व्या०।

५३—मुण्डकोपनिषदः शाङ्करभाष्यव्याख्याने ३।१।११ तथा ऐतरेयोपनिषद् शा० भाष्यव्याख्यायाम् १।१।

अत्र 'विभक्तमिव' इतिकथनेन तथा 'अभिन्नमपि भिन्नम्' इतिकथनेन च पारमार्थ्येनाभिन्नत्वेऽपि व्यवहारदृष्ट्या भिन्नमित्येव प्रतीयते।

एवमाभासस्योपयोगो वेदान्तिनये शाब्दिकनये च विद्वद्भिर्बहुधा वर्णितः।[५४]

केचनेममाभासवादं प्रतिबिम्बवाद एवान्तर्भावयन्ति। किन्तूक्तप्रकारेणोभयोर्भेदादन्तर्भावो विचारार्हः। परमार्थतस्त्वैक्य एवेति न विवादः।

श्रीगौडपादाचार्यः कल्पनावादमाभासवादञ्चाङ्गीकरोति। यथा–

जात्याभासं चलाभासं वस्त्वाभासं तथैव च।
अजाचलमवस्तुत्वं विज्ञानं शान्तमद्वयम्॥
(मा० का० ४।४५)

'कल्पयत्यात्मनात्मानम्, आत्मा देवः स्वमायया।
स एव बुध्यते भेदान्, इति वेदान्तनिश्चयः॥'
(मा० का० २।१२)

कल्पनावादे सर्वं दृश्यमानं केवलं कल्पनामात्रं न तात्त्विकम्। एवमेवाभासवादेऽपि। नृसिंहतापनीयोपनिषद्यपि आभासवादः एवमेव समर्थितः—

जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवति।
(नृ० ता० उ० ९)।

एषु चतुर्षु इदमेव तत्त्वं यत्—

(१) शुद्धचैतन्यमेव परमार्थः।

(२) जीवपरमात्मनोरैक्यम्।

---

५४—(क) द्र०—शाङ्कराद्वैतसम्मत आभासवाद, ले० श्रीसत्यदेवमिश्र, ऋतम् पत्रिकायां पृ० ३०–३६ जुलाई १९६९ ई० प्र०।

(ख) डा० गौरीनाथशास्त्रिविरचिते—फिलासफी आफ वर्ड एण्ड मीनिंग-ग्रन्थे पृ० ६४।

(३) जीवस्वरूपस्य काल्पनिकत्वम्।

(४) मायैव कल्पनामूलम्।

एषु व्याधराजपुत्रजपाकुसुमघटाकाशसूर्यप्रतिबिम्बादिदृष्टान्ताः।

अनयो र्वादयोः कृते प्राय इमेऽपेक्ष्यन्ते।

आभासाय गुणस्य प्रकारस्य वापेक्षा।

प्रतिबिम्बस्य कृते द्रव्यस्यापेक्षा।

आभासे उपाधिः स्वगुणेन सर्वमुपाधेयं व्याप्नोति।

आभासे आभास्यमानमुपाधेर्भिन्नतया अभिन्नतया वा न शक्यते वक्तुम्, केवलमाभासमात्रमेव शक्यते वक्तुम्।

प्रतिबिम्बं बिम्बेन सह समानरूपम्। अयमेव विशेषः प्रतिबिम्बवादं विशिनष्टि।

आभासे उपाधिः स्वगुणं स्वस्मात् पार्थक्येन उपाधेये दर्शयति।

यथा स्फटिके रक्तं पुष्पं रक्तिमानं दर्शयति।

प्रतिबिम्बे उपाधिः स्वान्तःस्थतयोपाधेयं दर्शयति। यथा दर्पणादिः। अत्र तु अविद्या अन्तःकरणं वा स्वान्तःस्थतया चैतन्यं दर्शयति।

इमान्येव कारणान्यनयोः श्रेष्ठाश्रेष्ठत्वविचारणे।

*एतेषां त्रयाणामपि वादाना परमार्थत ऐक्यम्*

श्रीविद्यारण्यस्वामी पञ्चदश्यां तथा तद्व्याख्याकारो श्रीविद्यारण्यस्वामिनः साक्षाच्छिष्यः श्रीरामकृष्णः परम्पराशिष्यः श्रीमदच्युतरायश्च स्वस्वव्याख्यायां प्रथममाभासवादप्रतिबिम्बवादयोरैक्यमन्ते चैदा त्रयाणामपि अवच्छेदप्रतिबिम्बाभासवादानामैक्य प्रतिपादितवन्तः। यथा हि—

नायं दोषश्चिदाभासः कूटस्थैकस्वभाववान्।
आभासत्वस्य मिथ्यात्वात् कूटस्थस्याविशेषणात्॥

(पञ्चदश्याम् तृ० प्र० १५)

अस्य पददीपिकाव्याख्यायां श्रीरामकृष्णः—

'यथा दर्पणे प्रतीयमानस्य मुखाभासस्य ग्रीवास्थं मुखमेव तत्वं तद्वदिति भावः।' इति व्याख्यानेन आभासस्य मिथ्यात्वमुक्तवान्। अग्रे पुनराभासस्य पर्यायवाचिशब्दं प्रतिबिम्बमाह—

चिदाभासविशिष्टानां तथानेकधियामसौ।

(प० द०, कू० दी० ३१)

अत्र श्रीरामकृष्णः—चिदाभासविशिष्टानाम् = चित्प्रतिबिम्ब-युक्तानाम्। पुनरग्रे आभासस्य व्याख्यानं प्रतिबिम्बेन करोति—

'चिदाभासान्तधीवृत्ति ज्ञानं लोहान्तकुन्तवत्।'

(प० द०, कू० दी० ६)

'चिदाभासान्तधीवृत्तिः=चिदाभासश्चित्प्रतिबिम्बः सोऽन्ते पुरोभागे यस्याः सा।'

अतः परं पञ्चदश्यां चित्रदीपे एकस्य श्लोकस्य पूर्णानन्देन्दुकौमुदीव्याख्यायाम्[५५] मोडकोपाह्वश्रीमदच्युतरायपण्डितेनोक्तमयाणामपि वादानां सामञ्जस्यमित्थमकारि—

कूटस्थो ब्रह्मजीवेशावित्येवं चिच्चतुर्विधा।
घटाकाशमहाकाशौ जलाकाशाभ्रखे यथा॥

(प० द०, चि० दी० १८)

अत्र श्रीमदच्युतरायः—

"अस्मिन् प्रकरणे परं हरिहरचतुराननावतारोभूतभगवद्वाद-[रायणश्रीशङ्करभगवत्पादश्रीमत्सुरेश्वराभिधसूत्रभाष्यवार्त्तिककार – प्रणीतत्वेन त्रिमुनिव्याकरणवत् ञोश्वरेऽस्मिन् अद्वैतशास्त्रे यथोक्तं

५५—पञ्चदश्या मोडकोपाह्वश्रीमदच्युतरायपण्डितविरचितपूर्णानन्देन्दु-कौमुदीव्याख्या पूनानगरे जगद्धितेच्छुयन्त्रालये १८१७ शकाब्दे प्रकाशिता, पृ० १३८—१४१।

मुनीनां प्रामाण्यमितिन्यायेन स्वोक्तजीवेश्वरस्वरूपसिद्धान्तस्य श्रीमत्सुरेश्वरमुन्याख्यवार्त्तिककृत्सम्मताभासवादेन सहैकमत्यध्वननार्थं तद्वादस्य चित्रपटघटाकाशादिदृष्टान्तैः द्विविधसरण्यैव मुमुक्षुबुद्ध्य-धिरोहसौकर्यार्थमनुसरणयैवोपन्यासः कृतः। तत्र श्रीमद्वार्त्तिक-कारसम्मत आभासवादस्तूक्तः सिद्धान्तबिन्दौ। अज्ञानोपहित आत्माऽज्ञानतादात्म्यापन्नस्वचिदाभासाविवेकादन्तर्यामी साक्षी जगत्कारणमिति च वक्ष्यते। बुद्ध्युपहितश्च तत्तादात्म्यापन्नस्वचिदा-भासाविवेकाज्जीवः कर्ता भोक्ता प्रमातेति च वक्ष्यते इति वार्त्तिक-कारपादा इत्यादिनाऽयमेव पक्ष आभासवाद इति गीयत इत्यन्तेन आभासलक्षणं तूक्तं मया बोधैक्यसिद्धावेव प्रतिबिम्बेनाबाधारम्भ एवं प्रकटार्थकृन्मतं प्रवृत्य।..........................आभासत्वमपि च बिम्बनिघ्नसत्त्वे सत्येतत् समपरिभासमापततैवेति। अधीनो निघ्न आयत्तः इत्यमराद् बिम्बाधीनसत्ताकत्वे सतीत्यर्थः। एवं बिम्बत्वो-पाधित्वे अपि तत्रैव लक्षिते। यदीयप्रमा स्वप्रयुक्तं भ्रमं न प्रबाधेत तद् बिम्बमारादुपाधेः। स्वधर्मोपदारोपकत्वं हि तत्त्वं मुखादौ तु तद् दृश्यते दर्पणादेरिति। तत्त्वमुपाधित्वमिति यावत्।.........इति वार्त्तिकमततत्त्वविवेकमतयो जीवोपाध्योरेकरूप्ये सिद्धम्।

एवं वार्त्तिकमतेऽपि सिद्धान्तबिन्दौ जहल्लक्षणामाभासवादत्वेनो-क्त्वाग्रे जहदजहल्लक्षणाया अपि सर्वसम्मततया उक्तत्वेन तत्त्व-विवेकसम्मतप्रतिबिम्बवादस्याप्युक्ताभासवादे पर्यवसानं तदुपाध्यंश-मिथ्यात्वेन प्रतिबिम्बवादेऽप्याभासवादपर्यवसानमित्युपपद्यजीव-स्वरूपैक्यमप्युक्तमतयोर्युक्तमेव।...............

विद्यारण्या वदेयुः श्रुतिमर्माभिमतं वार्त्तिकाचार्यजुष्टम्,
चिच्चातुर्विध्यमुक्तं द्विविधमरणितः स्पष्टमाभासवादम्।
आदौ चित्रपटीनिदर्शनमिषाद्ग्रे घटाकाशत-
स्तद्वारिस्थप्रतिबिम्बखाभ्रगतच्छायादिदृष्टान्ततः ॥

रेखा एव धियो मताः किल ततः संस्कारसंघाः पटे ,
ये जाताः परिघट्टिते न तु न ते किं तैः परिच्छिद्यते ।
एवं तेऽपि समष्टिधीप्रकृतिमन्मायैकसारत्वेन तद्-
भेदः कः प्रतिबिम्बिताद् वद परिच्छिन्ने निरुक्ते भवेत् ।
अवच्छिन्नो जीवो ननु निगदितो भामतीकृता ,
प्रतिच्छायाभासौ विवरणकृद्वार्त्तिकगपि ततः ।
कथं नो भेदः स्यादिति न हृदयानाकलनता
द्वयोरप्याद्यत्वं गुरुभिरियमुक्तात्र सरणिः ॥

अवच्छिन्नप्रतिबिम्बवादयोरत्रैवान्तर्भावश्चेति संक्षेपः ।”

इत्थमेतेषां त्रयाणामवच्छेदप्रतिबिम्बाभासवादानां परस्परं सामञ्जस्यमैक्यं चात्र निरूपितम् ।

श्रीमधुसूदनसरस्वतीभिः सिद्धान्तबिन्दावेतेषां त्रयाणामाभासप्रतिबिम्बावच्छेदवादानां स्वरूपमित्थं प्रादर्शि—

“तेन शुद्धचैतन्याभास एव बन्धः । तन्निवृत्तिश्च मोक्ष इति न किञ्चिदसमञ्जसम् । अथवाभासाविविक्तचैतन्यमपि तत्त्वमसिपदवाच्यम् । तेन वाच्यैकदेशस्यात्यागादस्मिन् पक्षे जहदजहल्लक्षणैवेति न कोऽपि दोषः । इदमेव पक्षः आभासवाद इति गीयते ।

अज्ञानोपहितं बिम्बचैतन्यमीश्वरः । अन्तःकरणतत्संस्कारावच्छिन्नाज्ञानप्रतिबिम्बितं चैतन्यं जीव इति विवरणकाराः ।

अज्ञानप्रतिबिम्बितं चैतन्यमीश्वरः । बुद्धिप्रतिबिम्बितं चैतन्यं जीवः । अज्ञानोपहितं बिम्बचैतन्यं शुद्धमिति संक्षेपशारीरककाराः । अनयोः पक्षयोः बुद्धिभेदाज्जीवनानात्वम् । प्रतिबिम्बस्य पारमार्थिकत्वात् जहदजहल्लक्षणैव तत्त्वमादिपदेषु । इममेव प्रतिबिम्बवादमाचक्षते ।

अज्ञानविषयीकृत चैतन्यमीश्वर। अज्ञानाश्रयीभूत च जीव इति वाचस्पतिमिश्रा। अस्मिश्च पक्षे अज्ञाननानात्वात् जीव-नानात्वम। प्रतिजीव च प्रपञ्चभेद। जीवस्यैव स्वाज्ञानोपहिततया जगदुपादानत्वात्। प्रत्यभिज्ञा चापि सादृश्यात। ईश्वरस्य प्रपञ्चजीवाविद्याधिष्ठानत्वेन कारणत्वोपचारादिति। अयमेव चावच्छेदवाद।

अज्ञानोपहित बिम्बचैतन्यमीश्वर। अज्ञानप्रतिबिम्बचैतन्य जीव इति वा, अज्ञानानुपहित शुद्धचैतन्यमीश्वर अज्ञानोपहित जीव इति वा मुख्या वेदान्तसिद्धान्त एकजीववादाख्य। इममेव दृष्टिसृष्टि-वादमाचक्षते। अस्मिश्च पक्षे जीव एव स्वाज्ञानवशात् जगदुपादान निमित्त च। दृश्य सर्व प्रातीतिकम्। देहभेदाच्च जीवभेदभ्रान्ति। एकस्यैव च स्वकल्पितगुरुशास्त्राद्युपबृंहितश्रवणमननादिदाढर्यादात्म-साक्षात्कारे सति मोक्ष। शुकादीनां च मोक्षश्रवण स्वर्थवाद।"

(सि० बि० १ श्लो०)

अत्र न्यायरत्नावलीटीकायामेतेषा मतानामन्येषां चापि बहूनां विस्तरतोऽतीव स्फुट विचारितम्।

ब्रह्म

जगतोऽधिष्ठानभूतम्, सच्चिदानन्दरूपम्, स्वगतसजातीय विजातीयभेदशून्यम् एकमद्वितीय परमार्थतत्त्व ब्रह्म। अस्मिन् सिद्धान्ते 'एकमेवाद्वितीयम्' इति श्रुत्या स्वगतसजातीयविजातीयभेदप्रतिषेध-मुखेन 'इद सर्व यदयमात्मा' 'ब्रह्म वेदममृत पुरस्ताद् ब्रह्म पश्चात्' इत्यादिश्रुत्या सार्वात्म्योपवर्णनमुखेन 'नेह नानास्ति किञ्चन' इति श्रुत्या ब्रह्मणि प्रपञ्चनिषेधमुखेन ब्रह्म त्रिधोपलक्षितम्। इत्थञ्च समस्तविशेषरहितमेव ब्रह्म। यथा भगवाञ्छङ्कर आह—

'अतश्चान्यतरलिङ्गपरिग्रहेऽपि समस्तविशेषरहित निर्विकल्पक-मेव ब्रह्म प्रतिपत्तव्य न तद्विपरीतम्। सर्वत्र हि ब्रह्मस्वरूपप्रतिपादन

परेषु वाक्येषु "अशब्दमस्पर्शमरूपमव्ययम्" इत्येवमादिषु अपास्त समस्तविशेषमेव ब्रह्म उपदिश्यते।' (ब्र० सू० ३।२।११ शा० भा०)

इदं ब्रह्म निरुपाधिकं सोपाधिकं च। तत्र भामतीप्रस्थाने अनुपहितं ब्रह्म वृत्तेर्न विषयः किन्तु स्वप्रकाशरूपम्। उपहितं च ब्रह्म वृत्ति-विषयः। (ब्र० सू० १।१।२ भा० तथा जिज्ञासाधिकरणे)

एवञ्चोपहितरूपेण ब्रह्मणो वृत्तिविषयत्वम्, अनुपहितरूपेण स्वप्रकाशत्वम्। विवरणप्रस्थाने तु—अनुपहितस्य स्वप्रकाशस्यापि ब्रह्मणो वृत्तिविषयत्वम्।

*अखण्डाकारवृत्तेः विषयः उपहितं ब्रह्म शुद्धं वा*

अखण्डाकारवृत्तेः विषयः उपहितं ब्रह्मेति भामतीकारमतम्। यथाह भामत्याम्—

"तस्मात् निर्विचिकित्सवाक्यार्थभावनापरिपाकसहितमन्तःकरणं त्वंपदार्थस्यापरोक्षस्य तत्तदुपाध्याकारनिषेधेन तत्पदार्थता-मनुभावयतीति युक्तम्। नचायमनुभवो ब्रह्मस्वभावः येन न जन्येत। अपि तु अन्तःकरणस्यैव वृत्तिभेदो ब्रह्मविषयः। न चैतावता ब्रह्मणोऽपि पराधीनप्रकाशता। नहि शब्दज्ञानप्रकाश्यं ब्रह्म स्वयं प्रकाशं न भवति। सर्वोपाधिरहितं हि स्वयं ज्योतिरिति गीयते, न तूपहितमपि। यथाहुस्म भगवान् भाष्यकारः— "नायमेकान्तेना-विषयः" इति। नचान्तःकरणवृत्तावस्यस्य साक्षात्कारे सर्वोपाधि-विनिर्मोकः। तस्यैव तदुपाधेः विनश्यदवस्थस्य स्वपरोपाधि-विरोधिनः विद्यमानत्वात्। अन्यथा चतःपच्छायापत्ति विना अन्तःकरणवृत्तेः स्वयमचेतनायाः स्वप्रकाशत्वानुपपत्तेः साक्षात्का-रत्वायोगात्।

(ब्र० सू० १।१।१ भा०)

अत्र कल्पतरौ परिमले चेदं स्पष्टीकृतं यदुपहितरूपेण वृत्ति विषयत्वम्, अनुपहितरूपेण स्वप्रकाशत्वमिति। ब्रह्मसूत्र १।१।२

भामत्याम्—'व्यतिरेकपाश्रयाभिसारस्य विकल्पकृतो विषयविषयिभाव.' इत्युक्तम्। अस्य कल्पतरौ स्पष्टीकृतं यत्—'वृत्तिविषयत्वमपि तस्यैवोपहितस्य न निरुपाधेः।'

एवञ्च भामतीकारमते मूलाज्ञानमपि उपहितविषयकमेव। यतो ह्यस्मिन्मते तत्त्वज्ञानस्योपहितविषयकत्वात्।

*विवरणकारमतेऽखण्डाकारवृत्तेः विषयः शुद्धमेव ब्रह्म*

विवरणकारा एव वदन्ति यत् स्वप्रकाशमेव ब्रह्म अज्ञानस्याश्रयो विषयश्च। एतन्मतेऽखण्डाकारवृत्तिरूपस्य प्रमाणज्ञानस्यैवाज्ञानविरोधित्वम्। यथाहु—'नापि स्वाश्रयचित्प्रकाशेन विरुध्यतेऽज्ञानम् स्वावभासकेन संवेदनेन चित्प्रकाशेनाज्ञानस्याविरुद्धत्वात्।

(प० पा० वि० १ व० पृ० २११)

'न च स्वयं प्रकाशमानेऽज्ञानसमर्गविरोधः क्वचिद् दृष्टः। विषयाणां परप्रकाश्यानामेव तत्संसर्गविरोधात्। संवेदनस्यात्मस्वरूपत्वादेव तदाश्रयाज्ञानोपगमात् न तदुदाहरणम्।

(प० पा० वि० १ व० पृ० २१३)

एवमेव प० पा० १ व० २२४ पृष्ठेऽपि बहु विचारितम्। अस्मिन् मते ब्रह्मणो वृत्तिविषयत्वे कथं स्वप्रकाशता स्यादिति नाशङ्क्यम्। अत्र मते केवलं वस्तुज्ञानमात्रनिवर्तकत्वमेवाङ्गीक्रियते न तु प्रकाशकत्वमिति।

*जीवः*

अविद्योपाधिकं ब्रह्म व जीव[२६] (अन्तःकरणावच्छिन्नं ब्रह्म जीवः) कर्तृत्वं कर्तृत्वं सुखदुःखयोश्च भोक्तृत्वमस्मिन्नेव जीवे सम्भवति। जाग्रत्स्वप्नसुषुप्तिषु तिसृष्ववस्थासु जीवोऽवतिष्ठते।

२६—(क) जीवो हि नाम देवस्याविद्याकल्पित देहाद्या मात्रमिव परमा तत्कृतेन दुःखेन दुःख्यहमित्यविद्यया कृतं दुःखभोगमभिमन्यते।

( ब्र० सू० २।३।४६ शा० भा० )

स्थूलसूक्ष्मकारणशरीराभिमान्ययं जीवः क्रमशो विश्वतैजसप्राज्ञसंज्ञा लभते। अविद्यावशीभूतो जीवो देहेन्द्रियैः सह तादात्म्यमधिगत्य शारीरिकेन्द्रियिकमानसिकसुखदुःखानां भोक्ता भवति। अविद्यापगमे ब्रह्मसाक्षात्कारे जाते स्वस्वरूपं ब्रह्मत्वमधिगच्छति। उपाधिभेदेनेश्वरः हिरण्यगर्भदेवतापदभागप्ययं जीवो भवति।

अयं जीवो नाणुर्न मध्यमपरिमाणः, किन्तु विभुः, अणुत्वमौपचारिकम्, एतत् सर्वं 'तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्' इति ब्र० सू० २।३।२९ शा० भा० तथा ब्र० सू० ४।३।१४ शा० भा० स्पष्टीकृतम्।

जीवस्य नानात्वमेकत्वं च पक्षद्वयम्।[५७] तत्र एकजीववाद एव सिद्धान्तः। उत्तराच्चेदाविर्भूतस्वरूपस्तु (ब्र० सू० १।३।१९)

---

(ख) अनाद्यनिर्वचनीयाविद्योपधानभेदोपाधिकल्पितो जीवः न वस्तुतः परमात्मनो भिद्यते। तद्व्याप्युद्भवाभिभवाभ्यां च उद्भूत इव अभिभूत इव प्रतीयते। (ब्र० सू० ३।२।६ भामत्याम्)।

(ग) छा० उ० भा० ५।११।१, कठ० उ० २।२।६, बृ० भा० उ० ३।१२ तथा ३।२४।

(घ) तस्मादविद्याप्रत्युपस्थापितमपारमार्थिकं जैवं रूपं कर्तृभोक्तृरागद्वेषादिदोषकलुषितमनेकानर्थयोगि। (ब्र० सू० १।२।२० शा० भा०)।

५७—एकमेकत्वं नानात्वं च हिरण्यगर्भस्य तथा सर्वजीवानाम्।
(बृ० भा० उ० भा० ११४६ पृ० ६७)।
अज्ञानोपहितं बिम्बचैतन्यमीश्वरः, अज्ञानप्रतिबिम्बितं चैतन्यं जीव इति वा, अज्ञानानुपहितं शुद्धचैतन्यमीश्वरः अज्ञानोपहितं जीव इति वा मुख्यो वेदान्तसिद्धान्त एकजीववादाख्यः। इममेव च दृष्टिसृष्टिवादमाचक्षते। (सिद्धान्तबिन्दौ १ श्लो०)
द्र०—लेख—मण्डन सुरेश्वर एण्ड भवभूति, ले० श्री दिनेशचन्द्र-भट्टाचार्य इण्डियन हिस्टोरिकल क्वार्टर्ली १९३१ ई० भाग—७ पृ० ३०२।

अतएव चोपमासूर्यकादिवत् (ब्र० सू० ३।२।१८) अंशो नानाव्य-पदेशात् (ब्र० सू० २।३।४३) प्रकाशादिवन्नैवं परः (ब्र०सू०२।३।४६) आभास एव च (ब्र० सू० २।३।५०) एतेषां शाङ्करभाष्ये जीवस्वरूप विमृष्टम्।

## जगत्

### श्रीशङ्कराभिमतसृष्टिप्रक्रिया

श्रीशङ्कराचार्यनये जगद् आविद्यकमनादि च। अस्य सत्ता केवल व्यावहारिकी। अपारमार्थिकस्य व्यावहारिकमात्रस्य जगतः सृष्टि-प्रक्रिया परब्रह्मणो निष्पद्यते। यथोक्तं भगवता श्रीशङ्करेण—

'कार्यमाकाशादिकं बहुप्रपञ्चं जगत्, कारणं परं ब्रह्म, तस्मात् कारणात् परमार्थतोऽनन्यत्वं व्यतिरेकेणाभावः कार्यस्यावगम्यते।'

(ब्र० सू० २।१।१४ शा० भा०)

'अविद्यात्मकनामरूपबीजव्याकरणापेक्षत्वात् सर्वज्ञत्वस्य 'तस्मा-देतस्मादात्मन आकाशः सम्भूतः' (तै० उ० २।१) इत्यादिवाक्येभ्यो नित्यशुद्धबुद्धमुक्तस्वरूपात् सर्वज्ञात् सर्वशक्तेरीश्वराज्जगज्जनि-स्थितिप्रलयाः।'

(तत्रैव)

'स च स्वात्मभूतानेव घटाकाशस्थानीयानविद्याप्रत्युपस्थापित-नामरूपकृतकार्यकरणसंघातानुरोधिनो जीवाख्यान् विज्ञानात्मनः प्रतीष्टे व्यवहारविषये।'

(तत्रैव)

'सृष्ट्युत्तरकाल हि शरीरादिविभागापेक्षं कर्म, कर्मापेक्षश्च शरीरादिविभाग इतीतरेतराश्रयत्वं प्रसज्येत। नैष दोषः, अनादि-त्वात् संसारस्य भवेदेव दोषो यद्यादिमान् संसारः स्यात्।

(ब्र० सू० २।१।३५ शा० भा०)

अनया रीत्या प्रलयान्ते जीवानां पूर्वपूर्वसंस्कारजीवकर्मापेक्षया 'तस्मादेतस्मादात्मन आकाशः सम्भूतः' ( तै० उ० २।१ ) इति श्रुत्यनुसारं परब्रह्मण एवाकाशः सञ्जायते, आकाशाद् वायुः, वायोस्तेजस्तस्मादापः, ताभ्यः पृथिवी चोत्पद्यन्ते। पुनरेतेषां पञ्चीकरणप्रक्रियया त्रिवृत्करणप्रक्रियया[५८] वा जगत् सृज्यते।

ब्रह्मसूत्रे २।१।१६, २।१।२४, २।१।३०, २।१।३२, २।१।३३, २।१।३६, शाङ्करभाष्ये सृष्टिक्रमः सविस्तरं विवेचितः।

श्रीमधुसूदनसरस्वतीभिः सिद्धान्तबिन्दौ श्रीशङ्कराभिमतो जगत्सृष्टिक्रमः स्वल्पाक्षरे विशदमित्थं निरूपितः—

'अविद्यातद्व्याप्यनन्तकार्यात्मकः प्रपञ्चो दृश्यपदार्थः। तस्यापारमार्थिकत्वेऽपि व्यावहारिकसत्त्वाभ्युपगमात् न स्वाप्निकपदार्थवन्निरूपणं व्यर्थम्। उपासनादावुपयोगादिति। सोऽपि त्रिविधः। अव्याकृतमूर्तामूर्तभेदात्। तत्र साभासाविद्या मूर्तामूर्तप्रपञ्चबीजशक्तिरूपा। तदजन्यत्वेऽपि तन्निवृत्तौ निवर्तमानत्वेन तद्व्याप्यैः

५८—त्रिवृत्करणप्रक्रिया श्रुतावुपलभ्यते—'तासां त्रिवृतं त्रिवृतमेकैकामकरोत्।' ( छा० उ० ६।३।४ ) पञ्चीकरणप्रक्रिया श्रुतिषु नोपलभ्यते। एषा प्रक्रिया पौराणिकीति वेदान्तपरिभाषायाः शिखामणिटीकायां स्पष्टीकृतम्—'पञ्चीकरणे पुराणवाक्यं प्रमाणम्।······ ननु त्रिवृत्कृतिप्रतिपादकच्छान्दोग्यश्रुतिविरोधेन कथं पुराणादिवाक्यात् पञ्चीकृतिसिद्धिरित्याशङ्क्य तस्यास्त्रिवृत्कृतिपरत्वेन पञ्चीकृतिनिवृत्तिपरत्वाभावात्।

( वे० प० विषयपरि० )

द्र० ब्र० सू० २।३।२०–२२।

महर्षिकणादो मानवादिशरीरे पृथिव्याकाशादीनां परस्परसम्बन्धाद् मानवादिशरीरस्य प्रत्यक्षं न स्यादित्याशङ्क्य वै० सू० ४।२।२ पञ्चीकरणप्रक्रियां खण्डितवान्। भगवान् श्रीशङ्करो ब्रह्मसूत्रे २।२।११ भाष्ये पञ्चीकरणप्रक्रियां समर्थितवान्।

चैतन्यतत्सम्बन्धजीवेश्वरविभागचिदाभासैः सहानादित्वादव्याकृतमित्युच्यते। अयमव्याकृतपदार्थ ईश्वरोपाधिः। सा स्वयं जडाप्यजडेन चिदाभासेनोज्ज्वलिता पूर्वपूर्वसंस्कारजीवकर्मप्रयुक्ता सती शब्दस्पर्शरूपरसगन्धात्मकान्याकाशवायुतेजोजलपृथिव्याख्यानि पञ्चमहाभूतानि जनयति। तत्र पूर्वपूर्वभूतभावापन्नाया अविद्याया उत्तरोत्तरं प्रति कारणत्वात् पूर्वपूर्वभूतगुणानामुत्तरोत्तरगुणेष्वनुप्रवेशः। एवमविद्यात एवान्धकारोऽपि भावरूप एवावरणात्मा चाक्षुषज्ञानविरोधी आलोकनाद्यक्ष (?) मर्दित महाविद्युदादिवदाविर्भवति तिरोभवति चेति सिद्धान्तः। संसारहेतुदेहोपादानत्वाभावाच्च न श्रुतिषु सृष्टिप्रक्रियायामाम्नात इत्यविरोधः। दिक्कालौ त्वप्रामाणिकत्वान्नोक्तौ। आकाशस्यैव दिग्व्यवहारजनकत्वसम्भवात् 'दिशः श्रोत्रम्' इति श्रुतेश्च। कालस्त्वविद्यैव। तस्या एव सर्वाधारत्वादिति। तानि च सूक्ष्माण्यपञ्चीकृतानि पञ्च महाभूतान्यमूर्तान्ययानि (?) कारणवशात् सत्त्वरजस्तमोगुणात्मकानि सत्त्वांशप्राधान्येन ज्ञानक्रियाशक्त्यात्मकमेकं स्वच्छद्रव्यं चिद्रूपमिव मिलित्वा जनयति। तस्य च ज्ञानशक्तिप्रधानांशोऽन्तः करणम्।'' ''
''''' एवमेकैकभूतेभ्यो ज्ञानक्रियाशक्तिभेदात्प्रत्येकमिन्द्रियद्वयं जायते। आकाशाच्छ्रोत्रवाचौ।'' '' '' '' '' ''तानि च तथाभूतानि भूतानि भोगायतनं शरीरं भोग्यं च विषयमन्तरेण भोग्यं जनयितुमशक्नुवन्ति जीवकर्मप्रयुक्तत्वात् स्थौल्याय पञ्चीकृतानि भवन्ति।'' '' ''
''''' ''''' एवं विषया अपि पञ्चीकृतैकैकभूतजन्याश्चतुर्दशभुवनाख्या ऊर्ध्वमध्याधोभावेन सत्त्वरजस्तमोऽशप्रधानाः। एतत्सर्वं ब्रह्माण्डाख्यं विराडिति मूर्तमिति चोच्यते। अयमौपनिषदः सृष्टिक्रमः। तद्विपरीतो लयक्रमः।' (सि० वि० ८ श्लो०)

एवमेव वेदान्तपरिभाषाया विषयपरिच्छेदेऽपि सृष्टिक्रमो वर्णितः।

## मोक्ष

श्रवणादिना 'तत्वमसि' इत्यादिमहावाक्यार्थबोधादविद्यानिवृत्तौ आत्मन स्वस्वरूपज्ञान मोक्ष । यथाह भगवाञ्छङ्कर —

'ब्रह्मभावश्च मोक्ष ।' ( ब्र० सू० १।१।४ )

बृहदारण्यकोपनिषदो भाष्येऽप्येवमेव मोक्षस्वरूप निरूपितम्—

जीवभावापन्नस्यैव स्वाविद्यावशात् सर्वप्रपञ्चकल्पकत्वेनेश्वरोऽपि सह सर्वज्ञत्वादिधर्मै स्वप्नोपलब्धमन्यवत् तेनैव स्वभिन्न कल्प्यते, पश्चाच्च श्रवणादौ प्रवृत्तस्य 'तत्त्वमसि' इत्यादिमहावाक्यार्थबोधात् स्वरूपसाक्षात्कारेण मुक्ति ।

अविद्यानिवृत्तिरपि मोक्षपदेनाभिधीयते । यथा—

तस्मादविद्यानिवृत्तिमात्र मोक्ष व्यवहार इति चाबोचाम । यथा रज्ज्वादौ सर्पाद्यज्ञाननिवृत्तौ सर्पादिनिवृत्ति ।[४६]

'फलश्च मोक्षोऽविद्यानिवृत्तिर्वा ।' ( बृ० आ० उ० १।४।७ पृ० १३३ शा० भा० )

भगवान् शङ्करो जीवन्मुक्तिमभिमनुते स आह–प्रवृत्तफलस्य तु कर्माशयस्य मुक्तेषोरिव वेगक्षयान्निवृत्ति, तस्य तावदेव चिरम् इति शरीरपातावधिक्षेपकरणात् । ( ब्र० सू० ३।३।३२ शा० भा० ) अविद्यानिवृत्तौ अवशिष्टप्रारब्धकर्मण क्षयपर्यन्त भोगायतने स्थितोऽपि जीव मुक्त एवाभिधीयते । इय मुक्ति शाङ्करमते त्रिधा विभज्यते–१–क्रममुक्ति २–जीवन्मुक्ति ३–विदेहमुक्तिश्च । आसामुल्लेखो भगवता श्रीशङ्करेणत्थमकारि—

---

४६—एवमेव बृ० आ० उ० भा० वार्तिके पि द्रष्टव्यानि—१।४।३०३, २।१।१, २।४।८८, ३।४।१३१, ३।५।२६ ३।८।३७, ४।४।१७०, ४।४।१७८ ४।४।३४३ ४।४।३५४, ब्र० सू० शा० भा० १।१।१६, १।३।२० १।३।४६, ३।२।२१ ३।४।८ ४।१।१६, तथा तत्त० उ० शाङ्करभाष्य क० उ० शङ्करभाष्य, मु० उ० श० भाष्य, छा० उ० भा० च ।

'तत्र कानिचिद् ब्रह्मण उपासनान्यभ्युदयार्थानि, कानिचित् क्रममुक्त्यर्थानि, कानिचित् कर्मसमृद्ध्यर्थानि।

(ब्र० सू० १।१।१२ शा० भा०)

प्रत्येक च विवरणमित्यमस्ति—

'नहि विदुष मरणेनस्य विदुष: सह ब्रह्म सम्प्रेप्सनोऽन्तराले सुकृतदुष्कृताभ्यां किञ्चित्प्राप्तव्यमस्ति, यदर्थं कानिचित् क्षणानक्षीणे ते कल्प्येयाताम्।

(ब्र० सू० ३।३।२७ शा० भा०)

'प्रवृत्तफलस्य तु कर्माशयस्य मुक्तेषोरिव वेगक्षयान्निवृत्ति:, तस्य तावदेव चिरम् इति शरीरपातावधिक्षेपकरणात्।

(ब्र० सू० ३।३।३२ शा० भा०)

'इति च सम्यग्दर्शनकालमेव तत्फलं सर्वात्मत्व दर्शयति।

ब्र० सू० ३।३।३२ शा० भा०)

. अत्र आनन्दगिरि:—अभ्युदयार्थानि प्रतीकोपासनानि, क्रममुक्त्यर्थानि दहराद्युपासनानि, कर्मसमृद्ध्यर्थानि उद्गीथादिध्यानानि।

अत्रत्यरत्नप्रभायां च नाम ब्रह्म इत्याद्युपास्तीनां कामचारादिरभ्युदय: फलम् दहराद्युपास्तीनां क्रममुक्ति फलम्, उद्गीथादिध्यानस्य कर्मसमृद्धि: फलम्। (ब्र०सू० १।१।१२)

एतत्सर्वं ब्र० सू० ४।१।१२ शा० भा० अप्युक्तम्।

मोक्षसाधनम्

अविद्यानिवृत्ति विद्ययैव भवति, विद्या च तत्त्वमस्यादिमहावाक्यार्थबोधादुदेति। अत. केवलं ज्ञानमेव मोक्षसाधन न तु कर्म न वा ज्ञानकर्मसमुच्चय:।[६०] ज्ञानकर्मसमुच्चयवादस्यानेकस्थलेषु भगवता

---

६०—(क) ईश्वरस्तत्त्वापरिज्ञानाद् बन्धस्तत्स्वरूपपरिज्ञानात् मोक्ष:। तथा च श्रुति:—ज्ञात्वा देवं सर्वपाशापहानि.... ..... .....

(ब्र० सू० ३।२।५ शा० भा०)

शङ्करेण निराशः कृतः। अय निराशो वृहदारण्यकोपनिषद्भाष्ये श्रीमद्भगवद्गीताभाष्ये चादौ विशेषरूपेण द्रष्टव्यः। ब्रह्मसूत्रस्य तृतीयाध्यायस्य चतुर्थपादे शाङ्करभाष्ये केवल विद्याया एव मोक्ष-साधनत्वमिति सम्यङ् निरूपितम्।

*कर्मणः साधनत्वविषये भामतीप्रस्थाने विवरणप्रस्थाने च मतभेदः*

भामतीप्रस्थाने कर्मणो विविदिषार्थत्वम्। यथा—"तमेतमात्मानं वेदानुवचनेन नित्यस्वाध्यायेन ब्राह्मणा विविदिषन्ति-वेदितुमिच्छन्ति, न तु विदन्ति। वस्तुत. प्रधानस्यापि वेदस्य प्रकृत्यर्थतया शब्दतो गुणत्वात्। इच्छायाश्च प्रत्यय.र्थतया प्राधान्यात् प्रधानेन च कार्य-सम्प्रत्ययात्। न हि राजपुरुषमानय इत्युक्ते वस्तुतः प्रधानोऽपि राजा पुरुषविशेषणतया शब्दत उपसर्जनः आनीयते, अपि तु पुरुष एव शब्दतस्तस्य प्रधान्यात्। उत्पत्तौ ज्ञानस्य कर्मापेक्षा विद्यते विविदिषो-त्पादनद्वारा विविदिषन्ति यज्ञेन इति श्रुतेः।"[६१]

(ब्र० सू० १।१।१ भा०)

*विवरणप्रस्थाने कर्मणो विद्यार्थत्वम्।*

यथा—

'अवान्तरवाक्यभेदेन 'विविदिषन्ति' इति यज्ञादीनां ज्ञानसंयोग-विधानवत्।'

(प० पा० वि० प्रथमवर्णके पृ० ३७)

---

( ख ) इत्येवजातीयका श्रुति. केवलाया विद्यायाः पुरुषार्थहेतुत्वं श्रावयति। ( ब्र० सू० शा० भा० ३।४।१ ) अत्र रत्नप्रभा-टीकायाम—सिद्धान्ते केवलज्ञानान्मुक्तिः। ब्रह्मविद्यैव मोक्षकारणमित्युक्तम्।

( बृ० भा० उ० ४।४।७ शा० भा० )

६१—एवमेव ब्र० सू० ३।३।३४ शा० भा० भामत्याम्, तथा ब्र० सू० ३।४।२६ शा० भा० भामत्या कर्मणा विविदिषार्थत्वमुक्तम्।

'सर्वाण्येव कर्माणि उत्पत्तिविधिविहितानि सयोगभेदेन जीवन-कामनाद्यधिकारविध्यन्तरवद् ब्रह्मानुभवकामो यज्ञादीनि अनुतिष्ठेत इत्यधिकारान्तरविधिविधेयानि भविष्यन्तीत्याह—यज्ञेन दानेने-त्यादिना। आत्मनस्त्वपरोक्षानुभवस्याविद्यमानतया स्वर्गादिवद् भावनासाध्योऽवगम्यते, पुरुषार्थत्वात्। ... ...नच यज्ञादीनामिच्छो पसर्जनतयाऽऽख्यातामिहितभावनाकरणतया प्रवगतानां साध्येनैव अन्वयात् यज्ञादीनि ब्रह्मानुभवसाधनान्यवगम्यन्ते। ततश्च आत्मा-नुभवकामो यज्ञादी अनुतिष्ठेद् इति विधि परिणम्यते।

(प० पा० वि० तृ० व० पृ० ५७३)

'ननु विशुद्धिद्वारेण ज्ञानहेतुत्वे संस्कारविविदिषापक्षयो को विवेक। उच्यते श्रवणमननध्यानाभ्यासादिसहकारिकारणसमस्तः-वेव संस्कारो विज्ञान साधयति, तदभावे तु अभ्युदयमेव। विविदिषाया तु विज्ञानस्य कर्मफलत्वात् फलपर्यन्त साधनानि सम्पाद्यापि विज्ञान जनयन्तीति विशेष।'

(प० पा० वि० तृ० व० पृ० ५४६)

एवमेवापरत्रापि।[६२]

*ब्रह्मसाक्षात्कारकारणं मनः शब्दो वा*

भामतीप्रस्थाने ब्रह्मसाक्षात्कारकारण मन। यथा—

'नचैष साक्षात्कारो मीमांसासहितस्यापि शब्दप्रमाणस्य फलम्, अपितु प्रत्यक्षस्य। तस्यैव तत्फलनियमात्। ... ...तस्माद् निर्विचि-कित्सवाक्यार्थभावनापरिपाकसहितमन्त करण त्वंपदार्थापरोक्षस्य

६२—एवमेवापरत्रापि विवरणे तृतीयवर्णके पृ० ५४३—५४६ (म० ओ० सी० मद्रास १९२८ ई०) विद्यायत्र प्रतिपादित तथा विवरण कारेण श्रात्मकार्यात्मस्वामिना शारीरकन्यायसङ्ग्रहे सर्वापेक्षाधि-करणे—'यज्ञेन विविदिषन्ति' इति कर्मणा ज्ञानसाधन व विधीयत इत्युक्तम्।

तत्तदुपाध्याकारनिषेधेन तत्पदार्थतामनुभावयतीति युक्तम् । ........ एवं वेदान्तार्थज्ञानाभ्यासाहितसंस्कारो जीवः स्वस्य ब्रह्मभावमन्तःकरणेन ।'

( ब्र० सू० १।१।१ भामत्याम् । )

'तस्माद् यथा गान्धर्वशास्त्रार्थज्ञानाभ्यासाहितसंस्कारः सचिवेन श्रोत्रेण षड्जादिस्वरग्राममूर्च्छनाभेदमध्यक्षेणेक्षते एव वेदान्तार्थज्ञानाहितसंस्कारो जीवस्य ब्रह्मस्वभावमन्तःकरणेनेति ।'

( ब्र० सू० आवृत्त्यधिकरण ४।१।२ भामत्याम् )

विवरणप्रस्थाने ब्रह्मसाक्षात्कारकारणं शब्दः । यथा—

ननु ततस्तु तं पश्यते निष्कलं ध्यायमानः इति ध्यानमपरोक्षकरं श्रूयते । सत्यम् । एकत्र चित्तस्य समवधानता तदेकाग्र्यनिमित्तं भवति । तदेकाग्रचेतसा सहकारिणा शब्द एव 'औपनिषदम्' इति तद्धितप्रत्ययसामर्थ्यात् अपरोक्षज्ञानमुत्पादयति ।

(पा०पा०वि०द्वि०व० पृ० ४५२)

चित्तेन्द्रिय पारोक्ष्यविभ्रमनिमित्तप्रतिबन्धनिरासेन शब्दादेव अपरोक्षनिश्चयनिमित्तं भवतीति गम्यते । लोके तु अतिसूक्ष्मतरवस्तुनिर्धारणे चित्तैकाग्र्यविशेषापेक्षाया दर्शनात् । एव च त त्वौपनिषदम् इति तद्धितप्रत्ययेन ब्रह्मावगतिहेतुत्वं शब्दस्य दर्शितमुपपन्न भवति ।

(प०पा०वि०प्र०व० पृ० ४०३)

एतच्च विवरणकारेण स्वीये शारीरकन्यायसंग्रहेऽप्युक्तम् ........

'त त्वौपनिषदम् इति च वेदान्तानामपरोक्षब्रह्मावगतिसाधनत्वं तद्धितप्रत्ययेनोक्तम् ।'

( शा० न्या० स०—सर्वापेक्षाधिकरणे )

एवमेव विवरणकारेण स्वीये शब्दनिर्णयाभिधे ग्रन्थेऽप्येतदुक्तम् ।[६३]

---

६३—तत्त्वापरोक्ष ज्ञान शब्दादेवेत्याह—

विपर्यासनिरासतः स विदितश्चाद्याऽऽज्ञानहानत ।
स्वत सिद्धेरतश्शब्दादापरोक्ष्य प्रजायते ॥
( शब्दनिर्णयाभिधे ७१ )

*श्रवणादीनां विधित्वमस्ति नवा*

श्रवणमनननिदिध्यासनानां विधित्वं नास्तीति भामतीप्रस्थानम्। यथा—

आत्मेत्येवोपासीतेति न विधिः अपि तु विधिरूपोऽयमिति। अन्यतः प्राप्ता एव हि श्रवणादयः विधिरूपै र्वाक्यैरनूद्यन्ते।

(ब्र० सू० १।१।४ भा०)

'नच चिन्तासाक्षात्कारयो र्विधिरिति तत्त्वसमीक्षायामस्माभिरुपपादितम्। विस्तरेण चायमर्थस्तत्रैव प्रपञ्चित।' ब्र०सू० ३।८।५ भा० उभयलिङ्गाधिकरणे, वाक्यान्वयाधिकरणे १।४।१६ भामत्यां तथा कार्याख्यातरविध्यधिकरणे ३।४।१४) भामत्यां क्रमशः—

'आत्मैव द्रष्टव्यः साक्षात्कर्तव्यः। एतत्साधनानि श्रवणादीनि विहितानि श्रोतव्य इत्यादिना।' 'अपूर्वत्वाद्विधिरास्थेयः।' इति वाक्याभ्यां विधिपक्षः समर्थित प्रतीयते।

किन्तूभयत्र कल्पतरौ सम्यङ्निराकृतः।

एवं च भामत्यामनेकत्र विधिपक्षो निराकृतः।[६४]

श्रवणादौ नियमविधिरिति विवरणप्रस्थानम्। 'एतावदरे खल्वमृतत्वम्' इत्युपसंहारात् अमृतत्वसाधनमात्मदर्शनम् द्रष्टव्यः' इत्यनूद्य तादर्थ्येन मनननिदिध्यासनाभ्यां फलोपकार्यङ्गाभ्यां सह श्रवणं नाम अङ्गि विधीयते।'

( प० पा० वि० प्र० व० पृ० ३० )

अत्र तात्पर्यदीपिकाटीकायां श्रीचित्सुखाचार्येण स्पष्टीकृतमेतद्— 'नावघातादिवत् स्वरूपोपकारित्वम्, किन्तु प्रयाजादिवत् फलोपकार्यङ्गत्वान्न विरोधः।'

---

६४—ब्र० सू० ३।४।६ शा० भा० भामत्याम्, ब्र० सू० ३।४।८ शा०भा० भामत्याम्, ब्र० सू० ४।१।१ शा० भा० भामत्याम्, अत्रत्ये कल्पतरुपरिमलव्याख्याने अपि द्रष्टव्ये।

अन्यत्राप्येतत्स्फुटीकृतम् ।[६५]

*निदिध्यासनमङ्गि श्रवणं वा*

श्रवणमननोपकृतनिदिध्यासनजसंस्कारवच्चेतसः साक्षात्कारे उपयोग इति भामतीप्रस्थानम् । यथा—

'तस्यापि ( विद्योदयस्यापि ) श्रवणमननपूर्वकोपासनाजनितसंस्कारसचिवादेव चेतसो भावात् ।'

( ब्र० सू० ३।४।६ शा० भा० भामत्याम् )

मनननिदिध्यासनोपस्कृतवेदान्तश्रवणस्य साक्षात्कारे उपयोग इति विवरणप्रस्थानम् । यथा—

मनननिदिध्यासनयोश्च श्रवणाङ्गत्वमुत्तरत्र वक्ष्यामः ।'

( प० पा० वि० प्र० व० पृ० ३३ )

'सर्वथा तावन्मनननिदिध्यासनाभ्यामङ्गभूताभ्यां सह श्रवणविधानमस्त्येव ।'

( प० पा० वि० प्र० व० पृ० ३८ )

'ननु मनननिदिध्यासनयोः कथं श्रवणं प्रत्यङ्गत्वावगमः ।.........श्रवणमननयोस्तदङ्गभावेऽवगते न युज्यते श्रवणाङ्गता मनननिदिध्यासनयोरिति......... तस्माद् युक्तं श्रवणस्य फलोपकार्यङ्गता मनननिदिध्यासनयोरिति ।'

( प० पा० वि० प्र० व० पृ० ४१०–४१३ )

*स्वाध्यायाध्ययनविधेरर्थावबोधोऽचरमहत्प्राप्तत्वं वा फलम्*

स्वाध्यायाध्ययनविधेरर्थावबोधः फलमिति भामतीप्रस्थानम् । यथा—

'यद्यपि च स्वाध्यायाध्ययनविधिना स्वाध्यायपदवाच्यस्य

६५—द्र० पञ्चपादिकाविवरणे प्रथमवर्णके पृ० ३३ तथा नवमवर्णके पृ० ७७३ ।

वेदराशेः फलवदर्थविबोधपरतामापादयता कर्मविधिनिषेधानामिव वेदान्तवाक्यानामपि स्वाध्यायशब्दवाच्याना फलवदर्थविबोधपरत्वमापादितम् ।'

( ब्र० सू० १।१।१ शा० भा० भामत्याम् )

अध्ययनाध्ययनविधेरक्षरग्रहणान्तत्वं फलमिति विवरणप्रस्थानम् । यथा—

'स्यादेतदेवम्, यद्यर्थावबोधफला अध्ययनक्रिया स्यात् । साह्यधीयमानावाप्तिफलत्वादक्षरग्रहणान्ता ।·· ····· ···तत्रावश्य कल्पनीया अक्षरग्रहणान्तता ।'

( प० पा० ३ व० पृ० २२२–२२३ )

अत्र विवरणकारा आहु —'अतो नार्थनिश्चयदृष्टफला अध्ययनक्रिया स्यादिति । · ··· ····· ·····तव्यप्रत्ययेन भावनाकर्मकारके अभिधीयमाने स्वाध्याये स्वावाप्तिफले च न भाव्यान्तर कल्पनीयम् । · ·· ·········· ·

( प० पा० वि० ३ व० पृ० ४८५ )

*साधनचतुष्टये प्रथमसाधनार्थे भामतीप्रस्थाने विवरणप्रस्थाने च भेदः*

भगवता शङ्करेण प्रथमसूत्रभाष्ये साधनचतुष्टय प्रतिपादितं तत्र प्रथम साधन नित्यानित्यवस्तुविवेक । तत्र भामतीकारमते नित्यानित्यशब्दौ सत्यासत्यपरौ-विवरणकारमते च विनाश्यविनाश्यर्थपरौ ।

यथाह भामत्याम—"एतदुक्त भवति-मा भूदिद तद्दत नित्यम् इद तदनृतमनित्यमिति धर्मिविशेषयो विवेक । धर्मिमात्रयो नित्यानित्ययो तद्धर्मयोश्च विवेक निश्चिनोत्येव । नित्यत्व सत्यत्व तद्यस्यास्ति तन्नित्य सत्यम्, तथा चात्मगोचर । अनित्यमसत्य तथा चानात्मगोचर । तदेतेष्वनुभूयमानेषु युष्मदस्मत्प्रत्ययगोचरेषु विषयविषयिषु यदृत नित्य सुख व्यवस्थास्यते तदात्मगोचरो भविष्यति । यत्तु अनित्यमनृत भविष्यति तापत्रयपरीत तत्त्यक्ष्यत इति । सोऽय नित्यानित्यवस्तुविवेक प्राग्भवीयादैहिकाद्वा कर्मण.

विशुद्धसत्त्वस्य भवत्यनुभवोपपत्तिभ्याम्। न खलु सत्यं नाम न किञ्चिदस्तीति वाच्यम्। तदभावे तदधिष्ठानस्यानृतस्याप्यनुपपत्तेः। शून्यवादिनामपि शून्यताया एव सत्यत्वात्।"

(ब्र० सू० १।१।१)

अत्र विवरणकारा इत्थमाहुः—"सोऽन्वेष्टव्यः" इति विधिप्रकरणे तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते इति नित्यानित्यवस्तुविवेको दर्शितः। परीक्ष्य लोकान् कर्मचितान् आत्मनस्तु कामाय सर्वं प्रियं भवति इति चेत्यादि।"

(प० पा० वि० २ व० पृ० ५५८)

प्रस्थानभेदः

भगवान् श्रीशङ्कराचार्यः स्वपरमगुरोः श्रीगौडपादाचार्यस्याभिमतमेवाद्वैतसिद्धान्तं विशदमकरोदिति सम्प्रदायः। किन्तु परमगुरोस्तथाचार्यशङ्करस्य च वेदान्तप्रस्थाने स्थानद्वये विरोध इव भासते।

प्रथमस्तावत् स्वप्नजागरितस्थानयोः श्रीगौडपादाचार्यमते एकत्वं समानत्वं चोक्तम्—

स्वप्नजागरितस्थाने ह्येकमाहुर्मनीषिणः।
भेदानां हि समत्वेन प्रसिद्धेनैव हेतुना॥

(मा० का० २।५)

भगवत्पादशङ्करमते स्वप्नजागरितस्थानयोः वैधर्म्यमुक्तम्—

वैधर्म्यं हि भवति स्वप्नजागरितयोः। किं पुनर्वैधर्म्यम्। बाधाबाधाविति ब्रूमः।

(वैधर्म्याच्च० ब्र० सू० २।२।२९ भाष्ये)

द्वितीयस्तु माण्डूक्यकारिकाग्रन्थे श्रीगौडपादाचार्येणाध्यासवादः कुत्रापि नोपन्यस्तः।

वस्तुतोऽयं न विरोधः किन्तु विरोधाभास एव यतो हि भगवता शङ्करेण 'वैधर्म्याच्च न स्वप्नवत्' इति सूत्रभाष्ये विज्ञानवादिमत

निराकर्तुं प्रवृत्तेन विज्ञानवाद्यनुसारं स्वप्नजागरितयोर्भिन्नभिन्न-स्थानत्वं स्वीकृत्य स्वप्नस्य बाध्यत्वं प्रतिपादितम्। एतेन जागरितस्य सत्यत्वं तेनाङ्गीकृतमिति नायातम्। अपरं च 'प्रतिपादितं हि तदनन्यत्वमारम्भणशब्दादिभ्यः (ब्र० सू० २।१।१४) इत्यत्र समस्तस्य प्रपञ्चस्य मायामात्रत्वम्।' (ब्र० सू० ३।२।४ भा०) इत्युक्त्या स्वप्नवज्जागरितस्यापि मिथ्यात्वं प्रतिपादितमेव।

यद्यपि कारिकासु अध्यासशब्दो न साक्षात्प्रयुक्तः किन्तु अविद्या-माया-शब्दद्वाराऽध्यासपक्षः स्वीकृत एव। यथाहि—

यथाविद्यस्तथा स्मृतिः। (मा० का० २–१६)

स्वप्नमाये यथा दृष्टे। (मा०का० २–३१)

मतो हि मायया जन्म। (मा० का० ३–२७)

मायामात्रमिदं द्वैतमद्वैतं परमार्थतः। (मा०का० १–१७)

अविद्या तथाऽध्यास एक एवेति स्वीकृतमेव—

'अध्यासं पण्डिता अविद्येति मन्यन्ते।'

(ब्र० सू० उपोद्घातभाष्ये)

अविद्याकृतनामरूपमायास्वरूपेण　　।

मा० का० १।६ शा० भाष्ये)

एवमत्र श्रीशङ्करसम्मतो ब्रह्मैकत्वप्रतिपादको जगन्मिथ्यात्व-प्रसाधको निर्विशेषब्रह्माद्वैतसिद्धान्तः संक्षेपेणोपस्थापितः। अत्र ये प्रमुखा अवान्तरसिद्धान्ता अविद्याध्यासविवर्तावच्छेदवादप्रतिबिम्ब-वादाभासवादब्रह्मस्वरूपजीवस्वरूपमोक्षस्वरूपमोक्षसाधनादयस्तेऽपि प्रदर्शिताः। अनेनाग्रिमाध्यायेषु श्रीशङ्करपूर्ववर्त्याचार्याणां वक्ष्यमाणै-रद्वैतसिद्धान्तैः सह श्रीशङ्कराद्वैतसिद्धान्तस्य पर्यालोचने सौकर्यं भविष्यतीति।

# अथ द्वितीयोऽध्यायः

## वेदान्तदर्शनस्य निर्विशेषब्रह्माद्वैतवादस्य च प्राचीनता

संक्षेपतः शाङ्करसिद्धान्तः पूर्वमुदीरितः। मध्यकाले एतत्-सिद्धान्तस्य विरलप्रचारतया ग्रन्थत्वे सामान्यतयेव विश्वस्यते प्रतीयते वा यदाचार्यशङ्करादेव वेदान्तदर्शने निर्विशेषब्रह्माद्वैतमतम् प्रारब्धम्। किन्तु पर्यालोचनेनातो विपरीतं प्रतीयते। श्रीशङ्कर-कालाद् बहुकालपूर्वमपि वेदान्तदर्शनस्य निर्विशेषब्रह्माद्वैतवादस्य च प्रचार आसीत्। एतत्साधयितुमुपनिषदां महाभारतस्य पाणिने जैनदर्शनस्य संस्कृतकाव्यानां च कतिपयानि वाक्यान्यत्रो-पस्थाप्यन्ते। येषु वेदान्तशब्दस्य प्रयोगस्तथा निर्विशेषब्रह्माद्वैतवादस्य सिद्धान्ता उपलभ्यन्ते—

यथोपनिषदाम्—श्वेताश्वतरोपनिषदि—

'वेदान्ते परमं गुह्यम्।'

(श्वेता० उ० ६।२२)

छान्दोग्योपनिषदि—

'देवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्याम्.....।'

(छा० उ० ७।१।२)

'वेदान्तविज्ञानसुनिश्चितार्थाः।'

(मुण्डको० ३।२।६)

'वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः ।'

( महानारायणोप० १०।८ )

महाभारते—

'ब्रह्मसूत्रपदैश्चैव हेतुमद्भि र्विनिश्चितैः ।'

( महाभारते श्रीमद्भगवद्गीतायाम् १३।४ )

अत्र ब्रह्मसूत्रपदस्यार्थं गीताटीकाकारः श्रीश्रीधरस्वामी बादरायणसूत्रमिति कृतवान् ।

एवमेव—

'वेदान्तकृद् वेदविदेव चाहम् ।'

( महाभारते गी० १५।१५ )

महाभारते सभापर्वणि महर्षिनारदस्य विद्वत्तावर्णनप्रसङ्गे साङ्ख्ययोगन्यायदर्शनैः सह वेदान्तदर्शनस्यापि गणना कृतास्ति ।

यथा—

वेदोपनिषदां वेत्ता ऋषिः सुरगणार्चितः ।
इतिहासपुराणज्ञः पुराकल्पविशेषवित् ॥

( म० भा० स० प० ५ अ० २ श्लो० )

एवमेव शान्तिपर्वण्यपि विविधदार्शनिकमतेषु 'वेद' शब्देन वेदान्तदर्शनस्योल्लेखः कृतोऽस्ति ।

'साङ्ख्य योगः पाञ्चरात्रं वेदाः पाशुपतं तथा,
ज्ञानान्येतानि राजर्षे विद्धि नानामतानि वै ।

(म० भा० शा० प० मो० ध० ३४९।६४ )

साङ्ख्यस्य वक्ता कपिलः परमर्षिः स उच्यते ।
हिरण्यगर्भो योगस्य वेत्ता नान्यः पुरातनः ।

( तत्रैव ६५ श्लो० )

अपान्तरतमश्चैव वेदाचार्यः स उच्यते,
प्राचीनगर्भं तमृषिं प्रवदन्तीह केचन ॥
( तत्रैव ६६ श्लो० )

पाणिनीये—

पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः ।
( पा० सू० ४।३।११० )

अत्र भिक्षुसूत्रेण ब्रह्मसूत्रमेवाभिप्रेतम् ।

धर्मसूत्राणां कालः कथमपि ईशापूर्वं चतुःशताब्दीत परो न । बुह्लर ( Buhler ) महोदयेन धर्मसूत्रेषु गौतमधर्मसूत्रं सर्वतः प्राचीनमिति निर्णीतम् । तत्रोपनिषदामेव वेदान्तत्वमुक्तम् । यथा—

'उपनिषदो वेदान्ताः ।' ( गौ० ध० सू० १९।१३ )

'वाकोवाक्येतिहासपुराणकुशल······
( गौ० ध० सू० ८-९ )

'त्रय्यामान्वीक्षिक्यां चाभिविनीतः ।'
( गौ० ध० सू० ११।४ )

हरदत्तो मस्करी च अस्यार्थं न्यायविद्यामध्यात्मविद्या च कृतवन्तौ । वाकोवाक्यशब्देन तर्कविद्या अध्यात्मविद्या वात्राभिप्रेता । आपस्तम्बधर्मसूत्रे जीवजगतोरैक्यविषये उक्तम्—

'आत्मन् पश्यन् सर्वभूतानि न मुह्येच्चिन्तयन् कविः ।
आत्मानं चैव सर्वत्र यः पश्येत् स वै ब्रह्मा नाकपृष्ठे विराजति ।'
( आप० ध० सू० १।८।१ पृ० ४० )

'स इन्द्रियैर्जगतोऽस्य ज्ञानादन्योऽन्यस्य ज्ञेयात् ।
( तत्रैव १।८।२ पृ० ४० )

'ओङ्कारः स्वर्गद्वारं तस्माद् ब्रह्माध्येष्यमाण एतदादि प्रतिपद्येत् ।'
( तत्रैव १।४।६ पृ० २४ )

'विकथां चान्यां कृत्वैवं लौकिकया वाचा विवर्तते ब्रह्म ।'

( तत्रैव १।४।७ पृ० २४ )

शङ्खलिखितधर्मसूत्रेऽपि उपनिषच्छब्देन वेदान्तदर्शनस्योल्लेखोऽस्ति :—

'साङ्ख्ययोगोपनिषद्धर्मशास्त्राध्यायी वेदपरः ।'

( श० लि० ध० सू० १६६ पृ० १३२ )

कौटल्येन ( ई० पू० ४ श० ) अर्थशास्त्रस्य विद्यासमुद्देशे आन्विक्षिकीविद्याया महत्ता वर्णिता—

'प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम् ।

आश्रयः सर्वधर्माणां शश्वदान्वीक्षिकी मता ।'

अत्राधुनिके आन्वीक्षिकीशब्दस्य कर्थस्तर्कशास्त्रम् अध्यात्मविद्या वेति विवादस्थलम् ।

कौटल्येन तु—

त्रयीविशेषे ह्यान्वीक्षिकी ।

( तत्रैव १–२ )

तथा—

सांख्यं योगो लोकायतं चेति आन्वीक्षिकी ।

इत्युक्तम् ।

( तत्रैव वि० स० )

पातञ्जलमहाभाष्ये ( ई० पू० २ श० ) वेदान्ताचार्यरूपेण काशकृत्स्नस्य स्थलत्रये नामोल्लिखितम् ।

'काशकृत्स्नमधीते काशकृत्स्ना ब्राह्मणी ।'

( पा० म० भा० ४।१।१४, कीलहन स० पृ० २०६ )

'काशकृत्स्नेन प्रोक्ता मीमांसा काशकृत्स्नी तामधीते काशकृत्स्ना ब्राह्मणी ।'

(तत्रैव ४।१।६३ पृ० २४६. पुनरपि तत्रैव ४।१।१५५ पृ० ३२५)

अश्वघोषो बौद्धमहायानसम्प्रदायस्य महान् प्रचारकोऽभूत्। अस्य कालः प्रथम ईशवीयोऽस्ति। महाराजकनिष्कायोजितायाः कश्मीरे चतुर्थबौद्धसंगत्या अयमध्यक्ष आसीत्। अस्य ग्रन्थेऽद्वैत-वेदान्तसिद्धान्तस्य परिचय उपलभ्यते। यथा बुद्धचरितनामके महाकाव्ये—

'अध्यात्मकुशलेष्वन्यो निश्चत्यात्मानमात्मना।
किञ्चिन्नास्तीति संपश्यन्न किञ्चन इति स्मृतिः॥'

(बु० च० १२ स० ६३)

'ततो मुञ्जादीषिकेव शकुनिः पञ्जरादिव।
क्षेत्रज्ञो निःसृतो देहान्मुक्त इत्यभिधीयते॥'

(बु० च० १२ स० ६४)

'एतत् परमं ब्रह्म निर्लिङ्गं ध्रुवमक्षरम्।
यन्मोक्ष इति तत्त्वज्ञाः कथयन्ति मनीषिणः॥'

(बु० च० स० १२–६५)

श्रीउमास्वाति[१]-(१ शताब्द्याम्) विरचिततत्त्वार्थसूत्रस्य पूज्य-पादाचार्यविरचितसर्वार्थसिद्धिभाष्ये उक्तम्—

'तत्त्वमेकत्वं वा सर्वैक्यग्रहणप्रसङ्गः। पुरुष एव इदं सर्वमित्यादि कैश्चित् कल्प्यते।

(तत्त्वार्थसूत्रसर्वार्थसिद्धौ प० १ सू० २ पृ० ३४)

'रूपादीनामेकं कारणममूर्तं नित्यमिति केचित् कल्पयन्ति।'

(त० सू० स० सि०, ११३२ पृ० ४६०)

लङ्कावतारसूत्रे (१ ई०) अनूदिते (४२० ई०)—

१—दिगम्बरजैनसम्प्रदायेऽयमाचार्य उमास्वातिनाम्ना तथा श्वेताम्बर-जैनसम्प्रदाये उमास्वामिनाम्ना प्रसिद्ध।

'तत्र विकारानित्यता नाम यदुत रूपस्यान्यथाभूतदर्शनं न भूताना सुवर्णसस्थानभूषणविकारदर्शनवत्।'

( ल० सू० अ० ३ पृ० २०८ )

निष्ठाभावः परं ब्रह्म एता मात्रां वदाम्यम्।

( तत्रैव अ० ३ श्लो० २६½ पृ० १५१ )

प्रज्ञप्तिसत्यतो ह्यात्मा द्रव्यसन्नहि विद्यते।

( तत्रैव २७½ )

अन्ये विकल्पस्याप्रवृत्त नित्यानित्यदर्शनान्मोक्ष कल्पयन्ति।

( तत्रैव पृ० १८३ )

आत्मनैरात्म्यसंमूढाद् घोपमाग्रावलम्बिनः।

अन्तद्वयनिमग्नास्ते नष्टा नाशेन्ति बालिशान्॥

( तत्रैव अ० ३ श्लो० ८४ पृ० १६० )

ललितविस्तरेऽपि—(१ ई०) —

नित्यमनित्यमिति चात्मनि संश्रयद्भिः,

मोक्षं च देशगमनस्थितमाश्रयद्भिः। १६८½

( ल० वि० अ० २१ पृ० २४५ )

ते तत्त्वतोऽर्थरहिताः पुरुषं वदन्ति,

व्यापि प्रदेशगतं शाश्वतमाहुरेके। १६९½

( तत्रैव )

स्मृतीनां काल आधुनिकदृष्ट्यापि कथमपि गुप्तकालात् (२०० ई०) परो न सिद्ध्यति।

मनुना तु आन्वीक्षिकी अध्यात्मविद्यातो भिन्नैवति प्रतिपादितम्—

आन्वीक्षिकी चात्मविद्याम्।

( मनुस्मृ० ७।४३ )

याज्ञवल्क्येन श्रीशङ्करसमर्थितो ब्रह्माद्वैतवाद उल्लिखित।

'आकाशमेकं हि यथा घटादिषु पृथग् भवेत् ।
तथात्मैको ह्यनेकश्च जलधारेष्विवांशुमान् ॥
( या० स्मृ० ३।१४४ )

शुक्रनीतौ च :—

आन्वीक्षिक्यां तर्कशास्त्रं वेदान्ताद्यं प्रतिष्ठितम् ।
( शुक्र० १।१५२ )

इत्युक्त्या आन्वीक्षिकीशब्दस्य उभावपि अर्थौ स्वीकृतौ ।

अपि च :—

ब्रह्मैवमद्वितीयं स्यान्नेह नानास्ति किंचन ।
मायिकं सर्वमज्ञानाद् भाति वेदान्तिनां मतम् ॥
( तत्रैव ४।२६० )

कामन्दकनीतिसारेऽपि आन्वीक्षिकीशब्देन अध्यात्मविद्या अभिप्रेता—

आन्वीक्ष्यात्मविज्ञानम् ।
( का० नी० सा० २-२ )

माध्यमिकसिद्धान्तस्य शून्यवादस्य प्रमुख आचार्यो नागार्जुनः, तस्य शिष्यः आर्यदेवः (२००-२२४ ई०) ब्रह्माद्वैतवादेन पूर्णपरिचित आसीत् । तेन चतुः शतके उक्तम्—

आत्मा यदि भवेन् मोक्षे ज्ञानबीजस्य संभवः ।
तदभावो यदि भवमाद्नापि न विद्यते ॥
( चतु० शिया० प्र० ६।२३ )

द्विविध ह्यात्मानं वर्णयन्ति तीर्थिका यदुतान्तरात्मानं बहिरात्मानं च ।
( तत्रैव आत्मप्र० १० आदौ )

आत्मा हि प्रतिशरीरे सर्वप्राणभृतामाकाशवद् विभुः ।

( तत्रैव भा० प्र० १०।१३ )

पूर्वापरावस्थयो निर्विशेषस्यात्मनः पूर्वावस्थावत् क्रियावत्त्वं नास्ति ।

(तत्रैव आत्मप्र० १०।१७)

साङ्ख्यकारिकाया माठरवृत्तौ व्यापकस्य ब्रह्मणो विषये इत्थमुक्तम्—

'इह केचिदाचार्या वेदवादिन इति मन्यन्ते । एकोऽयं पुरुषः सर्वशरीरेषूपलभ्यते मणिसूत्रवत् । इह रसनाया यावन्तो मणयस्तेषु सर्वेषु एकमेव सूत्रं प्रवर्तते । एवं मणिभूतेषु शरीरेषु किमेकः सूत्रभूतः परमात्मा आहोस्वित् जलचन्द्रवत् । पुरुष इति एक एव बहुषु नदीकूपतडागादिष्विवालम्बते इति ।

(सा० का० १७ तथा ६१)

वात्स्यायन (४०० ई०) स्वीये न्यायसूत्र भाष्ये—

मन्त्रैकं मद्विशेषात् इति ब्रवीति । (न्या० सू० २।४।४० भा०)

वाचस्पतिमिश्रश्चैतद् व्याचष्टे—

तत्र प्रथमं ब्रह्माद्वैतमुपस्थापयति ।

स्कन्दस्वामिमहेश्वरेण ( ६००–६५० ई० ) निरुक्तभाष्यटीका[2]-यामुक्तम्

'सा च सत्ता कैश्चित् परमात्मत्वेनाध्यवसिता । स एष महानात्मा सत्तालक्षणः तत्परं ब्रह्म इति ···ब्रह्मवादिभिः ।··· भेदाभेदाभ्यामनिर्वचनीयः ।'

( पृ० २७ )

---

२—म० श्रीलक्ष्मणस्वरूप, पञ्जनदीयविश्वविद्यालयप्रकाशनम् ।

तथा—

'ब्रह्म ह्येव ऋग्यजुःसामलक्षणमपरं जगतः कारणम् ।'

(पृ० ७३)

बाणभट्टस्य ( ६५० ई० ) हर्षचरिते तस्मिन् समये प्रचलितानां धर्मदर्शनसम्प्रदायानामुल्लेखोऽस्ति ।

तत्र वेदान्तस्यौपनिषदशब्देन निर्देशः । यथा—

भागवतम्, कापिलम्, जैनम्, लौकायतिकम्, काणादम्, पौराणिकम्, ऐश्वरकारणिकम्, कारन्धमिन्, (धातुवादि) साप्ततान्तवम्, (मीमांसकम्) शाब्दिकम्, बौद्धम्, पाञ्चरात्रिकम्, औपनिषदं च ।

(हर्षचरिते[3] पृ० ६३२)

अस्मिन्नेव च ग्रन्थे पृ० ३९८ ससारासारत्वकथनकुशला ब्रह्मवादिन इति लिखितम् । अनेन ब्रह्माद्वैतस्य प्रतिष्ठापक आचार्यशङ्करो न अपि तु ततोऽपि पूर्वमयं वाद आसीत् ।

भर्तृहरिः (६५० ई०) वेदान्तमतस्येत्थं परिचयं दत्तवान् —

यत्र द्रष्टा च दृश्यं च दर्शनं वा विकल्पितम् ।
तस्यैवार्थस्य सत्यत्वं श्रितास्त्रय्यन्तवादिनः ॥

अत्र त्रय्यन्तवादिनः=ब्रह्मवादिन इति ।

(वा० प० ३ का० स० स० ७२)

जैनसम्प्रदायस्य महाविद्वान् दिगम्बराचार्यः श्रीसमन्तभद्रः[4] ( ७०० ई० ) शङ्करात्पूर्वमद्वैतवादेन परिचित आसीत् । स कथयति :—

३—सं० श्रीजीवानन्द, कलकत्ताप्रकाशनम् ।

४—पूज्यपादेन जैनेन्द्रव्याकरणे श्रीदत्तयशोधराभूतिबलीप्रभाचन्द्रसिद्धसेनसमन्तभद्राणां नाम्न उल्लेखः कृतोऽस्ति । एस० सी० विद्याभूषणेन स्वीये इण्डियनलाजिकग्रन्थे समन्तभद्रस्य समयः ६०० ई० निश्चितः ।

अद्वैतैकान्तपक्षेऽपि दृष्टो भेदो विरुद्ध्यते ।
कारकाणां क्रियायाश्च नैकं स्वस्मात्प्रजायते ॥
(आप्तमीमांसायाम २४२ श्लोकः)

अत्र श्रीमदकलङ्कदेव स्वभाष्ये (तत्त्वराजवार्तिके) लिखति—
ज्ञानादेव मोक्ष इति चेदनवस्थानादुपदेशाभाव ।
(त० रा० वा० १।२।११)

अपरष्टीकाकार श्रीविद्यानन्दोऽप्यत्र टीकायाम् -अद्वैतवाद-दृष्टिमेव स्वीकृतवान् ।

हरिभद्रसूरिरपि (७ शताब्द्याम ) निर्विशेषाद्वैतवादमित्यमाह—

यथा विशुद्धमाकाशं तिमिरोपप्लुतो जनः ।
सङ्कुलमिवमिनापन्नं भेदरूपं प्रकाशते ॥
तथेदममलं ब्रह्म निर्विकारमविद्यया ।
कलुषत्वमिवापन्नं भेदरूपं प्रकाशते ॥

अत्र टीकायाम—वेदान्तिकप्रतिपन्ने बद्धमुक्तयोरविशेषादानात्-त्वाद वा ध्येयभेदोपवर्णनमफलम इत्यनुवर्तते ।

बौद्धभिक्षु शान्तरक्षितस्य समये ( ८०० ई० ) वेदान्तवादो ब्रह्माद्वैतवादो वा औपनिषदवादरूपेण प्रचलित आसीत् । तस्य तत्त्वसङ्ग्रहग्रन्थेऽद्वैतवादसिद्धान्तस्य परिचय इत्यमस्ति ।

नित्यज्ञानविवर्तोऽयं क्षितितेजोजलादिकः ।
आत्मा तदात्मकश्चेति संगिरन्तेऽपरे पुनः ॥
( ३२८ श्लो० )

अत्र पञ्जिकाटीकाकार श्रीकमलशील — अपरे' इति पदस्य व्याख्याम औपनिषदिका इति करोति ।

न्यायमञ्जरीग्रन्थे श्रीजयन्तेन (९०० ई०) पुष्पदन्तस्याय श्लोक उद्धृत —

त्रयी सांख्यं योगः पशुपतिमतं वैष्णवमिति ।

अत्र त्रयीशब्देन वेदान्तदर्शनमेवाभिप्रेतं भवेत् ।

एवमुपनिषत्कालाद् आरभ्य नवमेशवीयपर्यन्तमुपनिषद्दर्शन- धर्मशास्त्रस्मृतिनीतिव्याकरणकाव्यादिग्रन्थेषु वेदान्तविषयक सिद्धान्त उपस्थापित.। अनेन स्पष्टमिद यद् भगवत्पादश्रीशङ्करात् पूर्वम्— निर्विशेषब्रह्माद्वैतवाद सुप्रतिष्ठामित आसीत्। मध्ये बौद्धदर्शनोदय काले सुप्रथितोऽय ब्रह्माद्वैतवाद. स्वरूपविकृतिं प्राप्नोत्। विशेषत. विज्ञानवादेन, शून्यवादेन च विदुषां विस्मृतिपथम गात्।

अतो भगवाञ्छङ्कर स्वपरमगुरुश्रीगौडपादाचार्यचरणचिन्हमनु सरन निर्विशेषब्रह्माद्वैतवादस्य नैज रूप प्रदर्शयितु प्रायतत। एतेन श्रीशङ्कर केवल निर्विशेषब्रह्माद्वैतवाद समर्थित प्रचारितश्चैव नोद्भावितस्तथा वेदान्तदर्शनस्य निर्विशेषाद्वैतवादस्य चातीव प्राचीनता प्रतीतिपथ समायाति।



# तृतीयोऽध्यायः

## आर्षवेदान्तः

पूर्वाध्याये भगवत्पादश्रीशङ्कराचार्यात्पूर्वतनेषूपनिषन्महाभारतपाणिनीयजैनदर्शनबौद्धदर्शनस्मृतिकाव्यादिग्रन्थेषु यत्र तत्र विभिन्नसन्दर्भान्तरेषूपलभ्यमाना अद्वैतसिद्धान्ताः प्रदर्शिताः। अधुनात्र वेदाश्च परमप्राचीनानां वेदान्ताचार्याणां मतान्युद्दिश्यन्ते, येषां नामानि ब्रह्मसूत्रे समायातानि। यद्यप्युपनिषत्स्वनेके प्रसिद्धा वेदान्ताचार्याः[1] प्राप्यन्ते। किन्तु तेषां मतान्यत्र नोद्दिश्यन्ते। यतो हि तत्र तत्रोपनिषत्सु वैशद्येन तेषां ब्रह्मादिविषयकाः सिद्धान्ताः प्रतिपादिताः, ततोऽधिकतरं स्पष्टीकरणं नापेक्षितम्। अतो ब्रह्मसूत्रे येषामाचार्याणां नामग्राहं वेदान्तसिद्धान्तलवः सूचितप्रायस्तेषामेव

---

१—उपनिषदां प्रमुखदार्शनिकाः—छान्दोग्योपनिषद्—रैक्को जानश्रुतिश्च, सत्यकामो जाबालस्तथोपकोसल., प्रवाहण उद्दालक आरुणिः श्वेतकेतुश्च, सनत्कुमारो नारदश्च, प्रजापतिरिन्द्रश्च। बृहदारण्यकोपनिषद्—दध्यङाथर्वणोऽश्विनीकुमारौ च, गार्गी, मैत्रेयी, याज्ञवल्क्यस्तथा जनक.। कठोपनिषदः—आङ्गिरसः, शौनकश्च। प्रश्नोपनिषद.—पिप्पलादः, एतासूपनिषत्सु वेदान्तस्य खण्डनात्मिकाया मण्डनात्मिकायाश्चोभयविधाया शाखाया वर्णनमुपलभ्यते। अनयो द्वयो. शाखयो. सूत्र ऋग्वेदेऽप्युपलभ्यते। ऋग्वेदस्य नासदीय सूक्त खण्डनात्मिकाया शाखायाः सूत्रम्, पुरुषसूक्तञ्च मण्डनात्मिकाया शाखाया· सूत्रम्. एवमेव 'नेति नेति' इति प्रथमविधाया महावाक्यम्, 'तत्त्वमसि' इति द्वितीयविधाया महावाक्यम्।

सिद्धान्ता अत्रोपस्थाप्यन्ते । एतेषां सिद्धान्तं आर्षवेदान्त इति नाम्ना विद्वांस उपवर्णयन्ति ।

बादरायणस्य ब्रह्मसूत्रे एतेषां वेदान्ताचार्याणां नामानि सिद्धान्तांशाश्चोल्लिखिताः—

(१) आत्रेयः[२] (२) आश्मरथ्यः[३] (३) औडुलोमिः[४], (४) काष्र्णाजिनिः[५], (५) काशकृत्स्नः[६], (६) जैमिनिः[७], (७) बादरिः।[८]

२—स्वामिनः फलश्रुतेरित्यात्रेयः । ( ब्र० सू० ३।४।४४ )
३—( क ) अभिव्यक्तेरित्याश्मरथ्य । ( ब्र० सू० १।२।२९ )
( ख ) प्रतिज्ञासिद्धे लिङ्गमाश्मरथ्य. ( ब्र० सू० १।४।२० )
४—( क ) उत्क्रमिष्यत एवंभावादित्यौडुलोमिः । (ब्र० सू० १।४।२१)
( ख ) आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रियते । ( ब्र० सू० ३।४।४५ )
( ग ) चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः (ब्र०सू०४।४।६)
५—चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनि. । (ब्र० सू० ३।१।९)
६—अवस्थितेरिति काशकृत्स्नः । ( ब्र० सू० १।४।२२ )
७—( क ) साक्षादप्यविरोधं जैमिनिः । (ब्र० सू० १।२।२८)
( ख ) सम्पतेरिति जैमिनिस्तथा हि दर्शयति । (ब्र०सू० १।२।३१)
( ग ) मध्वादिष्वसम्भवादनधिकार जैमिनि. । (ब्र०सू० १।३।३१)
( घ ) अन्यार्थं हि जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके । ( ब्र० सू० १।४।१८ )
( ङ ) धर्मं जैमिनिरत एव । ( ब्र० सू० ३।२।४० )
( च ) शेषत्वात्पुरुषार्थवादो यथान्येष्विति जैमिनि । ( ब्र० सू० ३।४।२ )
( छ ) परामर्शं जैमिनिरचोदना चापवदति हि ।(ब्र०सू० ३।४।१८)
( ज ) तद्भूतस्य नातद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्यः । ( ब्र० सू० ३।४।४० )
( झ ) परं जैमिनिर्मुख्यत्वात् । ( ब्र० सू० ४।३।१२ )
( ञ ) ब्राह्मेण जैमिनिरुपन्यासादिभ्य. । (ब्र० सू० ४।४।५)
( ट ) भावं जैमिनि र्विकल्पामननात् ( ब्र० सू० ४।४।११ )
८—( क ) अनुस्मृतेर्बा .रि । ( ब्र० सू० १।२।३० )
( ख ) सुकृतदुष्कृते एवेति तु बादरि । ( ब्र० सू० ३।१।११ )
( ग ) कार्यं बादरिरस्य गत्युपपत्तेः । ( ब्र० सू० ४।३।७ )
( घ ) अभावं बादरिराह ह्येवम् । ( ब्र० सू० ४।४।१० )

एषु वतिपयानामाचार्याणा नामानि पूर्वमीमांसायां जैमिनि-सूत्रेऽपि समायान्ति—

(१) आत्रेयः[९], (२) आश्मरथ्यः[१०], (३) कार्ष्णाजिनिः[११], (४) बादरिः।[१२]

### १—आत्रेयः

आत्रेयस्य नाम उपासनायाः फलप्राप्तिविषये उल्लिखितं वर्तते। ऋत्विग्यजमानयोर्मध्ये यजमान एवोपासनायाः फलभाग् भवतीति आत्रेयमतम्। स्वामिनः फलश्रुतेरित्यात्रेयः (ब्र० सू० ३।४।४४) अस्य मतस्य खण्डनं भगवता व्यासेन औडुलोमिमतं पुरस्कृत्य कृतम्। अन्यत्र च कार्ष्णाजिने मतस्य खण्डनाय तथा वैदिककर्मणि सर्वेषामधिकार इति बादरिमतस्य[१३] खण्डने आत्रेयमतं प्रमाणत्वेनादृतम्। महाभारते (१३।१३७।३) निर्गुणब्रह्मविद्याया उपदेष्टृरूपेण महर्ष्यात्रियस्य नामायातम्। संक्षेपशारीरके ३।२१७ तथा ३।२१८ श्लोकयोरपि महर्ष्यात्रियस्य नाम सिद्धान्तत्वोल्लिखिते।

९—(क) फलमात्रेयो निर्देशादश्रुतौ ह्यनुमानं स्यात्।
(जै० सू० ४।३।१८)
(ख) निर्देशाद्वा त्रयाणां स्यादग्न्याधेये सम्बन्धः क्रतुषु ब्राह्मश्रुतेरित्यात्रेयः। (जै० सू० ६।१।२६)

१०—प्रानरक्तेऽपूर्वत्वे प्राकृतीभ्यो निर्वपदित्याश्मरथ्यः तण्डुलभूतेष्वपनयात्। (जै० सू० ६।५।१६)

११—(क) अतो फलार्थवादमङ्गवत् कार्ष्णाजिनिः। (जै०सू० ४।३।१५)
(ख) सकुल्यं स्यादिति कार्ष्णाजिनिरेकस्मिन्नसम्भवात्।
(जै० सू० ६।७।३६)

१२—(क) द्रव्यगुणसंस्कारेषु बादरिः। (जै० सू० ३।१।३)
(ख) निमित्तार्थे च बादरिः तस्मात्सर्वाधिकारं स्यात्।
(जै० सू० ६।१।२७)
(ग) कालाभ्यासे च बादरिः कर्मभेदात्। (जै० सू० ८।३।६)
(घ) वर्ण तु बादरिः यथा द्रव्यं द्रव्यव्यतिरेकात् (जै०सू० ९।२।३३)

इमे त्रयोऽप्येक एव मिथ्या चेति अनिर्णीतप्रायम्। आत्रेयसिद्धान्तो ब्रह्मानन्दिनामकेऽध्याये विशद निरूपयिष्यते। विशेषज्ञानार्थं तत्रैव द्रष्टव्यः।

२—आश्मरथ्यः

(परमेश्वरस्य प्रादेशमात्रत्वम् इत्यस्यार्थनिर्णये आचार्याश्मरथ्यस्याय निर्णयो यत् परमेश्वरो वस्तुतोऽनन्तस्तथापि भक्तान् अनुग्रहीतुं प्रादेशमात्रमात्मानमभिव्यनक्ति अथवा स परमात्मा स्थानविशेषेऽभिव्यज्यते। तस्याभिव्यक्तिस्थानं हृदयमस्ति। अतः स प्रादेशमात्रमुच्यते—

'अभिव्यक्तेरित्याश्मरथ्यः' ( ब्र० सू० १।२।२९ ) अत्राह भगवाञ्छङ्करः —

अतिमात्रस्यापि परमेश्वरस्य प्रादेशमात्रत्वम् अभिव्यक्तिनिमित्त स्यात्। अभिव्यज्यते किल प्रादेशमात्रपरिमाणः परमेश्वर उपासकानां कृते। प्रादेशेषु वा हृदयादिषूपलब्धिस्थानेषु विशेषेणाभिव्यज्यते। अतः परमेश्वरेऽपि प्रादेशमात्रश्रुतिरभिव्यक्तेरुपपद्यत इत्याश्मरथ्य आचार्यो मन्यते।

( शा० भा० )

अथ भेदाभेदवादी अथवा द्वैताद्वैतवाद्यासीत्। अथ कथयति यत् मुक्तेः पूर्वं ब्रह्मजीवयो भेदो भवति। मुक्तेरनन्तरमुभयोरभेदो भवति। 'आत्मनि विज्ञाते सर्वमिदं विज्ञातं भवति।' इति श्रुतिरपि उक्तार्थं एव तात्पर्यं बोधयति। यथा च सूत्रम् प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः।

( ब्र० सू० १।४।२० )

१३—द्र० जैमिनीयसूत्रम्—६।१।२७।

अत्र भगवाञ्छङ्करः —

'अस्त्यत्र प्रतिज्ञा आत्मनि विज्ञाते सर्वमिदं विज्ञातं भवतीद सर्वं यदयमात्मा इति च । तस्याः प्रतिज्ञायाः सिद्धिं सूचयत्येतल्लिङ्गं यत्—प्रियसंसूचितस्यात्मनो द्रष्टव्यत्वादिसंकीर्तनम् । यदि हि विज्ञानमात्मा परमात्मनोऽन्यः स्यात्ततः परमात्मविज्ञानेऽपि विज्ञानात्मा न विज्ञात इत्येकविज्ञानेन सर्वविज्ञानं यत्प्रतिज्ञातं तद्धीयेत । तस्मात् प्रतिज्ञासिद्ध्यर्थं विज्ञानात्मपरमात्मनोरभेदांशेनोपक्रमणमित्याश्मरथ्य आचार्यो मन्यते ।

( ब्र० सू० १।४।२० शा० भा० )

अत्र भामतीकार एवमाह—

'यथा हि वन्हेर्विकारा व्युच्चरन्तो विस्फुलिङ्गा न वन्हेरत्यन्त भिद्यन्ते, तद्रूपनिरूपणत्वात्, नापि ततोऽत्यन्तमभिन्नाः वह्नेरिव परस्परव्यावृत्त्यभावप्रसङ्गात् । तथा जीवात्मानोऽपि ब्रह्मविकारा न ब्रह्मणोऽत्यन्त भिद्यन्ते, चिद्रूपत्वाभावप्रसङ्गात् । नात्यन्तं न भिद्यन्ते परस्पर व्यावृत्त्यभावप्रसङ्गात् सर्वज्ञं प्रत्युपदेशवैयर्थ्याच्च । तस्मात् कथंचिद् भेदो जीवात्मनामभेदश्च । तत्र तद्विज्ञानेन सर्वविज्ञानप्रतिज्ञासिद्ध्यै विज्ञानात्मपरमात्मनोरभेदमुपादाय परमात्मनि दर्शयितव्ये विज्ञानात्मोपक्रम इत्याश्मरथ्य आचार्यो मेने ।

( ब्र० सू० १।४।२० शा० भा० भामती )

अत्र रत्नप्रभायां स्पष्टमेवास्य भेदाभेदवादित्वमुल्लिखितम्—

जीवब्रह्मणो र्भेदाभेदसत्त्वादभेदांशेनेद जीवोपक्रमण प्रतिज्ञासामर्थ्यमित्याश्मरथ्यमतम् ।'

आश्मरथ्यसिद्धान्तविषये भगवता शङ्करेणास्था प्रकटिता—

'आश्मरथ्यस्य तु यद्यपि जीवस्य परस्मादनन्यत्वमभिप्रेत तथापि प्रतिज्ञासिद्धेरिति सापेक्षत्वाभिधानात् कार्यकारणभावः कियानभिप्रेत इति गम्यते ।'

(ब्र० सू० १।४।२२ शा० भा०)

अत्र कियान् इत्यस्यार्थः—'अभेदवद्भेदोऽपीत्यर्थः' रत्नप्रभाया लिखितः। पुनश्चाग्रेऽनास्था प्रकटिता—

'ये तु निर्बन्धं कुर्वन्ति। ते वेदान्तार्थं बाधमाना श्रेयोद्वार सम्यग्दर्शनमेव बाधन्ते कृतकमनित्यं च मोक्षं कल्पयन्ति न्यायेन च न सङ्गच्छन्ते।'

( ब्र० सू० १।४।२२ शा० भा० )

अत्र भामतीकारः 'ये' इत्यस्य व्याख्याम् आश्मरथ्यप्रभृतय इति करोति। न्यायनिर्णयटीकायाम्—भेदाभेदवादद्योतनायाभेदांशेनेत्युक्तम्।

( ब्र० सू० १।४।२० न्या० नि० )

एवं शाङ्करभाष्यभामतीरत्नप्रभान्यायनिर्णयानुसारमाश्मरथ्यस्य भेदाभेदवादः प्रसिद्धः।

श्रीरामानुजकृतब्रह्मसूत्रश्रीभाष्यस्य टीकाकारः श्रीसुदर्शनाचार्यो लिखति यदरथैवाश्मरथ्यस्य भेदाभेदवाद श्रीयादवप्रकाशोऽङ्गीकृतवान्। यथाहि—

"अस्मिन् सूत्रे यादवप्रकाशसम्मतभेदाभेदवाद उल्लिखितः। कारणात्मनाऽभेदः, कार्यात्मना भेदः, इति तयोः स्वाभाविकत्वस्वीकारात्।"

( ब्र० सू० १।४।२० श्री० श्रु० प्र० )

अनयोक्त्या भेदाभेदवादस्यायमेव परमप्राचीन आचार्य इति प्रतीयते।

ब्रह्मसूत्रस्य १।४।२२ शाङ्करभाष्योक्तेनाश्मरथ्यसम्मतेन ब्रह्मणः कार्यकारणभावेनास्य श्रीभाष्यश्रुतप्रकाशिकोक्तस्य समता विमृश्या।

## ३—औडुलोमिः

आश्मरथ्यवदयमपि द्वैताद्वैतवादी अथवा भेदाभेदवाद्यासीत्। संसारदशायां जीवो ब्रह्मणः सर्वथा भिन्नः। देहेन्द्रियादिसम्पर्कात्-

ज्जीवः कालुष्यं प्राप्नोति ज्ञानादिसाधनैर्मलमपनीयते ब्रह्मणा सह जीवस्यैक्यं भवति। अन्या मुक्तदशाया ब्रह्मजीवयोरभेदः।

मुक्तस्य चात्मनश्चैतन्यरूपेणैवाभिव्यक्तिर्भवति सर्वज्ञत्वरूपेणा-थवा सर्वेश्वरत्वरूपेण न भवति। अतस्मा 'अपहतपाप्मा' इति कथन तु पापापनोदन एव तात्पर्यमवधारयति।

यथाह भगवाञ्छङ्कर —

'विज्ञानात्मन एव देहेन्द्रियमनोबुद्धिसङ्घातोपाधिसम्पर्कात् कलुषीभूतस्य ज्ञानध्यानादिसाधनानुष्ठानात् सम्प्रसन्नस्य देहादि-सङ्घातादुत्तिष्ठासतः परमात्मैक्योपपत्तेरिदमभेदेनोपक्रमणमित्यौडुलो-मिराचार्यो मन्यते।'

(ब्र० सू० १।४।२१ शा० भा०)

अग्रे पुन. श्रीमता शङ्कराचार्येण छान्दोग्यश्रुत्या मुण्डकश्रुत्या च नदीदृष्टान्तेन मुक्तौ जीवब्रह्मणोरैक्यमस्मिन् मते साधितम्। यथा नद्यो नामरूपे विहाय समुद्रमुपयन्ति तथैव जीवोऽपि नामरूपे विहाय परमपुरुषमुपैति। यथा—

'श्रुतिदर्शैव भवति-एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते। (छा० उ० ८।१२।३) इति। क्वचिच्च जीवाश्रयमपि नामरूपं नदीनिदर्शनेन ज्ञापयति— यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय। तथा विद्वान्नामरूपाद् विमुक्तः परात्परं पुरुषमुपैति दिव्यम्। (मुण्डकोप० ३।२।८) इति। यथा लोके नद्यः स्वाश्रयमेव नामरूपं विहाय समुद्रमुपयन्त्येव जीवोऽपि स्वाश्रयमेव नामरूपं विहाय परं पुरुष-मुपैतीति हि तत्रार्थः प्रतीयते दृष्टान्तदार्ष्टान्तिकयोस्तुल्यताय।'

(ब्र० सू० १।४।२१ शा० भा०)

अत्रत्यभामत्यामौडुलोमिमतमतीव स्फुटमलिख्यत—

'जीवो हि परमात्मनोऽत्यन्तं भिन्न एव सन् देहेन्द्रियमनोबुद्ध्यु-पाधानसम्पर्कात्सर्वदा कलुषः, तस्य च ज्ञानध्यानादिसाधनानुष्ठात्-

सम्प्रसन्नस्य देहेन्द्रियादिसंघादुत्क्रमिष्यतः परमात्मनैक्योपपत्तेरिदम-भेदेनोपक्रमणम् । एतदुक्तं भवति–भविष्यन्तमभेदमुपादाय भेदकालेऽप्यभेद उक्तः । यथाहु पाञ्चरात्रिकाः —

आमुक्ते र्भेद एव स्याज्जीवस्य च परस्य च ।
मुक्तस्य तु न भेदोऽस्ति भेदहेतोरभावतः ॥

( ब्र० सू० १।४।२१ शा० भा० भामत्याम् )

अत्र रत्नप्रभायाम्—

'सत्यसंसारदशाया भेद एव मुक्तावेवाभेद इत्यौडुलोमिमतम् ।'

( ब्र० सू० १।४।२१ र० प्र० )

अथैव न्यायनिर्णयेऽप्यसावेवार्थः पुष्यते—

'मुक्तावेवाभेदः संसारे भेद एव ।'

( ब्र० सू० १।४।२१ न्या० नि० )

अवस्थितेरिति काशकृत्स्नः ।

( ब्र० सू० १।४।२२ )

इत्यत्रापि भगवता शङ्करेण औडुलोमे र्भेदवाद उक्त. —

'औडुलोमिपक्षे पुनः स्पष्टमेवावस्थान्तरापेक्षौ भेदाभेदौ गम्येते ।'

एतन्मते मुक्तौ जीवात्मा स्वरूपेण चैतन्यमात्रेणाभिनिष्पद्यत इति–

चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ।

ब्र० सू० ४।४।६ इतिसूत्रभाष्ये उक्तम् ।

यथा भगवाञ्छङ्कर आह—

'यद्यप्यपहतपाप्मत्वादयो भेदेनैव धर्मा निर्दिश्यन्ते तथापि शब्दविकल्पजा एवैते । पाप्मत्वादिनिवृत्तिमात्रं हि तत्र गम्यते । चैतन्यमेव त्वस्यात्मन स्वरूपमिति तन्मात्रेण स्वरूपेणाभिनिष्पत्ति-र्युक्ता । तथा श्रुति —'एवं वा अरेऽयमात्मानन्तरोऽबाह्य कृत्स्न. प्रज्ञानघन एव ( बृ० आ० उ० ४।५।१३ ) इत्येवंजातीयकानुगृहीता भविष्यति । सत्यकामत्वादयस्तु यद्यपि वस्तुस्वरूपेणैव धर्मा उच्यन्ते

सत्याः कामा अस्येति। तथाप्युपाधिसम्बन्धाधीनत्वात्तेषां न चैतन्यवत्स्वरूपत्वसंभवः अनेकाकारत्वप्रतिषेधात्। प्रतिषिद्ध हि ब्रह्मणोऽनेकाकारत्वम् 'न स्थानतोऽपि परस्योभयलिङ्गम्' (ब्र० सू० ३।२।११) इत्यत्र। अत एव च जक्षणादिसंकीर्तनमपि दुःखाभावमात्राभिप्रायं स्तुत्यर्थमात्मरतिरित्यादिवत्। न हि मुख्यान्येव रतिक्रीडामिथुनान्यात्मनि शक्यन्ते वर्णयितुं द्वितीयविषयत्वात्तेषाम्। तस्मान्निरस्ताशेषप्रपञ्चेन प्रसन्नेनाव्यपदेश्येन बोधात्मनाऽभिनिष्पद्यत इत्यौडुलोमिराचार्यो मन्यते।

अत्र भामत्याम्—

'अनेकाकारतैकस्य नैकत्वान्नैकता भवेत्।
परस्परविरोधेन न भेदाभेदसम्भवः॥

·········तस्मान्निरस्ताशेषप्रपञ्चेनाव्यपदेश्येन चैतन्यमात्रात्मनाभिनिष्पद्यमानस्य मुक्तात्मनोऽर्थशून्यैरेवापहतपाप्मसत्यकामादिशब्दैर्व्यपदेश इत्यौडुलोमि र्मेने। एवं च संसारिदशाया जीवब्रह्मणोर्भेदेन मुक्तिदशायामभेदेनास्य सिद्धान्तो भेदाभेदवाद इति सिद्ध्यति।'

## ४—कार्ष्णाजिनिः

अस्य मतम् अद्वैतवादो द्वैतवादो वेति स्पष्टं न प्रतीयते। केवलमात्मनः पुनर्जन्मविषयेऽस्य मतमुपलभ्यते। पुनर्जन्मनः कारणविषयेऽयं कथयति यद् 'अनुशय' एव पुनर्जन्मकारणं न तु शीलमाचारो वा। अनुशयो नाम अभुक्तं कर्म।

चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः।

(ब्र० सू० ३।१।९)

इतिसूत्रे भगवता श्रीशङ्करेणास्य मतमित्थमुल्लिखितम्—

अथापि स्यात्। या श्रुतिरनुशयसद्भावप्रतिपादनायोदाहृता—'तद् य इह रमणीयचरणाः (छा० उ० ५।१०।७)' सा खलु चरणाद् योन्यापत्तिं दर्शयति नानुशयात्। अन्यच्चरणमन्योऽनुशयः। चरण

चारित्रमाचार शीलमित्यनया नरम्। अनुशयस्तु भुक्तफलात्कर्मणो ऽतिरिक्त कर्माभिप्रेतम। श्रुतिश्च कर्मचरण भेदेन व्यपदिशति–यथाकारी यथाचारो तथा भवति।' (बृ० आ० उ० ४।४।५) इति यान्यनवद्यानि कर्माणि तानि सेवितव्यानि नो इतराणि या यस्माक सुचरितानि तानि त्वयोपास्यानि ( त० उ० १।११।२ ) इति च। तस्माच्चरणाद् योन्यापत्तिश्रुते र्नानुशयसिद्धिरिति चेत्। नष दोष। यतोऽनुनयोपलक्षणार्थैवषा चरणश्रुतिरिति कार्ष्णाजिनिराचार्यो मन्यते।'

पुनश्च—

आनर्थक्यमिति चेन्न तदपेक्षत्वात्।

( ब्र० सू० ३।१।१० )

इति सूत्र भगवत्पादश्रीशङ्करेणोक्तम्—

'तस्मात्कर्मैव शीलोपलक्षितमनुशयभूत योन्यापत्तौ कारणमिति कार्ष्णाजिनेर्मतम। न हि सम्भवति शीलाद् योन्यापत्तिर्युक्ता। न हि पद्भ्या पलायितु पारयमाणो जानुभ्या रहितुमर्हतीति।

अत्र भामत्याम्—

यद्यपि—

अक्रोध सर्वभूतेषु कर्मणा मनसा सह।

अनुग्रहश्च ज्ञान च शीलमेतद् विदु र्बुधाः॥

इतिस्मृते शीलमाचारोऽनुशयाद्भिन्नस्तथाप्यस्यानुशयाङ्ग तयाऽनुशयोपलक्षणत्व कार्ष्णाजिनिराचार्यो मेने। तथा च रमणीय चरणा कपूयचरणा इत्यनेनानुशयोपलक्षणात् सिद्ध सानुशयानामवरोहणम।

( ब्र० सू० ३।१।९ भामत्याम् )

पुनश्च—तदेव चरणशब्देनाचारवाचिना सर्वोऽनुशयो लक्षित इत्युक्तम।

( ब्र० सू० ३।१।१० भामत्याम् )

इदमेवात्र रत्नप्रभायां न्यायनिर्णये चोक्तम्—

धर्मेण एवोत्तरावस्था धर्माधर्माख्यापूर्वमिति धर्मलक्षण्यैव तदभिन्नापूर्वाख्यानुदयसिद्धिरिति कार्ष्णाजिनिमतम् ।

( ब्र० सू० ३।१।९ र० प्र० )

भगवता बादरायणेन स्वमतस्य पोषणे तथा जैमिनिमतस्य खण्डनेऽस्य मतस्योपयोगः कृतः । अयं बादरिमतस्यैव समर्थक इति प्रतीयते ।

५—काशकृत्स्नः

अयं निर्विशेषब्रह्माद्वैतवाद्यासीत् ।

अस्येदं मतं यद् ब्रह्मणैव जीवात्मरूपेण जीवलोकेऽवस्थीयते । यथा पृथिव्यादीनां सृष्टिं ब्रह्मणः श्रूयते तथा जीवोत्पत्तिर्न श्रूयते । अतो जीवो ब्रह्मणो न विकारः किन्तु अविकृतं ब्रह्मैव ।

अवस्थितेरिति काशकृत्स्नः ।

( ब्र० सू० १।४।२२ )

इति सूत्रे भगवता शङ्करेणेत्थं निरूपितम्—

'अस्यैव परमात्मनोऽनेनापि विज्ञानात्मभावेनावस्थानादुपपन्नमिदमभेदेनोपक्रमणमिति काशकृत्स्न आचार्यो मन्यते । तथा च ब्राह्मणम्—'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि (छा० उ० ६।३।२ ) इत्येव जातीयकं परस्यैवात्मनो जीवभावेनावस्थानं दर्शयति । मन्त्रवर्णश्च सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाभिवदन् यदास्ते (तै० आ० ३।१२।७) इत्येव जातीयकः । न च तेजःप्रभृतीनां सृष्टौ जीवस्य पृथक्सृष्टिः श्रुता, येन परस्मादात्मनोऽन्यस्तद्विकारो जीव स्यात् काशकृत्स्नस्याचार्यस्याविकृतः परमेश्वरो नान्य इति मतम् । आश्मरथ्यस्य तु यद्यपि जीवस्य परस्मादनन्यत्वमभिप्रेतं तथापि प्रतिज्ञासिद्धेरिति सापेक्षत्वाभिधाना-

रकार्यकारणभाव क्रियानव्यभिप्रेत इति गम्यते। औडुलोमिपक्षे पुनः स्पष्टमेवावस्थान्तरापेक्षो भेदाभेदो गम्येते। तत्र काशकृत्स्नीयं मतं श्रुत्यनुसारीति गम्यते प्रतिपिपादयिषितार्थानुसारात् 'तत्त्वमसि' इत्यादि श्रुतिभ्य.।'

अग्रे पुनरस्मिन्नेव सूत्रभाष्ये—

'अस्यैव परमात्मनोऽनेनापि विज्ञानात्मभावेनावस्थानादुपपन्नमिदमभेदाभिधानमिति काशकृत्स्न आचार्यो मन्यते।'

पुनरग्रेऽस्मिन्नेव सूत्रभाष्ये—

'दर्शित तु पुरस्तात् काशकृत्स्नीयस्य पक्षस्य श्रुतिमत्त्वम्।'

अनेन प्रकारेण भगवत्पादशङ्करेण काशकृत्स्नाचार्यमतस्य श्रुत्यनुरोधित्वप्रतिपादनद्वारेतत्सिद्धान्तस्य कृते महानादर. प्रकटितः स्वसिद्धान्तानुकूल्य च निरुपितम्।

अत्र भामतीकारोऽपि काशकृत्स्नाचार्यसिद्धान्तस्य प्रामाण्य व्यनक्ति—

इति मतत्रयमुक्त्वा काशकृत्स्नीयमत साधुत्वेन निर्धारयति।' ...... "कस्मात्पुनः काशकृत्स्नस्य मतमास्थीयते नेतरेषामाचार्याणामित्यत आह-दर्शित तु पुरस्तादिति। काशकृत्स्नीयस्य मतस्य श्रुतिप्रबन्धोपन्यासेन पुनः श्रुतिमत्त्व स्मृतिमत्त्व चोपसहारोपक्रममाह-अतश्चेति।

अत्र रत्नप्रभायामार्षवेदान्तेषु काशकृत्स्नमतस्यैव प्रामाण्यमाह—

"आर्षेषु पक्षेषु काशकृत्स्नपक्षस्यैवोपादेयत्वे कि बीज तदाह-दर्शितमिति।"

एतत्सूत्रभाष्यादिपर्यालोचनयाचार्यकाशकृत्स्नमते जीवब्रह्मणो पारमार्थिकोऽभेदोऽविद्यया काल्पनिको भेद', तत्त्वमस्यादिमहावाक्यजज्ञानेन स्वस्वरूपावगमो मोक्ष इति निर्विशेषब्रह्माद्वैतसिद्धान्त पर्यवसीयते। अत एव निर्विशेषब्रह्माद्वैतवादो भगवाञ्छङ्कर काशकृत्स्नाचार्यसिद्धान्त प्रति स्वीय पक्षपात समदर्शयत्।

भगवता पतञ्जलिनापि वेदान्ताचार्यत्वेन पूर्वोत्तरोभयमीमांसाचार्यत्वेन वास्य नाम संस्मृतम् ।[१४]

## ६—जैमिनिः

यद्यप्ययं जैमिनिराचार्यः पूर्वमीमांसायाः सूत्रप्रणेतृत्वेन पूर्वकर्ममीमांसाया आचार्यत्वेन प्रथितः किन्तूत्तरब्रह्ममीमांसाया अयमाचार्यो वेदान्तस्याप्याचार्यो। ब्रह्मसूत्रे ग्रन्थे एकादशसु सूत्रेष्वाचार्यजैमिनिसिद्धान्त उपपादितः, यथास्मिन्नेवाध्याये पूर्वं तानि सूत्राण्युद्धृतानि । वेदान्तसिद्धान्तेऽयं निर्विशेषब्रह्माद्वैतवाद्यासीत् । एतेष्वेकादशसु सूत्रेषु केवलं चत्वारि सूत्राणि—ब्र० सू० १।३।३१, ३।२।४०, ३।४।१८, ३।४।४० परिहाय शेषेषु सूत्रेषु पूर्णतोंऽशतो वा निर्विशेषब्रह्माद्वैतसिद्धान्ता उपलभ्यन्ते । यथा—

साक्षादप्यविरोधं जैमिनिः ।

(ब्र० सू० १।२।२८)

इति सूत्रस्य शाङ्करभाष्ये भामत्यां च श्रीशङ्करभगवत्पादैरेवमुक्तम्—

"निश्चिते च पूर्वापरालोचनवशेन परमात्मपरिग्रहे तद्विषय एव वैश्वानरशब्दः केनचिद् योगेन वर्तिष्यते । विश्वश्चायं नरश्चेति,

---

१४—"काशकृत्स्निना प्रोक्ता मीमांसा काशकृत्स्नी तामधीते काशकृत्स्ना ब्राह्मणी (पा० सू० ४।१।९३ म० भा०) कीलहर्नसंस्करणे द्वितीयखण्डे पृ० २४९ । एवमेतन्महाभाष्यखण्डे २०६ तथा ३२५ पृष्ठयोरप्याचार्यस्यास्य नामायातम् ।

प्राय इमे सर्वेऽप्याश्मरथ्याद्याचार्याः कर्मणो पूर्वमीमांसासूत्राणां ज्ञानाय ब्रह्मसूत्राणां च निर्मातार आसन्, केवलमाचार्यो जैमिनिराचार्यो बादरायणो द्वावेव कर्ममीमांसासूत्रस्य ब्रह्ममीमांसासूत्रस्य च कर्तारौ नाभवताम् ।

द्रष्टव्यमेतदर्थं श्रीबिल्वमङ्गलमहोदयस्य वेदान्तदर्शनम् पृ० १४० तथा श्रीत्रिपुरेश्वरभट्टाचार्यस्य-प्रागधस्तारस्यावतारिका पृ० ९७ ।

विश्वेषां वाय नरः, विश्वे वा नरा अस्येति विश्वानरः परमात्मा सर्वात्मत्वात् विश्वानर एव वैश्वानरः। तद्धितोऽनन्यार्थः, राक्षसवायसादिवत्।"

'अत्र परमात्मा सर्वात्मत्वात्' इत्युक्त्या जीवब्रह्मणोरभेदः प्रतिपादितः। अस्य भामत्यामितोऽपि स्पष्ट 'तदात्म्येन' इत्युक्त्या अभेदः प्रतिपादितः—

'विश्वात्मकत्वात् वैश्वानरः प्रत्यगात्मा। विश्वेषां वाय नरः तद्विकारत्वाद् विश्वप्रपञ्चस्य। विश्वे नरा जीवा वात्मानोऽस्य तादात्म्येनेति।'

एवमेव—

सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति।

(ब्र० सू० १।२।३१)

इति सूत्रे शाङ्करभाष्ये भामत्यां च त्रैलोक्यस्य परमात्मनश्चैकत्वप्रतिपादनद्वारा एकमेवाद्वैत तत्त्व ब्रह्मेति निरूपितम्—

'द्युप्रभृतीन् पृथिवीपर्यन्तान् त्रैलोक्यात्मनो वैश्वानरस्य........'

(शा० भा०)

'तत्रैव त्रैलोक्यात्मनो वैश्वानरस्य.............।' (भा०)

आभ्यां शाङ्करभाष्यभामतीभ्यां विना विशेष त्रैलोक्यस्वरूपः परमात्मा (वैश्वानरः) अभिहित (जैमिनिसिद्धान्तान्तर्गतत्वेन जैमिनेरिदमेव मतमित्यवगन्तुं शक्यते।

पुनरपरस्मिन् सूत्रे जैमिनिमतेन सुषुप्तिकाले जीवब्रह्मणोरैक्याभिधानद्वारा निर्विशेषाद्वैतपक्षः प्रसाधितः—

अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके

(ब्र० सू० १।४।१८)

अत्र शाङ्करभाष्ये जैमिनिमतेन जीवलिङ्गेन ब्रह्म गृह्यत इत्युक्त्या जीवब्रह्मणोरभेदोऽभ्यधायि। यथा शाङ्करभाष्यम्—

'अपि च नैवात्र विवदितव्य जीवप्रधान वेद वाक्य स्याद्

ब्रह्मप्रधान वेति। यतोऽन्यार्थं जीवपरामर्शं ब्रह्मगतिपरत्वमस्मिन् वाक्ये जैमिनिराचार्यो मन्यते।……………सुषुप्तिकाले च परेण ब्रह्मणा जीव एकतां गच्छति।…………………तस्माद् यत्रास्य जीवस्य नि सम्बोधतास्वच्छतारूपः स्वाप उपाधिजनितविशेषविज्ञानरहितं स्वरूप यतस्तद्ब्रह्मस्वरूपमागमन सोऽत्र परमात्मा वेदितव्यतया श्रावित इति गम्यते।

उक्तसूत्रस्य रत्नप्रभाया च—

'जीवलिङ्गेन ब्रह्मैव लक्ष्यत इत्युक्तम्। इदानीं तल्लिङ्गेन जीवोक्तिद्वारा ब्रह्म ग्राह्यमित्याह-अन्यार्थमिति।…………एकीभावाश्रयज्ञानार्थं पृच्छति—क्व वेति। एतद्भवनमेकीभावरूपं यथा स्यात्तथा एष पुरुष क्वाभूत् पुनः। केनैक्य प्राप्नोतीति यावत्।'

एवमेव जैमिनिराचार्यो मुक्तावस्थाया जीवात्मनः स्वरूपाभिनिष्पत्तिं परब्रह्माभिनिष्पत्तिं वा मन्यते। भगवता शङ्करेण 'ब्राह्मेण जैमिनिरुपन्यासादिभ्यः' ( ब्र० सू० ४।४।५ ) इति सूत्रस्य भाष्ये मुक्तिविषयको जैमिनिसिद्धान्त इत्थमभिहितः —

'स्थितमेतत् स्वेन रूपेण' ( छा० उ० ८।३।४ ) इत्यत्रात्ममात्ररूपेणाभिनिष्पद्यते नागन्तुकेनापररूपेणेति। अधुना तु तद्विशेषबुभुत्सायामभिधीयते स्वमस्य रूप ब्राह्ममपहतपाप्मत्वादिसत्यसंकल्पत्वावसान तथा सर्वज्ञत्व सर्वेश्वरत्वं च तेन स्वरूपेणाभिनिष्पद्यत इति जैमिनिराचार्यो मन्यते।'

अत्र भामत्या सविशेष मुक्तिविषयक जैमिनिमतमेवमाह—'उपन्यास उद्देशो ज्ञातस्य यथा य आत्माऽपहतपाप्मेत्यादि। तथाऽज्ञातज्ञापन विधिः। यथा स तत्र पर्येति जक्षत्क्रीडन् रममाण इति, तस्य सर्वेषु लोकेषु कामचारो भवतीत्येवमज्ञातज्ञापन विधि। सर्वज्ञ. सर्वेश्वर इति व्यपदेश.। नायमुद्देशो विषयान्तराभावात्। नापि विधिरप्रतिपाद्यत्वात्। सिद्धवद्व्यपदेशात्। तन्निर्वचनसामर्थ्यादयमर्थ प्रतीयते—त एते उपन्यासादय.। एतेभ्यो हेतुभ्य.।

भावाभावात्मके रूपे भौतिकैः परमेश्वरः ।
मुक्तः संपद्यते स्वैरित्याह स्म किल जैमिनिः ॥

न च चित्स्वभावस्यात्मनोऽभावात्मनोऽपहतपाप्मत्वादयो भावात्मानश्च सर्वज्ञत्वादयो धर्मा अद्वैतं घ्नन्ति । नो खलु धर्मिणो धर्मा भिद्यन्ते, मा भूद् गवाश्ववद् धर्मिधर्मभावाभाव इति जैमिनिराचार्य उवाच ।'

जैमिनिमते मोक्षविषयेऽयं विशेषो यदयं मुक्तपुरुषस्य सेन्द्रियशरीरसत्तां मन्यते । यथा—

'भावं जैमिनि र्विकल्पामननात् ।'

( ब्र० सू० ४।४।११ )

इतिसूत्रभाष्ये भगवता शङ्करेण स्पष्टीकृतम्—

'जैमिनिस्त्वाचार्यो मनोवच्छरीरस्यापि सेन्द्रियस्य भावं मुक्तं प्रति मन्यते । यतः स एकधा भवति त्रिधा भवति (छा० ७।२६।२) इत्यादिनाऽनेकधाभावविकल्पमामनन्ति । न ह्यनेकविधता विना शरीरभेदेनाञ्जसो स्यात् ।'

अयमेवार्थो भामत्यामपि—

'शरीरेन्द्रियभेदे हि नानाभावः समञ्जसः ।
न चार्थसंभवे युक्तं स्तुतिमात्रमनर्थकम् ॥'

इद मतमग्रे सूत्रे भाष्ये चालोचितम् ।

विद्याकर्मवशादर्चिरादिमार्गेण जीवगमनविषये जैमिनिमत भृशमालोचितम् । अर्चिरादिमार्गो जीवं ब्रह्म नयतीति सिद्धान्तः । यथा श्रुति र्निदिशति—

'स एनान् ब्रह्म गमयति ।'

( छा० उ० ४।१५।५ )

अत्र ब्रह्मपदेन किमभिप्रेतम पर-अपर कार्यब्रह्म वा। अत्र जैमिनिमते पर ब्रह्मैव ग तव्यम। यथाह—

'परं जैमिनि र्मुख्यत्वात्।'

( ब्र० सू० ४।३।१२ )

अस्मात्सूत्रादारभ्य ४।३।१४ सूत्र यावद भाष्ये भगवता शङ्करेण पूर्वोत्तरपक्षरूपेण विवेचनपूर्वक जैमिनिमत निरस्य छान्दोग्य-श्रुत्युदित गन्तव्य ब्रह्म अपरमेवेति निर्णीतम। अन्ते चोक्तम—

'तस्मात्' कार्यं बादरि ( ब्र० सू० ४।३।३ ) इत्येष एव स्थित पक्ष। 'पर जैमिनि' ( ब्र० सू० ४।३।१२ ) इति तु पक्षान्तरप्रति-भानमात्रप्रदर्शन प्रज्ञाविकासनायेति द्रष्टव्यम्।'

(ब्र० सू० ४।३।१४ शा० भा०)

अत्र भामत्या जैमिनिरतत्त्वदर्शी असाधुदर्शी चोक्त —

' तदनेनाभिसन्धिना पर ब्रह्म ममयत्यमानव इति मेने जैमिनिराचार्य। .. तत्त्वदर्शी बादरि ददर्श—

कार्यमप्राप्तप्रापणी गतिः।

प्रापयेद् ब्रह्म न पर प्राप्तत्वाज्जगदात्मकम्॥

तस्मात् साधुदर्शी स भगवान बादरिरसाधुदर्शी जैमिनिरिति सिद्धम। अप्रामाणिकाना बहुप्रलापा सर्वगतस्य द्रव्यस्य गुणा सर्वगता एव चैत यानन्दादयश्च गुणिन परमात्मनो भेदा भदव तो गुणा इत्यादयो दूषणायानुभाष्यमाणा अप्यप्रामाणिकत्व-मावह त्यास्माकमित्युपेक्षिता।'

( ब्र० सू० ४।३।७ भामत्याम )

एवञ्च केवल मोक्षावस्थाया सेन्द्रियशरीरसत्ताभ्युपगमेनापि ...।शे महर्षिजैमिनेरसाधुदर्शिता द्वैविधि प्रदर्शिता।

## ७—बादरिः

आचार्यबादरेः सिद्धान्तो निर्विशेषाद्वैतवाद एवासीत्। अनेन छान्दोग्यश्रुत्यर्थविचारावसरे पर ब्रह्म निर्गुण तथा अपर ब्रह्म सगुणमित्युक्तम्। तेन निर्विशेषब्रह्मवादेऽस्य पक्षपात. प्रतीयते। यथा—

**कार्यं बादरिरस्य गत्युपपत्तेः।**

(ब्र० सू० ४।३।७)

इति सूत्रभाष्ये भगवाञ्छङ्करो जीवात्मनोर्अचिरादिगतिविषयेऽस्य मतमित्थमाह—

'स एनान् ब्रह्म गमयति' (छा० उ० ४।१५।५) इत्यत्र विचिकित्स्यते—किं कार्यमपरं ब्रह्म गमयत्याहोस्वित्परमेवाविकृतं मुख्यं ब्रह्मेति। कुतः संशयः। ब्रह्मशब्दप्रयोगाद् गतिश्रुतेश्च। तत्र कार्यमेव सगुणमपरं ब्रह्मैनान् गमयत्यमानवः पुरुष इति बादरिराचार्यो मन्यते। कुतः अस्य गत्युपपत्तेः। अस्य हि कार्यब्रह्मणो गन्तव्यत्वमुपपद्यते प्रदेशवत्त्वात्। न तु परस्मिन् ब्रह्मणि गन्तृत्वं गन्तव्यत्वं गतिर्वाऽवकल्प्यते। सर्वगतत्वात् प्रत्यगात्मत्वाच्च गन्तॄणाम्।'

'अयं भावो यद् अर्चिरादिमार्गप्रवृत्तस्य पुरुषस्य कृते छान्दोग्योपनिषदि—'चन्द्रमसो विद्युत तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति' (छा० उ० ४।१५।५) इति। अनया छान्दोग्यश्रुत्या अर्चिराद्यभिमानी देव आतिवाहिका वा देव सुकृतिन (एनान्) ब्रह्म गमयति इति ज्ञायते। अत्र ब्रह्मपदेन परं ब्रह्म अपरं ब्रह्म वा ग्राह्यम्। इति संशये बादरिराचार्योऽत्र श्रुतौ ब्रह्मपदस्यार्थमपरं ब्रह्म करोति तथा अपरब्रह्मणो विशेषणं सगुणमिति ब्रवीति। अतोऽस्य मते परं ब्रह्म निर्गुणम्। अनेनाय निर्विशेषब्रह्माद्वैतवादो सल्लक्ष्यते।

एतत्सूत्रस्य भामत्यामयं बादरिः 'तत्त्वदर्शी' 'साधुदर्शी' चेति-विशेषणाभ्यां सम्मानितस्तथास्य निर्विशेषाद्वैतसिद्धान्तोऽपि प्रदर्शितः। अस्य मतेऽपि 'तत्त्वमसि' इतिमहावाक्येन ब्रह्मसाक्षात्कारः, अविद्या-

निर्वृतिरेव मोक्षः अविद्योपाध्यवच्छिन्न आत्मैव एव जीवः विगलितनिखिलप्रपञ्चावभासविभ्रमम्, एवमेव ब्रह्म, जीवब्रह्मणोश्चाभेदः।' यथा—

'तत्त्वदर्शी बादरि र्ददर्श—कार्यमप्राप्तपूर्वत्वादप्राप्तप्रापणी गतिः। प्रापयेद् ब्रह्म न परं प्राप्तत्वाज्जगदात्मकम्। तत्त्वमसिवाक्यार्थसाक्षात्कारात्प्राक् किल जीवात्माऽविद्याकर्मवासनाद्युपाध्यवच्छेदाद् वस्तुतोऽनवच्छिन्नोऽवच्छिन्नमिव, अभिन्नोऽपि लोकेभ्यो भिन्नमिवात्मानमभिमन्यमानः स्वस्थानादन्यानप्राप्तानचिरादीँल्लोकान् गत्याप्नोतीति युज्यते। अद्वैतब्रह्मसाक्षात्कारवतस्तु विगलितनिखिलप्रपञ्चावभासविभ्रमस्य न गन्तव्य, न गतिः, न गमयितार इति किं केन सगतम्।' इत्यादि।

( ब्र० सू० ४।३।७ शा० भा० भामत्याम् )

अत्रैव भामत्या पुनरग्रे—

'एतदपि वस्तुतो विचारासहतया सर्वमनिर्वचनीयं विजृम्भितमविद्यया समुत्पन्नाद्वैततत्त्वसाक्षात्कारो न विद्वानभिमन्यते।'

अतोऽग्रे पुनरपि भामत्यामुक्तम्—

'तस्मात्साधुदर्शी स भगवान्बादरिरसाधुदर्शी जैमिनिरिति सिद्धम्।'

अस्मिन् कार्याधिकरणेऽष्टसु सूत्रेष्वचिरादिमार्गेण गन्तव्यं परं ब्रह्म, उत अपरं ब्रह्मेति विचार्यान्तेऽपरं ब्रह्मैव गन्तव्यमिति बादरिमतस्यैव न्यायत्वं भगवत्पादेनोक्तम्—

"तस्मात् 'कार्यं बादरि.' (ब्र० सू० ४.३.७) इत्येष एव स्थितः पक्षः।"

( ब्र० सू० ४।३।१४ शा० भा० )

एवमेवापरविद्याफलमुक्तिभाजो मनः शरीरेन्द्रियाणि च भवन्ति न वेति पक्षद्वये आचार्यबादरिर्मनसोऽस्तित्वं शरीरेन्द्रियाणां चाभावं मनुते। यथा—

............'अभावं बादरिराह ह्येवम्' ( ब्र० सू० ४।४।१० ) इति सूत्रभाष्ये भगवाञ्छङ्कर आह—

"संकल्पादेवास्य पितरः समुत्तिष्ठन्ति" ( छा० उ० ८।२।१ ) इत्यादिश्रुते र्मनस्तावत्संकल्पसाधनं सिद्धम्। शरीरेन्द्रियाणि पुनः प्राप्तैश्वर्यस्य विदुषः सन्ति न वा सन्तीति समीक्ष्यते। तत्र बादरिस्तावदाचार्यः शरीरस्येन्द्रियाणां चाभावं महीयमानस्य विदुषो मन्यते। कस्मात्। एवं ह्याहाम्नायः—"मनसैतान् कामान् पश्यन् रमते।" (छा०उ० ८।१२।५) "य एते ब्रह्मलोके" (छा० ७।१२।१) इति यदि मनसा शरीरेन्द्रियैश्च विहरेन्मनसेति विशेषणं न स्यात्। तस्मादभावः शरीरेन्द्रियाणां मोक्षे।"

अत्र भामत्याम्—

"अन्ययोगव्यवच्छित्त्या मनसेतिविशेषणात्।
देहेन्द्रियवियोगः स्यद् विदुषो बादरे र्मतम्॥"

ब्रह्मसूत्रे कृतात्ययाधिकरणेऽपि बादरेर्मतमुल्लिखितम्। तत्रेष्टकारिणश्चन्द्रमण्डलमधिरुह्य यावद्भोगकालं तत्रोषित्वा सानुशया (अवशिष्टकर्माणः) चन्द्रमण्डलतः पुनरावर्तन्ते। अत्रानुशयशब्दार्थो विचार्यते। तद् य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिम्... .........कपूयाचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन्... .. ...। (छा०उ० ५।१०।७) इत्यत्रोक्तचरणशब्दार्थोऽनुशयः। बादरिराचार्यश्चरणशब्दार्थं सुकृतं दुष्कृतं च मनुते। यथाहतुः महर्षि र्बादरायणो भगवाञ्छङ्करश्च—

'सुकृतदुष्कृते एवेति तु बादरिः।'

( ब्र० सू० ३।१।११ )

बादरिस्त्वाचार्यः सुकृतदुष्कृते एव चरणशब्देन प्रत्याय्येते इति मन्यते। चरणमनुष्ठानं कर्मेत्यनर्थान्तरम्। तथाहि अविशेषेण कर्ममात्रे चरति प्रयुज्यमानो दृश्यते। यो हीष्टादिलक्षणं पुण्यं कर्म करोति तं लौकिका आचक्षते धर्मं चरत्येष महात्मेति। आचारोऽपि च

एव। भेदव्यपदेशस्तु कर्मचरणयो ब्राह्मणपरिव्राजकन्यायेनाप्युपपद्यते तस्माद् रमणीयचरणाः प्रशस्तकर्माणः कपूयचरणा निन्दितकर्माण इति निर्णयः।"

अत्र रत्नप्रभायां बादरिमतं मुख्यसिद्धान्तमित्युक्त्वा समादृतम्—

"यद्यप्यक्रोधादिरूपं शीलं सदाचरणधनात्मकं विशेषरूपात् कर्मणो भिन्नं तथापि चरणाचारशब्दौ धर्ममात्रवाचिनावेव न शीलमात्रवाचकाविति न लक्षणावसर इति बादरिमतं मुख्यसिद्धान्तमाह-सुकृतेति।

बादरिमतेऽपरिच्छिन्नोऽपि परमेश्वरः प्रादेशमात्रहृदयप्रतिष्ठितेन मनसा स्मर्यतेऽतः प्रादेशमात्र उच्यते। एतन्मतं ब्रह्मसूत्रे शाङ्करभाष्ये चेत्थमुक्तम् .........

अनुस्मृतेर्बादरिः।

(ब्र० सू० १।२।३०)

अत्र शाङ्करभाष्यम्—

"प्रादेशमात्रहृदयप्रतिष्ठेन वाऽयं मनसाऽनुस्मर्यते तेन प्रादेशमात्र इत्युच्यते। यथा प्रस्थमिता यवाः प्रस्था इत्युच्यन्ते तद्वत्। यद्यपि च यवेषु स्वगतमेव परिमाणं प्रस्थसम्बन्धाद् व्यज्यते। न चेह परमेश्वरगतं किञ्चित्परिमाणमस्ति यद्धृदयसम्बन्धाद् व्यज्येत। तथापि प्रयुक्तायाः प्रादेशमात्रश्रुतेः सम्भवति यथाकथञ्चिदनुस्मरणमालम्बनमित्युच्यते। प्रादेशमात्रत्वेन वाऽयमप्रादेशमात्रोऽप्यनुस्मरणीयः प्रादेशमात्रश्रुत्यर्थवत्तायै। एवमनुस्मृतिनिमित्ता परमेश्वरे प्रादेशमात्रश्रुतिरिति बादरिराचार्यो मन्यते।"

बादरेराचार्यस्येदमपरं वैशिष्ट्यं यत्सर्वानाचार्याननतिक्रम्य वैदिककर्मणि सर्वेषां जनानामधिकारमयं मनुते।[१५]

एवमुक्तसूत्रभाष्यादिपर्यालोचनया एषु सप्तसु सौत्रवेदान्तिषु त्रयो वेदान्ताचार्या निर्विशेषब्रह्माद्वैतवादिनो द्वौ वेदान्ताचार्यौ भेदाभेदवादिनौ द्वैताद्वैतवादिनौ वेति निश्चीयते, अपरयोर्द्वयोराचार्ययोश्च वेदान्तसिद्धान्तो न सम्यक् पर्यवसीयते। यथा—

१५—द्र० जैमिनीयसूत्रम्—६।१।२७।

आचार्यः काशकृत्स्नः, जैमिनिः, बादरिश्च निर्विशेषब्रह्माद्वैतवादिनः। आश्मरथ्य औडुलोमिश्च भेदाभेदवादिनौ।

आत्रेयस्य कार्ष्णाजिनेश्च वेदान्तसिद्धान्तो न निश्चीयते। एषु सूत्रेषु प्रतिपन्नाना श्रीभाष्यादिषु व्याख्यानान्तरत्वं तत्र युक्तायुक्तत्व स्वयमूहनीयम्।

एतेभ्यो ब्रह्मसूत्रोक्तवेदान्ताचार्येभ्योऽन्येऽपि वेदान्ताचार्या समभूवन्, येषां परिचयो महाभारते पुराणेषु चोपलभ्यते। एषु काश्यपः, असितः, देवलः, गर्गः, जैगीषव्यः, पराशरः, भृगुश्च विशेषतः प्रसिद्धाः। शाण्डिल्यभक्तिसूत्रानुरोधात् काश्यपो भेदवादी वेदान्ताचार्यस्तथा बादरायणोऽभेदवादी वेदान्ताचार्य आसीदित्यपि प्रतीयते यथा—

'तामैश्वर्यपरां काश्यपः परत्वात्।'

(शा०भ०सू० २९)

'आत्मैकपरां बादरायणः।'

(तत्रैव ३०)

तत्रैवाचार्यशाण्डिल्यः स्वीयं मतं भेदाभेदं च प्रकटयति—

'उभयपरां शाण्डिल्यः शब्दोपपत्तिभ्याम्।'

( शा० भ० सू० ३१ )

भगवता शङ्करेणापि 'ज्योतिश्चरणाभिधानात्' (ब्र०सू० १।१।२४) इति सूत्रभाष्ये ज्योतिर्विषये ब्रह्मानुवृत्तिप्रसङ्गे शाण्डिल्यविद्यायामपि ब्रह्मानुवृत्तिरुक्ता—

'परस्यामपि शाण्डिल्यविद्यायामनुवर्तिष्यते ब्रह्म।'

(ब्र०सू० १।१।२४ शा० भा०)

एतच्छाण्डिल्यसूत्रानुरोधादिदमपि प्रतीयते यद् बादरायणमतम् अद्वैतमासीत्। तेन बादरायणस्य ब्रह्मसूत्रग्रन्थेनाप्यद्वैतपरकेणैव भवितव्यम्। एवमेव च मनसि निधाय भगवता शङ्करेण बादरायणब्रह्मसूत्रस्याद्वैतपरकं भाष्यं कृतम्। अत श्रीशङ्कराचार्यात् परवर्तिनो भास्कररामानुजाचार्यप्रभृतयो विद्वांसो बादरायणब्रह्मसूत्रं यदद्वैत-

सिद्धान्तभिन्नत्वेन व्याख्यातवन्तस्तथा निर्विशेषब्रह्माद्वैततत्त्वं शाङ्करभाष्यं प्रति यद् दोषमुद्भावितवन्तस्तत् सर्वं समालोचनीयमेव । आचार्यशङ्करात् साक्षात्परवर्त्याचार्यो भास्करः स्वीये ब्रह्मसूत्रभाष्य आरम्भ एव ब्रह्मसूत्रशाङ्करभाष्यं प्रतीत्थमाचिक्षेप—

सूत्राभिप्रायसंवृत्या स्वाभिप्रायप्रकाशनात् ।
व्याख्यातं यैरिदं शास्त्रं व्याख्येयं तन्निवृत्तये ॥

एतादृश एवाक्षेपो थीबोमहोदयेन वेदान्तशाङ्करभाष्यानुवादस्य भूमिकायां कृतः । थीबोमहोदयेन तत्र लिखितं यद् बादरायणस्य वेदान्तसिद्धान्तः शङ्कराचार्यसिद्धान्तात् सर्वथा भिन्न आसीत् । भगवता शङ्करेण स्वनिर्विशेषाद्वैतसिद्धान्तो बादरायणसिद्धान्ते बलादारोपितः ।

इत्थमेव शाण्डिल्यभक्तिसूत्रानुरोधादिदमपि प्रतीयते यद् बादरायण-ब्रह्मसूत्रादतिरिक्तं महर्षिकाश्यपप्रणीतमपि ब्रह्मसूत्रं स्याद् यत्र काश्यपस्य भेदपरको वेदान्तसिद्धान्तः प्रतिपादितो भवेत् । प्राचीनकाले काश्यपनामानस्त्रयो महर्षयोऽभूवन् । महाभारते (१३।३१९।५९) गन्धर्वविश्वावसोरुद्दिष्टेष्वाचार्येषु काश्यपस्य नामायाति । हृदयङ्गमा-नामके ग्रन्थेऽपि काश्यपस्य नामालङ्कारशास्त्रज्ञत्वेन निर्दिष्टम् । एवमेवाभिनवगुप्ताचार्यनिर्मितायां नाट्यशास्त्रटीकायां तथा नान्यदेव-प्रणीतायां सरस्वतीहृदयालङ्काराभिधायां नाट्यशास्त्रटीकायां च काश्यपः, बृहत्काश्यप इति नामद्वयमुपलभ्यते । एषु काश्यपेषु शाण्डिल्यसूत्रोक्तः कतम इति निर्णेतुं न शक्यते ।[16]

एवंविधानां महाभारतपुराणादिप्रसिद्धानां वेदान्ताचार्याणां वेदान्तसिद्धान्ता यथासम्भवं ततस्तत उद्धृत्य परिशिष्टे निर्दिश्यन्ते ।

---

१६—एतद्विषये म० म० श्रीगोपीनाथकविराजमहोदयप्रणीतायां वेदान्त-दर्शनभूमिकायाम् ६–७ पृ० सविशेषं द्रष्टव्यम् ।

॥ ॐ ॥

# चतुर्थोऽध्यायः

## भगवानुपवर्षः

### ( बोधायनः, कृतकोटिः )

तृतीयाध्याये आर्यवेदान्तिनामद्वैतसिद्धान्तो यथाशास्त्रमुपन्यस्तः। एभ्य आर्यवेदान्तिभ्य अतिरिक्ता अपि चतुर्दश वेदान्ताचार्याः श्रीमच्छङ्कराचार्यात्पूर्वमभूवन्। येषामेकादश नामानि श्रीयामुनाचार्येण सिद्धित्रये[1], श्रीरामानुजाचार्येण वेदार्थसंग्रहे[2] तथा श्रीश्रीनिवासदासेन यतीन्द्रमतदीपिकायां[3] प्राचीनवेदान्ताचार्यत्वेन परि-

---

१—"यद्यपि भगवता बादरायणेन इमान्यर्थान्येव सूत्राणि प्रणीतानि। विवृतानि च तानि परिमितगम्भीरभाषिणा द्रमिडभाष्यकृता। विस्तृतानि च तानि गम्भीरन्यायभाषिणा भगवता श्रीवत्साङ्कमिश्रेणापि। तथापि आचार्यटङ्कभर्तृप्रपञ्चभर्तृमित्रभर्तृहरिब्रह्मदत्तशङ्करश्रीवत्साङ्कभास्करादिविरचितसितासितविविधनिबन्धनश्रद्धाविप्रलब्धबुद्धयो न यथावदन्यथा च प्रतिपद्यन्ते इति तत्प्रतिपत्तये च युक्त. प्रकरणक्रम.।"

( सिद्धित्रये पृ० ५ )

२—"भगवद्बोधायनटङ्कद्रमिडगुहदेवकपर्दिभारुचिप्रभृत्यविगीतशिष्टपरिगृहीतपुरातनवेदवेदान्तव्याख्यानसुव्यक्तार्थश्रुतिनिकरनिदर्शितोऽयं पन्था.।

( वेदार्थसंग्रहे पृ० १५४ )

३—"व्यासबोधायनगुहदेवभारुचिब्रह्मनन्दिद्रविडाचार्यश्रीपराङ्कुशनाथयामुनमुनियतीश्वरप्रभृतीना मतानुसारेण..................।"

( यतीन्द्रमतदीपिकाया पृ० २ )

गृहीतानि, अपरेषां त्रयाणां वेदान्ताचार्याणां तु नामानि सम्प्रदायानुसारं ब्रह्मसूत्रभाष्याद्यनुसारं परिज्ञायन्ते। यथा—(१) व्यासः (२) उपवर्षः (बोधायनः, कृतकोटिः) (३) गुहदेवः (४) कपर्दी (५) भारुचिः (६) ब्रह्मनन्दिः (टङ्कः) (७) द्रविडः (८) भर्तृप्रपञ्चः (९) भर्तृमित्रः (१०) भर्तृहरिः (११) ब्रह्मदत्तः (१२) सुन्दरपाण्ड्यः[४] (१३) गौडपादाचार्यः[५] (१४) मण्डनमिश्रः।[६] एषु केनचिद् वेदान्तविषयकं सूत्रं केनचिद् भाष्यं केनचिद् वृत्तिः केनचिद् कारिका केनचिद् व्याख्यादिकं व्यरचियत।

एषु व्यासो ब्रह्मसूत्रकर्तृत्वेन प्रसिद्धः। तस्याभिमतमद्वैतवादस्वरूपं कीदृशमिति निर्णयो दुष्करः। यतोऽद्वैतवादिविशिष्टाद्वैतादिवादिभिः वेदान्तिभिः स्वस्वाभिप्रायानुकूलं ब्रह्मसूत्रभाष्यं व्यरचि, व्यासतात्पर्यनिर्णयोऽपि विरचितः। किन्त्वद्यापि ब्रह्मसूत्रे भगवतो व्यासस्य कोऽभिप्राय इति भगवता व्यासेनैव परिज्ञातुं शक्यत इति विद्वद्वादः परिचलति। बोधायन–(उपवर्ष)–ब्रह्मनन्दि–(टङ्क)––द्रविडभर्तृप्रपञ्चभर्तृहरिब्रह्मदत्तसुन्दरपाण्ड्यगौडपादमण्डनमिश्राचार्याणामभिमतमद्वैतवादस्वरूपं तत्तदाचार्यनामकेऽध्याये प्रदर्शितम्। शिष्टानां चतुर्णां गुहदेवकपर्दिभारुचिभर्तृमित्राणां तु केवलमधुना वेदान्तिषु नामैवोपलभ्यते, किन्त्वस्माकमभाग्यवशादेतेषां कोपि वेदान्तविषयको ग्रन्थः, किमपि वाक्यं किमप्युद्धरणं वा नावाप्यन्ते।

---

४—ब्र० सू० १।१।४ शा० भाष्ये अपि चाहु ············इत्याद्युक्तम्। अस्य व्याख्यानेन सुन्दरपाण्ड्यः परिज्ञायते।

५—ब्र० सू० १।४।१४ शा० भाष्ये तथा नैष्कर्म्यसिद्धेः १।४४ कारिकायाम् माण्डूक्यकारिकोद्धरणेन नामग्रहणेन च माण्डूक्यकारिकाग्रन्थेनान्यैश्चापि प्रमाणैरस्य परिचीयते। गौडपादनामकेऽध्याये सविस्तरं विवेचयिष्यते।

६—अस्य ब्रह्मसिद्ध्यादिग्रन्थाधारेण वेदान्तिषु गणना। विशेषस्तु मण्डनमिश्रनामकेऽध्याये द्रष्टव्यः।

अत एतेषु द्वयोर्विषये केवलं परिचयात्मकः संकेतः संक्षेपेणात्रोपस्थाप्यते, गुहदेवकपर्दिनोस्तु यथोक्तवेदान्तिनामातिरिक्तं किमपि कुत्रापि न प्राप्यते ।

*भारुचिः*

अयं धर्मशास्त्रस्यापि प्रमुखो विद्वानासीदिति प्रतीयते । याज्ञवल्क्यस्मृतेः १।१८ तथा २।१७४ श्लोकयो मिताक्षराटीकायाम्, पराशरसंहितायां माधवाचार्यकृतपराशरमाधवटीकायाम् - २।३ ( पृ० ५१० ) तथा सरस्वतीविलासेऽस्य नामोपलभ्यते । विष्णुधर्मसूत्रस्य टीकाकर्तृत्वेनाप्ययं प्रसिद्धः । वेदान्ताचार्यो भारुचिस्तथा धर्मशास्त्रकारो भारुचिरेक एव द्वाविति वा न निर्णीतम् । धर्मशास्त्रकारस्य भारुचेः कालो नवमशताब्द्यस्ति यथा श्री पी० वी० काणेमहोदयेन धर्मशास्त्रेतिहासस्य प्रथमभागे २६५ पृष्ठे निर्णीतः ।

*भर्तृमित्रः*

श्रीयामुनाचार्येण सिद्धित्रये ( पृ० ४५ ) तथा श्रीजयन्तभट्टेन न्यायमञ्जर्याम् ( पृ० २१३-२२६ ) वेदान्तित्वाचार्यभर्तृमित्रस्य नाम परिगणितम् । किन्त्वस्य वेदान्तविषयको ग्रन्थोऽथवा वेदान्तग्रन्थेषु कुत्राप्यस्योद्धरणवाक्यमधुना न लभ्यते । अयं पूर्वमीमांसाया अपि प्रथितो विद्वानासीदिति श्रीकुमारिलभट्टेन श्लोकवार्तिके संकेतितं तथा पार्थसारथिमिश्रेण श्लोकवार्तिकस्य स्वीयन्यायरत्नाकरनामके व्याख्याने स्पष्टीकृतम् । यथाहि—

प्रायेणैव हि मीमांसा लोके लोकायतीकृता ।
तामास्तिकपथे नेतुमयं यत्नः कृतो मया ॥
(श्लो० वा० १।१।१।१०)

अत्र व्याख्याने पार्थसारथिमिश्र आह—

'मीमांसा हि भर्तृमित्रादिभिः, अलोकायतैव सती लोकायतीकृता ।

नित्यनिषिद्धयोरिष्टानिष्टफलं नास्तीत्यादिवहुवपसिद्धान्तपरिग्रहेण ।'
( न्या० र० )

एवमेव श्लोकवार्तिके १।१।६।१३०-१३१ अत्राप्याचार्यभर्तृमित्रस्य कृते सङ्केतो लभ्यते । श्रीमुकुलभट्टेनापि अभिधावृत्तिमातृकाग्रन्थे (पृ० १७) अस्य नाम मीमांसकरूपेण निर्दिष्टम् । एतदधिकमस्य विषये किमपि न परिज्ञायते ।

वृत्तिकारः—उपवर्षः, बोधायनः, कृतकोटिः

भगवानुपवर्षोऽनीव प्राचीनो वेदान्ताचार्य आसीत् । भगवता शङ्करेण ब्रह्मसूत्रभाष्ये महताऽऽदरेणास्य नाम गृहीतम् ।[७] शबरस्वमिनापि स्वीये भाष्ये ससम्मानमस्य नामोदीरितम् ।[८] अनेन सम्भाव्यते यदयं पूर्वमीमांसाया अप्याचार्योऽभवत् । अस्य कालः प्रथमशताब्दो मन्यते । यतो हि द्वितीयशतकभवेन श्रीशबरस्वामिनास्य नामोल्लिखितम् । आचार्योपवर्षेण च महर्षिपतञ्जलेः सिद्धान्तितः स्फोटवादः खण्डितः ।[९]

७—(क) 'वर्णा एव तु शब्द'—इति भगवानुपवर्षः ( ब्र० सू० ३।३।२८ शा० भा०)
(ख) अतएव भगवतोपवर्षेण प्रथमतन्त्र आत्मास्तित्वाभिधानप्रसक्तौ शारीरके वक्ष्याम इत्युद्धारः कृतः । (ब्र०सू० ३।३।५३ शा० भा०)
८—(क) अथ गौरित्यत्र कः शब्द, गकारौकारविसर्जनीया इति भगवानुपवर्षः । (मीमांसादर्शने शाबरभाष्ये १।१।५)
(ख) मीमांसादर्शने शाबरभाष्य पृ० ६ वृत्तिकारस्तु अन्यथेमं ग्रन्थं वर्णयाञ्चकार ।
(ग) शाबरभाष्ये पृ० २७ ( विब्लोथिकाइण्डिका एडिसन ) 'वृत्तिकारग्रन्थ ।'
(घ) श्लोकवार्तिकेऽपि २६ कारकान्ते पृ० १८ वृत्तिकारमतेन समाप्तम् ।
९—तत्रैव ब्र० सू० शा० भा० १।३।२८ तथा मी० द० शाबरभा०

पतञ्जलेः समय ईशापूर्वं द्वितीतशतकम्। अतोऽनयो र्मध्येऽस्य स्थितिकालोऽनुमीयते।[10] शाबरभाष्य उपवर्षाचार्यस्य वाक्य-ग्रन्थयोरुद्धरणेन शबरस्वामिनः पूर्वमुपवर्ष आसीदिति प्रतीयते किन्तु श्रीकृष्णदेवविरचिते तन्त्रचूडामणौ लिखित यदुपवर्षेण शाबरभाष्यस्य वृत्तिर्विरचितेति।[11] अतस्तन्त्रचूडामणे लेखस्य प्रामाणिकत्वे सन्देह। यदि तन्त्रचूडामणिलेखः प्रामाणिकस्तर्हि उपवर्षाचार्यद्वय मन्तव्यम्। एकः शबरस्वामिनः प्राचीनोऽपरोऽर्वाचीन इति।

अथ पूर्वोत्तरमीमांसयो र्वृत्तिकार आसीदिति श्रीशङ्कराचार्य-श्रीरामानुजाचार्यवचनं निश्चीयते। भगवता शङ्करेण ब्रह्मसूत्र लिखित यदुपवर्षेण स्वीयपूर्वमीमांसावृत्तौ स्वीयशारीरकसूत्रवृत्त सङ्केत. क्रियते।[12] श्रीमण्डनमिश्रेणापि वृत्तिकार इत्थ स्मर्यते—

"बह्वर्थं वक्तुकामेन तमर्थं सौत्रमिच्छता।
वृत्तिकारमतेनेयं त्रिसूत्री वर्ण्यतेऽन्यथा॥"

(मीमांसानुक्रमणिकायाम्)

श्लोकवार्तिकस्य स्वीयतात्पर्यटीकायां श्रीभट्टोम्बेकेनोपवर्षकृत-व्याख्यानस्योल्लेखः कृत.।[13] उभयो मीमांसयो र्वृत्तिकार उपवर्ष

१।१।५ द्र० '—वृत्तिकारग्रन्थनामको लेख, ले० श्रीगङ्गानाथझा चतुर्थ ओरिएण्टल कान्फ्रेन्स, इलाहाबाद—१९२६ पृ० ४६ प्रकाशित।

१०—श्री पी० वी० काणेमहोदयस्य लेखः 'वेदान्तकामेन्टेटरस् बिफोर शङ्कराचार्य'-अय लेख पञ्चम इण्डियन ओरिएण्टल कान्फ्रेन्स, पञ्जाब, १९२८ ई० पृ० ९४० इत्यत्र प्रकाशितः।

११—द्र० फिटज एडवर्ड हाल विरचिते इन्डेक्स टु संस्कृतफिलासफी इत्यत्र पृ० १९७।

१२—द्र०उपरितना १–(क)-(ख) संख्याङ्किता टिप्पणी।

१३—श्लोकवार्तिके प्रत्यक्षसूत्रे १।१।४—
ग्राह्योणानेन चेत्येतत्कृत नैव विशेषणम्।
सम्प्रयोगस्य येन स्याद् विशेषो वक्ष्यमाणवत्॥१२॥

एक एव उत द्वाविति न निर्णीतम् ।[14]

आचार्यभास्करेणास्य नाम शास्त्रसम्प्रदायप्रवर्तकत्वेन सस्मृतम् ।[15] ब्रह्मसूत्रविषये भास्कराचार्यस्यानेन सह मतैक्यम् । तदस्मिन्नेवाध्याये पुरस्ताद् दर्शयिष्यते ।

विशिष्टाद्वैताचार्येण प्रपञ्चहृदयकारेणापि वृत्तिकाररूपेण भगवदुपवर्षस्य नाम प्रपञ्चहृदये सङ्कीर्तितम् ।[16] श्रीभाष्येऽपि श्रीरामानुजाचार्येण वृत्तिप्रणेता कश्चित् पूर्वाचार्यत्वेन स्मृतः ।[17] श्रीभाष्ये च पुरस्ताद् आत्मविचारप्रसङ्गेऽपि उपवर्षस्य नामायातम् ।[18]

---

यथासामर्थ्यं च मन्त्रस्य वृत्तिकारेण लभ्यते ।
यत्नप्रयोग इत्येव पाठो ह्यनुगृहीतम् ॥१३॥
यथा सम्प्रयोगे इत्यादि वृत्तिकारमते व्याख्यास्यते । यथाश्रुतस्य यथासामर्थ्यं मत्वा तु षष्ठी व्यत्ययं कृत्वोपवर्षेण व्याख्यानम् । तदपि तु न इष्टम् इत्याह यथासामर्थ्यम् इति । (श्लो०वा० १ १२ शा०टी०)

१४—द्र०–म०म०श्रीगोपीनाथकविराजविरचिता वेदान्तदर्शनभूमिका ।

१५—स्वामी उपवर्षाचार्यस्य शास्त्रसम्प्रदायप्रवर्तकत्वानुवर्णनम् ।
(ब्र० सू० २।२।३० भा० भा० पृ० १२४)

१६—तस्य विंशत्यध्यायनिबद्धस्य मीमांसाशास्त्रस्य कृतकोटिनामधेयं भाष्यं बोधायनेन कृतम् । तद्ग्रन्थबाहुल्यभयादुपेक्ष्य उपवर्षेण कृतम् । ब्रह्मकाण्डस्य भगवत्पादब्रह्मदत्तभास्करादिभि मतभेदेनापि कृतम् ।
(प्रपञ्चहृदये अनन्तशयनम् त्रिवेन्द्रमप्रकाशने पृ० ३६)
द्र० कामेंटेटरस बिफोर शङ्कराचार्यनामको लेख, लें०— श्री पी० वी० काणे इण्डियन ओरियण्टल कान्फ्रेंस पञ्जाब १९२८ भा० २ पृ० ९३७ ।

१७—भगवद्बोधायनकृतां विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाचार्याः संचिक्षिपुः ।
(श्रीभाष्ये पृ० १)
अथ सम्प्रतोपवर्ष एते त जर्नल आफ बाम्बे ब्राञ्च रायल एसियाटिक सोसायटी पृ० ८३ ८४ इत्यत्र निर्णीतम् ।

१८—ब्रह्मसूत्र ३।३।५३ श्रीभाष्ये ।

विशिष्टाद्वैतसम्प्रदाय एको वृत्तिकारो बोधायनाचार्येतिनाम्ना प्रसिद्धः। यस्य नाम श्रीश्रीनिवासदासेन यतीन्द्रमतदीपिकायां भगवद्व्यासादनन्तरं गृहीतम्।[१९] श्रीरामानुजाचार्येणाय बोधायनः स्वीये वेदार्थसङ्ग्रहे ग्रन्थे स्वोपजीव्यत्वेनाङ्गीकृतः।[२०] श्रीरामानुजस्य प्रपञ्चहृदयग्रन्थानुसारं बोधायनःपूर्वोत्तरयोरुभयोर्मीमांसयोर्वृत्तिकार आसीत्।[२१] अस्य सङ्केतः श्रीभाष्येऽप्युपलभ्यते।[२२]

श्रीभाष्यकारेण वृत्तिकारस्य प्रकारद्वयेन नाम गृहीतम्—एकस्तु ब्रह्मसूत्रवृत्तिकर्ता भगवद्बोधायनः, अपरः केवलं वृत्तिकार एतावन्मात्रेण बोधायन इति नाम विनैव। प्रथमं तु श्रीभाष्य एकवारमेवायातम्, द्वितीयं षड्वारम्—(१) भगवद् बोधायनकृतां विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाचार्याः संचिक्षिपुः। तन्मतानुसारेण सूत्राक्षराणि व्याख्यास्यन्ते।

( ब्र० सू० श्रीभाष्ये पृ० १ )

केवलं वृत्तिकार इति रूपेण—

(१) तदाह वृत्तिकारः 'वृत्तात् कर्माधिगमादनन्तरं ब्रह्मविविदिषा' इति। वक्ष्यति च कर्मब्रह्ममीमांसयोरैकशास्त्र्यम्—'संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेनेतिशास्त्रैकत्वसिद्धिः।' (ब्र० सू० श्रीभाष्ये तत्रैव)।

---

१९—व्यासबोधायनगुहदेवभारुचिब्रह्मानन्दिद्रविडाचार्यश्रीपराङ्कुशनाथयामुनमुनियतीश्वरप्रभृतीनां मतानुसारेण ... ( यतीन्द्रमतदीपिकायां पृ० २ )

२०—वे० स० पृ० ११४।

२१—द्रष्टव्या अस्मिन्नेवाध्याये उपरितना १६ सङ्ख्याङ्किता टिप्पणी।

२२—तदाह वृत्तिकारः—"वृत्तात् कर्माधिगमादनन्तरं ब्रह्मविविदिषा" इति वक्ष्यति च कर्मब्रह्ममीमांसयोरैकशास्त्र्यम्—'संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेनेति शास्त्रैकत्वसिद्धिः।"

( श्रीभाष्ये पृ० २ )

(२) वृत्तिरपि—'जगद्व्यापारवर्जं समानो ज्योतिषा इति ।'

( ब्र० सू० श्रीभाष्ये पृ० ७० )

(३) तदाह वृत्तिकार —'सता सोम्य तदा सम्पन्नो भवति इति सम्पत्त्यसम्पत्तिभ्यामेतदवसीयते, प्राज्ञेनात्मना संपरिष्वक्तः—इति चाह ।

( ब्र० सू० श्रीभा० पृ० १६४ )

(४) यथाह वृत्तकार.—'सर्वं खल्विति सर्वात्मा ब्रह्मेशः ।'

( ब्र० सू० श्रीभा० पृ० २३४ )

(५) तदाह वृत्तिकार —'भूमा त्वेवेति भूमा ब्रह्म, नामादिपरम्परया आत्मन उर्द्ध्वमस्योपदेशात् ।'

( ब्र० सू० श्रीभा० पृ० २८९ )

(६) तदाह वृत्तिकारः—'परिष हि महदादिषु सम्यग्यो ब्रह्मण एव सर्वत्र निचाय्यत्वम् ।

( ब्र० सू० श्रीभा० पृ० ३३२ )

इदं न निर्णीयते यदयं बाधायनः कल्पसूत्रीयो बोधायन, अथवा मीमांसासूत्रवृत्तिकार, यो हि शबरस्वामिना कुमारिलभट्टेन च गृहीतः (मी० भा० १।१।५ श्लोकवार्तिके ११ तथा १२ पृष्ठयोश्च, वि० वि० बनारस मुद्रिते) अथवा भाष्यकारं पूर्वोत्तरमीमांसयोराचार्यरूपेण च स्मृतो ब्रह्मसूत्रभाष्ये १।१।१९, १।१।२३, १।१।३१, १।२।२३। एवमेव ३।३।५३ ब्रह्मसूत्रशाङ्करभाष्य उपवर्षो ब्रह्मसूत्रवृत्तिकाररूपेण कर्ममीमांसासूत्रवृत्तिकाररूपेण च परिज्ञापितः। इद मतमानन्दगिरिस्तथा श्रीरामानन्दयतिश्च सम्मन्वाते ।

इत्थं श्रीबोधायनोपवर्षयो भिन्नत्व चाभिन्नत्व चायाति किन्तु विशिष्टाद्वैतस्य प्रमुखतम आचार्यो वेदान्तदेशिकोऽधिकदार्ढ्येन उपवर्षबोधायनोरैक्य वदति श्रीभाष्यस्य तत्त्वटीकायाम्—

"वृत्तिकारोपज्ञ स्वमतमाह-शब्दस्येति । अपि दूर्ध्वगसमुच्चयार्थं । अत्र शाबरभाष्यम्-गौरित्यत्र कः शब्द, गकारौकारविसर्जनीया.

"इति। वृत्तिकारस्य बोधायनस्यैव ह्युपवर्ष इति स्यान्नाम।"[२३]

बोधायनेनोभयमीमांसासूत्रे वृत्ति र्व्यरचीतिविषये श्रीकुप्पूस्वामिशास्त्रिणा साध्वनुसंहितम्। श्रावोधायनस्यैतिवृत्तविषयेऽपि तेन स्वीये "बोधायन एण्ड द्रविडाचार्य टू वेदान्तिन्स् ऐज प्रेस्पोज्ड बाई रामानुज" नामके निबन्धे बहु विचारितम्।[२४]

अनया वेदान्तदेशिकस्य ग्रन्थपर्यालोचनयेदं ज्ञायते यद् वृत्तिकारो विशिष्टाद्वैतस्य महानाचार्य आसीत्। अत्रेदं सम्भाव्यते यद् बोधायनो गोत्रनाम भवेदुपवर्षश्च व्यवहारनाम। यथान्यदार्शनिकाना द्वे त्रिणी वा नामान्युपलभ्यन्ते। काश्यपः कणाद उलूकश्चैकस्य, वात्स्यायनः पक्षिलस्वामी चैकस्य, अनेको ब्रह्मनन्दी टङ्कश्चैकस्य, अक्षपादो गौतमश्चैकस्य नामानि। अस्य वृत्तेर्नाम कृतकोटिरासीद् यथा प्रपञ्चहृदये "कृतकोटिनामधेयभाष्यं बोधायनेन कृतम्" इति वाक्येनावगम्यते।

केषाञ्चन विदुषामिदम् मतमस्ति यत् कृतकोटिनामा कोऽप्याचार्योऽभूत्। तेनैवोपरिसूचितं कृतकोटिनामकं मीमांसासूत्रभाष्यं (वृत्तिरूपम) व्यरचि। एतच्च द्रविडभाषामये त्रिंशद्गाथोपेते बौद्धमतानुसारिणि 'मणिमेखला' नामके ग्रन्थे निरूपितम्। तत्र हि

२३—श्रीभाष्यतत्त्वटीकाया भा० २ पृ० १४६, ओरियण्टल लाईब्रेरी इस्टीच्यूट न० ६, तेलगू प्रकाशनम्, १६०६ ई०, सुदर्शनप्रेस, काञ्चीवरम्।

२४—द्र० बोधायन एण्ड द्रविडाचार्य टू वेदान्तिन्स् ऐज प्रेसपोज्ड बाई रामानुज, "जर्नल आफ दी अमेरिकन ओरिएण्टल सोसाइटी १६११ पृ० १७ ले० श्रीकुप्पूस्वामिशास्त्री। रिपोर्ट आफ दी थर्ड ओरियण्टल कान्फ्रेंस, मद्रास १६२४ ई० पृ० ४६५–४७३ यत्रापि उपरितन एव लेखः प्रकाशितः। द्र०—श्रीश्रीरामशास्त्रिप्रणीता सिद्धित्रयभूमिका, पण्डितप्रकाशनम्, चौखम्बाबनारस मु०। द्र० श्री टी० एम्० त्रिपाठिलिखिता तर्कसंग्रहभूमिका पृ० १५-१६, गायकवाड ओरियण्टल सीरीज–३ प्र०।

लिखित यद् बौद्धमतावलम्बिनी मणिमेखलानाम्नी देवी प्रथम वैदिकसिद्धान्तविदमेत्य वैदिकप्रमाणानि पृष्टवती। तदा भगवान् वेदव्यासः दशप्रमाणानि, कृतकोटिरष्टौ प्रमाणानि, जैमिनिः षट्-प्रमाणान्याह। ततः शैवहैरण्यगर्भवैष्णवक्षपणकसाङ्ख्यवैशेषिक-चार्वाकादीनां समीपमेत्य क्रमशः प्रमाणविषयकं प्रश्नं पृष्टवती। अन्ते च स्वसिद्धान्तं निर्धारितवती।[२५]

किन्त्वयं कृतकोटिः उपवर्षो बोधायनो वा न भवितुमर्हति यतो ह्यन्यत्र कृतकोटिः व्यासजैमिनिसमवयस्कः कश्चिदाचार्यः, उपवर्षो बोधायनश्च श्रीमद्व्यासप्रणीतब्रह्मसूत्रस्य वृत्तिकर्तृत्वेन प्रसिद्धः।

वृत्तिकारस्य वृत्तित्वेनाभिज्ञातानि सप्तवाक्यानि ब्रह्मसूत्रस्य श्रीभाष्ये श्रीमद्रामानुजाचार्येण सङ्गृहीतानि। यथा—

१—तदाह वृत्तिकारः—'वृत्तात् कर्माधिगमादनन्तरं ब्रह्म-विविदिषा।'

( ब्र० सू० १।१।१ श्रीभाष्ये जिज्ञासाधिकरणे )

२—वक्ष्यति च कर्मब्रह्ममीमांसयोरैकशास्त्र्यम्—'संहितमेतत् शारीरकं जैमिनीयेन षोडशलक्षणेनेति शास्त्रैकत्वसिद्धिः।'

( तत्रैव )

३—'जगद्व्यापारवर्जं समानो ज्योतिषा।'

( तत्रैव )

४—तदाह वृत्तिकारः—'सता सोम्य तदा सम्पन्नो भवति इति सम्परिष्वक्तात्मनाश्यामेतदध्यवसीयते, प्राज्ञेनात्मना सम्परिष्वक्त इति चाह।'

( ब्र० सू० श्रीभाष्ये ईक्षत्यधिकरणे )

५—*यथाह वृत्तिकारः—'सर्वं खल्विति सर्वात्मा ब्रह्मेशः।'*

( ब्र० सू० श्रीभाष्ये सर्वत्र प्रसिद्धाधिकरणे )

---

२५—डा० श्री एस० के० अयङ्गारविरचिते 'मणिमेखले इन इट्स हिस्टोरिकल सेटिंग' नामके इङ्गलिशभाषामये ग्रन्थे पृ० १८६।

६—तदाह वृत्तिकार—'भूमा त्वेवेति भूमा ब्रह्म, नामादिपरम्परया आत्मन उद्र्ध्वमस्योपदेशात्।'

( ब्र० सू० श्रीभाष्ये भूमाधिकरणे )

७—तदाह वृत्तिकार—'अस्ति हि मन्त्रादिषु पञ्चमो ब्रह्मण एव सर्वत्र निचाय्यत्वात्।'

( ब्र० सू० श्रीभाष्ये मध्वधिकरणे )

अत्रत्यश्रीभाष्यस्य श्रुतप्रकाशिकाभावप्रकाशिकातत्त्वटीकास्वेतानि वृत्तिकारवाक्यत्वेन स्पष्टं व्याख्यातानि।

अत्रेदं विचारणीय यद् वस्तुतो वृत्तिकार उपवर्षो बोधायनश्चैक एवोत भिन्नौ, वस्तुतस्तयो र्भेदोऽस्ति न वेति च। यदि ब्रह्मसूत्रवृत्तिकार उपवर्ष एव बोधायनो यो हि भगवता शङ्करेण सम्प्रदायाचार्यत्वेन समादृतस्तदा असौ निर्विशेषाद्वैतवादी भविष्यति स च विशिष्टाद्वैतवादिना आगदरामानुजाचार्येण स्वोपजीव्यत्वेन न समाद्रियेत। यदा च विशिष्टाद्वैतवादिभिः स्वोपजीव्यत्वेनाभिपूजितो बोधायन एवोपवर्षः स्यात्तदा भगवता शङ्करेण सम्प्रदायाचार्यत्वेन स नाभिमन्येत। यथा भगवत्पादशङ्करेण ब्रह्मसूत्रभाष्ये समादृतः—

(१) 'वर्णा एव तु शब्द इति भगवानुपवर्षः।'

( ब्र० सू० १।३।२८ शा० भा० )

अत्र भामत्याम्—

'तदेतदाचार्यदेशीयमतं स्वमतमुपपादयन्नपाकरोति।'

अत्र-भाष्यरत्नप्रभायाम्—

'आचार्यसम्प्रदायोक्तिपूर्वकं सिद्धान्तयति।'

अत्र न्यायनिर्णये—

आचार्यसम्प्रदायोक्तिपूर्वकं सिद्धान्तमाह।'

(२) पुनश्च—'अत एव च भगवतोपवर्षेण प्रथमतन्त्र आत्मास्तित्वाभिधानप्रसक्तौ शारीरके वक्ष्याम इत्युद्धारः कृतः।

अत्र-भामत्याम्—'भगवतोपवर्षेणोद्धारोऽनत्र र्षस्य कृतः।'

भाष्यरत्नप्रभायाम्—'वृत्तिकारवचनं लिङ्गमाह।'

न्यायनिर्णये—'वृत्तिकारवचनं गमकमित्याह।'

अत्र श्रीशङ्कराचार्येण तथा व्याख्यातृभिश्च क्रमशः 'भगवता' शब्देन श्राचार्यसम्प्रदायोक्तशब्देन चोपवर्षं प्रति पूज्यभावोऽभिव्यक्तः। अन्नत्यं व्याख्यातृभिश्चोपवर्षस्य कृते वृत्तिकारेति विशेषणमपि प्रयुक्तम्।

एतस्माद् वृत्तिकारादुपवर्षादन्योऽपि कश्चिद् वृत्तिकारो भगवत्पादशङ्कराभिप्रेतः। यस्यापरस्य वृत्तिकारस्य मतस्य खण्डनं भगवाञ्छङ्करो ब्रह्मसूत्रभाष्ये श्रीमद्गीताभाष्ये च करोति। यथा—

(३) अपि च—'अक्षरात्परतः परः इत्यस्यानन्तरम्………… …………अन्ये पुनर्मन्यन्ते।'

( ब्र० सू० १।२।२३ शा० भा० )

अत्र भाष्यरत्नप्रभायाम्—

'वृत्तिकृन्मतेनादौ सूत्रं व्याचष्टे—अपि चेत्यादिना।'

'………………वृत्तिकृद्व्याख्या दूषयति—अन्ये पुनरिति।'

अत्र न्यायनिर्णये—'वृत्तिकृन्मतेन व्याकरोति—अपि चेति।'

'……………एकदेशिनं दूषयति अन्ये पुनरिति।'

अत्र भामत्याम्—'तदेतत्परमतेनाक्षेपसमाधानाभ्यां व्याख्याय स्वमतेन व्याचष्टे अन्ये पुन र्मन्यन्त इति।'

(४) एवमेव पुनश्च—'अन्ये तु वर्णयन्ति—द्विविधं हि शरीरं स्थूलं च…………तैस्त्वेतद् वक्तव्यम्।'

( ब्र० सू० १।४।१ शा० भा० )

अत्र भामत्याम्—'आचार्यदेशीयमतमाह— अन्ये त्विति।'

'एतद् दूषयति तैस्त्विति।'

अत्र भाष्यरत्नप्रभायाम्—'सूत्रद्वयस्य वृत्तिकृद्व्याख्यानमुत्थापयति अन्ये त्विति। ·· ····· ·· तद्व्याख्यानं दूषयति तैरिति।'

अत्र न्यायनिर्णये—'आचार्यदेशीयमतमुत्थापयति—अन्ये त्विति। ············वृत्तिकृता मतं निराचष्टे—नैरित्विति।'

(५) एवमेव—'ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासा।'

( ब्र० सू० १।१।१ शा० भा० )

अत्र भामत्याम—'षष्ठीसमासप्रदर्शनेन प्राचा वृत्तिकृता ब्रह्मणे जिज्ञासा ब्रह्मजिज्ञासेति चतुर्थीसमासः परास्तो वेदितव्यः।'

अत्र भाष्यरत्नप्रभायाम—

'वृत्त्यन्तरे शेषे षष्ठीत्युक्तं दूषयति-ब्रह्मण इति।'

अत्र न्यायनिर्णये—'वृत्तिकाराभीष्टचतुर्थीसमासनिरासेन षष्ठीसमासमाह—ब्रह्मण इति। ·············· अतो वृत्तिकारप्रयासो वृथेत्याह। ····· ·· ·· परपक्षनिषेधमुक्त्वा हेतुमाह।'

एवमेव श्रीमद्भगवद्गीताभाष्येऽपि भगवता शङ्करेण वृत्तिकाराभिप्रेतो ज्ञानकर्मसमुच्चयवादो निरस्तः। यथा हि—

'तत्र केचिदाहुः, सर्वकर्मसन्यासपूर्वकादात्मज्ञाननिष्ठामात्रादेव केवलात् कैवल्यं न प्राप्यत एव किं तर्हि अग्निहोत्रश्रौतस्मार्तकर्मसहिताज्ज्ञानात् कैवल्यप्राप्तिरिति············तदसत्।'

( श्री० गीतायाम् २।११ शा० भा० )

अत्रानन्दगिरिः—

'सम्प्रति वृत्तिकृतामभिप्रेतं निरसितुमनुवदति—तत्रेति।' पुनरप्यत्रैव—'वृत्तिकृतामभिप्रायं प्रत्याख्याय स्वाभिप्रेतं शास्त्रार्थं समर्थयते।' गीताभाष्येऽप्यत्रापि वृत्तिकारमतं श्रीशङ्कराचार्येण निरस्तम्।

अत्र आभ्याः श्रीशङ्कराचार्यकृतोपवर्षवृत्तिकारादरानादराभ्यां प्रतीयते यद् भगवदुपवर्षाचार्यादन्य एव कोऽपि वृत्तिकारो यस्य सिद्धान्तः पदे पदे भगवत्पादशङ्करेण खण्ड्यते।

श्रीमद्रामानुजाचार्येण च वृत्तिकारोऽभ्युपेयते । श्रीभाष्यस्य प्रारम्भादेव स्वमतं वृत्तिकारवाक्योद्धरणैः परिपोष्यते । वेदार्थसङ्ग्रहे ( पृ० १५४ ) स्वाचार्यपरम्पराया सर्वप्रथमं भगवद्विशेषित नाम श्रीबोधायनाचार्यस्यैव गृह्यते । तदनुयायिना श्रीश्रीनिवासदासेन च स्वाचार्यगणनायाम् ( य० म० दी० पृ० २ ) व्यासादनन्तर श्री-बोधायनस्यैव नाम परिगण्यते । विशिष्टाद्वैतस्य मान्यविदुषा वेदान्तदेशिकश्रीवेङ्कटनाथेन ब्रह्मसूत्रस्य ( १।३।२८ ) श्रीभाष्यतत्त्व-टीकायाम्—'वृत्तिकारोपज्ञं स्वमतमाह..................वृत्तिकारस्य बोधायनस्यैव ह्युपवर्ष इति स्यान्नाम इत्युक्तम् । अत्र 'स्वमतम' इत्यत्र स्वशब्देन श्रीरामानुजाचार्यो गृहीतः । एव रीत्या एभि विशिष्टा-द्वैताचार्यैः कृतभूरिसम्मानो वृत्तिकारो बोधायनो विशिष्टाद्वैत्येवेति दृढ प्रतीयते ।

अत्र पूर्वमुल्लिखितउद्धरणे रिद तु ज्ञायते यत्पूर्वोत्तरमीमांसयो-र्वृत्तिकार कश्चिदासीत्, पूर्वोत्तरमीमांसयो विद्वान् कश्चिदुपवर्षो-ऽप्यभूत् तथा कश्चिद् वेदान्ताचार्यो बोधायनोऽप्यजायत । किन्त्विमे त्रयाऽप्येक एवेति केनापि दृढेनाभिज्ञानेन न परिचीयते । केवल वेदान्तदेशिकस्यैवविधमेक वाक्य येन सन्देह उत्पद्यते । तदपि श्रीवेदान्तदेशिकवाक्य स्वयमेव सन्दिग्धम् । यथा—'वृत्तिकारस्य बोधायनस्यैव ह्युपवर्ष इति स्यान्नाम ।' अत्र 'स्यात्' इति क्रियया सम्भावना द्योत्यते । अस्या स्थितयाम् उपवर्षबोधायनयोरैक्य न निश्चितम् । एवमेव प्रामाणिकोद्धरणेषु कुत्रापि वृत्तिकृदुपवर्षः अथवा वृत्तिकृद् बोधायन इत्यादिप्रकारेण वृत्तिकृद्विशेषणविशिष्ट उपवर्षो बोधायनो वा न पठितः । श्रीरामशास्त्रिपोन्नहृमहोदयेन द्रविडा-त्रेयनामके ग्रन्थे वेदान्तदेशिकोक्ते 'बोधायनस्यैव ह्युपवर्ष इति स्यान्नाम' इति वाक्ये एवाशङ्का कृता तया साधितं यदिद वाक्य न तत्त्वटीकाकर्तु वेङ्कटनाथस्यापि तु तत्त्वटीकाग्रन्थमधीयानेन केनचिन् मूलग्रन्थपत्रपार्श्वभागे लिखिता टिप्पणीयम् । सैव टिप्पणी कालान्तरे

मुद्र्यमाणे नवीने ग्रन्थे केनापि कारणेन मूलमध्ये मुद्रिता । श्रीरामशास्त्रिणाश्च प्रमाणान्यप्युपन्यस्तानि ।[२६] श्रीशास्त्रिणोक्तग्रन्थे बहुयुक्तिपुरःसरमेतत्साधितं यद् बोधायनवृत्तिः कदाप्यासीन्नैव बोधायनसत्तायामपि सन्देह एव ।[२७] वृत्तिकाराश्चानेकेऽभूवन् । यथा श्रीमद्भगवद्गीताया आरम्भे उपोद्घातभाष्ये भगवता शङ्करेणोक्तम्—

'तदिदं गीताशास्त्रं समस्तवेदार्थसारसंग्रहभूतं दुर्विज्ञेयार्थम् । तदर्थाविष्करणायानेकैः विवृतपदपदार्थवाक्यार्थन्यायमप्यत्यन्तविरुद्धानेकार्थत्वेन लौकिकैः गृह्यमाणमुपलभ्याहं विवेकतोऽर्थनिर्धारणार्थं संक्षेपतो विवरणं करिष्यामि ।'

अत्र अनेकैः इति पदव्याख्याने आनन्दगिरिराह—

'गीताशास्त्रस्य प्रकटीकरणार्थं पदविभाग............ वृत्तिकारैः ............दायपरिचयशून्यैः समुच्चयासमुच्चयवादिभिः ।'

यथा च—अथातो ब्रह्मजिज्ञासा ( १।१।१ ) इत्यत्र ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासेति शाङ्करभाष्योक्त प्रतीकमादाय भामतीभाष्यरत्नप्रभान्यायनिर्णयव्याख्यानेषु 'प्राचाम्' 'वृत्तिकृताम्' 'वृत्त्यन्तरे' इत्यादिशब्दैः वृत्तिकारस्य बहुत्वं सूचितम् ।

एवमेव पञ्चपादिकायामपि—वृत्त्यन्तरे वर्णितम्, ग्रन्थैरपि स्ववृत्तौ वर्णितम्, वृत्त्यन्तरे तु देवदत्त का षष्ठी व्याख्याता इत्यादिभिर्वृत्तिकृतामनेकत्वं प्रकटितम् ।

इत्थमेव पूर्वमीमांसायामपि बहवो वृत्तिकाराः सन्ति । तेषु सम्प्रदायविरोधित्वेन केचन निरस्यन्ते सम्प्रदायानुकूल्येन च केचनाद्रियन्ते । यथा शबरस्वामिना भवदासादयो वृत्तिकारा निराक्रियन्ते,

---

२६—द्रविडाम्नायदनने पृ० ७५—९६ । ( संस्कृतकालेज, मैलापुर, मद्रास प्र० १९५१ ई०, ले० श्रीरामशास्त्री पौलस्त्य ।

२७—तत्रैव पृ० ७०—१०० ।

उपवर्षादयश्च भगवानुपवर्षः, क्व भगवानुपवर्ष इत्यादिरीत्या समाद्रियन्ते ।

अनयैव रीत्येदमनुमीयते यद् वेदान्तिष्वपि अद्वैतवादी वृत्तिकारोऽप्यस्तथा विशिष्टाद्वैतवादी वृत्तिकारोऽन्यः । अत एवैको वृत्तिकार उपवर्षो भगवता शङ्करेण सम्प्रदायाचार्यत्वेन प्रामाणिकत्वेन चाद्रियते, तथापरो वृत्तिकारो बोधायनः श्रीमद्रामानुजाचार्यादिभिर्विशिष्टाद्वैताचार्यैः स्वोपजीव्यत्वेन प्रामाणिकत्वेन च सम्पूज्यते । अतो भगवानुपवर्षोऽद्वैतवेदान्ताचार्य आसीदित्यवमीयते । अनेनैव च भगवता शङ्करेण स्फोटखण्डनावसरेऽप्यैव मतं प्रमाणत्वेनोद्धृतम् । अतोऽस्य मतेऽद्वैतवादानुकूलं ब्रह्मजीवजगदादिस्वरूपं कीदृगित्यग्रे निरूप्यते । ततो वृत्तिकारीयत्वेन यो हि सिद्धान्तो निरूपयिष्यते स वृत्तिकारभगवदुपवर्षस्यैव यथवा ग्रन्थस्य कस्यापि वृत्तिकारस्येति-निर्णेतुं न शक्यते । यतो हि अद्वैतग्रन्थेषूपवर्षस्य नाम वारद्वयमेवाख्यातमन्यत्र सर्वत्र तु वृत्तिकार इति पदेनैव संस्मृतः । इदमपि चिन्त्यते यद् वृत्तिकारस्यानुकूल. सिद्धान्तः शङ्कराचार्यादिभिः परिगृह्यते तथा वृत्तिकारीयः प्रतिकूलः सिद्धान्तो निरस्यते ।

### ब्रह्म

वृत्तिकारमते ब्रह्म द्विविधम्-परम् अपरं च । तत्र ब्रह्मविज्ञानेन यो हि ब्रह्मभावः सोऽपरस्यैव ब्रह्मणो विज्ञानेन ब्रह्मभावो जायते । एतद् बृहदारण्यकोपनिषच्छाङ्करभाष्ये आनन्दगिरिव्याख्याने च स्पष्टम् । तथाहि—

'ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेत् । अहं ब्रह्मास्मीति । तस्मात्तत्सर्वमभवत् तद् यो देवानां प्रत्यबुध्यत स एव············।

( बृ० आ० उ० १।४।१० पृ० १५० )

अत्र शाङ्करभाष्यम्—

यदि किमपि विज्ञायैव तद् ब्रह्म सर्वमभवत् पृच्छामः किमु तद् ब्रह्म अवेद् यस्मात् तत्सर्वमभवदिति । एव चोदिते सर्वदोषानागन्धितं प्रतिवचनमाह ब्रह्मापर सर्वभावस्य साध्यत्वोपपत्तेः । न हि परस्य ब्रह्मणः सर्वभावापत्ति विज्ञानसाध्या । विज्ञानसाध्या च सर्वभावापत्तिमाह, तस्मात् तत्सर्वमभवदिति । तस्माद् ब्रह्म वा इदमग्र आसीदित्यपर ब्रह्मेह भवितुमर्हति ।

( बृ० आ० उ० १।४।१० शा० भा० )

अत्रानन्दगिरिः—

'तत्र वृत्तिकृतां मतेन ब्रह्मशब्दार्थमाह–ब्रह्मेति । तस्य परिच्छिन्नत्वाज्ज्ञानेन सर्वभावस्य साध्यत्वसम्भवादिति ।'

तस्य अपरब्रह्मण इत्यर्थः ।

एतदनन्तर पुनरपि आनन्दगिरिराह—'न चासीदित्यतीतकालावच्छेदस्तिन्काले तस्मिन् युज्यते । समवर्ततेति च जन्ममात्र श्रूयते । कालात्मके तत्सम्बन्धस्य स्वाश्रयपराहतत्वान्मनुष्याणां प्रकृतत्वाच्च नापरं ब्रह्मेह ब्रह्मशब्दमित्यपरितोषाद् वृत्तिकारमत हित्वा………।'

( पृ० १५०-१५२ )

आत्मा

वृत्तिकार आत्मानमानन्दमय नाभिमनुते, किन्तु तन्मते ब्रह्मैवानन्दमयम् । यथा तैत्तिरीयोपनिषद्व्याख्यानेन प्रतीयते ।

'अन्योऽन्तर आत्मा आनन्दमय ।'

( तै० उ० ब्रह्मवल्ल्या पञ्चमोऽनुवाकः )

अत्र शाङ्करभाष्यम्—

"आनन्दमय इति कार्यात्मप्रतीतिरधिकारात् मयट्शब्दाच्च । आनन्दमया हि कार्यात्मानो भौतिका इहाधिकृताः । तस्मादधिकार-

पतितश्चायमानन्दमयः। मयट् चात्र विकारार्थे दृष्टो यथान्नमय इत्यत्र, तस्मात्कार्यात्मानन्दमयः प्रत्येतव्यः। संक्रमणाच्च आनन्दमयमात्मानमुपसंक्रमतीति वक्ष्यति। कार्यात्मनां च संक्रमणमनात्मनां दृष्टम्। संक्रमणकर्मत्वेन चानन्दमयः। यथात्र मयमात्मानमुपसंक्रमतीति। न चात्मन एवोपसंक्रमणम्। अधिकारविरोधादसंभवाच्च। न ह्यात्मनैवात्मन उपसंक्रमणं संभवति। स्वात्मनि भेदाभावात्।"

अत्रानन्दगिरिः—

"आनन्दमयः परमात्मेति वृत्तिकारैरुक्त तन्निषेधेन व्याचष्टे कार्यात्मप्रतीतिरित्यादिना।"

(तै० उ०पृ० ६७—६८,)

*ब्रह्मणे जिज्ञासा—ब्रह्मणो जिज्ञासा वा ब्रह्मजिज्ञासा*

'अथातो ब्रह्मजिज्ञासा (ब्र०सू० १।१।१) इति सूत्रे ब्रह्मजिज्ञासापदस्य *ब्रह्मणे जिज्ञासा ब्रह्मजिज्ञासेति चतुर्थीसमास वृत्तिकारो मन्यते* यथा धर्माय जिज्ञासा-धर्मजिज्ञासेति। तेन ब्रह्मार्थं ज्ञानमुत्तरमीमांसा प्रयोज्यमिति तन्मते गम्यते।

श्रीशङ्करमते ब्रह्मणो जिज्ञासा-ब्रह्मजिज्ञासेति कर्मषष्ठीसमासस्तेन ब्रह्मस्वरूपावगतिरुत्तरमीमांसाशास्त्रस्य प्रयोजनम्।

*सर्वभूतयोनिः*

'रूपोपन्यासाच्च' (ब्र०सू० १।२।२३) इतिसूत्रस्य शाङ्करभाष्ये 'अग्निर्मूर्धा० (मु०उ०२।१।४) इतिश्रुतेरर्थविचारावसरे महामहिमशाली परमात्मैव सर्वभूतयोनिरिति वृत्तिकृता मतमुक्तम्—"तस्मात् परमेश्वर एव भूतयोनि *र्नेतराविति गम्यते।'* श्रीशङ्करमते तु—'हिरण्यगर्भ एव भगवान् प्राणात्मना सर्वभूतान्तरः कार्यो निर्दिश्यत इति।'

### शब्दस्वरूपम्

'शब्द इति चेन्नातः प्रभवात्…… ……(ब्र०सू० १।३।२८) इति सूत्रस्य शाङ्करभाष्ये शब्दः स्फोटरूपो वर्णरूपो वेति विप्रतिपत्तौ उपवर्षाचार्यो वर्णरूपमेव शब्दमङ्गीकरोति, भगवान् शङ्कराचार्योऽपि तमेव पक्षमभिमनुते। तत्रोक्तं यत्—'वर्णा एव तु शब्द इति भगवानुपवर्षः.' अत्र भामत्यां रत्नप्रभायां च स्पष्टीकृतं यदेतन्मतमेव भगवत्पादश्रीशङ्करस्य सम्मतम्। यथा—तदेतदाचार्यदेशीयमतं स्वमतमुपपादयन्नाकरोति · ………(भा०) आचार्यस्यप्रवादोक्तिपूर्वकं सिद्धान्तयति। (र०प्र०)

### तत्र—अव्यक्तशब्दार्थः

'तदधीनत्वादर्थवत्' (ब्र०सू० १।४।३) इति सूत्रस्य शाङ्करभाष्ये उक्तं यद् वृत्तिकारमतेनात्र अव्यक्तशब्देन सूक्ष्मशरीरं गृह्यते। श्रीशङ्करमते तु स्थूलसूक्ष्मोभयं शरीरमव्यक्तशब्देन ग्राह्यम्।

### उत्तरमीमांसाप्रयोजनम्

'एक आत्मनः शरीरे भावात्' (ब्र० ३।३।५३) इति सूत्रस्य शाङ्करभाष्ये उक्तं यद् भगवदुपवर्षाचार्यमतं उत्तरमीमांसाया आत्मज्ञानमेव प्रयोजनम्। एतदेव मतं श्रीशङ्कराचार्योऽपि मन्यते। एवमेव ब्र० सू० १।१।१२ तथा १।१।१९ सूत्रभाष्ययोरपि वृत्तिकृन्मतभेदः प्रदर्शितः।

### ज्ञानकर्मसमुच्चयः

मोक्षसाधनविषये वृत्तिकारो ज्ञानकर्मसमुच्चयवाद्यासीत्। ब्रह्मसूत्रशाङ्करभाष्ये श्रीमद्भगवद्गीताशाङ्करभाष्ये चैतत्स्पष्टीकृतम्· ·

ब्रह्मसूत्रे १।१।४ शाङ्करभाष्यस्य 'अथापरेऽवतिष्ठन्ते' इति प्रतीकमादाय रत्नप्रभायामुक्तं यत्………

सम्प्रति सर्वेषां पदानां कार्यान्वितार्थे शक्तिमिच्छतां विधि-शेषत्वेन प्रत्यग् ब्रह्म वेदान्तैर्बोध्यते न स्वातन्त्र्येणेति वदतां वृत्तिकाराणां मतनिरासाय सूत्रस्य व्युत्पत्त्यभावभावाभ्यां संशये पूर्वपक्षमाह-प्रकारप इति। ब्रह्मणो वेदान्तवेद्यत्वोक्तौ वृत्तिकारा: पूर्वपक्षयन्तीत्यर्थः। उपासनातो मुक्तिः पूर्वपक्षे तत्त्वज्ञानादेवेति सिद्धान्ते ( पृ० ६६ नि०सा०प्रे०बम्बई प्र० )

एवमेवाग्रेऽपि—

पूर्वपक्षे वृत्तिकारमते जीवोपास्त्या प्रियादिप्राप्तिः फलम्, सिद्धान्ते तु ब्रह्मोपास्त्येति भेदः।

(आनन्दमयोऽभ्यासादितिसूत्रे १।१।१२ रत्नप्रभायां पृ० ११९-१२० ) पुनरपि—

'जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्'। इति ब्रह्मसूत्रस्य १।१।३१ शाङ्करभाष्ये-'अथवा नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् इत्यस्यायमन्योऽर्थः, न ब्रह्मवाक्येऽपि जीवमुख्यप्राणलिङ्गं विरुद्ध्यते। कथम् उपासा-त्रैविध्यात्।'

अत्र रत्नप्रभायाम्—स्वमतेन सूत्रं व्याख्याय वृत्तिकृन्मतेन व्याचष्टे-अथवेति—अत्र च भामती—इहतु ब्रह्मण एवत्रैविध्योपासनाय-विशिष्टस्य विधानान्न वाक्यभेद इत्यभिमानः प्राचां वृत्तिकृताम्। तदेतदालोचनीयं कथं न वाक्यभेद इति।

(पृ० १५८ नि० सा० प्रे० ब० मुद्रणे)

एवमेव श्रीमद्भगवद्गीतायामपि—

'अशोच्यानन्वशोचस्त्वम्' इति 'गीताश्लोके-शोकमोहौ तयोश्च सर्वकर्मसंन्यासपूर्वकादात्मज्ञानान्नान्यतो निवृत्तिरिति।············ तत्र केचिदाहुः······सर्वकर्मसंन्यासपूर्वकात्मज्ञाननिष्ठामात्रादेव केवलात् कैवल्यं न प्राप्यत एव किं तर्हि अग्निहोत्रादिश्रौतस्मार्तकर्मसहिता-

ज्ञानात् कैवल्यप्राप्तिरिति सर्वासु गीतासु निश्चितोऽर्थः इति ।'

( गी० २।२१ शा० भा० पृ० ४१ नि० सा० प्रे० व० मु० )

आनन्दगिरिः—सम्प्रति वृत्तिकृतामभिप्रेतं निराकर्तुमनुवदति ।

अग्रेऽपि—कर्मण्यकर्म यः पश्येत् इति गीताश्लोके······

'अत्र श्लोकोऽन्यथा व्याख्यातः कैश्चित् कथं नित्यानां किल कर्मणामीश्वरार्थेऽनुष्ठीयमानानां तत्फलाभावादकर्माणि तान्युच्यन्ते गौण्या वृत्त्या ।'

( गीता० ४-१८ शा० भा० )

आनन्दगिरिः—एवं स्वाभिप्रायेण श्लोकं व्याख्यायात्र वृत्तिकारव्याख्यानमुत्थापयति अत्रेति ।

( गीता० शा० भा० ४-१८ पृ० २०४ )

ज्ञानकर्मसमुच्चयवादश्च भगवता शङ्करेण ११८ पृष्ठे खण्डितः । छान्दोग्योपनिषदि शाङ्करभाष्ये वृत्तिकारस्य ज्ञानकर्मसमुच्चयपक्षमखण्डयत । तथा हि—

त्रयो धर्मस्कन्धा यज्ञोऽध्ययनं दानमिति प्रथमस्तप एव द्वितीयो ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन् सर्व एते पुण्यलोका भवन्ति ब्रह्मसंस्थोऽमृतत्वमेति ।

( छ० उ० २।२३।१ )

अत्र शाङ्करभाष्यम्—

"अत्राहुः केचिच्चतुर्णामाश्रमिणामविशेषेण स्वकर्मानुष्ठानात् पुण्यलोकतेहोक्ता ज्ञानवर्जितानां सर्व एते पुण्यलोका भवन्तीति । नात्र परिव्राडविशेषितः । परिव्राजकस्यापि ज्ञानयमा नियमाश्च तप एवेति । तप एव द्वितीय इत्यत्र तपःशब्देन परिव्राट्तापसौ गृहीतौ । अतस्तेषामेव चतुर्णां यो ब्रह्मसंस्थः प्रणवसेवकः सोऽमृतत्वमेति । चतुर्णामधिकृतत्वाविशेषात् । ब्रह्मसंस्थत्वेऽप्रतिषेधाच्च । स्वकर्म-

च्छिद्रे च ब्रह्मसंस्थतायां सामर्थ्योपपत्तेः । न च यववराहादिशब्दवद् ब्रह्मसंस्थशब्दः परिव्राजके रूढः । ब्रह्मणि संस्थितिनिमित्तमुपादाय प्रवृत्तत्वात् । न हि रूढिशब्दा निमित्तमुपाददते । सर्वेषां च ब्रह्मणि स्थितिरुपपद्यते । यत्र यत्र निमित्तमस्ति ब्रह्मणि संस्थितिस्तस्य तस्य निमित्तवतो वाचकं सन्तं ब्रह्मसंस्थशब्दं परिव्राडेकविषये संकोचे कारणाभावान्निरोद्धुमयुक्तम् ।

न च पारिव्राज्याश्रमधर्ममात्रेणामृतत्वम् । ज्ञानानर्थक्यप्रसङ्गात् । पारिव्राज्यधर्मयुक्तमेव ज्ञानममृतत्वसाधनमिति चेन्न । आश्रमधर्मत्वाविशेषात् । धर्मो वा ज्ञानविशिष्टोऽमृतत्वसाधनमित्येतदपि सर्वाश्रमधर्माणामविशिष्टम् । न च वचनमस्ति परिव्राजकस्यैव ब्रह्मसंस्थस्य मोक्षो नान्येषामिति । ज्ञानान्मोक्ष इति सर्वोपनिषदां सिद्धान्तः । तस्माद् य एव ब्रह्मसंस्थः स्वाश्रमविहितकर्मवतां सोऽमृतत्वमेतीति ।"

एतेन वृत्तिकृता ज्ञानकर्मसमुच्चयपक्षो भगवता शङ्करेणोपस्थापितः ।

आनन्दगिरिः—

स्वव्याख्यान वर्जितदोषमुक्त्वा ब्रह्मसंस्थोऽमृतत्वमेतीत्यत्र वृत्तिकारीयं व्याख्यानमुत्थापयति -अत्रेति ।

पूर्वोक्त वृत्तिकारीय मतं शाङ्करभाष्ये खण्डितम् । यथा हि ··· 'न । कर्मनिमित्तविद्याप्रत्यययो र्विरोधात् । कर्त्रादिकारकक्रियाफलभेदप्रत्ययवत्त्वं हि निमित्तमुपादायेद कुरु इद मा कार्षीरिति कर्मविधयः प्रवृत्ताः ।'

आनन्दगिरिः—

'ब्रह्मसंस्थः समुच्चयानुष्ठायीति वृत्तिकारमतं निराकरोति-न कर्मेति । कर्मनिमित्तप्रत्ययस्य शुद्धब्रह्मात्मतासाक्षात्कारस्य च मिथो विरोधान्न समुच्चयसिद्धिरिति । वस्तुसंग्रहवाक्यं विवृणोति कर्त्रादीति ।'

## वृत्तिकारभास्करयोः सिद्धान्तसाम्यम्

यतिपयस्थलेषु उपवर्षाचार्यसिद्धा तेन सह भास्कराचार्य-सिद्धा तस्य साम्य प्राप्यते । यथा शब्दविचारप्रसङ्गे आचार्यभास्कर स्वमतपुरस्थाप्योपवर्षाचार्यमतेन द्रढयति—

'न पुनरत्र शब्दोऽभिप्रेता वर्णात्मको लोकप्रसिद्धरुपवर्षाचार्य-वचनमाच्च ।'

( ब्र० सू० भा० भा० पृ० ६२ )

'गौरित्यत्र गकारौकारविसर्जनीया इति भगवानुपवर्ष० ।'

( तत्रैव पृ० ६३ )

तस्माद्वर्णा एव शब्दा इति स्थितम् ।'

( तत्रैव पृ० ६३ )

अत्रोपवर्षेण वृत्तिकार इत्यभिप्रत्येदमुद्धृतम् ।

यथा च—ब्रह्मशब्दार्थविचारप्रसङ्गे— ब्रह्म वा इदमग्र आसीत् ( बृ० आ० उ० १।४।१० ) बृहदारण्यकोपनिषद शाङ्करभाष्ये आनन्दगिरिव्याख्याने च वृत्तिकाराभिमत ब्रह्म द्विविधमुक्तम्—परम अपर च । एवमेव भास्कराचार्योऽपि स्वीये भाष्ये उक्तापर-ब्रह्मवद ब्रह्मशब्देनेश्वर गृह्णाति—

'ब्रह्मशब्देनेश्वरो गृह्यते न ब्राह्मणजातिवेदचतुर्मुखानां ग्रहण ब्रह्मलक्षणस्य वक्ष्यमाणत्वात ।'

( भा० भा० पृ० ६ )

*वृत्तिकारवद् भास्करोऽपि ज्ञानकर्मसमुच्चयमाश्रयते—*

यथा च तत्र द्वादशलक्षण्या विना धर्मविचारो न परिसमाप्यते तथा चतुर्लक्षण्या विना ब्रह्मविचार । प्रतिवाक्य च वचनव्यक्तीना दुर्विज्ञयत्वात् अज्ञानसशयविपर्यया न निवर्तरन् । प्रमाणलक्षण तु साधारणपरम । श्रुत्यादिप्रमाण चाविरुद्धमेकत्र स्थितम यत्राश्रीयते

अधीतवेदस्य श्रुतेरेकत्वात्। यदि पुनरेकत्रोक्तं प्रमाणमन्यत्राप्युच्येत पुनरुक्तमेव स्यात्। अत एवोपवर्षाचार्येणोक्तं प्रथमपादे—आत्मवादं तु शारीरके वक्ष्यामः।'

( प्र० सू० भा० भा० पृ० ६ )

अन्यत्रापि भास्कराचार्य उपवर्षमङ्गीकरोति—

'प्रथमपादे प्रत्यक्षादिप्रामाण्यनिरूपणं चोदना प्रामाण्यसिद्ध्यर्थं यत्तदुक्तं विशीर्णं स्यादुपवर्षाचार्यस्य शास्त्रसम्प्रदायप्रवर्तकस्यानु-वैचित्र्यं कृतमेवं विज्ञानवैचित्र्यं न स्वतो निराकारस्यानुवासना-निबन्धनं स्यादित्याशङ्क्य निराकरोति—न भावोऽनुपलब्धेः।'

( ब्र० सू० २।२।३० भास्करभाष्ये )

## वृत्तिकारमतस्यादरः

छान्दोग्योपनिषद्येकत्र वृत्तिकारमतमनुरुध्य शाङ्करभाष्यं प्रवृत्तं लक्ष्यते। छान्दोग्य आदौ प्रणवोपासनमुपक्रान्तं तत्र द्वितीये ग्रन्थे 'पुरुषस्य वाग्रसो वाच ऋग्रस ऋचः साम रसः साम्न उद्गीथो रस.' इत्युक्तम्। अत उद्‌र्वम् 'कतमा कतमर्क् कतमत् कतमत् साम कतमः कतम उद्गीथ इति विमृष्टं भवति।' इति चतुर्थो मन्त्र.। ( छा० उ० १।१।४ ) अत्र शाङ्करभाष्ये कतमशब्दस्य साधुत्वविचार आरब्धो यत्तत्कतमत्र डतमच् प्रत्ययः। यथा हि—

ननु बहूना जातिपरिप्रश्ने डतमच्। नह्यत्र ऋग्जातिबहुत्वं कथं डतमच् प्रयोगः। नैष दोष.। जातौ परिप्रश्नो जातिपरिप्रश्न इत्ये-तस्मिन् विग्रहे जातावृग्व्यक्तीनां बहुत्वोपपत्ते.। न तु जातेः परिप्रश्न इति विगृह्यते।'

भगवान्‌ आनन्दगिरिः—'यत्तु विग्रहान्तरं गृहीत्वा प्रश्नानुपपत्तिरित्युक्तं तत्राह नहीति……… ………। तत्र चानुपपत्ति यदि जातेरित्यत्र

व्यक्तीकरिष्यति। अस्मदिष्टविग्रहापरिग्रहे वृत्तिकारीयमुदाहरणं विरुध्यते।'

उपरितनपर्यालोचनयेदं स्पष्टीभवति यद् विविच्यमानेषु वृत्तिकारेषु उपवर्षबोधायनकृतकोटिनामधेयेषु कतृकोटिव्यासजैमिन्यादिसमकक्षः सूत्रकृदाचार्यो भवितुमर्हति न तु वेदान्तवृत्तिकारः। वृत्तिकारो बोधायनोऽपि विशिष्टाद्वैतवेदान्तिको भवितुमर्हति नाद्वैतवेदान्तिकः। केनाप्यद्वैतवेदान्तिकेन तस्य वाक्यस्योद्धरणं तस्य नाम वा न समाहृतम्। आचार्योपवर्ष एव वृत्तिकारोऽद्वैतवेदान्तिकः। यो हि भगवता शङ्करेण अद्वैतवादिभिः श्रीवाचस्पतिमिश्रानन्दगिरिरामानन्दयतिभिश्च सम्प्रदायाचार्यत्वेनाभिपूजितः। इदमप्यवधेयमेकं तत्त्वं यद् श्रीबोधायनाचार्यः केवलं विस्तीर्णां ब्रह्मसूत्रवृत्तिमेव कृतवान्। यथोक्तं श्रीमद्रामानुजाचार्येण—भगवद्बोधायनकृतां विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाचार्याः संचिक्षिपुः। (श्रीभाष्ये पृ० १) अन्यत्र च तस्य विंशत्यध्यायनिबद्धस्य मीमांसाशास्त्रस्य कृतकोटिनामधेयं भाष्यं बोधायनेन कृतमित्युक्तम्। (प्रपञ्चहृदये पृ० ३९) एवं श्रीबोधयनाचार्यो ब्रह्मसूत्रस्य वृत्तिकारः पूर्वोत्तरमीमांसाशास्त्रस्य भाष्यकर एवासीदिति प्रतीयते। श्रीयामुनाचार्येण श्रीश्रीनिवासदासाचार्येण च न कुत्रापि स्पष्टीकृतं यद् श्रीबोधायनः पूर्वोत्तरमीमांसयोर्वृत्तिकारः।

प्राचीनाचार्यो वेदान्तदेशिकः श्रीवेङ्कटनाथोऽपि सुस्पष्टमेन श्रीबोधायनं पूर्वोत्तरमीमांसाशास्त्रस्य व्याख्यातृत्वेनैवाभिज्ञापितवान्—'उभयाभिप्रायवेदी भगवान् बोधायनो विंशतिलक्षणीं मीमांसां परस्परसङ्गमार्थं विस्तरेण व्याख्यादिति वृद्धा विदामासुः।' (सेश्वरमीमांसायाम्) अत्र वृद्धा विदामासुरिति कथनेनेतिहासपरम्परामपि बोधितवान्। अतो बोधायनो न पूर्वोत्तरमीमांसयो-

वृत्तिकारोऽपि तु उपवर्ष एव पूर्वोत्तरमीमांसयो वृत्तिकारत्वेन प्रसिद्ध, य श्रीकुमारिलभट्टश्रीशङ्कराचार्यश्रीभट्टोम्बेक-प्रभृतय पूर्वोत्तरमीमांसका विंशत्यध्यायमीमांसावृत्तिकारत्वेनाभि ज्ञापितवन्त । अतोऽद्वैतवादस्वरूपनिरूपणावसरे वृत्तिकारोपवर्षस्यैव मत विमृश्यते । अद्वैतवेदान्तग्रन्थेषु वृत्तिकृत्तो वेदान्तविषयका ये विचारा उपलभ्यन्ते तानाधृत्योपवर्षाचार्यस्य ब्रह्मादिविषयको विचारोऽत्रोपस्थापित । वृत्तिकारा अप्यनेके सन्ति । तत केवल वृत्तिकृन्मतत्वेनोद्धृता सर्वे सिद्धान्ता उपवर्षाचार्यस्यैव सन्तीति निर्णेतु न शक्यते । कि तु पूर्वोत्तरमीमांसयो परमप्रसिद्धो वृत्तिकृदुपवर्ष एव । अत परमप्रसिद्धस्योपवर्षस्यैव मतमुपन्यस्त भवेत् तत्र तत्राद्वैतग्रन्थेष्विति वक्तु शक्यते ।

अत उपवर्षाचार्यमते ब्रह्म द्विविधम् परम् अपर चेति । अपरब्रह्मज्ञानेनैव ब्रह्मतादात्म्यभावरूपो मोक्षो न परब्रह्मज्ञानेन । अस्मिन् मते आनन्दमय ब्रह्मैव, आत्मा तु न । आत्मन ( जीवस्य ) आनन्दमयरूपत्वमत्र मते न स्वीक्रियते यथा—श्रीशङ्कराचार्यादिभि स्वीक्रियते । मोक्षसाधनविषये उपवर्षाचार्यो ज्ञानकर्मसमुच्चयपक्षमङ्गीकरोति । श्रीमदुपवर्षो मोक्षाय न केवल ज्ञान न वा केवल कर्म साधन मन्यते । मोक्षार्थं पूर्वोत्तरमीमांसयोरुभयोरावश्यकतामभिप्रैति । धर्माय जिज्ञासा धर्मजिज्ञासेतिवद् ब्रह्मण जिज्ञासा ब्रह्मजिज्ञासेति ब्रह्मसूत्रस्य प्रथमसूत्र अथातो ब्रह्मजिज्ञासा इत्यत्र वृत्तिकृता चतुर्थीसमास स्वीकृत । तेन वृत्तिकृन्मते वेदान्तशास्त्रेण ब्रह्मस्वरूपावगति नाभिप्रेतेत्यवगम्यते । तन्मते ब्रह्मार्थं ज्ञानमेव वेदान्तशास्त्रप्रयोज्यमित्यवसीयते । वृत्तिकारमते अग्निर्मूर्धा (मु०उ० २।१४) इत्यत्र पङ्क्त्या पृथिवीह्यष इत्यत्र सर्वभूतान्तरात्मा-इत्यस्यार्थविचारे परमात्मन एव महामहिमशालित्वात् जगत सर्वविचारकारणत्व तथा परमात्मैव सर्वभूतान्तर कार्यो निर्दिश्यत इति । श्रीशङ्करमते हिरण्यगर्भ एव भगवान् प्राणात्मना सर्वभूतान्तर कार्यो निर्दिश्यत इति सिद्धान्त ।

ब्रह्मसूत्रे प्रथमाध्याये चतुर्थपादस्यादावाशङ्कित यदव्यक्तशब्देन किं गृह्यते-सांख्यप्रसिद्ध प्रधानमुत शरीरम्। अत्राव्यक्तशब्देन सूक्ष्मशरीरमेव ग्राह्यमिति वृत्तिकारो मन्यते। श्रीशङ्कराचार्यस्त्वत्राव्यक्तशब्देन शरीरमात्रं गृह्णाति। जगतः शब्दप्रभवत्वमुपवर्षाचार्यो नाङ्गीकरोति स्फोटपक्षं च खण्डयति। श्रीशङ्करमतेऽप्येवमेव। उत्तरमीमांसा आत्मज्ञानप्रधानेति भगवदुपवर्षस्य मतम्। भगवान्शङ्करोऽप्येवमेव मनुते।

भास्कराचार्यः उपवर्षाचार्यस्य ब्रह्मणः परापरभेदम्, उपवर्षाभिमतस्फोटखण्डनम्, उपवर्षाङ्गीकृतज्ञानकर्मसमुच्चयपक्षं चानुचकार।

यद्यप्याचार्योपवर्षाद्वैतसिद्धान्ते तथाचार्यशङ्कराद्वैतसिद्धान्ते भूयान् भेदो लक्ष्यते तथाप्याचार्यशङ्कराद्वैतसिद्धान्ते उपवर्षाचार्याद्वैतसिद्धान्तस्य भूयान् प्रभावो लक्ष्यते।



॥ श्रीहरिः ॥

# पञ्चमोऽध्यायः

## ब्रह्मनन्दी ( नन्दी, आत्रेयः, टङ्कः )

वेदान्ताचार्येषु भगवत आचार्यशङ्करात् पूर्वं सर्वमान्यः प्रसिद्ध आचार्यो ब्रह्मनन्दी बभूव।[1] वेदान्तशास्त्रेष्वयं नन्दी, आत्रेय, इतिनामभ्यामपि[2] प्रथितः। केश्चन टङ्क इति नाम्नाप्ययमभिज्ञायते।[3] अनेन छान्दोग्योपनिषदो व्याख्यानरूपं वाक्यं विरचितम्।

---

१—(क) तथाप्याचार्यटङ्कभर्तृप्रपञ्चभर्तृमित्रभर्तृहरिब्रह्मदत्तशङ्करश्रीवत्साङ्कभास्करादिविरचितसितासितविविधनिबन्धन ।
( श्रीयामुनाचार्यस्य सिद्धित्रये पृ० ४ )

(ख) व्यासबोधायनगुहदेवभारुचिब्रह्मनन्दिद्रविडाचार्य - ।
( श्रीश्रीनिवासदासस्य यतीन्द्रमतदीपिकायाम् पृ० २ )

(ग) भगवद्बोधायनटङ्कद्रविडगुहदेव - ( श्रीरामानुजाचार्यस्य वेदार्थसंग्रहे पृ० १४८ )

अत्र तात्पर्यदी० टीकायां श्रीसुदर्शनसूरिणा—टङ्क एव ब्रह्मनन्दीति निश्चितम्।

२—(क) नन्दिकृत · ( संक्षेपशारीरके ३।२२१ श्रीरामतीर्थकृतव्याख्यायाम् )

(ख) आत्रेयवाक्यमपि सव्यवहारमात्रम्। (संक्षेपशारीरके ३।२१७)

(ग) 'वेदा तमूमिकुशलो मुनिरत्रिवंश्य ।' ( तत्रैव ३।२१९)

३—टङ्को ब्रह्मनन्दी एक एव व्यवहृत ( श्रीभाष्यस्य श्रुतप्रकाशिका टीकायां तत्त्वटीकायां च )।

तच्च वाक्यं संक्षिप्तरूपम्, तेनास्य वाक्यं सूत्रमित्यपि कथ्यते। अत एवायं छान्दोग्योपनिषदो व्याख्याभूतसूत्रकर्ता, व्याख्याभूतभाष्यकर्ता, वाक्यकर्ता, वृत्तिकारश्च कथ्यते। एतत् संक्षेपशारीरकस्य विभिन्नटीकासु श्रीमधुसूदनसरस्वतीरामतीर्थनृसिंहाश्रमैः भास्कराचार्येण स्वीयब्रह्मसूत्रभास्करभाष्ये ब्रह्मसूत्रशाङ्करभाष्यभामतीकल्पतरौ श्रीमदमलानन्देन चोल्लिखितम्।[४] श्रीसर्वज्ञात्ममुनिनास्य

४—(क) ब्रह्मनन्दिविरचितवाक्यानां सूत्ररूपाणाम्।
(सं० शा० ३।२१७ तथा ३।२२० श्री म० सू० स० कृतसार संग्रहटीकायाम्)।

(ख) ब्रह्मनन्दिना व्याख्यातॄणां छान्दोग्यभाष्य [illegible] उक्तम् इदमाह।
(सं० शा० ३।२१७ श्रीरामतीर्थकृता अन्वयार्थप्रकाशिका टीकायाम्)।

(ग) छान्दोग्यवाक्यकारेण ब्रह्मनन्दिना। (सं० शा० ३।२१७ म० सू० स० टी०)।

(घ) अयमेव छान्दोग्य वाक्यकारवृत्तिकाराभ्यां सम्प्रदायतः समाश्रितः। (ब्र० सू० १।४।२६ भास्करभाष्ये)

(ङ) छान्दोग्यभाष्यवार्तिककारो ब्रह्मनन्दी।' सं० शा० ३।२२० श्रीनृसिंहाश्रमकृततत्त्वबोधिनीटी०)

(च) छान्दोग्यवाक्यकारेण ब्रह्मनन्दिना। (ब्र० सू० १।४।२७ शा० भा० भामतीकल्पतरौ)।

(छ) ब्रह्मनन्दिवाक्येऽप्यनेकपक्षप्रतिभानम्। (सं० शा० ३।२१६ रामतीर्थकृतान्वयार्थटी०)

प्राचीनकाले वार्तिककारो वाक्यकारशब्देनापि व्यवहृयतेस्म। यथा तन्त्रवार्तिके वार्तिककारस्य कृते वाक्यकारशब्द प्रयुक्त— यथा एकत्वादयो विभक्त्यर्थास्तदा कर्मादयो विशेषणत्वेनेति द्वाभ्यामपि वाक्यकारभाष्यकाराभ्यां बहुवचनवार्तिके अनभिहितवार्तिके च कर्मत्वादिकं वाच्यत्वेनापेक्षा दूरमनुसृत्य ते निर्दोषत्वं वर्णितम्। (तन्त्रवार्तिके पृ० ६४८) अनेन वाक्यकारोऽपि ब्रह्मनन्दी वार्तिककारादभिन्न इति। द्र०

वंशपरिचयः सिद्धान्तश्च सक्षेपशारीरके स्पष्टीकृतौ । ऐतिह्यासिकैरस्य कालोऽद्यापि न निर्णीत. ।*

श्रीशङ्कराचार्यतोटकाचार्यसर्वज्ञात्ममुनिविमुक्तात्मरामानुजाचार्य-प्रकाशात्मसुदर्शनवेङ्कटनाथप्रभृतिभि सादरमस्य नाम मतञ्चोलिखिते।

भगवता शङ्करेण माण्डूक्यकारिकाया. भाष्ये वैतथ्यप्रकरणे 'आगमविद्' इति पदेनायमाचार्यो ब्रह्मनन्दी समादृतः । यथा—

'सिद्ध तु निवर्तकत्वादित्यागमविदां सूत्रम् ।'

( मा० का० वै० प्र० ३२ )

यद्यप्यस्य व्याख्यायाम् आनन्दगिरिणा आगमविद् इतिपदेन द्रविडाचार्यः सकेतितः — उक्तेऽर्थे द्रविडाचार्यसम्मतिमाह ।' इत्यादिना ।

किन्तु वस्तुतः 'सिद्धन्तु निवर्तकत्वात्' इति ।

सूत्र ब्रह्मनन्दिन एव । यतो हि छान्दोग्योपनिषद सूत्रकर्तृत्वेन वाक्यकारत्वेन च ब्रह्मनन्दी प्रसिद्धस्तथा श्रीविमुक्तात्मना इष्टसिद्धौ 'सिद्धन्तु निवर्तकत्वादिति चाह वाक्यकारं' ( इ० सि० पृ० ७२ ) इति प्रतिपादितम् । अन्य इष्टसिद्धिविवरणे श्रीज्ञानोत्तमेन स्पष्टीकृत यदिद सूत्र श्रीब्रह्मनन्दिन एव । यथाहि—

सिद्ध तत्त्वमस्यादिवाक्यस्य प्रामाण्य ब्रह्मात्मत्वावबुद्धयु-

श्रीवेन्केसकरमहोदयस्य इण्डियन फिलासफी भा० २ पृ० १५२, तथा ए. पी. वी० कर्माकरमहोदयस्य—वेदान्त कापन्टेटरस' नामको लेख, पञ्चम आल इण्डिया ओरियण्टल कान्फ्रेन्स, लाहौर १९३० ई० पृ० ६४० ।

५—डा० श्रीकुप्पुस्वामिशास्त्रिणा लेख — बोधायन एण्ड द्रविडाचार्य द्व वेदान्तिन्स एज प्रेसरीव्ड बाई रामानुज, रिपोर्ट आफ दी थर्ड ओरियण्टल कान्फ्रेंस मद्रास १९२४ ई० प्र० पृ० ४५८—४७२ । अपरश्च लेख जर्नल आफ दी अमेरिकन ओरियण्टल सोसाइटी १९११ ई० प्र० पृ० १० ।

त्पादनेनाविद्यानत्कार्यनिवर्तकत्वात् न तु सविज्जनकत्वादित्युक्त ब्रह्मनन्दिभिरित्यर्थः। ( इ० सि० वि० पृ० ८४३ )

एवमेव आनन्दबोधेन्द्रसरस्वतीभि र्योगवाशिष्ठे १२५ सर्गे—'तथा च द्रविडाचार्यैरप्युक्तम्—यद्यप्रमेयं ब्रह्म किमर्थं शास्त्रमिति चेत् सिद्धं तु निवर्तकत्वात्।' इत्युक्तम्। एतदपि पूर्वोक्तवद् भ्रममूलकमेव। यतो हि सिद्ध तु निवर्तकत्वादिति वाक्यस्य वाक्यकारवचनत्वात्।

'सिद्धं तु निवर्तकत्वात्' इति वाक्य पञ्चपादिकाविवरणे, श्रीतोटकाचार्यनिर्मिते श्रुतिसारसमुद्धरणे, खण्डनखण्डखाद्यस्य विद्यासागरीटीकायाम्, अद्वैतसिद्धौ, अद्वैतरत्नरक्षण चोद्धृतम्।[१]

६—(क) यथा पञ्चपादिकाविवरणे-यदा एकमेव द्रव्य भिन्नोपाधिपरिकल्पितप्रतिभासव्युदासेन प्रतिपाद्यते, तदा निवर्त्यविशेषादेव प्रामाण्यं न तु प्रमेयविशेषात्। तदुक्तम्-सिद्धातु निवर्तकत्वादिति। ( प० पा० वि० पृ० २३८ )

(ख) यथा तोट्काचार्यपद्यम्—

द्रविडोऽपि च तत्त्वमसीतिवचो विनिवर्तकमेव निरूपितवान्।'

शबरेण विवर्धितराजशिशो निजजन्मविवृत्ति निदर्शनत:॥

( श्रु० सा० स० २०६ श्लो० )

अस्यार्थ एव यत्—वाक्यकारस्य ब्रह्मनन्दिन निवर्तकत्वम् इति वचन भाष्यकारो द्रविडाचार्य शबरविवर्धितराजकुमारदृष्टान्तेन व्याख्यातवान्।

(ग) खण्डनखण्डखाद्यस्य विद्यासागरीटीकायाम्—शास्त्रप्रमाण्यस्यारोपितनिर्वर्तकत्वेन, आह च सिद्धतु निवर्तकत्वात्।

(ख० ख० खा०—वि० सा० टी० पृ० १)

(घ) 'अद्वैतसिद्धौ'—उक्त च कात्यायनेन सिद्ध तु निवर्तकत्वात्।

( अ० सि० अखण्डार्थवादे पृ० ७०८ )

(ङ) अद्वैतरत्नरक्षणे-तदुक्त कात्यायनेन व्याकरणवाक्यकारेण सिद्ध-तु निवर्तकत्वादिति। ( अ० र० र० पृ० ३७ )

इत्थञ्च भगवत्पादश्रीशङ्कराचार्यश्रीतोटकाचार्यपञ्चपादिका-विवरणकारश्रीप्रकाशात्मश्रीविमुक्तात्मप्रभृतिभिरद्वैताचार्यैः समादृत-वाक्योऽयं ब्रह्मनन्दी अद्वैतवाद्यासीत्। इतोऽप्यधिकतर सुस्पष्टमस्य अद्वैतवादिता कल्पतरुकारेण श्रीमदमलानन्देन प्रतिपादिता। अनेनब्रह्मनन्दिनो नामग्राहमुक्तं यद् ब्रह्मनन्दिनोऽभिमतोऽनिर्वचनीय पक्ष आसीत्। यथा हि—

ब्रह्मसूत्रे प्रकृत्यधिकरणे भामती—

'इयञ्च उपादानपरिणामादिभाषा न विकाराभिप्रायेण। अपि तु यथा सर्पस्योपादान रज्जु, एवं ब्रह्म जगदुपादानं द्रष्टव्यम्। न खलु नित्यस्य निष्कलस्य ब्रह्मणः सर्वात्मना एकदेशेन वा परिणामः सम्भवति नित्यत्वादनेकदेशत्वादित्युक्तम्।

(ब्र०सू०१-४-२७ भामती-पृ०४२९ नि०सा०प्रे०ब० १९१७ ई०)

अस्याः भामत्याः व्याख्यायां कल्पतरौ—

'भास्करगृहं बभ्राम परिणामशब्दो वृद्धमतं इति स प्रतिबोध-यति इयञ्चेति। ब्रह्मनन्दिना हि नामतोऽनिष्पाद्यत्वात् प्रवृत्यानर्थक्य तु सत्वाविशेषात्। इति सदसत्पक्षप्रतिक्षेपेण पूर्वपक्षमादर्श्य न सद्व्यवहारमात्रत्वात् इति अनिर्वचनीयता सिद्धान्तिना।

(ब्र० सू० १-४-२७ भा० कल्पतरौ)

---

अत्र अद्वैतसिद्धौ अद्वैतरत्नरक्षणे च श्रीमधुसूदनसरस्वतीभिः भ्रमेणैव कात्यायनस्य नामोल्लिखितम्। यतो हि वृद्धिरैचि इति सूत्रे कात्यायनस्य निवर्तकत्वात् सिद्धम् इति वार्तिकं प्रणीतम्। यथाहि-सिद्ध नित्यशब्दत्वात्। किमर्थं शास्त्रमिति चेत् निवर्त-कत्वात्। आत्मविषये निवर्तकत्वेन ब्रह्मनन्दिन एव वाक्य गौडपादीयमाण्डूक्यकारिकाभाष्यादिषु प्रसिद्धम्, कात्यायनवाक्य तु शब्दविषये निवर्तकम्।

वस्तुतस्तु श्रीब्रह्मनन्दिवाक्यम्—

'सिद्धं तु निवर्तकत्वात्', श्रीकात्यायनवार्तिकं तु 'निवर्तक-त्वात् सिद्धम्' इति। शब्दसादृश्येन शब्दक्रमे ध्यानाभावेन भ्रम भ्रमः।

एतत्समानाक्षरं संक्षेपशारीरके इत्थमस्ति—

छान्दोग्यवाक्यकारेण ब्रह्मनन्दिनापि पूर्वपक्षेऽसतः सतश्चोत्पत्तौ दोषमुक्त्वा सांव्यवहारिकमायामयत्वपक्षेण समाधानमुक्तम्। नासत उत्पत्तिः, ग्रनिरूप्यमाणत्वात्। नापि सत., प्रवृत्त्यानर्थक्यत्वात् सत्वाविशेषात्। ग्रभिव्यक्त्यर्थमिति चेत्। न तस्या ग्रपि सत्वात्। प्रवृत्तिनियमाच्च सदाभिव्यक्तिप्रसङ्गः। न संव्यवहारमात्रत्वादिति।

(सं० शा० ३।२१७)

एवमानिर्वचनीयपक्षस्वीकारेणाप्यस्य ब्रह्मनन्दिनोऽद्वैतसिद्धान्ते पक्षपातः प्रतीयते।

ग्रस्याद्वैतवादपक्षपातिता श्रीमधुसूदनसरस्वतीवाक्यैः सम्यगवगन्तुं शक्यते—

'प्रत्यक्तभेदसत्यत्वेऽभिनिविष्टचित्तस्य प्रथमत एव विवर्तवादप्रवेशो दुर्घट इति तदभिनिवेशत्याजनाय व्यवहारदृष्टिं रक्षता परिणामवादः प्रथमतः समुपपादितः। पश्चात् तद्दृष्टिमपि युक्त्यसहत्वेन शनैस्त्याजयित्वा ततोऽपि निकटं विवर्तवादमुपवर्ण्य शुद्धाद्वैतं रक्षतिस्म ब्रह्मनन्दी ततस्तस्य परिणामोक्तिरपि युक्तव सूत्रकारस्यैवेत्याशयेनाह। ब्रह्मनन्दिविवितवाक्यानां सूत्ररूपाणां भाष्यकर्ता द्रविडाचार्योऽपि ग्रद्वयब्रह्मणि प्रत्यगभेदो वाक्यकाराभिप्रेत इति कथयतिस्म। ततो व्यवसीयते ब्रह्मनन्दिनो विकारवादोऽनभिमत इत्याह'। (स० शा० ३–४० म० सू० स० टीका०)

एवमेव चित्सुखाचार्येणाप्ययमद्वैतवादित्वेन समादृतः—

तदुक्त–'सिद्धन्तु निवर्तकत्वात्' इति। इह तु कार्यकारणद्रव्यव्यतिरिक्तत्वे सति द्रव्याभिधायिपदयोः सामानाधिकरण्य सोऽयमितिवत् एकस्य द्रव्यस्य उपाधिपरिकल्पितभेदव्युदासेन एकद्रव्यपर्यवसायीति ग्रवगम्यते।'

(प० पा० वि० पृ० २३८)

एतत् पञ्चपादिकाविवरणव्याख्याने तत्त्वदीपने श्रीचित्सुखाचार्य-कथयति—

'नचैवं सति अपसिद्धान्तोऽपीत्याह-तदुक्तमिति ।'

अनेनोक्तार्थे ब्रह्मनन्दिसम्मत्या अपसिद्धान्तनिरासाद् ब्रह्मनन्दी अद्वैतवाद्यासीदिति स्पष्टम् ।

विशिष्टाद्वैतवादिभिराचार्यैरपि अब्रह्मनन्दिनो नाम आदरेण महता स्वीयसम्प्रदाये परिगृह्यते । यथा श्रीभाष्ये टिप्पणपरिशिष्टे ··· ·······'द्रविडाचार्यं वाक्यस्योपरि भाष्यकर्ता' इत्युक्तम् । अत्र वाक्यकारः श्रीब्रह्मनन्द्येवाभिमतः ।

यथा च तत्त्वटीकायाम्—

'अत्र भाष्यकारो ब्रह्मनन्दिवाक्यव्याख्याता द्रविडाचार्यं' इत्युक्तम् ।

यथा च श्रीवरदनाथेन मीमांसापादुकापरित्राणे—

'ब्रह्मनन्दिकृतानां छान्दोग्योपनिषद्वाक्यानां भाष्यं द्रविडाचार्य-कृतम् ।'

एवं यथास्य नाम निर्विशेषाद्वैतसम्प्रदाये विशिष्टाद्वैतसम्प्रदाये च तत्त्वाचार्ये सश्रद्धं परिगण्यते तथैवास्य वाक्यान्यपि उक्तोभय सम्प्रदाये प्रमाणत्वेनोद्धृतानि । विभिन्नवेदान्तग्रन्थेषु ब्रह्मनन्दिवाक्य-त्वेनाभिमतानि त्रिशद्वाक्यान्युपलभ्यन्ते । तत्र चाष्टौ वाक्यानि अद्वैतग्रन्थेषु तथा द्वाविंशतिर्वाक्यानि विशिष्टाद्वैतग्रन्थेषूद्धृतानि—

यथा–अद्वैतग्रन्थेषु—

( १ ) सिद्धं तु निवर्तकत्वात्— मण्डूक्योपनिषद् वे०प्र० ३२का० शाङ्करभाष्ये, तथैतद्भाष्यस्यानन्दगिरिव्याख्यायाम । ज्ञानवासिष्ठे निर्वाणप्रकरणपूर्वार्द्धे

| | |
|---|---|
| | १२५ सर्गे श्लोकव्याख्यायाम् आनन्दबोधेन्द्रसरस्वतीभिरुक्तम् । इष्टसिद्धौ पृ० ७२, श्रीज्ञनोत्तमकृते इष्टसिद्धिविवरणे, पञ्चपादिकाविवरणेऽष्टमवर्णके, (पृ० २३८) तत्वदीपने च । खण्डनखण्डखाद्यटीकायां विद्यासागर्याम् पृ० १ । |
| (२) परिणामस्तु स्यात् ··· ···, नासतोऽनिष्पाद्यत्वात् प्रवृत्त्यानर्थक्यं तु सत्त्वाविशेषात्, न सद्व्यवहारमात्रत्वात् । | कल्पतरौप्रकृत्यधिकरणे, (ब्र० सू० १।४।२६) |
| परिमाणस्तु स्याद् दध्यादिवत् । | तत्रैव भास्करभाष्ये । |
| (३) नासत उत्पत्तिरनिष्पाद्यत्वात् । | सक्षेपशारीरकटीकायाम्, श्रीमधुसूदनविरचितायां श्रीनृसिंहाश्रमविरचितायां च । |
| (४) नापि सतः प्रवृत्त्यानर्थक्यात् । | ,,   ,, |
| (५) सत्त्वाविशेषात् । | ,,   ,, |
| (६) अभिव्यक्त्यर्थमिति चेन्न तस्या अपि सत्त्वात् । | ,,   ,, |
| (७) प्रवृत्तिनित्यत्वाच्च सदाभिव्यक्तिप्रसङ्गः । | ,,   ,, |
| (८) न संव्यवहारमात्रत्वात् । | ,,   ,, |

*यथा च विशिष्टाद्वैतग्रन्थेषु*

| | |
|---|---|
| (१) युक्तं तद्गुणकोपासनात् । | रामानुजश्रीभाष्ये पृ० ८० । वेदार्थसङ्ग्रहे च पृ० १८७ । |
| (२) हिरण्मयः पुरुषो दृश्यत इति प्राज्ञस्सर्वान्निरस्य्यात् लोककामेशोपदेशात् तथोदयात् पाप्मनाम् । | वेदार्थसङ्ग्रहे पृ० ३३१–३३२ । |
| (३) स्याद्रूपं कृतकमनुग्रहार्थं तच्चेतनानामैश्वर्यात् । | " " |
| (४) रूपं वातीन्द्रियमन्तःकरणप्रत्यक्षं तन्निर्देशात् । | " " |
| (५) हिरण्मय इति रूपसामान्याच्चन्द्रमुखवत् । | वेदार्थसङ्ग्रहे पृ० ३३३ वेदान्तसारे च । |
| (६) प्रादित्यक्षिप्तं वा श्रोमत्वात् । | श्रुतप्रकाशिकायां तात्पर्यदीपिकायां च । श्रीसुदर्शनेनानूदितम् । वेदार्थसङ्ग्रहे पृ० ३२६ । |
| (७) तस्मिन् यदन्तरिति कामव्यपदेशः । | श्रीभाष्ये पृ० ३०० वेदार्थसङ्ग्रहे च पृ० २३९ । |
| (८) प्रात्मेत्येव तु गृह्णीयात् सर्वस्य तन्निष्पत्तेः । | श्रीभाष्ये पृ० ११६ । वेदार्थसङ्ग्रहे च पृ० २४४ । |
| (९) *पाप्मानः कालजरामृत्युशोकादयः सख्यातत्वात् ।* | श्रुतप्रकाशिकायाम् । |
| (१०) वेदनमुपासनं स्यात् तद्विषये श्रवणात् । | श्रीभाष्ये जिज्ञासाधिकरणे । |
| (११) सकृत्प्रत्ययं कुर्यात् शब्दार्थस्य कृतत्वात् प्रयाजादिवत् । | " " |

(१२) सिद्धं तु उपासनाशब्दात् । श्रीभाष्ये जिज्ञासाधिकरणे ।

(१३) *उपासनं स्यात् ध्रुवानुस्मृतिः दर्शनान्निर्वचनाच्च ।* ,, ,,

(१४) *तल्लब्धिर्विवेकविमोकाभ्यासक्रियाकल्याणानवसादानुद्धर्षेभ्यः सम्भवान्निर्वचनाच्च।* ,, ,,

(१५) जात्याश्रयनिमित्तादुष्टादन्नात् कायशुद्धिर्विवेकः । ,, ,,

(१६) विमोकः कामानभिष्वङ्गः । ,, ,,

(१७) आरम्भणसंशीलनं पुनः पुनरभ्यासः । ,, ,,

(१८) पञ्चमहायज्ञाद्यनुष्ठानं शक्तितः क्रिया । ,, ,,

(१९) *सत्यार्जवदयादानाहिंसानभिध्याः कल्याणानि ।* ,, ,,

(२०) देशकालवैगुण्यात् शोकवस्त्वाद्यनुस्मृतेश्च तज्जं दैन्यमभास्वरत्वं मनसोऽवसादः । ,, ,,

(२१) *तद् विपर्ययः तुष्टिरुद्धर्षः ।* श्रीभा० पृ० ९–१२ ।

(२२) ब्रह्मण्युपनिषण्णेत्युपनिषत्, उपनिषण्णत्वाद्वोपनिषत् । श्रीभाष्यश्रुतप्रका० पृ० ४ ।

एतेषां सूत्राणां वाक्यानां वार्थस्तत्रतत्र स्वसम्प्रदायानुसारं कृतः ।[७]

---

७—(क) द० श्रीरामशास्त्रि-पोलहम्विरचिते 'द्रविडाचार्यदर्शने' पृ० ३५–५३, संस्कृतकालेज, मैलापुर, मद्रास १९५७ ई० प्र० ।

एवञ्च निर्विशेषाद्वैतग्रन्थे विशिष्टाद्वैतग्रन्थे चाचार्यब्रह्मनन्दिनो वाक्योपलब्ध्याय निर्विशेषाद्वैतवादी उत विशिष्टाद्वैतवादीति शङ्का जायते। किन्तु पर्यालोचनया निर्विशेषाद्वैतग्रन्थे विशिष्टाद्वैतग्रन्थे चास्य वाक्योपलब्धत्वय हेतु र्यदनेन छान्दोग्योपनिषदो व्याख्यानभूत संक्षिप्त वाक्य कृतमिति यत् संक्षिप्तहेतुना सूत्रमपि कथ्यते। तथा छान्दोग्योपनिषद्यष्टावध्यायाः। तत्रादित पञ्चस्वध्यायेषु कर्म समृद्धिफलानि अङ्गावबद्धोपासनानि, अभ्युदयसाधनानि स्वतन्त्र प्रतीकोपासनानि, क्रममुक्तिफलान्यहङ्ग्रहोपासनानि इति त्रिविधो-पासनानि बहूनि मन्दमध्यमाधिकारिणा क्रमे उपदिष्टानि। पश्चात् पुनरवशिष्टेषु षष्ठसप्तमाष्टमाध्यायेषु क्रमश सद्विद्या, भूमविद्या, प्राजापत्यविद्या इति सद्योमुक्तिफलके सच्चिदानन्दात्मकनिर्गुण परमात्मविद्यानयमुत्तमाधिकारिणा क्रमे उपदिष्टम्। मध्ये पुनरष्ट-मेऽध्याये सगुणा दहरविद्यापि मध्यमाना क्रमे उपदिष्टा। एव छान्दोग्योपनिषदि सविशेषमुपास्य निर्विशेष ज्ञयमिति द्विरूप ब्रह्म निरूपितम्।

अतश्छान्दोग्योपनिषदो विवरणभूते श्रीब्रह्मनन्दिवाक्ये ( सूत्रे ) छान्दोग्योपनिषदनुसार द्विविधमपि ब्रह्म प्रतिपादितम्। तेनास्या-चार्यस्य ग्रन्थद्वये निर्विशेषपरक सविशेषपरक च द्विविध वाक्यमुप लभ्यते। तेनाय सन्देहो यदय निर्विशेषाद्वैतवादी उत विशिष्टा द्वैतवादीति व्यर्थ एव। छान्दोग्योपनिषदनुसारमुभयविध वाक्य वर्तते। अतो वाक्यमनुसृत्यास्याचार्यस्य निर्विशेषाद्वैतवादिता विशिष्टाद्वैत वादिता वा निर्णेतु न शक्यते।

---

(ख) द्र०—श्री एम० हरियन्नमहोदयस्यलेख — फ्रगमेन्ट्स आफ ब्रह्मनन्दिन्'—श्री के० बी० पाठककामामोरेशन ( पूना ) पृ० १५१–१५८ इत्यत्र प्रकाशित।

(ग) श्री एम० हरियन्नामहोदयेन — ब्रह्मदत्त एन ग्रोल्ड वेदान्ति। इति लेखे पि श्रीब्रह्मनन्दिविषय विवेचितम् पृ० १, अय लेख दीजनल आफ ओरियन्टल रिसर्च मद्रास १६२८ ई० प्र०।

*एतद्विषये विशिष्टाद्वैतवादिषु महान् भ्रमः*

विशिष्टाद्वैतवादिषु श्रीब्रह्मनन्दिविषये महान् भ्रमो वर्तते। अस्यापर नाम टङ्क इति पूर्वं लिखितम्। विशिष्टाद्वैतिनैकेनाचार्येणायं टङ्को निराद्रियतेऽपरेण च समाद्रियते। यथा श्रीयामुनाचार्येण सिद्धित्रये ....।

'तथापि आचार्यटङ्कभर्तृप्रपञ्चादिविरचितसितासितविविधनिबन्धनश्रद्धाविप्रलब्धबुद्धीनां कृते मया अत्र प्रकरणग्रन्थः क्रियते।

( सि० त्र० आदौ )

अत्र टङ्को निरादृतोऽपरिग्राह्य इत्युक्तम्।

तदनन्तर भगवता श्रीरामानुजाचार्येणायं टङ्कः समाद्रियते—

भगवद्बोधायनटङ्कद्रविडगुहदेवकपर्दिभारुचिप्रभृत्यविगीतशिष्टपरिगृहीतपुरातनवेदान्तव्याख्यानसुव्यक्तार्थश्रुतिनिकरनिदर्शितोऽयं पन्थाः। ( वेदार्थसङ्ग्रहे पृ० १४८ )

अत्र टङ्कः ( ब्रह्मनन्दी ) परिग्राह्य इत्युक्तम्।

एवमेव श्रीमद्वेङ्कटनाथेनातिसमादरेणायं टङ्कः स्मर्यते—

'वेदविदुत्तमैः सर्वैः बोधायनटङ्कद्रविडगुहदेवकपर्दिभारुचिप्रभृतिभिः.......। ( तत्त्वमुक्ताकलापस्य सर्वार्थसिद्धौ )

अत्रायं पूर्वोदीरित एव हेतुरवधार्यः। मन्दमध्यमोत्तमाधिकारिणां कृते उपासनाविशेषे द्विविधं च ब्रह्म वर्णितम्। तदाधारेणाचार्यटङ्केन वाक्यमपि निर्विशेषब्रह्मपरं सविशेषब्रह्मपरं च व्यरचि। सम्भाव्यते इदं यच्छ्रीयामुनेन निर्विशेषब्रह्मवादित्वेनायमपरिग्राह्य इत्युक्तम्। ततश्च परिवर्तितकाले तत्सम्प्रदायग्रन्थस्यानुपलब्ध्या यत् किमप्युपलब्धं वाक्यं सविशेषपरं दृष्ट्वा भगवता श्रीरामानुजाचार्येण वेङ्कटनाथादिभिश्च स्वयूथ्यत्वेनायं समादृतः परिग्राह्य इति चोक्तम्।

वस्तुतोऽयमद्वैतवाद्येव। भगवता श्रीशङ्कराचार्येण गौडपादीय-माण्डूक्यकारिकाभाष्ये सयद्धम् आगमवित् इति शब्देनाय स्मृतः —

'सिद्ध तु निवर्तकत्वात्' इत्यागमविदा सूत्रम्।'[८]

( मा० का० ३२ शा० भा० )

एवमेव सर्वज्ञात्ममुनि स्त्रोये संक्षेपशारीरकेऽप्याचार्यब्रह्मनन्दिनः कृते इमान् सुशब्दान् व्याहरत्—

'वेदान्तभूमिकुशलो मुनिरात्रिवंश्यः।'

( सं० शा० पृ० ३ श्लो० २१८ )

'अद्वैतमेव परिरक्षति वाक्यकारः।'

( तत्रैव २२० )

श्रीसुरेश्वराचार्येण बृहदारण्यकभाष्यवार्तिके स्वगुरुत्वेन ब्रह्म-नन्दिनः ( आत्रेयस्य ) अद्वैतसम्प्रदायप्रतिष्ठा प्रकटिता—

'तं वन्देऽत्रिकुलप्रसूतममलं वेधऽभिधं मोद्गुरुम्।'

( बृ० ग्रा० उ० भा० वा० )

*सिद्धान्तः*

आचार्यब्रह्मानन्दिनो वाक्यग्रन्थोऽधुना नोपलभ्यते। यत्र तत्र वेदान्तग्रन्थेषु कतिचिद् वाक्यानि तद्व्याख्यानानि चोपलभ्यन्ते। तदाधारेणास्य सिद्धान्तो निर्विशेषाद्वैतवाद एवासीदित्यवगन्तु

---

८—एतत्सूत्रविषये बहूनां भ्रमो यदिदं सूत्रं ब्रह्मनन्दिनो द्रविडाचार्यस्य कात्यायनस्य वा। माण्डूक्यकारिकायां ३२ शाङ्करभाष्यव्याख्याता आनन्दगिरिरिदं सूत्रं द्रविडाचार्यस्येत्याह, श्रीमधुसूदनसरस्वती अद्वैतसिद्धौ मङ्गलाचार्यवादऽद्वैतरत्नरक्षणेऽपि च कात्यायनस्येत्याह, ज्ञानवासिष्ठे निर्वाणप्रकरणस्य पूर्वार्द्धे तद्व्याख्याता आनन्दबोधेन्द्र-सरस्वती च द्रविडाचार्यस्येदं सूत्रमित्याह। अस्य समाधानम-स्मिन्नेवाध्याये आदौ लिखितम्। विशेषपरिज्ञानाय पौलहम् श्रीरामशास्त्रिविरचितं 'द्रविडात्रेयदर्शनं' नामको ग्रन्थः (पृ० ५७) द्रष्टव्यः।

शक्यते । यथा पञ्चपादिकाविवरणे ब्रह्मनन्दिसूत्रोद्धरणपूर्वकं साधित यदुपाधिकृत एव भेदो जगति लक्ष्यते, उपाधिव्युपगमे भेदरहितमेकमेव वस्तु पर्यवसीयते—

'यदा एकमेव द्रव्य भिन्नोपाधिपरिकल्पितभेदप्रतिभासव्युदासेन प्रतिपाद्यते, तदा निवर्त्यविशेषादेव प्रामाण्य न तु प्रमेयविशेषात् । तदुक्तम् 'सिद्धन्तु निवर्तकत्वात्' इति । इह तु कार्यकारणद्रव्यव्यतिरिक्तत्वे सति द्रव्याभिधायिपदयो. सामानाधिकरण्य सोऽयमितिवत् एकस्य द्रव्यस्य उपाधिपरिकल्पितभेदव्युदासेन एकद्रव्यपर्यवसायीति अवगम्यते ।

( प० पा० वि० व० पृ० २३८ )

अत्र तत्त्वदीपने—

'नचव सति अपसिद्धान्तोऽपीत्याह—तदुक्तमिति ।'

एव ब्रह्मनन्दिसम्मत्यापसिद्धान्तनिरासेन ब्रह्मनन्दिनोऽद्वैतवादिषु प्रामुख्य द्योत्यते ।

एवमेव खण्डनखण्डखाद्यस्य विद्यासागरीटीकायाम्—

'शास्त्रप्रामाण्यरज्वारोपितनिवर्तकत्वेन, आह च—'सिद्ध तु निवर्तकत्वाद् इति ।'

अत्र 'आरोपित'—इति पदेनाध्यासार्थलाभेनाद्वैतसिद्धान्त एव समर्थ्यते ।

सक्षेपशारीरकेऽन्वयार्थप्रकाशिकाटीकायां स्वामिश्रीरामतीर्थः स्पष्टमत्याद्वैतसिद्धान्त निरूपयति—

'अद्वैतमेव ब्रह्मनन्दिग्रन्थे विवक्षित न परिणामादित्येतत्तद्भाष्य-द्रविडाचार्यवचनादवसीयत इत्यत आह—अन्तर्गुणेति ।

(स० शा० अ०प्र० ३।२२१)

### ब्रह्मजीवयोरैक्यम्

आचार्यब्रह्मनन्दिमते ब्रह्मजीवयोरैक्य मन्यते । इदं स्वामि-

विमुक्तात्मना इष्टसिद्धौ तथा श्रीज्ञानोत्तमेन इष्टसिद्धिविवरणे स्पष्टीकृतम्—

'सिद्धं तु निवर्तकत्वादिति चोक्तं वाक्यकारैः।'

(इष्टसिद्धौ पृ० ७२)

अस्य व्याख्याने—

'सिद्धं तत्त्वमस्यादिशास्त्रस्य प्रामाण्यं ब्रह्मात्मैक्याभासबुद्ध्युत्पादनेनाविद्यातत्कार्यनिवर्तकत्वात्। न तु सविज्जनकत्वात् इत्युक्तं ब्रह्मनन्दिभिरित्यर्थः।'

( इष्टसिद्धिविवरणे पृ० ४४३ )

इदमेव तत्त्वं श्रीमधुसूदनसरस्वतीभिः 'सिद्धंतु निवर्तकत्वात्' इति ब्रह्मनन्दिसूत्रमुपादाय 'अद्वैतसिद्धौ' 'अद्वैतरत्नरक्षणे' चोक्तम्। तत्र केवलमतावदेवान्तरं यदिदं सूत्रं ब्रह्मनन्दिन इत्यनुक्त्वा कात्यायनस्येदमित्युक्तम्। वस्तुतस्तु कात्यायनस्य वार्त्तिकम् 'सिद्धन्तु निवर्तकत्वात्' इत्यस्ति। यथा 'वृद्धिरेचि' इति पाणिनिसूत्रे पातञ्जले महाभाष्ये उक्तम्—

'सिद्धन्तु नित्यशब्दत्वात्–किमर्थं शास्त्रमिति चेन्निवर्तकत्वात्सिद्धम्'। एवं व्यतिकरे ब्रह्मनन्दिकात्यायनयोर्वाक्ययोः पदयोर्विपर्यासेन श्रीमन्मधुसूदनसरस्वतीलेखने नाम वैपरीत्यं जातम्। एवमेवास्य लघुचन्द्रिकायामपि।

अद्वैतसिद्धौ श्रीमधुसूदनसरस्वतीनामिमे शब्दाः—

'एवं तत्त्वमसीतिवाक्यस्य सत्यादिवाक्यात् तदर्थाच्च प्रेमयावैलक्षण्येऽपि धर्मद्वयपरामर्शित्वेन भेदभ्रमनिवर्तकत्वात् प्रामाण्यम्। उक्तं च कात्यायनेन—'सिद्धन्तु निवर्तकत्वादिति'।'

(अद्वैतसिद्धौ—अखण्डार्थवादे पृ० ७०८)

यथा च—अद्वैतरत्नरक्षणे—

'नैव क्षेत्रज्ञेश्वरयोरत्यन्ताभेदे उपाधिभेदस्य च मिथ्यात्वे

तत्कृतदुःखादिसम्बन्धस्यापि मिथ्यात्वात् किन्निरासार्थं श्रवणमननादिकं स्यात्। नहि शशविषाणनिरासार्थं किमपि मृग्यते। तथा च तदनुष्ठानलक्षणक्रियाव्याघात इति चेन्न। अविद्यानिवृत्तेः प्रयोजनत्वात्। तदुक्तं कात्यायनेन व्याकरणवाक्यकारेण—'सिद्धन्तु निवर्तकत्वादिति।'

(अद्वैतरत्नलक्षणे पृ० ३७)

*विवर्तवादः*

आचार्यब्रह्मनन्दी विवर्तवादमङ्गीकरोति। एतच्च ब्रह्मसूत्रशाङ्करभाष्यस्य भामत्या कल्पतरौ परिमले च स्पष्टीकृतम्। यथा हि—

'इयञ्च उपादानपरिणामादिभाषा न विकाराभिप्रायेण, अपि तु यथा सर्पस्योपादानं रज्जुः, एवं ब्रह्म जगदुपादानं द्रष्टव्यम्। न खलु नित्यस्य निष्कलस्य ब्रह्मणः सर्वात्मना एकदेशेन वा परिणामः सम्भवति निरवयवत्वादनेकदेशत्वादित्युक्तम्।

( योनिश्च हि गीयते ब्र० सू० १।४।२७ भामत्याम् )

अत्र व्याख्यया कल्पतरावुक्तम्—

'भास्करस्त्विह बभ्राम योनिरिति परिणामादिति च सूत्रनिर्देशात्। छान्दोग्यवाक्यकारेण ब्रह्मनन्दिना परिणामस्तु स्यात् इत्यभिधानाच्च परिणामवादो वृद्धसम्मत इति। तं प्रतिबोधयति—इयञ्चेति। ब्रह्मनन्दिना हि—नासतोऽनिष्पाद्यत्वात् प्रवृत्यानर्थक्यं तु सत्वाविशेषात्, इति सदसत्पक्षनिक्षेपेण पूर्वपक्षमादर्श्य न सद्व्यवहारमात्रत्वात् इत्यनिर्वचनीयता सिद्धान्तिता। अतः परिणामस्तु इति मिथ्यापरिणामाभिप्रायम्, सूत्रं त्वेतदभिप्रायमेवेत्यर्थः।

अत्र परिमल—'नासत् इति यदसत् तत्सर्वदैवासदिति न स्यान्निष्पाद्यत्वम्। यत्सत् तत्सर्वदा सदिति निष्पत्त्यप्रवृत्त्यानर्थक्यम्।'

संक्षेपशारीरक आचार्यब्रह्मनन्दिद्रविडाचार्यसम्बन्धितः पञ्च-श्लोकाः सन्ति । एतेषां श्रीमधुसूदनसरस्वतीनृसिंहाश्रमरामतीर्थाग्नि-चित्पुरुषोत्तममिश्रविरचितव्याख्यानेष्वाचार्यब्रह्मनन्दिनो विवर्तवादः, अनिर्वचनीयपक्षः, संसारस्य मायामयत्वपक्षश्च वर्णिताः । इमे श्लोकाः—

आत्रेयवाक्यमपि संव्यवहारमात्रं,
कार्यं समस्तमिति नः कथयाम्बभूव ॥
सत्कार्यवादविषयो न हि दोषराशिः,
मायामये भवितुमुत्सहते विरोधात् ॥
(स० शा० ३-२१७)

काणाददर्शनसमाश्रयदोषराशिः,
दूरान्निरस्त इह संव्यवहारमात्रे ।
वेदान्तभूमिकुशलो मुनिरत्रिवंश्यः,
तेनाह कार्यमिह संव्यवहारमात्रम् ॥
(तत्रैव २१८)

पञ्चप्रपाठकनिबद्धमुदीरितं यत्,
तत्सत्यमेव खलु सत्यसमाश्रयत्वात् ।
तत्रैव यत्पुनरुवाच समुद्रफेन-
दृष्टान्तपूर्वकमदो व्यवहारदृष्ट्या ॥
(तत्रैव २१९)

पूर्वं विकारमुपवर्ण्य शनैश्शनैस्तद्,
दृष्टिं विसृज्य निकटं परिगृह्य तस्मात् ।
सर्वं विकारमथ संव्यवहारमात्र-
मद्वैतमेव परिरक्षति वाक्यकारः ॥
(तत्रैव २२०)

अन्तर्गुणा भगवती परदेवतेति,
प्रत्यग्गुणेति भगवानपि भाष्यकारः ।
आह स्म यत्तदिह निर्गुणवस्तुवादे,
सङ्गच्छते न तु पुनर्सगुणप्रवादे ॥

(तत्रैव २२१)

अत्र मधुसूदनसरस्वतीभि. सारसङ्ग्रहटीकायामित्थं श्रीब्रह्मनन्दि-मतमुपस्थापितम्—

'छान्दोग्यवाक्यकारेण ब्रह्मनन्दिना पूर्वपक्षे असत. सतश्चोत्पत्तौ दोषमुक्त्वा साव्यवहारिकमायामयत्वपक्षेण समाधानमुक्तम्—नासत उत्पत्तिरनिष्पाद्यत्वात्, नापि सतः प्रवृत्त्यानर्थक्यात । सत्त्वाविशेषात् अभिव्यक्त्यर्थमिति चेन्न तस्या अपि सत्त्वात् । प्रवृत्तिनित्यत्वाच्च सदाभिव्यक्तिप्रसङ्ग॰, न, संव्यवहारमात्रत्वात् ।' इत्यादि ।

एतेषा श्लोकाना व्याख्याया ब्रह्मनन्दिमतेन विवर्तवादस्योपस्था-पनम्, परिणामवादस्य खण्डनम्, अनिर्वचनीयत्वम्, सर्वस्यापि विकारस्य व्यवहारमात्रत्वम्, ब्रह्मण आत्मवस्तुनो वा परदेवतात्वम्, पारमार्थ्यञ्च प्रतिपादितम् ।

अत्र स्वीये व्याख्याने श्रीरामतीर्थेन श्री ब्रह्मनन्दिमते ससारस्य मायामयत्वम्, निर्गुणवस्तुवादश्चोपपादिते ।

अत्रैव स्वीये व्याख्याने श्रीनृसिंहाश्रमेण श्रीब्रह्मनन्दिमते ससारस्य मायामयत्वम्, विवर्तवादश्च वर्णिते यथा हि—

'विकारवादो व्यवहारदृष्ट्यैव व्युत्पादितः न तु सिद्धान्तत्वे-नेति ।' (सं॰ शा॰ ३।२२०)

आदौ विकारमुपवर्ण्य पश्चात्त परित्यज्य विवर्त्तवादमाश्रित्याद्वैत प्रतिपादितवान् ।' (स॰ शा॰ ३।२२०) 'यदाह भगवान् भाष्यकार-छान्दोग्योपनिषद्भाष्यकार तदपीह निर्गुणवस्तुवादे प्रत्यग्ब्रह्मणो-रत्यन्ताद्वैतवाद एव सगच्छते न तु सगुणवादे विकारवादे इत्यर्थः ।'

अज्ञानम्, अध्यासः, अनिर्वचनीयवादश्च

श्रीब्रह्मनन्दिन.—'सिद्धन्तु निवर्तकत्वात्' इतिवाक्यस्याद्वैतसम्प्रदायाचार्यैर्व्याख्याने यदवगम्यते तेनसोऽज्ञानम्, अध्यास च मनुतेस्म। यथा माण्डूक्यकारिकाग्रन्थस्य 'न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः। न मुमुक्षुर्नवै मुक्त इत्येषा परमार्थता। (मा० का० २।३२) इति कारिकाया भाष्येभगवता शङ्करेण—'सिद्धतु निवर्तकत्वात्, इत्यागमविदा सूत्रम्' इत्युक्तम्। अस्य शाङ्करवचनस्य व्याख्याने आनन्दगिरिराह—'ब्रह्मणि पदाना व्युत्पत्त्यभावेऽपि सिद्धमेव शास्त्रप्रामाण्यम्। अभावबोधनव्युत्पन्ननञ्—पदसंसृष्टैः स्थूलादिव्युत्पन्नपदै स्वाभाविक द्वैताभावबोधनेनाध्यस्तनिवर्तकत्वादितिसूत्रार्थः।

(अत्र आनन्दगिरिणेद सूत्रं द्रविडाचार्यस्येति लिखितं किन्तु सूत्रमेतद ब्रह्मनन्दिन इति पूर्वमस्मिन्नेवाध्याये साधितम्)

अनेन ब्रह्मनन्दिमतेऽज्ञानेन द्वैतबुद्धिरध्यासश्च जायेते इति सूच्यते। इदमेवैतत्सूत्रव्याख्याने योगवासिष्ठे आनन्दबोधेन्द्रसरस्वतीभिरप्युक्तम्—

'यद्यप्रमेय ब्रह्म किमर्थं शास्त्रमिति चेत् 'सिद्ध तु निवर्तकत्वात्।'
(योगवासिष्ठे निर्वाण प्रकरणपूर्वार्द्धे १२५ सर्गे)

श्रीज्ञानोत्तमेन इष्टसिद्धेर्विवरण तु स्पष्टमेवेद तत्त्वमुक्तम्—

'सिद्ध तत्त्वमस्यादिशास्त्रस्य प्रामाण्य ब्रह्मात्म्यैकयाभ्यासबुद्ध्युत्पादनेनाविद्यातत्कार्यनिवर्तकत्वात्।

(इ० सि० पृ० ७२)

पञ्चपादिकाविवरणे, तस्य व्याख्याने तत्त्वदीपने, खण्डनखण्डखाद्ये चैतत्सूत्रस्य यथाव्याख्यान तत्पूर्वमनुपदमेव लिखित तेनापि अज्ञानाध्यासयो. सिद्धिर्ब्रह्मनन्दिमते जायते।

आरम्भकृतेः परिणामात्। (ब्र० सू० १।४।२६) इति सूत्रस्य शाङ्करभाष्यभामत्या कल्पतरौ च 'परिणामस्तु स्यात्, नासतोऽनिरुपाख्यत्वात्, प्रवृत्त्यानर्थक्यं तु सत्त्वाविशेषात्, न सद्व्यवहारमात्रत्वात्।' इत्युक्त्या जगतः सद्व्यवहारमात्रकथनेन जगतोऽपारमार्थिकता अविद्यकता च प्रकटिता। अनेनापि श्रीब्रह्मनन्दिनो मतेऽज्ञानमध्यासश्चाभिप्रेते इत्यवगम्यते।

सक्षेपशारीरकस्य ३-२१७ श्लोकत आरभ्य क्रमशः षट्सु श्लोकेषु ३-२२ श्लोकपर्यन्त सतः परमार्थस्यैकस्यैव वस्तुनः प्रतिपादनेन जगतः साव्यवहारिकत्वप्रतिपादनेन च श्रीब्रह्मनन्दिनोऽज्ञानाध्यासपक्षौ प्रकटितौ।

श्रीब्रह्मनन्दिमते जगतोऽनिर्वचनीय पक्षोऽभिप्रेत। एतद्ब्रह्मसूत्रस्य १।४।२७ भामतीकल्पतरौ श्रीमदमलानन्देन ब्र० सू० १।४।२६ इति सूत्रस्य श्रीब्रह्मनन्दिसूत्रमुपस्थाप्य सिद्धान्तितम्। यथा—

'ब्रह्मनन्दिना हि—'नासतोऽनिरुपाख्यत्वात् प्रवृत्त्यानर्थक्य तु सत्त्वाविशेषात्,' इति सदसत्पक्षप्रतिक्षेपेण पूर्वपक्षमादर्श्य न सद्व्यवहारमात्रत्वात् इत्यनिर्वचनीयता सिद्धान्तिता।

(ब्र० सू० १।४।२७ भा० क०)

आचार्यब्रह्मनन्दिनो यान्यष्टौ वाक्यान्यद्वैतसम्प्रदायस्य भाष्यादिग्रन्थेषूपलभ्यन्ते यथात्र पूर्वमुल्लिखितानि, तैस्तु श्रीब्रह्मनन्दिनः सिद्धान्तोऽद्वैतानुकूलः प्रतीयत एव किन्तु यानि द्वाविंशतिवाक्यानि विशिष्टाद्वैतसम्प्रदायस्य ग्रन्थेषूपलभ्यन्ते तैरप्यस्याद्वैतसिद्धान्तस्य बाधो नोपलभ्यते। एषु द्वाविंशति वाक्येषु त्रयोदशवाक्यानि तु ब्रह्मसूत्रे (१।१।१) जिज्ञासाधिकरण एवोपलभ्यन्ते। तानि त्रयोदशवाक्यानि नाद्वैतस्य बाधकानि न विशिष्टाद्वैतस्य साधकानि, अपितु तानि सामान्यरूपेण सर्ववेदान्तसाधकानि। एषु वाक्येषु वेदनविवेकविमोकाभ्यासक्रियाकल्याणानवसादानुद्धर्षाः प्रतिपादिताः।

एभिर्नाद्वैतहानिर्न वा विशिष्टाद्वैतस्य विशेषतः सिद्धिः। एतानि वाक्यानि प्राय उपासनसाधकानि, अद्वैतवेदान्ते सत्त्वशुद्धयर्थमुपासनमङ्गीक्रियत एव, भगवता शङ्करेण छान्दोग्याद्युक्ता बह्व्य उपासना व्याख्याताश्च। अपराणि नव वाक्यानि ब्रह्मणः, सगुणत्वप्रतिपादकानि, उपासना प्रतिपादकानि च। तैरपि नाद्वैतसिद्धान्तविरोधः। ब्रह्मसूत्रे आनन्दमयाधिकरणारम्भणाधिकार्याधिकरणेषु परापरभेदेन ब्रह्म द्विविधं श्रीशङ्कराचार्येण निरूपितम्, तत्र परस्य ब्रह्मण, सगुणत्वमपि भगवत्पादेनोक्तम्। सगुणब्रह्मणो रूपविषये, उपासनाविषये फलविषये च भगवता शङ्करेणब्रह्मसूत्रे अन्तस्तद्धर्माधिकरणे व्यतिहाराधिकरणे च बहूपपादितम्। अतो विशिष्टाद्वैतग्रन्थेषुप्राप्तानि ब्रह्मनन्दिनो वाक्यानि यानि ब्रह्मणः सगुणपराण्युपासनापराणि च तानि सर्वाणि परस्य ब्रह्मणः कृते सत्त्वशुद्धयं चोपयोगीन्येवातो नैभिर्वाक्यैर्ब्रह्मनन्दिनोऽद्वैतसिद्धान्तहानिः।

एवमयमाचार्यब्रह्मनन्द्येव श्रीशङ्कराचार्यात्पूर्वतनेष्वद्वैतवेदान्ताचार्येष्वेवविध सर्वप्रथम आचार्यो यस्य ग्रन्थस्तु नोपलभ्यते किन्तु तद्ग्रन्थस्य त्रिंशद्वाक्यानि वेदान्तस्य प्रामाणिकग्रन्थेष्वद्यापि प्राप्यन्ते। एषु त्रिंशद्वाक्येषु द्वाविंशतिवाक्यानि विशिष्टाद्वैतवेदान्तग्रन्थेषु तथाष्टौ वाक्यान्यद्वैतवेदान्तग्रन्थेषु प्राप्यन्ते। यथापूर्वमुक्त विशिष्टाद्वैतवेदान्तग्रन्थेषूपलभ्यमानान्यपि द्वाविंशतिवाक्यानि नाद्वैतसिद्धान्तप्रतिकूलानि, पूर्वावस्थायामुपासनायाः, परापरब्रह्मणोर्मध्ये परे ब्रह्मणि सगुणत्वस्याद्वैताचार्यैरिष्टत्वात्। अद्वैतग्रन्थेषूपलभ्यमानानि त्वद्वैतानुकूलानि सन्त्येव।

एभि र्वाक्यैराचार्यब्रह्मनन्दिनो वेदान्तसिद्धान्त एव निश्चीयते। श्रीब्रह्मनन्दिमते ब्रह्म-सत्, निर्विशेषम्, नित्यम्, एकम्, चिद्रूपं च। जीवब्रह्मणोरैक्यम्। परमार्थावस्थायां जीवोऽपि ब्रह्मैव। अस्य मतेऽज्ञानाध्यासावुभौ मन्येते, अविद्याया अनिर्वचनीयत्वं विवर्तपक्षश्च

स्वीक्रियेते तया दृश्यमानमिद सर्वं न सत् नासत् कि त्वनिर्वचनीय मित्यङ्गीक्रियते। एतन्मते जगत् केवल मायामय सम्ब्रह्मारमात्रम।

श्रीब्रह्मनन्दिन —'सिद्ध तु निवतकत्वात्' इति सूत्रस्याद्वैतवेदा ने महानादर। अस्मिन्नेकस्मिन्नेव सूत्रेऽद्वैतवेदान्तस्य सारभूत सर्वंतत्र निहितम्। अस्य सूत्र वाक्य वा अद्वैतवेदान्तस्य विशिष्टाद्वैत वेदान्तस्य च प्रमुखा आचार्या समानरूपेण सगृह्णन्ति। यथाचार्य श्रीशङ्करतोटकायसर्वज्ञात्ममुनिवाचस्पतिमिश्रविमुक्तात्म श्रीरामानुज श्रीसुपदर्शनानन्दगिरिमधुसूदनपुरुषोत्तमरामतीर्थानन्दबोधन्द्रनृसि - हाश्रमप्रभृतिभिरस्य वाक्य प्रमाणत्वेनोपन्यस्त व्याख्यातञ्च। विशिष्टाद्वैतिभि सगृहीतान्यस्य वाक्यानि विशिष्टाद्वैतसिद्धान्तस्य साधकानि तु सन्ति किन्त्वद्वैतसिद्धान्तस्य बाधकानि न भवन्ति। अद्वैतवेदान्तिभि सगृहीतान्यस्य वाक्यानि तु विशिष्टाद्वैतविरोधीनि सन्ति विशिष्टाद्वैत च न समर्थयन्ति। अस्य वेदान्तसिद्धान्तो निर्विशेषब्रह्माद्वैतसिद्धान्त। अतो भगवत्पादश्रीशङ्कराचार्यस्य समानसिद्धान्तित्वेन सयुक्त्योऽस्य प्रतीयते।



# षष्ठोऽध्यायः

## श्रीद्रविडाचार्यः

तत्रभगवान् श्रीद्रविडाचार्यो भगवत्पादशङ्कराचार्यादितीव प्राचीनतमः। टङ्कापरनामधेय[1] श्रीब्रह्मनन्दिना छान्दोग्योपनिषदो व्याख्यानभूतं सूत्ररूपं वाक्यं व्यरचि। तस्यैव छान्दोग्योपनिषद्व्याख्यानभूतवाक्यस्य भाष्यकर्ताऽयं श्रीद्रविडाचार्यः। एतद् श्रीशङ्कराचार्यैः[2], श्रीवाचस्पतिमिश्रैः[3], आनन्दगिरि[4],मधुसूदनसरस्वती[5]नृसिंहाश्रम[6]रामतीर्थादिभिश्च[7] तत्र तत्र स्पष्टीकृतम्। श्री-

---

१—द्र० एतदर्थं 'आचार्यब्रह्मनन्दी' इति नामके पञ्चमाध्याये।

२—'वेदोपनिषदमितिव्याचक्षते।' (ब्र० सू० ३।३।२५ शा० भा०)
( अत्र छान्दोग्ये मधुविद्यागतं द्रविडाचार्यं व्याख्यातमिति श्रीशङ्कराचार्यस्याशय )।

३—'यथाहुर्द्रविडाचार्या।' (ब्र० सू० १।१।१४ शा० भा० भामत्याम्)

४—छान्दोग्यभाष्यस्योपक्रमे श्रीशङ्करेणोक्तम्'—'तस्या सक्षेपतोऽर्थजिज्ञासुभ्य ऋजुविवरणमल्पग्रन्थ इदमारभ्यते।'
अत्रानन्दगिरिराह—अथ पाठक्रममाश्रित्य द्राविड भाष्य प्रणीतम्।'
( छा० उ० शा० भा० पृ० १ )

५—'ब्रह्मनन्दिविरचितानां सूत्ररूपाणां भाष्यकर्ता द्रविडाचार्य।'
( सं० शा० ३।१२१ सा० सं० )

६—'भाष्यकृद्द्रविडाचार्यवचनात्।' ( सं० शा० ३।२२१ त० बो० )

७—'भगवान् सर्वज्ञो भाष्यकारो नन्दिकृतग्रन्थभाष्यकारो द्रविडाचार्य।'
( सं० शा० ३।१२१ रा० टी० )

सुरेश्वराचार्ये[८] श्रीसर्वज्ञात्ममुनिभिश्चास्य[९] मतमुल्लिखितम् ।

बृहदारण्यकोपनिषदोऽपि भाष्यं भगवता श्रीद्रविडाचार्येण विरचितमिति संकेतः प्राप्यते ।[१०]

भगवत्पादश्रीशङ्कराचार्यैः 'सम्प्रदायविद्'[११] 'आगमविद्'[१२] इत्यादिशब्दैः समादृतोऽयमद्वैतवेदान्तस्य महानाचार्य आसीत् ।

अस्य स्थितिकालविषये निश्चतरूपेण किमपि न ज्ञायते। टी० ए० श्री गोपीनाथरायमहोदयेन 'हिस्ट्री आफ श्री वैष्णवनामके' ग्रन्थेऽस्य स्थितिकालो नवमशताब्द्याः पूर्वार्द्धो निश्चितः कैश्चनाष्टमशताब्द्याः प्रथमपादो निश्चीयते, श्रीकुप्पूस्वामिशास्त्रिमहाभागैर्लिखितं यद् याथातथ्येनास्य कालोऽद्याप्यनिर्णीत एवेति ।[१३]

विशिष्टाद्वैतवादिभिरपि द्रविडाचार्यो महताऽऽदरेण स्मर्यते यथा श्रीमद्यामुनाचार्येण सिद्धित्रये,[१४] भगवता श्रीरामानुजेन वेदार्थसंग्रहे[१५] श्रीभाष्यटिप्पणपरिशिष्टे[१६] श्रीवेङ्कटनाथेन

---

८—बृ० भा० उ० शा० भा० वा० २।१।५०६½ पृ० ९७० ।

९—सं० शा० ३।२२१ ।

१०—द्र०—उपरितना ४ संख्याङ्किता टिप्पणी ।

११—बृ० भा० उ० २।१।२० शा० भाष्ये ।

१२—माण्डूक्यकारिकाया २।३२ तथा ३।२० कारिकयोः ।

१३—द्र०—'बोधायन एण्ड द्रविडाचार्य टू वेदान्तिन ऐज प्रेसपोज्ड बाई रामानुज, श्रीकुप्पूस्वामिशास्त्रिणामय लेख, थर्ड-ओरियण्टल कान्फ्रेंस, मद्रास १९२४ ई० प्रकाशित पृ० ४६५-४७२ ।

१४—यद्यपि भगवता बादरायणेनेदमर्थमेव सूत्राणि प्रणीतानि विवृतानि च तानि परिमितगम्भीरभाषिणा द्रमिडभाष्यकृता ... ।'
( सिद्धित्रये पृ० ५ )

१५—'भगवद्बोधायनटङ्कद्रविड' ... ।' ( वेदार्थसंग्रह पृ० १४८ )

१६—द्रविडाचार्य वाक्यस्योपरि भाष्यकृता । ( श्रीभाष्य टिप्पण परिशिष्ट )।

तत्त्वटीकायां[१७] सर्वार्थसिद्धौ[१८] यतिराजसप्ततौ च[१९] ब्रह्मनन्दि-प्रणीतच्छान्दोग्यव्याख्यानभूतवाक्यस्य भाष्यकर्तृत्वेनायं द्रविडाचार्यः समुल्लिखितः।

श्रीरङ्गरामानुजेन[२०], श्रीमेघनादारिसूरिणा[२१], श्रीवरदनाथपादेन[२२] च द्रविडाचार्यो विशिष्टाद्वैतवादित्वेन समादृतः।

इत्यमस्य यथा निर्विशेषाद्वैतसम्प्रदाये विशिष्टाद्वैतसम्प्रदाये चोभयत्र आचार्यत्वेन नाम परिगणितं तथैवोभयसम्प्रदायग्रन्थेषु प्रमाणत्वेन चास्य मत वाक्यानि चोद्धृतानि। विभिन्नवेदान्तग्रन्थेषु द्रविडाचार्यवाक्यत्वेनाभिज्ञातानि सप्तदश वाक्यानि लभ्यन्ते, तत्र षड्वाक्यानि निर्विशेषाद्वैतग्रन्थेषु तथैकादश वाक्यानि विशिष्टाद्वैतग्रन्थेषु।

यथा—अद्वैतग्रन्थेषु—

(१) व्याधकुलसंवर्द्धितराजकुमार-कथा। — बृहदारण्यकोपनिषद् शाङ्करभाष्ये, तत्रस्यबृहदारण्यकभाष्यवार्त्तिके च। श्रीतोटकाचार्यकृतश्रुतिसार-समुद्धरणे, तथा आपस्तम्बधर्म-सूत्रस्योज्ज्वलाभिधाया वृत्तौ।

---

१७—'अत्र भाष्यकारो ब्रह्मनन्दिवाक्यव्याख्याता द्रविडाचार्यः।' (तत्त्व-टीकायाम्)

१८—शिष्टाः बोधायनटङ्कद्रमिडादयः। (सर्वार्थसिद्धौ)

१९—निरातङ्का टङ्कद्रमिडगुहदेवप्रभृतयः। (यतिराजसप्ततौ)

२०—भगवद्बोधायनवृत्तिसङ्ग्रहात्मकटङ्कद्रमिडादिपूर्वाचार्यग्रन्थमूलकत्वेन" ......'पूर्वाचार्यशब्देन बोधायनटङ्कद्रमिडादयो विवक्षिताः'। (श्रीरङ्गरामानुजेन—मूलभावप्रकाशिकायाम्)

२१—द्रमिडाचार्यादिभिः सुरक्षिताम् अप्रमादेन रक्षितां प्रमादे हि सम्प्रदाय-विच्छेदः। (श्रीमेघनादारिसूरिणा नयनप्रकाशिकायाम्)

२२—ब्रह्मनन्दिकृतना छान्दोग्योपनिषद्वाक्याना भाष्यं द्रमिडाचार्यकृतम्। श्रीवरदनाथेन—मीमांसापादुकापरित्राणे।

| | |
|---|---|
| (२) अत्रोक्तः परिहार आचार्यैः । | छान्दोग्योपनिषद् श्रीशाङ्करभाष्ये तृतीयाध्याये मधुविद्याप्रकरणे । एतद्भाष्यटीकायाम् आनन्दगिरिरित्थं द्रविडाचार्यवाक्यमुदाहृतवान्—'यदा अमरावती शून्या स्यात् तदा हि तत्र प्रतिपुरस्तादुदेतीति प्रयोगशून्यत्वात् वसूनां भोगान्तः । एवमुत्तरासां पुरीणां विनाशे द्विगुणकालेन रुद्रादीनां भोगच्युतिः ।' |
| (३) तत्राहुराचार्या—'हंसवचनश्रवणात्सुगेनाविवेको'त्यादि द्रविडाचार्यवाक्यमुदाहृतम् । | छान्दोग्योपनिषद् श्रीशाङ्करभाष्ये चतुर्थाध्याये संवर्गविद्याप्रकरणे । |
| (४) 'य एतामेव ब्रह्मोपनिषदं वेद' ( इत्यत्र हि वेदोपनिषदमिति व्याचक्षते इति वाक्येन द्रविडाचार्यव्याख्या अनूदिता । ) | ब्रह्मसूत्रे ज्योतिश्चरणाधिकरणे शाङ्करभाष्ये । |
| (५) 'संहरणाद्वा संवरणाद्वा स्वात्मीभावाद् वायुः संवर्गः । इति द्रविडाचार्यवाक्यमुक्तम् । | ब्रह्मसूत्रे समन्वयाधिकरणे भामत्याम् । |
| (६) अन्तर्गुणाभगवती परदेवतेति, प्रत्यग्गुणेति भगवानपि भाष्यकार । अत्र 'भगवान | संक्षेपशारीरके ३–२२१ भगवता श्रीसुरेश्वराचार्येण अत्रत्यटीका- कृद्भिश्च । तथा सिद्धान्तसिद्धा- |

| | |
|---|---|
| भाष्यकार' इत्येनेन द्रविडाचार्य एवाभिमतः । | ऽन्यत्रेऽपि एतत्समानार्थकं वाक्यमुपलभ्यते । |
| यथा च विशिष्टाद्वैतग्रन्थेषु— | |
| (१) 'व्याख्यातं च द्रविडाचार्येण विद्याविकल्पं वदता। यद्यपि सच्चित्तो न निर्भु ग्णदैवतं गुणगण मनसानुधावेत् तथाप्यन्तर्गु णामेव देवतां भजत इति तत्रापि सगुणैव देवता प्राप्यते ।' | श्री भाष्ये—पृ० ८० वेदार्थसंग्रहे च पृ० १८७ । |
| (२) अन्नमैव विश्वसृजो रूपं तत्, न चक्षुषा ग्राह्यम् मनसा त्वकलुषेण साधनान्तरवता गृह्यते 'न चक्षुषा नापि वाचा'—'मनसा तु विशुद्धेन' इति श्रुतेः । न ह्यरूपाया देवताया रूपमुपदिश्यते । यथाभूतवादि हि शास्त्रम् । यथा महारजनं वासः, वेदाहमेतं पुरुषं महान्तम्, आदित्यवर्णं तमसः परस्तात् इति प्रकरणान्तरनिर्देशाच्च साक्षिणः । | वेदार्थसंग्रहे पृ० ३३२ ग्रन्थेव किञ्चिदक्षरयोजनया वेदान्तसारे च । |
| (३) न मयडत्र विकारमादाय प्रयुज्यते अनारम्यत्वादात्मनः । | वेदार्थसङ्ग्रहे पृ० ३३३ वेदान्तसारे च |

(४) फलसंविन्त्सया हि कर्मभिरात्मानं पिप्रीपन्तीति स प्रीतोऽल फलायेति शास्त्रमर्यादा । ( अयमनुवादः ) वेदार्थसङ्ग्रहे—पृ० २९५

(५) तस्याज्ञया धावति वायुः नद्यः स्रवन्ति, तेन च कृतसीमानो जलाशयाः समदा इव मेषविसर्पितं कुर्वन्ति, तत्संकल्पनिबन्धना हीमे लोकाः, न च्यवन्ते न स्फुटन्ते, स्वशासनानुवर्तिनं ज्ञात्वा कारुण्यात् स भगवाननुगृह्णाति वर्धयेत् तं तद् विद्वान् कर्मदक्षः । वेदार्थसङ्ग्रहे—३०४१

(६) यथालोके राजा—तथासौ लोकेश्वरो भ्रमत्स्वसामर्थ्यचामरो दोषैर्न स्पृश्यते रक्षति च लोकान् ब्रह्मलोकादीन् भोगांश्चाविश्वजनोपभोग्यान् धारयति । श्रीभाष्ये—४१८ । ( भोगमात्रसाम्यलिङ्गाधिकरणे )

(७) ऋणं हि वै जायते इतिश्रुतेः इत्युपश्रम्यवद्यन्यवादनस्तुतिरूपं वाक्यं, तथापि नासता स्तुतिरुपपद्यते इति द्रमिडभाष्ये उक्तम् । वेदार्थसङ्ग्रहे—२७८ ।

(८) देवतासायुज्यादशरीरस्यापि

देवतावत् सर्वार्थसिद्धिः
स्यात् । श्रीभाष्ये—७९ ।

(९) आहारशुद्धौ सत्वशुद्धिः
सत्वशुद्धौ ध्रुवा स्मृतिः
शास्त्रअभासीत, सदा तद्भा-
वभावित, क्रियावानेष
ब्रह्मविदां वरिष्ठः, तमेत
वेदानुवचनेन ब्राह्मणा विवि-
दिषन्ति यज्ञेन दानेन तप-
साऽनाशकेन, सत्येन लभ्य,
तेषामेवैष विरजो ब्रह्म-
लोक, नायमा मा बलहा-
नेन लभ्य, शान्तो दान्त,
इति नियमनानि द्रमिड-
भाष्योक्तानि । श्रीभाष्ये—११–१२ ।

(१०) गहने ह्येव सन्निविष्टा । श्रीभाष्ये श्रुतप्रकाशिकायाम्—
पृ० ४ ।

(११) नम प्रवरैकगुणालयाय
ऋषिपरमसकुलबीजकुम्भ —
भूताय भुवनकोशस्य गो
प्त्रे ब्रह्मणे नमो जैमिनये
वेदरहस्यसपुटनिगूढवि —
स्फारयित्रे न्यायप्रज्वलित- श्रीभाष्ये श्रुतप्रकाशिकायाम् तत्व-
चेतसे नमोऽस्त्वाचार्येभ्य । टीकायां च—पृ० ४ ।

एव निर्विशेषाद्वैतग्रन्थेषु विशिष्टाद्वैतग्रन्थेषु चोभयत्र द्रविडा
चार्यवाक्यानामुपलब्ध्या विचार्य इद निर्णतव्य यदय द्रविडाचार्यो

निर्विशेषाद्वैतवादी उत विशिष्टाद्वैतवादीति । एतेषां वाक्यानामर्थ आचार्यैः स्वस्वसम्प्रदायानुसारं कृतः ।"

एतस्यैव द्रविडाचार्यस्याद्वैते विशिष्टाद्वैते च ग्रन्थे वाक्योपलब्ध्या द्रविडाचार्यस्याद्वैतवादित्वे विशिष्टाद्वैतवादित्वे चाशङ्का न कार्या । उभयत्र वाक्योपलब्धावयं हेतुर्यच्छान्दोग्योपनिषदि आदितः पञ्चस्वध्यायेषु कर्मसमृद्धिफलानि अङ्गावबद्धोपासनानि, अभ्युदयसाधनानि, स्वतन्त्रप्रतीकोपासनानि, क्रममुक्तिफलान्यहङ्ग्रहोपासनानि, इतीत्थं विधोपासनानि बहूनि मन्दमध्यमाधिकारिणां कृते उपदिष्टानि । अवशिष्टेषु षष्ठसप्तमाष्टमेष्वध्यायेषु क्रमेण सद्विद्या, भूमविद्या, प्राजापत्यविद्या, इति सद्योमुक्तिफलकं सच्चिदानन्दात्मकनिर्गुणपरमात्मविद्यात्रयं उत्तमाधिकारिणां कृते उपदिष्टम्

मध्ये पुनरष्टमेऽध्याये दहरविद्यापि मध्यमानां कृते उपदिष्टा वर्तते । एवञ्च छान्दोग्योपनिषदि सविशेषमुपास्यं निर्विशेषं ज्ञेयमिति द्विरूपं ब्रह्म निरूपितम् । अतस्तद्विवरणात्मके ब्रह्मनन्दिनो वाक्यग्रन्थे उपनिषदनुसारं द्विविधं ब्रह्म प्राप्यते । एवमेव वाक्यग्रन्थस्य भाष्यभूते द्रविडाचार्यग्रन्थेऽपि उपनिषद्वाक्यानुसारं द्विविधं ब्रह्म प्राप्यते । इदमेव कारणं यद् द्रविडाचार्यस्य वाक्यं निर्विशेषाद्वैतग्रन्थे विशिष्टाद्वैत–ग्रन्थे चोपलभ्यते । तेनायं विशिष्टाद्वैतग्रन्थे वाक्योपलब्ध्या विशिष्टाद्वैती न, किन्त्वद्वैतवाद्येव । विशिष्टाद्वैतवादिभिर्यः स्वसाम्प्रदायिको द्रविडाचार्यः पूज्यते । स न द्रविडाचार्यः, अपितु द्रमिडाचार्यः ।

### श्रीद्रमिडाचार्यः

अत्रेदं मन्ये यद् विशिष्टाद्वैतवादी द्रमिडाचार्य आसीत्तु द्रविडाचार्यः । अनयो निर्विशेषाद्वैतविशिष्टाद्वैतवादिनोराचार्ययोर्नाम्नि वकारमकारयोर्भेदः । द्रविडाचार्यश्छान्दोग्योपनिषदो ब्रह्मनन्दि

(टङ्क) कृतस्य वाक्यस्य भाष्यकर्तृत्वेन वृत्तिकर्तृत्वेन च प्रसिद्धः।[२३] विशिष्टाद्वैतवादी द्रमिडाचार्यस्तु ब्रह्मसूत्रस्य द्रमिडभाषामयभाष्यकर्तृत्वेन प्रसिद्धः। यथाऽस्मसिद्धौ श्रीयामुनाचार्येणोक्तम्—

'यद्यपि भगवता बादरायणेन इदमर्थान्येव सूत्राणि प्रणीतानि विवृतानि च तानि परिमितगम्भीरभाषिणा द्रमिडभाष्यकृता।' (सिद्धित्रये पृ० ५-६)

अत्र 'परिमितगम्भीरभाषिणा द्रविडाचार्येण' इत्यनुक्त्वा 'द्रमिडभाष्कृता' इतिपदोपादानेन द्रविडभाषायां ब्रह्मसूत्रभाष्यकर्ता विशिष्टाद्वैतवादी कोऽपि द्रमिडाचार्य आसीदिति मतं पुष्यते। एतन्नाम तु द्रमिडाभाषायां मूलतः शठकोप इति स्यात्। यतो ह्ययंश्रीशठकोपो द्रमिडभाषायां सहस्रसंख्याकान प्रबन्धान् रचयामास। अस्य वकुलधरेति विशेषणं तथैतत्प्रबन्धस्य विशिष्टाद्वैतसम्प्रदाये महानादर आसीत्। यथा श्रीवेङ्कटनाथेनोक्तम्—

'वकुलधरमहर्षिदृष्टविश्वजनीनोपनिषद्—।'
(श्री वे० प्रणीतनिरपेक्षायाम्)

'समस्तभागवतसार्थसंगृहीतवकुलधरमहर्षिदृष्टद्रमिडागम......।'
(श्री वे० प्रणीतसच्चरित्ररक्षायाम्)

अयंद्रमिडाचार्यश्च निःसन्देहं विशिष्टाद्वैतवादी। श्रीभाष्यस्य तात्पर्यदीपिकाटीकायामनेकशोऽस्य मतं निर्विशेषाद्वैतवादित्वेनोद्घृतम्······

'यथाह द्रमिडभाष्यकारश्च यथा लोके राजा प्रचुरदन्दशूके घोरेऽनर्थसङ्ग्रहेऽपि प्रदेशे वर्तमानो ,व्यजनाद्यवधूतदेहो दोषैर्न स्पृश्यते, अभिप्रेतांश्च लोकान् परिपालयति, भोगान् गन्धादीन्

---

२३—यथा श्रीभास्कराचार्य आह–सूत्रकारः श्रुत्यनुसारी परिणामपक्षं सूत्रयाम्बभूव।

विश्वजनोपभोग्यान् धारयति, तथाऽमो लोकेश्वरः अमत्स्त्वसामर्थ्य-यचामरो दोषै नं स्पृश्यते रक्षति च लोकान् ब्रह्मलोकादीन् भोगांश्चाविश्वजनोपभोग्यान् धारयति ।'

(श्रीभाष्ये ता० टी० टी० भाग: २पृ० २३)

'द्रमिडभाष्यकारश्च—देवतासायुज्यशरोरस्यापि देवतावत् सर्वार्थसिद्धिः स्यात् ।

(श्रीभाष्ये ता० दी० टी० भा० १पृ० ७०)

'तथाह द्रमिडाचार्य—फलसंविभक्तया हि कर्मभिरात्मान पिप्रीषन्ति स प्रीतोऽलं फलायेति शास्त्रमर्यादा ।

( श्री भाष्ये ता० दी० टी० भा० २पृ० ७५ )

श्रीमद्रामानन्दाचार्यस्य स्वीये वैष्णवमताब्जभास्करे 'शक्तैः श्रीभाष्यतश्च द्रविडमुनिकृतोत्कृष्ट दिव्यप्रबन्धैः । कालक्षेपो विधेयः सुविजित करणैः स्वाकृतेर्योवदन्तम्' इत्युक्तयास्य दिव्यप्रबन्धकर्तृत्वमुपस्थापितम् । अस्यार्थं प्रकाशिकाटीकायामुक्तवत्—श्रीशठकोप स्वामिप्रभृतिकृत सहस्रगीति प्रभृतिभि. । अनेनायं विशिष्टाद्वैतवादीति परिज्ञायते ।

वस्तुत इदं प्रतीयते यद् द्रविडद्रमिडयो र्भेदेऽभेदे च विदुषामपि भ्रमः । यथा टङ्कश्छान्दोग्यवाक्यकारत्वेन प्रसिद्धस्तस्य वाक्यस्य भाष्यकारो द्रविड. प्रसिद्धः । अथ टङ्का विशिष्टाद्वैतवादिभि रेकत्राद्वैतवादित्वेन निराक्रियतेऽपरत्र स्वयूथ्यत्वेन समाद्रियते च । यथा श्रीयामुनाचार्येण—

'तथापि आचार्यटङ्कमतं प्रपञ्चादिविरचितमितासितविविधनिबन्धनश्रद्धाविप्रलब्धबुद्धीनां कृते मयायप्रकरणग्रन्थः क्रियते ।

(आत्मसिद्धौ प्रारम्भे)

---

अयमेव छान्दोग्ये वाक्यकारवृत्तिकाराभ्यां सम्प्रदायत समाश्रितः । अत्र द्रविडाचार्यश्छान्दोग्यवाक्यस्य वृत्तिकारत्वेण वर्णितः ।

( मा० भाष्ये–आत्मकृतेः परिणामात् ब्र० सू० १।४।२६ )

अत्र टङ्कोऽपरिग्राह्य इत्युक्तम्।

अयमेव पुनः श्रीरामानुजाचार्येण समाद्रियते परिग्राह्यत्वेन च विवक्ष्यते—

'भगवद्बोधायनटङ्कद्रमिडगुहदेवकपर्दिभारुचिप्रभृत्यविगीतशिष्ट-परिगृहीतपुरातनवेदान्तव्याख्यानसुव्यक्तार्थश्रुतिनिकरनिदर्शितोऽयं पन्थाः।'

(वेदार्थसङ्ग्रहे पृ० १४८)

अत्र टङ्कः परिग्राह्य इत्युक्तम्।

वस्तुतस्तु आचार्यटङ्को निर्विशेषाद्वैतवाद्येव 'योनिश्च हि गीयते' (ब्र० सू० १।४।२७) इति सूत्रस्य भामत्यां श्रीवाचस्पतिमिश्रेण विवर्तवादित्वेन ब्रह्मनन्दी स्मृतः। अत्र कल्पतरौ[२४] परिमले च ब्रह्मनन्दिपक्षः स्पष्टीकृतः।

अथ ब्रह्मनन्दी,नन्दी, टङ्क एक एवेति ब्रह्मनन्दिप्रकरणेऽस्मिन्ने-वाध्याये सिद्धान्तितः। आचार्यटङ्कस्याद्वैतपक्षो ब्रह्मनन्दिप्रकरणे द्रष्टव्यः। अचार्यटङ्कप्रणीतच्छान्दोग्यवाक्यस्य भाष्यकर्ताऽयं द्रविडाचार्य इत्यस्य प्रकरणस्यादौ साधु सुससाधितम्। श्रीभाष्यस्य तत्त्वटीकायां तस्या वामनटीकायां चैतत्सकेतितं स्पष्टीकृतं च यद् ब्रह्मनन्दिवाक्यानां भाष्यकर्ता द्रविडाचार्यः। यथा वामनटीकायां पृ० ६० तथा १३८ इत्यत्र

'अत्र भाष्यकारोऽब्रह्मनन्दिवाक्यव्याख्याता द्रविडाचार्यः।' एवं पूर्वापरपर्यालोचनयैव निर्णेतुं शक्यते यद् भकारघटितो द्रविडाचार्यो निर्विशेषाद्वैतवाद्यासीत्।[२५] यतो ह्याचार्यटङ्कोऽद्वैतवादी तस्य

२४—द्र० ब्रह्मसूत्रे प्रकृत्यधिकरणे कल्पतरौ।

२५—द्र० (क) बोधायन एण्ड द्रमिडाचार्य द्व ओल्ड वेदान्तिनस प्रेसपोजड बाई रामानुज ले० श्रीकुप्पूस्वामी शास्त्री यट ओरियण्टल का फेंस मद्रास १९२४,पृ० ४६५।

च छान्दोग्यवाक्यस्य भाष्यकर्ता द्रविडोऽप्यद्वैतवादी भवितुमर्हति। श्रीगौडप्रह्लानन्दशिष्यः श्रीबालकृष्णानन्द शारीरकमीमांसाभाष्यवार्त्तिक विरचितवान्। तत्रादौ स आत्मानमभिनवद्रविडमिति कथितवान्—

'यति चालो नव्यद्रविडमुनिराम्नायनगराधिभूः,
(कृष्णानन्द स्वमतिपरिशुद्धि वितनुते।)

अनेनापि नवीनद्रविडस्याद्वैतित्वे प्राचीनद्रविडोऽप्यद्वैतवादीत्येव सिद्ध्यति। अतएव श्रीतोटकाचार्यस्य।

द्रविडोऽपि च तत्त्वमसीति··· ' (श्रुतिसारसमुद्धरणे २०६ श्लो०) इति श्लोकस्य व्याख्यायां श्रीसच्चिदानन्दयोगी एन द्रविड सम्प्रदायवित्त्वेन प्रमाणयति—

'सम्प्रदायविद्वचनमप्यत्र प्रमाणमित्याह—द्रविड इति।' 'अत्र' सम्प्रदायवित् इति वचनेनास्य परम्परागतप्रामाणिकाद्वैतवादित्व साधितम्। अद्वैतवेदान्ताचार्येष्वेव. श्रीसुन्दरपाण्ड्य समभवत्। यस्य निर्देशः. 'तत्तु समन्वयात् (ब्र० सू० १।४।४) इतिसूत्रशाङ्करभाष्यस्यान्ते 'अपि चाहु—गौड०—' इत्यादिश्लोकत्रयोल्लेखेन प्राप्यते। अत्रत्यभाष्यस्य भामत्यादिटीकासु क्वचिद् वृद्धानामिमे श्लोकाः क्वचिदाचार्यसुन्दरपाण्ड्यस्यैमे श्लोका इति स्पष्टीकृतम्। अभिनवद्रविडाचार्य शारीरकमीमांसाभाष्यवार्त्तिके सुदृढ निर्दिशतीति यदय सुन्दरपाण्ड्य एव प्राचीन द्रविडाचार्य आसीत्। सुन्दरपाण्ड्य स्तथा द्रविडाचार्य एकस्यैवाचार्यस्य नाम। यथा—

(ख) आत्मकृतेः परिणामात् (ब्र० सू० १।४।२६) इतिसूत्रे भास्करभाष्ये उक्तम्— अयमेव छान्दोग्ये वाक्यकारवृत्तिकाराभ्या सम्प्रदायत समाश्रित। इत्यत्र 'छान्दोग्ये' इति कथनेन छान्दोग्यो पनिषद् एव वाक्यकर्ता नन्दी अस्य वाक्यस्यैव भाष्यकर्ता द्रविड न तु ब्रह्मसूत्रस्य भाष्यकर्ता द्रविडः, ब्रह्मसूत्रभाष्यकर्ता—द्रविड इति कोपो वा।

कथितार्थपरां द्रमिडार्यकृताम्,
अपि चेति गुरु र्वदतीह कथाम्।
महतामुदिते गदिते विदितम्,
स्थिरनिश्चयवान् जन एव इति॥

( शारीरकमीमांसा-भाष्यवार्त्तिके,–माशुतोष स०म० मा० मु० )।

*सिद्धान्तः*

अद्वैतसम्प्रदायस्य श्रीब्रह्मनन्दिनो वाक्यग्रन्थस्तथास्य भाष्यभूत श्रीद्रविडाचार्यग्रन्थोऽधुना नोपलभ्यते। पूर्वोक्तानि कतिपयवाक्यान्येवाद्वैतग्रन्थेषु यत्र तत्रोपलभ्यन्ते। तदाधारेणास्य सिद्धान्तोऽद्वैतवाद जीवब्रह्मणोरैक्य परमात्मनो निर्गुणत्व विवर्तवादश्च सिद्धयन्ति।

*अद्वैतवादः*

भगवाञ्छङ्कराचार्य एव सम्प्रदायवित्त्वेन समाद्रियते—

'अत्र च सम्प्रदायविद आख्यायिकां सम्प्रचक्षते।'

( बृ० भा० उ० शा० भा० २।१।२० पृ० २६७ )

सम्प्रदायविदोऽर्थात्—परम्परागताद्वैतसम्प्रदायस्य प्रमुखतमा आचार्या श्रीसुरेश्वराचार्यो नैष्कर्म्यसिद्धौ—श्रीमद्भर्तृप्रपञ्चब्रह्मदत्त-मण्डनमिश्राद्यभिमतप्रसङ्ख्यानपक्षखण्डनावसरे आचार्यद्रविडसम्मतिमाह—

भावनाजं फलं यत्स्याद् यच्च स्यात् कर्मणः फलम्।
न तत्स्थास्न्विति मन्तव्यं द्रविडेष्विव सङ्गतम्॥

( नै० सि० ३।९३ )

अत्र श्लोके द्रविडशब्देन श्रीद्रविडाचार्य एवाभिप्रेत। श्रीसुरेश्वराचार्यो भगवत्पादश्रीशङ्कराचार्यस्य कृते द्रविडशब्दप्र-

मुद्धने यथा—'एव गौडैर्द्राविडैर्न'—(नै० सि० ४-४४) इति।
अनेनाप्यस्याद्वैतपक्षः सिद्ध्यति।

आपस्तम्बधर्मसूत्रकर्ता प्रसिद्धोऽद्वैतवेदान्त्यप्यासीत्। यथाश्रीसुरेश्वराचार्येण बृहदारण्यकभाष्यवार्त्तिक उक्तम्—

सत्यानृते इति तथा सर्वसन्न्यासपूर्वकम्।
आत्मनोऽन्वेषणं सद्यादापस्तम्बोऽन्वगीन्मुनिः॥

( बृ०भा० उ० भा० वा० २२१ स वा० पृ० ६७ )

अनेन आपस्तम्बाचार्येण आपस्तम्बधर्मसूत्रस्याध्यात्मपटले श्रीद्रविडाचार्यस्य कृते सङ्केतः कृतः। यस्य स्पष्टीकरणमुज्ज्वलाया वृत्तौ तत्रचार्यद्रविडस्य प्रसिद्धाया व्याधकुलसंवर्धितराजकुमारकथाया उल्लेखेन कृतम्।

*जीवब्रह्मणोरैक्यम्*

बृहदारण्यकोपनिषद २।१।२० कण्डिकाया भाष्ये भगवत्पादश्रीशङ्करेण 'तस्मादुत्पत्त्यादिश्रुतय आत्मैकत्वप्रतिपादनपरा' इत्युक्तवतद् द्रढयितु श्रीद्रविडाचार्यप्रोक्ता आख्यायिकोपस्थापिता। यत्र कश्चिद्राजकुमार केनापि कारणेन स्वकुलाद् निर्गतः सन् व्याधकुले संवर्द्धित स्वमात्मानं व्याधममन्यत। किन्तु प्रबोधन पुन स्वयं राजकुमारमबुध्यत। एवमेवाज्ञानवशात् ससारी जीव स्वयं ब्रह्मरूपेण न परिचिनोति किन्तु वेदान्ताद्युपदेशै स्व रूप बुद्ध्वा ब्रह्मत्वमवाप्नोति। यथात्र भगवत्पादशब्दा —

अत्र च सम्प्रदायविदः आख्यायिका सम्प्रचक्षते—कश्चित् किल राजपुत्रो जातमात्र एव मातापितृभ्यामपविद्ध व्याधगृहे संवर्धित, सोऽमुष्यवंश्यतामजानन् व्याधजातिप्रत्यय व्याधजातिकर्माण्येवानुवर्तते न राजास्मीति राजजातिकर्माण्यनुवर्तते। यदा पुन कश्चित्परमकारुणिक राजपुत्रस्य राज्यश्रीप्राप्तियोग्यता जानन् अमुष्य-

पुत्रतां बोधयति—न त्वं व्याध, अमुष्य राज्ञः पुत्रः कथञ्चिद् व्याधगृहमनुप्रविष्ट इति। स एवं बोधितः त्यक्त्वा व्याधजातिप्रत्ययकर्माणि पितृपैतामहीमात्मनः पदवीमनुवर्तते राजाऽहमस्मीति।

तथा किलायं परस्मादग्निविस्फुलिङ्गादिवत् तज्जातिरेव विभक्त इह देहेन्द्रियादि गहने प्रविष्टः असंसारी सन् देहेन्द्रियादिसंसारिधर्ममनुवर्तते। देहेन्द्रियादिसङ्घातोऽस्मि कृशः स्थूलः सुखी दुःखीति परमात्मतामजानन् आत्मनः। न त्वमेतदात्मकः परमेव ब्रह्मासि असंसारीति प्रतिबोधित आचार्येण, हित्वा एषणात्रयानुवृत्तिं ब्रह्मैवास्मीति प्रतिपद्यते।'

(बृ० भा० शा० भा० २।१।२० पृ० २९७ ८)

आनन्दगिरि—तत्त्वमस्यादिवाक्यमैक्यपरम्, तच्छेषः सृष्ट्यादिवाक्यमित्युक्तेऽर्थे द्रविडाचार्यसम्मतिमाह—अत्र चेति।

इममेवार्थं श्रीसुरेश्वराचार्य इत्थमनुवदति—

आचक्षते तथा चात्र केचिदाख्यायिकां शुभाम्।

( बृ० भा० उ० शा० भा० वा० २।१।५०९-½-पृ० ६७०। )

आनन्दगिरिः—द्रविडाचार्यप्रणीतामाख्यायिकामवतारयति।

यथा हि कश्चिद्राजाग्र्यो चक्रवर्ती सुतो युवा।

( तत्रैव वा० २०७-½- )

व्याधैः परिगृहीतश्च व्याधोऽस्मीत्यवगम्यते।

( तत्रैव वा० २०८-½- )

भगवत्पादश्रीशङ्कराचार्यस्य साक्षाच्छिष्येण श्रीतोटकाचार्येणापि श्रुतिसारसमुद्धरणनामके ग्रन्थे इदमेवाभ्यधायि—

द्रविडोऽपि च तत्त्वमसीति वचो विनिवर्तकमेन निरूपितवान्।

शबरेण विवर्धितराजशिशोः निजजन्मविदुक्तिनिदर्शनतः।

( श्रु० सा० स० २०६ श्लो० )

एवमेवापस्तम्बधर्मसूत्रस्योज्ज्वलायां वृत्तावपि—

नीचानां वसतो तदीयतनयैस्साद्धं चिरं वर्धितः,
तज्जातीयमवैति राजतनयः स्वात्मानमप्यञ्जसा।
सङ्घाते महदादिभिस्सह वसंस्तद्वत्परः पूरुषः,
स्वात्मानं सुखदुःखमोहकलिलं मिथ्यैव धिङ्मन्यते ॥१॥
दाता भोगपरस्समग्रविभवो यश्शासिता दुष्कृताम्,
राजा स त्वमसीति मातृमुखतः श्रुत्वा यथावत् स तु।
राजीभूय जयार्थमेव यतते तद्वत् पुमान् बोधितः,
श्रुत्या तत्त्वमसीत्यपास्य दुरितं ब्रह्मैव सम्पद्यते ॥२॥

( आ० ध० सू० उ० वृ० अध्यात्मपटलविवरणे )

श्रीवाचस्पतिमिश्रेणापि जीवब्रह्मणोरैक्ये श्रीद्रविडाचार्यसम्मतिरुक्ता—'यथाह द्रविडाचार्य —संहरणाद्वा संवरणाद्वा स्वात्मीभावाद्वायुः संवर्ग इति, अध्यात्मं च प्राणः सवर्ग इति, स हि सर्वाणि वागादीनि संवृङ्क्ते, प्रायणकाले हि स एव सर्वाणीन्द्रियाणि संगृह्योत्क्रामतीति। सेयं सवर्गदृष्टि र्वायौ प्राणे च दशाशागतं जगद्दर्शयति—यथा, एवं जीवात्मनि बृंहणक्रियया ब्रह्मदृष्टिरमृतत्वाय फलाय कल्पत इति।'

( ब्र० सू० १।१।४ भामत्याम् )

*परमात्मनो निर्गुणत्वम्*

श्रीद्रविडाचार्यमते परब्रह्मणो निर्गुणत्वमभीष्टम्। एतच्च सर्वज्ञात्ममुनिना सक्षेपशारीरके वाक्यकारश्रीब्रह्मनन्दिमतमुक्त्वोपपादितम्। यथा—

अन्तर्गुणा भगवतो परदेवतेति,
प्रत्यग्गुणेति भगवानपि भाष्यकारः।
आह स्म यत्तदिह निर्गुणवस्तुवादे,
सङ्गच्छते न तु पुनः सगुणप्रवादे ॥

( सं० शा० ३।२२१ )

अत्र 'अन्तर्गुणा' इतिपदे गुणपदं स्वरूपपरम्, देवतापदं ब्रह्मपरम्, तेन प्रत्यगात्मरूपा परा देवता परं ब्रह्मेत्यर्थः। यथास्य सारसंग्रहाख्यव्याख्यायां श्रीमधुसूदनसरस्वतीभिरुक्तम्—

'ब्रह्मनन्दिरचितवाक्यानां सूत्ररूपाणां भाष्यकर्ता द्रविडाचार्योऽप्यद्वयब्रह्मणः प्रत्यगभेदो वाक्यकाराभिप्रेत इति कथयति स्म ततो व्यवसीयते ब्रह्मनन्दिनो विकारवादोऽनभिमत इत्याह। अन्तर्गुणेति। सेयं देवतैक्षतेति श्रुतिमनुसृत्य परदेवतेति ब्रह्मोच्यते। अन्तर्गुणेत्युक्तं विशदयति प्रत्यग्गुणेति। गुणशब्दः स्वरूपपरः। अन्या देवताः पराग्रूपाः परदेवता तु प्रत्यात्मरूपा अपरोक्षचिदेकरसेत्यर्थः। निर्गुणवस्तुवादे विकारादिसमस्तविशेषरहितं परमार्थत आत्मवस्त्विति मते।'

(सं० शा० ३।२२१ सा० सं० व्या०)

एवमेव श्रीरामतीर्थेनापि व्याख्यातम्—

'भगवान् सर्वज्ञो भाष्यकारो नन्दिकृतग्रन्थभाष्यकारो द्रविडाचार्योऽन्तर्गुणा भगवती परदेवतेति यदाह स्म तदिह निर्गुणवस्तुवादे संगच्छते संगतं भवति न तु पुनः सगुणप्रवाद इति योजना।'

(सं० शा० ३।२२१ रा० ती० टी०)

एवमेवास्य व्याख्यायां श्रीनृसिंहाश्रमेणाप्युक्तम्—

'यदाह भगवान् भाष्यकारः छान्दोग्योपनिषद्भाष्यकारः तदपीह निर्गुणवस्तुवादे प्रत्यग्ब्रह्मणोरत्यन्ताद्वैतवाद एव संगच्छते न तु सगुणप्रवादे विकारवादे इत्यर्थः।

(सं० शा० ३।२२१ नृ० आ० टी०)

निर्विशेषाद्वैतवादिभिः सगुणं निर्गुणमुभयविधमेव ब्रह्मावगम्यते। भगवत्पादशङ्कराचार्यैरानन्दमयाधिकरणे कार्याधिकरणे चैतत् सम्यगुपपादितम्। यथा—

'अपि च आनन्दमयस्य ब्रह्मत्वे प्रियाद्यवयवत्वेन सविशेषं ब्रह्माभ्युपगन्तव्यम् । निर्विशेषं ब्रह्म तु ब्रह्मवाक्यशेषे श्रूयते । वाङ्मनसयोरगोचरत्वाभिधानात् ।'

( ब्र० सू० १।१।१९ शा० भा० )

'द्विरूपं हि ब्रह्मावगम्यते नामरूपविकारभेदोपाधिविशिष्टं तद्विपरीतं च सर्वोपाधिवर्जितम् ।...............एकमपि ब्रह्मापेक्षितोपाधिसम्बन्धं निरस्तोपाधिसम्बन्धं चोपास्यत्वेन ज्ञेयत्वेन च वेदान्तेषूपदिश्यते ।...............एवं परमार्थावस्थायां सर्वव्यवहाराभावं वदन्ति वेदान्ताः सर्वे । तथेश्वरगीतास्वपि ...... ..... इति परमार्थावस्थायामीशित्रीशितव्यादिव्यवहाराभावः प्रदर्श्यते ।............एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाय ।

( ब्र० सू० २।१।१४ शा० भा० )

'किं द्वे ब्रह्मणी परमपरं चेति । बाढं द्वे...............किं पुनः परं किमपरमिति, उच्यते यत्राविद्याकृतनामरूपादिविशेषप्रतिषेधादस्थूलादिशब्दैः ब्रह्मोपदिश्यते तत्परम् । तदेव यत्र नामरूपादिविशेषेण केनचिद्विशिष्टमुपासनायोच्यते ।

( ब्र० सू० ४।३।१४ शा० भा० )

किन्त्वेतावानेव विशेषो यन्निर्गुणब्रह्मज्ञानेन ब्रह्मणि लयस्तथा सगुणब्रह्मोपासनया वैकुण्ठादिप्राप्तिः ।

यथोक्तम्—'सगुणविद्याविपाकावस्थानं त्वेतत् स्वर्गादिवदवस्थान्तरम्, यत्रैतदैश्वर्यमुपवर्ण्यते ।

( ब्र० सू० ४।४।१६ शा० भा० )

एवमेव सगुणब्रह्मणो रूपविषये, उपासनाविषये, फलविषये च अन्तस्तद्धर्माधिकरणे व्यतिहाराधिकरणे च भाष्ये भगवता शङ्करेण बहूपपादितम् । बृहदारण्यकोपनिषदः प्रथमाध्यायतृतीयब्राह्मणस्य

भाष्येऽपि श्रीशङ्करेण सगुणब्रह्मविषयकमुपासनमित्यादि प्रतिपादितम् ।

### विवर्तवादः

अथ विवर्तवाद मनुत इत्यस्य सवेतो बृहदारण्यकशाङ्करभाष्यतस तथा सक्षेपशारीरकस्य व्याख्यातोऽवगम्यते । यथा बृहदारण्यकभाष्ये द्रविडाचार्यस्याख्यायिकामनुवदति—

इह देहेन्द्रियादिगहने प्रविष्ट असंसारी सन् देहेन्द्रियादिससारिधर्ममनुवर्तते ।

( बृ० आ० उ० शा० भा० २।१।२० )

'देहेन्द्रियादिसघातोऽस्मि कृश स्थूल सुखी दुःखीति ।'

( तत्रैव शा० भा० )

संक्षेपशारीरके द्रविडाचार्यकृत ब्रह्मनन्दिव्याख्यानमुक्त तत्र ब्रह्मनन्धभिप्रेतोऽर्थो द्रविडाभिप्रेतोऽपि स्यादिति मन्येत तथा द्रविडाचार्यमते विवर्तवाद आयाति । यथा—

द्रविडाचार्योऽप्यद्वयब्रह्मण प्रत्यगभेदो वाक्यकाराभिप्रेत इति कथयति स्म ततो व्यवसीयते ब्रह्मनन्दिनो विकारवादोऽनभिमत इत्याह ।

( स० शा० ३।२२१ सा० स० व्या० )

अनेन प्रकारेण द्रविडाचार्याभिप्रेतो विवर्तवादः ।

### मोक्षो, मोक्षसाधनञ्च

अस्य मतेऽज्ञानादेव बन्ध ससारित्वम्, अज्ञानापगम एव मोक्ष । एतद् बृहदारण्यकोपनिषद शाङ्करभाष्ये द्रविडाचार्यस्य प्रसिद्धाख्यायिकानुवादे भगवता शङ्करेण स्पष्टीकृतम् । यथा—

'न त्वमेतदात्मक परमेव ब्रह्मासि असंसारीतिप्रतिबोधित आचार्येण, हित्वा एषणात्रयानुवृत्तिं ब्रह्मैवास्मीति प्रतिपद्यते ।'

( बृ० आ० उ० शा० भा० २।१।२० )

इत्थ ब्रह्माद्वैतवेदान्तग्रन्थेषु तथा विशिष्टाद्वैतवेदान्तग्रन्थेषु श्रीद्रविडाचार्यस्य सप्तदशवाक्यान्युपलभ्यन्ते, तत्र षड् वाक्यानि अद्वैतवेदान्तग्रन्थेषु, एकादशवाक्यानि च विशिष्टाद्वैतवेदान्तग्रन्थेषु। ब्रह्माद्वैतवेदान्तग्रन्थेषु प्राप्तवाक्यानामाधारेणास्याद्वैतसिद्धान्तः पूर्वं निरूपितः। अस्य सिद्धान्ते जीवब्रह्मणोरैक्यम्, अज्ञानादेवात्मा संसारी जायते, तत्त्वमस्यादिमहावाक्यजन्यज्ञानेनाज्ञानापगमः, ब्रह्मावाप्तिर्मोक्षो वा भवति। अस्य मते मोक्षः स्वरूपावगतिरूपः। विवर्तवादोऽनिर्वचनीयवादश्चाभ्युपेतौ। श्रीशङ्कराचार्यश्रीसुरेश्वराचार्यवाचस्पतिमिश्रमधुसूदनसरस्वतीरामतीर्थनृसिंहाश्रमानन्दगिरिप्रभृतिभिरेन प्रति पूज्यभावः प्रकटितः। प्रायोऽस्य कृते श्रीशङ्करादीनां भाष्ये व्याख्याने टीकायां च भगवच्छब्द प्रयुक्तः।

विशिष्टाद्वैतग्रन्थेषु प्राप्तानि श्रीद्रविडाचार्यवाक्यानि विशेषरूपेणोपासनापराणि परमात्मनः सगुणत्वप्रतिपादकानि च। एतद्विषये पूर्वं निरूपितं यद् निर्विशेषब्रह्माद्वैतवादेऽप्युपासना परमेश्वरस्य सगुणत्व चाङ्गीक्रियेते एव। ब्रह्मसूत्रे १।१।१९, २।१।१४, ४।३।१४, ४।४।१६ सूत्राणां शाङ्करभाष्ये ब्रह्मणः सगुणरूपत्व तस्योपासना, उपासनाफलावाप्तिश्च प्रतिपादितानि। एतावानेव भेदो यद् निर्विशेषाद्वैतवादे परमपरं द्विविध ब्रह्म मन्यते तत्र परब्रह्मणि नामरूपविकारभेदोपाधिविशिष्ट एवैतत्सर्वं सघटते। नामरूपविकारादिसर्वोपाधिवर्जिते तूपासनागुणादयः केऽपि न सगच्छन्ते।

एवं श्रीद्रविडाचार्योऽस्ति निर्विशेषब्रह्माद्वैतप्रतिपादकः निर्विशेषब्रह्माद्वैतसम्प्रदायस्य परमादरणीयो विद्वान्, अस्य सिद्धान्तश्च निर्विशेषब्रह्माद्वैतस्य परमानुकूलः।

○

# सप्तमोऽध्यायः

## ६—आचार्यभर्तृप्रपञ्चः

भगवतः शङ्कराचार्यात् पूर्ववर्तिषु वेदान्ताचार्येषु आचार्यभर्तृप्रपञ्च. प्रमुखतम आसीत् । ऐतिहासिका अस्य कालम् ६५० ईसवीतः पूर्वं निर्धारयन्ति[१] । अयमोशोपनिषदः कठोपनिषदो बृहदारण्यकोपनिषदश्च भाष्यं विरचितवान्[२] । सक्षेपशारीरकलेखेन प्रतीयते

१—(क) द्र०—श्री पी० वी० काणेमहोदयस्य 'कामेन्टेटरए बिफोर शङ्कराचार्य' इति लेख: पञ्चम आल इण्डिया ओरियण्टल कान्फ्रेंस, लाहौर ( पञ्जाब ) १९२८ ई०, भाग २ पृ० ९३७ इत्यत्र प्रकाशितः ।

(ख) वेदान्तदर्शन की भूमिका — ले० म० म० श्रीगोपीनाथकविराज ।

२—(क) बृहदारण्यकोपनिषद्भाष्यवार्तिकम् १।४।१७१६ – १७१७, पृ० ७७१ तथा वा० १७६४, पृ० ७७९ (आ० आ० मु०)

(ख) कठोपनिषदो भाष्ये आनन्दगिरिणोक्तम्—अल्पग्रन्था वृत्तिरारभ्यते ।' अस्य भाष्ये गोपालयतीन्द्रेणोक्तम्—'अथ भर्तृप्रपञ्चादिभिरेव व्याख्यातत्वान्नारम्भणीया वृत्तिरित्यत आह अल्पग्रन्थेति ।' ( का० उ० पृ० ३ )

(ग) एतेन चिकिर्षिताया वृत्तेः भर्तृप्रपञ्चभाष्येणागतार्थत्वमुक्तम् । ( बृ० भा० उ० शा० भाष्यस्यानन्दगिरिटीकायामादौ पृ० २ ) बृ० भा० उ० भा० वा० १।४।१४६७ पृ० ७२४ । १।४, १६९३ पृ० ७६७–८ तथा ३।२।४६ पृ० ११५५ ।

यदनेन ब्रह्मसूत्रस्यापि भाष्यं विरचितम्[3]। अद्यत्वे तु भर्तृप्रपञ्चस्य किमपि भाष्यं नोपलभ्यते। भगवता शङ्करेण स्वीये बृहदारण्यकोपनिषद्भाष्ये प्रायः पञ्चदशसु स्थलेषु 'केचित्तु' 'अपरे तु' इत्यादिशब्दैरेतन्मतमुपन्यस्तम्। बृहदारण्यकोपनिषद्भाष्यवार्तिके च श्रीसुरेश्वराचार्येणास्य मतस्य बहुशः सङ्केतः कृतो वर्तते। आनन्दगिरिणा च बृहदारण्यकोपनिषद्भाष्यस्य व्याख्याने बृहदारण्यकोपनिषद्भाष्यवार्तिकस्य च व्याख्याने एतन्मत साधुतया स्पष्टीकृतम्। एतेनानुमीयते यदानन्दगिरिकालेऽपि पञ्चदशशततमे ईसवीयेऽस्य भाष्यमुपलब्धमासीत्। भगवत्पादस्य साक्षाच्छिष्येण श्रीमत्सुरेश्वराचार्येण स्वीये भाष्यवार्त्तिके 'सम्प्रदायविद्' 'ब्रह्मविद्' 'महीयसः' इत्यादिशब्दैरयमतीव समादृतः[4]।

अस्य सिद्धान्तो निर्विशेष–ब्रह्माद्वैतवाद आसीत्। यतो ह्ययं विवर्तवादम्, अपराख्ये मोक्षे जीवब्रह्मणोरैक्यम्, लोकव्यवहारकारणं चाविद्यां समाश्रयत। अत एव च भगवता शङ्करेण बृहदारण्यकोपनिषद्भाष्यस्योपोद्घाते आचार्यभर्तृप्रपञ्चकृतभाष्यात् स्वीयभाष्यस्य वैशिष्ट्यं प्रतिपिपादयिषुणा हेतुद्वयमुपन्यस्तं यथा प्रथमो हेतुर्यच्छाङ्करभाष्यमल्पाक्षरं श्रीभर्तृप्रपञ्चभाष्यं च विस्तृतं द्वितीयो हेतुश्च श्रीशाङ्करभाष्यं काण्वशाखामाश्रित्य प्रवृत्तम्, श्रीभर्तृप्रपञ्चभाष्यं च माध्यन्दिनशाखामाश्रित्य प्रवृत्तम्।

३—'कैश्चित्सूत्रं व्याचक्षाणैर्भर्तृप्रपञ्चादिभिः।'
(संक्षेपशारीरके १।७)

४—(क) 'सम्प्रदायविदस्त्वत्र··· ···· ···········।'
(बृ० भा० उ० भा० वा० १।६।४६, पृ० ८७६, आ० आ० पूना, मु०)।

(ख) 'समस्तादिप्रतिज्ञातार्थसिद्धये ब्रह्मवादिनः।'
(तत्रैव वा० २।५।६७, पृ० ११२३)

(ग) 'इतिश्रीमन्महाभर्तृप्रपञ्चस्य महीयसः।'
(तत्रैव वा० ४।४।४१२, पृ० १७८९)

अत्र भगवता शङ्करेण सिद्धान्तभेदेन स्वभाष्यस्य वैशिष्ट्यं न प्रतिपादितम्। यद्यपि श्रीभर्तृप्रपञ्चकृतप्रक्रियायाः अनादरः श्रीशङ्करेण बहुशः कृतः। यामुनाचार्यस्य सिद्धित्रये आदावेव वेदान्तस्य पूर्वाचार्याणां नाम परिगणितम्। तत्र टिप्पणीकारेण श्रीभर्तृप्रपञ्चो निर्विशेषब्रह्मवादपक्षमाश्रयन्नेत्युक्तम्[५]।

अयमाचार्यः परमार्थतोऽद्वैतवादमङ्गीकरोति किन्तूपनिषत्-प्रामाण्यवत्कर्मकाण्डस्यापि प्रामाण्यसिद्धये[६] जगत्कारणस्य ब्रह्मणो

५—(क) विवर्तवादः—तत्रैव वा० ११६४–६५, पृ० ६६६। आनन्द-गिरिटीकापि द्रष्टव्या।

(ख) जीवब्रह्मणोरैक्यम्—तत्रैव वा० ३१४–३११ पृ० १७८१।

(ग) अविद्या—तत्रैव वा० १०११, पृ० १४७३, वा० ११५१, पृ० ६६४।

(घ) स्वीयभाष्यस्य वैशिष्ट्यम्—अल्पग्रन्था वृत्तिरारभ्यते।
( बृ० भा० उ० शा० भा० उपोद्घाते )

(ङ) 'तद्धि द्वयाः' इत्यादि-माध्यन्दिनश्रुतिमधिकृत्य प्रवृत्तम्।
इयं पुनः 'उषा वा अश्वस्य' इत्यादिकाण्वश्रुतिमाश्रित्येति।
( तत्रैव उपोद्घातस्यानन्दगिरिव्याख्यायाम् पृ० २ )

(च) सिद्धित्रये — भगवद्टङ्कभर्तृप्रपञ्चभर्तृमित्रभर्तृहरिब्रह्मदत्त—शङ्करश्रीवत्साङ्कभास्करादिरचितसितासित··············।
( यामुनाचार्यविरचिते सिद्धित्रये पृ० ५ )

अत्र टिप्पणीकारः सत्सम्प्रदायाचार्यः स्वामीश्रीरामशास्त्री लिखितवान्—'द्रवाचार्यो द्रमिडाचार्यः, टङ्को वार्तिककारश्च एतौ द्वौ श्रीसम्प्रदायानुयायिनौ, श्रीवत्साङ्कमिश्रा अपि श्रीसम्प्रदायानुयायिनः। भर्तृप्रपञ्चभर्तृमित्रभर्तृहरि-ब्रह्मदत्ता निर्विशेषब्रह्मवादपक्षपातिनः।'

६—'अत्रैके वर्णयन्ति ''··················एवं किल द्वैतस्य सत्यत्वे कर्मकाण्डस्य प्रामाण्यं यदा पुनर्द्वैतं द्वैतमिथ्याविद्याकृतं मृगतृष्णिकावदनृतमद्वैतमेव परमार्थस्तदा किल कर्मकाण्डं विषयाभावादप्रमाणं भवति। तथा च विरोध एव स्यात्।' वेदैकदेशभूतोपनिषत्प्रमाणं परमार्थाद्वैतवस्तुप्रतिपादकत्वादप्रमाणं कर्मकाण्डमसद्

नित्यत्वेन जगतोऽपि नित्यत्वसिद्धये, परमोक्षार्थं तं जीवस्य पृथक्-स्थितिसिद्धये च द्वैतत्वमपि सत्यत्वेन स्वीकरोति ।

अत एवास्य मतम् अनेकान्तवादः, नानात्वैकत्ववादः, द्वैताद्वैतवाद, भेदाभेदवाद, समस्तव्यस्तदर्शनम् इत्यादि नामभिः प्रसिद्धम् ।

अस्य सिद्धान्ते द्वैतमपि सत्यम्, अद्वैतमपि सत्यम्, एकत्वमपि-सत्यम् अनेकत्वमपि सत्यम्, भेदोऽपि सत्य, अभेदोऽपि सत्यः । भगवता शङ्करेणास्य उल्लेख इत्थमकारि—

'नन्वेकात्मक ब्रह्म, यथा वृक्षोऽनेकशाख एवमनेकशक्ति-प्रवृत्तियुतं ब्रह्म । अत एकत्वं नानात्वमुभयमपि सत्यमेव । यथावृक्ष

द्वैतविषयत्वात् । तद्विरोधपरिजिहीर्षया युक्तैतदुक्त कार्यकारणयोः सत्यत्वं समुद्रवत्पूर्णमद इत्यादिनेति ।'

(बृ०आ०उ०शा०भा० ५।१।१, आ०आ०, पूना, मु० पृ० ७३१)

आन-दगिरिराह—'अद्वितीय ब्रह्मेत्युत्सर्गप्रवृत्त शास्त्र प्रलया-वस्थब्रह्मविषय सृष्टिशास्त्र तु विशेषप्रवृत्त तस्यापवादस्ततो द्वैताद्वैत-रूप ब्रह्म सर्वोपनिषत्संस्थेव वह्वानेन मन्त्रेण प्रतिपाद्यत इति भर्तृप्रपञ्चप्रमुखाप्रयति पूर्वेत्यादिना ।'

'सम्प्रदायविदस्त्वत्र नानात्वैकत्ववादिन ।
भिन्नाभिन्नात्मक ब्रह्म नाशकन्यादिनाजगु ॥'

(बृ०आ०उ०भा०वा० १।६।४६, पृ० ८७६ आ०आ०, पूना, मु०)

'एवञ्च द्वैताद्वैतात्मकमेव ब्रह्म ।'

(बृ०आ०उ०भा० वा० ५।१।१, पृ० ७३१ )

'द्वैताद्वैतात्मक ब्रह्म मनेर्म्य वर्णित किल ।'

( तत्रैव वा० ५।१।३०३, पृ० १६५४ )

'सर्वमेकमिति ह्यन्नैरिहाप्यैकात्म्यदर्शनम् ।
विधीयते यतो नात समस्तव्यस्तदर्शनम् ॥'

(तत्रैव वा० १।४।६६१, पृ० ५७२)

वपुर्बद्धोपिण्डदृष्टान्तै परमात्मन ।
व्यापकेऽत्र वदान् केचित् समस्तव्यस्तदर्शनम् ॥

( तत्रैव वा० ६६३, पृ० ५७२ )

इत्येकत्व शाखा इति नानात्वम् । यथा च मृदात्मनैकत्वम्, घट-शरावाद्यात्मना नानात्वम्, तत्रैकत्वांशेन ज्ञानात् मोक्षव्यवहारः सेत्स्यति, नानात्वांशेन तु कर्मकाण्डाश्रयौ लौकिकवैदिकव्यवहारौ सेत्स्यत इति । एव मृदादिदृष्टान्ता अनुरूपा भविष्यन्तीति ।'

( ब्र० सू० शा० भा० २।१।१४ )

बृहदारण्यकोपनिषदो भाष्येऽपि आचार्यशङ्करेणास्य मतस्य परिचय एवमेवैतत्समानैरेवाक्षरैरलेखि[७] ।

श्रीमत्सुरेश्वराचार्येणापि बृहदारण्यकोपनिषद्भाष्यवार्तिके एवमेव भर्तृप्रपञ्चस्य मतमुपन्यस्तम्[८] ।

---

७—अनेके वर्णयन्ति पूर्णात्कारणात्पूर्णं कार्यमुद्रिच्यते । उद्रिक्त कार्यं वर्तमानकालेऽपि पूर्णमेव परमार्थवस्तुभूत द्वैतरूपेण पुनः प्रलयकाले पूर्णस्य कार्यस्य पूर्णतामादायाऽऽत्मनि धित्वा पूर्णमेवावशिष्यते कारणरूपम् । एवमुत्पत्तिस्थितिप्रलयेषु त्रिष्वपि कालेषु कार्यकारणयो पूर्णतैव । सा चैकैव पूर्णता कार्यकारणयोर्भेदेन व्यपदिश्यते । एवं द्वैताद्वैतात्मकमेक ब्रह्म । यथा किल समुद्रो जलतरङ्गफेनबुद्बुदाद्यात्मक एव । यथा च जल सत्य तदुद्भवाश्च तरङ्गफेनबुद्बुदादय समुद्रात्मभूता एवाविर्भावतिरोभावधर्मिण. परमार्थसत्या एव । एवं सर्वमिद द्वैत परमार्थसत्यमेव जल-तरङ्गादिस्थानीय समुद्रजलस्थानीयं तु पर ब्रह्म । एव किल द्वैतस्य सत्यत्वे कर्मकाण्डस्य प्रामाण्य यदा पुन द्वैतं द्वैतमिवाविद्याकृत मृगतृष्णिकावदनृतमद्वैतमेव परमार्थस्तदा किल कर्मकाण्ड विषया-भावादप्रमाणं भवति । वेदैकदेशभूतोपनिषत्प्रमाण परमार्थाद्वैत-वस्तुप्रतिपादकत्वादप्रमाण कर्मकाण्डमसद्द्वैतविषयत्वात् । तद्-विरोधपरिजिहीर्षया श्रुत्येतदुक्त कार्यकारणयोः सत्यत्व समुद्रवत् पूर्णमद इत्यादिनेति । तदसत् ।

( बृ० शा० उ० शा० भा० ५।१।१ )

८—द्रष्टव्यम्—बृ० भा० उ० भा० वा० १।६।४६, पृ० ८७६, तथा १।४।६६२, पृ० ५७२ ।

एतदर्थं चाचार्यभर्तृप्रपञ्चेन निर्विशेषब्रह्माद्वैतवादस्य स्वीया प्रक्रिया व्यरचि। या सम्यक् श्रीशङ्करेण समीक्षिता।

### अस्य मतस्य प्रमेयांशाः

अस्मिन् मते ब्रह्म द्विविधं परम् ब्रह्म, अपरञ्च। बृहदारण्यकोपनिषदः 'ब्रह्म वा इदमग्र आसीत् तत्सर्वमभवत्' (बृ० आ० उ० १,४,१०) इति वाक्यव्याख्यावसरे न हि परस्य ब्रह्मणः सर्वभावापत्ति विज्ञानसाध्येति पूर्वपक्षेऽत्र अपरस्य ब्रह्मणः सर्वभावापत्तिरिति वृत्तिकृतां मतमनूद्य भर्तृप्रपञ्चमतमुक्तं यद् अत्र ब्रह्मशब्दः ब्रह्मभाविपुरुषपरः। तस्मिन्नेव प्रसङ्गे भर्तृप्रपञ्चस्याभिप्रायः प्रकटीकृतो यद् ब्रह्म परं तथा अपरञ्च। अपरम् 'हिरण्यगर्भाख्यं ब्रह्म' इति आनन्दगिरिणा व्याख्यातम्।[६]

इत्यादिशब्दस्यनेकत्वेऽप्येकमेव परं विदुः।
शक्तिशक्तिमतोरैक्यादद्वैतमिति भण्यते॥
(तत्रैव वा० १।६।४८, पृ० ८७७)
इति वेदविद केचिद् भिन्नाभिन्नसतत्त्वकम्।
सर्वं वस्त्वभिवाञ्छन्ति तत्तु युक्त्या न युज्यते।
(तत्रैव वा० ५।१।६३, पृ० १९५९)

६—ब्रह्मापर सर्वभावस्य साध्यत्वोपपत्तेः। नहि परस्य ब्रह्मणः सर्वभावापत्ति विज्ञानसाध्या। विज्ञानसाध्या च सर्वभावापत्तिमाह, तस्मात्तत् सर्वमभवदिति। तस्माद् ब्रह्म वा इदमग्र आसीदित्यपरं ब्रह्मेह भवितुमर्हति। मनुष्याधिकाराद्वा तद्भावी ब्रह्मणः स्यात्। सर्वं भविष्यन्तो मनुष्या मन्यन्त इति हि मनुष्याः प्रकृतास्तेषां चाभ्युदयनिःश्रेयससाधने विशेषतोऽधिकार इत्युक्तम्। न परस्य ब्रह्मणो नाप्यपरस्य प्रजापतेः। अतो द्वैतैकत्वापरब्रह्मविद्यया वा अपहितयाऽपरब्रह्मभावमुपगतो भोज्यादपावृतः सर्वप्राप्त्योच्छिन्नकामकर्मबन्धनः परब्रह्मभावी ब्रह्मविद्याहेतो ब्रह्मत्वमधीयन्। दृष्टश्च लोके भाविनी वृत्तिमाश्रित्य शब्दप्रयोगो यथोदनं पचतीति, शास्त्रे च परिव्राजकः सर्वभूताभयदक्षिणामित्यादि। तथेहापि केचिद् ब्रह्म

सुरेश्वराचार्येणापि बृहदारण्यकोपनिषद्भाष्यवार्तिके परापर-द्विविधरूपब्रह्मणो विषये भर्तृप्रपञ्चस्य मतमित्थमेवोक्तम्।[१०]

अस्मिन्मते आत्मा (जीव.) परमेश्वराद् भिन्नः। आत्मनो द्वौ भेदौ-एकः क्षेत्रज्ञोऽपर. परमात्मेति। बृहदारण्यकोपनिषदि तृतीयाध्याये पञ्चमब्राह्मणे उपस्तेन काहोलेन च याज्ञवल्क्यं प्रति आत्मा पृष्टः। तद्व्याख्यावसरे भर्तृप्रपञ्चेनात्मन. क्षेत्रज्ञः परमात्मेति द्वौ भेदौ प्रतिपादितौ। तेनोक्तम् उपस्तकहोलाभ्यां पृष्ट आत्मा यद्येकविषयकस्तर्हि तयो र्द्वयो पृथक्पृथक्प्रश्नानर्थक्य भवेदतस्तयोः प्रश्नो भिन्नभिन्नविषयकः, एकः क्षेत्रज्ञरूपात्मविषयकोऽपरः

---

ब्रह्मभावी पुरुषो ब्राह्मण इति व्याचक्षते। तन सर्वमावापत्तेर-निरपत्वदोषात्।

( बृ० भा० उ० शा० भा० १।४।१०, पृ० १५१ )

१०—द्वैतैकत्वात्मकब्रह्मविद्याकर्मैकसाधन।

( बृ० भा० उ० भा० वा० ४।१।११९८ )

अपरब्रह्मतापन्नो भोज्यादपावृत्तमानस।
नि दोषप्राप्त्या चोच्छिन्नकामकर्मादिबन्धनः॥

( तत्रैव वा० ४।१।११९९ )

परब्रह्मपरिज्ञानभावनोपचयात्पर।
ब्रह्मभावी नरोऽत्रोऽत्र ब्रह्मशब्देन भण्यते॥

( तत्रैव वा० ४ १-१२००, पृ० ६७२-६९३ )

अत्रत्यानन्दगिरिव्याख्यानमपि द्रष्टव्यम्।

अत्र आनन्दगिरि व्याचष्टे — परापरब्रह्मणोरत्र ब्रह्मशब्दत्वा निराकृत्य ब्रह्मशब्दार्थं निगमयति द्वैतैकत्वेत्यादिनेति।

भविष्यद्वृत्त्या लोकेऽपि प्रयोगो दृश्यते यथा।
ओदनं पचतीत्यादि तथेहापि भविष्यति॥

( तत्रैव वा० १।४।१२०१ पृ० ६७३ )

गृहस्थो भार्यां विन्देत शास्त्रे चापि समीर्यते।
एवं व्याचक्षते केचिद् गम्भीरन्यायवादिन॥

( तत्रैव वा० १२०२ )

परमात्मरूपात्मविषयकः ।[11]

सुरेश्वराचार्येणाप्ययमेवार्थः प्रत्यपादि ।[12]

---

११—किमुषस्तकहोलाभ्यामेक आत्मा पृष्टः किं वा भिन्नावात्मानौ तुल्यलक्षणाविति । भिन्नाविति युक्तं प्रश्नयोरपुनरुक्तत्वोपपत्तेः । यदि ह्येक आत्मोषस्तकहोलप्रश्नयोर्विवक्षितस्तत्रैकेन प्रश्नेनाधिगतत्वात्तद्विषयो द्वितीयः प्रश्नोऽनर्थकः स्यात् । नचार्थवादरूपत्वं वाक्यस्य । तस्माद् भिन्नावेतावात्मानौ क्षेत्रज्ञपरमात्माख्याविति केचिद् व्याचक्षते । तन्न ।

( बृ० भा० उ० शा० भा० ३।५।१ पृ० ४४६ )

अत्र आनन्दगिरिराह—ब्राह्मणद्वयेनार्थद्वयं विवक्षितमिति भर्तृप्रपञ्चप्रस्थानं प्रत्याह—तन्नेति ।

१२—उषस्तप्रश्न एवायं कहोलेनापि पृच्छ्यते ।
तत् किमयं पुनः प्रश्नः स एव कृतनिर्णयः ॥

( बृ० भा० उ० भा० वा० ३।५।५, पृ० १२४० )

अत्रानन्दगिरिराह—स्वाभिप्रेतां सङ्गतिमुक्त्वा भर्तृप्रपञ्चाभिप्रेतां वक्तुं पूर्वपक्षयति । उषस्तेति । तत्रार्थभेदाभावे सतीति यावत् ।

क्षेत्रज्ञात्मानमप्राक्षीदुषस्तो न परं पदम् ।
अप्राक्षीत्परमात्मानं कहोलोऽपि न दुःखिनम् ॥

( तत्रैव ३।५।१३ )

उपन्यासो द्वयोरत्र विज्ञानात्मपरात्मनोः ।
प्रश्नाभ्यामपुनरुक्ताभ्यां न्याय्यमागमसामर्थ्यात् ॥

( तत्रैव ३।५।१४ )

इति व्याचक्षते केचित्प्रश्नावेतौ यथोदितौ ।
न सम्यगेतद् व्याख्यानं यथा तदभिधीयते ॥

( तत्रैव ३।५।१५ )

प्रत्युक्तेरेव च इति प्रश्नयोरुभयोरपि ।
क्षेत्रज्ञपरमात्मानौ नात्रात्मानौ विवक्षितौ ॥

( तत्रैव ३।५।१६ )

जीवः

अस्मिन् मते जीवः परमात्मनो विकारः। 'कतम आत्मेति योऽयं विज्ञानमयः' (बृ० आ० उ० ४।३।७) इति वाक्ये विज्ञानमयः इति पदे मयट्प्रत्ययस्यार्थं विकारं स्वीकृत्य विज्ञानं परं ब्रह्म तद्विकारो जीवो विज्ञानमय इति प्रतिपादितम्। अयं या उपनिषदः भाष्ये श्रीशङ्कराचार्येण तद्व्याख्याने आनन्दगिरिणा चायमर्थः खण्डितः स्पष्टीकृतश्च।[१३]

यथाह भगवाञ्छङ्कराचार्यः—

'येषां परमात्मविज्ञप्तिविकार इति व्याख्यानं तेषां विज्ञानमयो मनोमय इत्यादौ विज्ञानमयशब्दस्यार्थदर्शनादश्रौतार्थतावसीयते।'

अत्रानन्दगिरिः—'विज्ञानं परं ब्रह्म तत्प्रकृतिको जीवो विज्ञानमय इति मतं प्रपञ्चं हृत्कमनुवदति—येषामिति।'

(बृ०आ० उ० शा० भा० ४।३।७ पृ० ५६०)

श्रीसुरेश्वराचार्येणनत् सविशेष स्पष्टीकृतम्[१४]

व्याचख्यु र्मयटं ये तु विकारार्थे महाधियः।
स्वव्याख्यानविरोधः स्यात्तेषां चानर्थसंगतिः॥

(बृ० आ० उ० भा० वा० ४।३।३१८ पृ० १४३२)

---

प्रश्नोक्तिरेकरूपा च प्रत्यभिज्ञायतेऽञ्जसा।
प्रत्युक्तिश्च तथादनति भिन्नार्थे वचसी कथम्॥

(तत्रैव ३।५।१७)

एकत्र च न सम्भाव्यावात्मानौ द्वौ शरीरके।
आत्मप्रत्यय एकार्थस्तथा श्रुतिवचास्यपि॥

(तत्रैव ३।१।१८ पृ० १२४१–१२४२)

१३—बृ० आ० उ० शा० भा० ४।३।७ पृ० ५६० आ० आ० मु० सविशेषमत्र द्रष्टव्यम्।

१४—बृ० आ० उ० भा० वा० ३१८ इत्यत आरभ्य ३२२ वा० पर्यन्त-मानन्दगिरिव्याख्यासहितं सविशेषं द्रष्टव्यम्, पृ० १४३३–१४३४ आ० आ० मु०।

आत्मनश्चापि निःशेषविकारप्रतिषेधतः।
न जायत इति स्पष्टं श्रुतिमन्त्रोक्तिसंश्रयात् ॥
( तत्रैव वा० ३१९ )

अनिर्मोक्षप्रसक्तिश्च विकारश्चेत् परमात्मनः।
मयग्णातो विकारे स्यात्प्रायार्थस्त्वत्र युज्यते ॥
( तत्रैव वा० ३२० )

विज्ञानमय इत्यत्र वाक्ये प्रायार्थतेष्यते।
पृथिव्यादिमयोऽप्यात्मा यस्मादूर्ध्वं प्रवक्ष्यते ॥
( तत्रैव वा० ३२१ )

आचार्यब्रह्मदत्तमतेनास्य किञ्चित्साम्यं वर्तते। ब्रह्मदत्तोऽपि जीवस्य जन्म मनुते। जीवस्य जन्म महानारायणोपनिषदि १।४, विष्णुपुराणे ६।४।२९ महाकवि-कालिदासस्य कुमारसम्भवे २।१०, श्रीसुरेश्वराचार्यकृते मानसोल्लासे तथा ब्रह्मसूत्रश्रीभाष्ये १।४।२० वर्णितम्।

*परस्य ब्रह्मणोऽवस्थाः*

अस्मिन्मते परस्य ब्रह्मणो द्वे अवस्थे पञ्च अवस्थास्तथाऽष्टाव वस्थाः भवन्ति—( १ ) पिण्ड', (२) जाति', ( ३ ) विराट्, (४) सूत्रम्, (५) दैवम्, (६) अव्याकृतम्, (७) साक्षी, (८) क्षेत्रज्ञश्चेति।[१५] शब्दान्तरेणापि अष्टावस्था यथा—(१) ईश्वरः, (२) अव्याकृतम्, (३) प्राणाः, (४) विराट्, (५) भूतम्,

१५—बृ० आ० उ० शा० भा० ३।८।१२, पृ० ४९२ बृ०भा०उ०भा०वा० १।४।१०६२,पृ० ६४७।, १।४।१०४३, पृ० ६४३।, १।४।४८६ पृ० ५३२।, तत्रैव १।४।११४३ पृ० ६६२ तथा १।४।११५१, पृ० ६६३।

(६) इन्द्रियाणि, (७) जातिः। अनेश्वरशब्देनान्तर्यामी साक्षी च विवक्षितौ। एवं चेश्वरशब्दवाच्ययोरन्तर्यामिसाक्षिणोः संयोगेन अष्टाववस्था भवन्ति।[१६]

पिण्डो देहादिः,[१७] जातिः सामान्यम्, विराट् आत्मन एकावस्था, सूत्रम् आत्मन एकावस्था,[१८] दैवम्—आत्मनोऽवस्थाभेदः, इन्द्रियाणि

१६—तत्रैव १।४।४८७ पृ० ५३२
लोककामात्मको देवो विराट्सूत्रः प्रजापतिः।
तस्याधिलोकमात्मोक्तो योऽयमन्नमयात्मकः॥
(तत्रैव १।५।२०७ पृ० ८३४)

एतदर्थम्—इत्येवं केचिदिच्छन्ति तथान्यादत्यपीष्यते। बृ० भा० उ० भा० वा० १।५।१७४ इत्यत आरभ्य २०६ वा० पर्यन्तम् आनन्दगिरिव्याख्यासहितं पृ० ८२८—८३४ सविशेषं द्रष्टव्यम्।

तदेतत् खलु वैराज्य नामरूप क्रियात्मकम्।
नामरूपात्मशब्देनच्यत प्रत्यामृत नु तत्॥
(तत्रैव १।६।३६ पृ० ८७५)

प्राणशब्देन पिण्डात्मा भण्यते कारणात्मकः।
पिण्डस्य मरणे नैतत् म्रियतेऽतोऽमृतं मतम्॥
(तत्रैव १।६।३७ पृ० ८७५)

सत्त्व स्यन्भेति तत्सत्यं पञ्चभूतात्मकं विदुः।
कारणापत्नं स्थूलं वैराजं तत्स्यद्यते॥
(तत्रैव १।६।३८ पृ० ८७५)

अस्याप्यन्तर्गतः प्राणः विज्ञानात्मेति च विदुः।
आसत्तत्स्य स्थितः स्थाणुः परिणामात्मकः सदा॥
(तत्रैव १।६।४० पृ० ८७५)

ईश्वराव्याकृतप्राणविराड्भूतेन्द्रियादिकम्।
नाविद्योपाश्रयं मुक्त्वा सम्भाव्यं प्रत्यगात्मनि॥
(तत्रैव १।४।४८७ पृ० ५५३२)

१७—बृ० भा० उ० भा० वा० १।४।६६६ पृ० २७३।

१८—द्र० ४।४।७१६—७२१ भा० सि० व्याख्या।

देवता:[19] अव्याकृतम् आत्मनोऽवस्थाभेदः, हिरण्यगर्भ.,[20] साक्षी—अन्तर्यामी, क्षेत्रज्ञ.—जीवः ।

भूतशब्देन चात्र भवनयोग्या व्यक्तयो गृह्यन्ते ।[21] अविद्याविशिष्टः साक्षी सृष्टे कार्ये प्रविशति अर्थाद् मोहात् प्रपञ्चभावं प्राप्नोति, नामरूपात्मको भवतीति यावत् ।[22]

*प्रकारान्तरेण राशित्रये विभागः*

अस्मिन् मते ससारो राशित्रये विभक्त । प्रथम उत्तमो राशि. परमात्मराशिः, द्वितीयो मध्यमो राशि जीवराशिः, तृतीयोऽधमो राशि मूर्तामूर्तराशि ।[23] अत्र मध्यमो जीवराशिः कर्ता भोक्ता आत्मना

---

१९—अन्तर्यामिसाक्षिणावीश्वरशक्तितौ । भूतशब्देन भवनयोग्या व्यक्तयो गृह्यन्ते । इन्द्रियशब्देन देवतोच्यते । आदिपदेन जातिरुक्ता ।
(बृ० भा० उ० भा० वा० १।४।४८७ आ० गि० व्या० पृ० ५३२)

२०—अव्याकृतावस्था परापराभ्यामन्तरालावस्था ।
बृ० भा० उ० भा० भा० आनन्दगिरिव्याख्या—१।४।१५ पृ० १६२ तथा १।४।४८७ पृ० ५३२ )

२१—बृ० भा० उ० भा० वा० १।४।४८७ पृ० ५३२ । अत्रैव १६ सख्याकटिप्पण्या वार्तिकमुद्धृतम् । तस्य व्याख्याने आनन्दगिरि-राह—ईश्वराद्यष्टावस्थ जगत् पारमार्थिकमिति कश्चिदिष्टत्वात् कथ द्वैतस्य मिथ्यात्वम् ।

२२—योऽसावविद्योत्सङ्गस्थः प्राक् प्रविष्ट इतीरित ।
स्वाभासान्त स संमोहान्नामरूपात्मकोऽभवत् ।।
( बृ० भा० उ० भा० वा० १।४।१७७,पृ० ६६६ )
अत्रानन्दगिरिराह—अविद्याविशिष्ट साक्षी सृष्टे कार्ये प्रविष्टो यो व्याख्यात स मोहात् प्रपञ्चभाव प्राप्त. सच्चिदपदवाच्यो भवतीत्यर्थ. ।

२३—बृ० भा० उ० वा० भा० २।३।६ पृ० ३२८ ।

सह भावनाज्ञानकर्मरागादिसमुदायः प्रयोजको भवति। तृतीयो मूर्त्तामूर्त्तराशिः प्रयोज्य तथा साधन भवति। श्रीमत्सुरेश्वराचार्येण बृहदारण्यकोपनिषद्भाष्यवार्त्तिके इत्थं स्पष्टीकृतम्—

मूर्तामूर्तविभागेऽस्य विभागो विनिवर्तते।
इति स्वोक्तमविस्मृत्य वासनाभेदगीः कथम्॥
(बृ० भा० उ० भा० वा० २।३।१११ पृ० १०११)

रचयन्ति तथाऽसाध्वीं प्रक्रियां न्यायवर्जिताम्।
मूर्तामूर्तात्मको राशिरेको बाह्यः किलेष्यते॥
(तत्रैव ११२)

उत्तमः परमात्माख्यो राशिरत्राभिधीयते।
मध्यमोऽयं तृतीयस्तु ताभ्यां राशिः प्रयोजकः॥
(तत्रैव ११३)

इत परमप्येतद्वर्णितम्।[२४]

*पुन र्ब्रह्मणः प्रकारान्तरेण विभागः*

ब्रह्मण. सामान्यविशेषरूपेण विभाग. क्रियते। गोत्वाश्वत्व-प्रत्यक्त्वादीनि सामान्यादि खण्डमुण्डशोणदेवदत्तादयो विशेषा.। उभे सम्मिलिते कृत्स्न पर ब्रह्म मन्यते। सामान्यविशेषात्मना च कृत्स्न ब्रह्मोपासितव्यम्। यथोक्त श्रीसुरेश्वराचार्येण—

आत्मशब्दाभिधेयेऽर्थे प्रत्यक्सामान्यरूपके।
अन्तर्भवन्ति निखिला विशेषा इति केचन॥
(बृ० भा० उ० भा० वा० १।४।६४७ पृ० ६२३)

सामान्येन समस्तं तद् विशेषै र्व्यस्तमेव च।
कृत्स्नमेव परं ब्रह्म सदोपासीत यत्नतः॥
(तत्रैव ६४८)

---

२४—द्र०—बृ० भा० उ० भा० वा० २।३।११४–१७८ पृ० १०११–१०२२। अत्र आनन्दगिरिव्याख्यापि द्रष्टव्या।

एवमेवान्यत्रापि।[२५]

अवस्थावदवस्थाभेदेन ब्रह्मजगतोः कार्त्स्न्यम्। ब्रह्म अवस्थावत् जगच्च अवस्था।[२६] कार्यकारणभावेन ब्रह्मजगतो. कार्त्स्न्यम्, ब्रह्म-कारण जगच्च कार्यम्। भागिभागभेदेन च ब्रह्मजगतोः कार्त्स्न्यम्, ब्रह्म भागि जगच्च भागः—

भागभागिविभागेन नाभिनेम्यरिवत्तथा।
व्याचक्षते महात्मानः सम्प्रदायबलात् किल॥
(बृ० भा० उ० भा० वा० १।४।६५०, पृ० ६२४)

आनन्दगिरिः—जगद्ब्रह्मणोरंशांशित्वे दृष्टान्तमाह–नाभीति यथा रथचक्रस्यावयविनो नाभिनेमिरराश्चेत्यवयवास्तथा जगद्ब्रह्मणो-र्भागभागितेत्यर्थः। मिथो विरुद्धत्वाद् भर्तृप्रपञ्चव्याख्यानम् अप्रामा-णिकमिति मन्वानस्तन्मतं सोपहासमुपसंहरति व्याचक्षत इति।

---

२५—१।४ ६९५ पृ० ५७३ तथा पञ्चपादिकाविवरणे पृ० २५६।

२६—अवस्थावदवस्थाभि. क्वचित्कार्त्स्न्यं प्रचक्षते।
कार्यकारणभावेन क्वचिद् व्याचक्षतेऽन्यथा॥
(बृ० भा० उ० भा० वा० १।४।६४९ पृ० ६२४)

८०—कार्यात्मकारणात्मनो निषेधः–(तत्रैव वा० १।४।६४९–६६८ पृ० ६२५–६२७)

कार्यात्मा कारणात्मा च द्वावात्मानौ परात्मन।
अत्यग्याथात्म्यमोहोत्थौ तन्नाशे नश्यतस्ततः॥
(तत्रैव वा० २।४।२४२ पृ० १०७३)।

भर्तृप्रपञ्चपरोक्ते हि कार्यकारणतात्मनः।
कुतः प्रमाणात् सम्भाव्या कार्यकारणधस्मरे॥
(तत्रैव २४३)

नैतस्माज्जायते किञ्चिन्नाय जातः कुतश्चन।
आत्मनीयेय श्रुति वक्ति कारणादिनिषेधकृत्॥
(तत्रैव २४४)

### आसङ्गः अविद्या

जीवः आसङ्गेन अविद्यया चोभाभ्यां बद्धः सन् लोके दुःखमनुभवति। मुक्तये उभयोरासङ्गाविद्ययोरभावोऽपेक्षितः। एतन्मते उभयोरेव भेदः कृतः। आसङ्गो रूपादिविषयः सन् चक्षुरादिभिः करणैरात्मानं (भोक्तारम्) अनुप्रविश्यावतिष्ठते।[२७] बृहदारण्यकोपनिषद्भाष्यवार्तिकव्याख्यायामानन्दगिरिराह—

'आसङ्गस्तु विषयेन्द्रियद्वारेण बहिष्ठः समागम्यात्मानमनुप्रविशतीति।.........विषयप्रवणमासङ्गमनुसृत्य चैतन्यमात्मनो निर्गम्य विषयाधीनं सुखदुःखाद्यनर्थमारभते। (बृ० भा० उ० भा० वा० १०९७, पृ० १५७४)

अविद्या विपरीतग्रहं जनयति। उक्तं श्रीसुरेश्वराचार्येण—

'यत्तद्विज्ञानमात्मीयं तद्विकृत्यावतिष्ठते।
मिथ्याज्ञानग्रहायासावविद्याप्रत्यगात्मनः॥'

(बृ० भा० उ० भा० वा० १०९१, पृ० १५७३)

अत्र आनन्दगिरिराह—'तदेव विज्ञानं विकृत्य विपरीतग्रहाय प्रकल्पयति।'

एवञ्चाविद्या चैतन्यस्वरूपपरमात्मनो ग्रहे बाधिका भवति।[२८]

### विवर्तवादः

भर्तृप्रपञ्चो विवर्तपक्षं समाश्रयत। बृहदारण्यकोपनिषद उपोद्घातभाष्यमनेन विवर्तानुसारि व्याख्यातमन्यत्र च परिणामानुसारि

२७—रूपादिविषयासङ्गः करणैश्चक्षुरादिभिः।
अनुप्रविश्य भोक्तारं रज्जयित्वावतिष्ठते॥
(बृ० भा० उ० भा० वा० ४।३।१०९६, पृ० १५७४)

२८—आसङ्गाविद्ययोः स्वरूपकार्यज्ञानाय द्रष्टव्यानि—बृ० भा० उ० भा० वा० १०८९—इत्यारभ्य १०९७ पर्यन्तवार्तिकानि, पृ० १५७३—१५७४।

व्याख्यातम्। अतोऽनेन कः पक्षः समादृतः इत्याकाङ्क्षायाम् आनन्दगिरिणोक्तम्—

'उपोद्घातादन्यत्रापि भर्तृप्रपञ्चभाष्यं विवर्तवादानुसारि नेतव्यमित्यस्मन्मतानुकूलमेव तद्भाष्यम्।' 'सर्वमपि तद्भाष्यं विवर्तानुसारितया सिद्धान्ताविरुद्धम्।'

एवं च भर्तृप्रपञ्चेन विवर्तवादं परिणामवादमुभयमपि पक्षमाश्रित्य व्याख्यातवान्। किन्तु विवर्तवादपक्ष एव तस्याभिमतः।[२६]

*इन्द्रियाणि*

एतन्मते इन्द्रियाणि भौतिकानि न तु आहङ्कारिकाणि।

*कामसंकल्पादिवासनानामाधारः*

एतन्मते कामसंकल्पवासनादीनामाधार आत्मा न, अपि तु हृदयम्। हृदयाश्रिताः कामादिवासना आत्मानमुपसृत्य उपश्लिष्यन्ति। यथा पुष्पे स्वसम्बन्धिनि तैलं गन्धयति पुष्पापगमेऽपि तैलं गन्धवद् भवति तथैव हृदयवियोगेऽपि हृदयाश्रिता वासनाः आत्मसंसक्ताः भवन्ति।[३०] एवंविधेन वासनासंसर्गेण संसक्तो जीवः (आत्मा) सुखदुःखादिभोक्ता मन्यते।

२६—(क) तत्रैव १।४।११६४–६५, पृ० ६६६।
भर्तृप्रपञ्चभाष्यस्य व्याख्येयं प्रदर्शितम्।
सूत्रक्षरानुसारेण तथानुभववर्त्मना॥
(तत्रैव वा० १।४।११८८, पृ० ६७१)
आनन्दगिरिराह—'प्रकारो विवर्तवादानुसारेण प्रवृत्तिप्रकारः।'
(ख) सिद्धित्रये, पृ० २७।
(ग) नैष्कर्म्यसिद्धौ, पृ० ११–१२।

३०—'ये तु वादिनो हृदि श्रिता कामा वासनाश्च हृदयसम्बन्धिनमात्मानमुपसृत्योपश्लिष्यन्ति हृदयवियोगेऽपि चात्मन्यवतिष्ठन्ते पुटतैलस्य इव पुष्पादिगन्ध इत्याचक्षते।
(बृ० भा० उ० शा० भा० ४।४।२२, पृ० ६१४)

मोक्षस्तस्य प्रक्रिया च

प्रधानो मोक्ष शरीरपातोत्तर ब्रह्मणि लय । अस्य भेदोऽनुपदमग्रे निरूप्यते । आत्मन क्रमेणेन्द्रादिमयत्वम्, सूत्रमयत्वम्, विज्ञानमयत्वम्, विज्ञेयसूत्रमयत्वम्, तत्तत्त्वमयत्व ब्रह्मैव भवति । यथाह—भर्तृ-प्रपञ्चमतं श्रीसुरेश्वराचार्य —

द्वैतैरूनं श्रुतात्स्वन्द्रात्पश्यतीह यदा ह्यसौ ।
हैरण्यगर्भमात्मेति बौद्धं ज्ञानं तदा भवेत् ॥
(बृ० भा० उ० भा० वा० ४।४।७१९ पृ० १८३९)

स खलूत्पन्नविज्ञानस्तन्मयः संस्तथा व्रजेत् ।
तस्मिन्नेव स विज्ञान आत्मरूपे स्थिरो भवेत् ॥
(तत्रैव ७२०)

बौद्धेऽथ स यदा तत्त्वं परं समनुपश्यति ।
तदा विविच्य रूपाणि क्रमशो यो धियः शुभम् ।
चीयते केवलं शुद्धं तत्त्वं ब्रह्म सनातनम् ॥
(तत्रैव ७२१)

आनन्दगिरि —इन्द्रादिमय वस्तुतत्त्वाऽऽत्मन सूत्रमयत्वमाह-द्वैतेति । प्रामाणिकव्यवहारे श्रुतसूत्रप्रतिपादकशब्दादहं हिरण्य-गर्भोऽस्मीतिसमस्तव्यस्तात्मक सौत्र तत्त्वमात्मा यदा पश्यति तदा तस्य बुद्धिवृत्तिरूप विज्ञानमावृत्तियोग्य भवति । स चैवमुत्पन्नज्ञानस्त दभ्यसन् विज्ञानमयः सन् विज्ञानानुसारेण विज्ञेयसूत्रत्व गच्छति । ततश्च तस्मिन्नेवाहङ्ग्रहेण ज्ञाते तद्रूपे बौद्धादिशब्दिते स्वरूपभूते साधरस्तिष्ठतीत्यर्थ । सूत्रात्मना प्राप्तस्य तत्त्वमयत्वमाह । अथेति । सूत्रात्मना स्थित्यनन्तर स पुरुषस्तथा स्थितो यदा तत्त्वमादिवाक्यादह ब्रह्मेति पर तत्त्व सम्यक् पश्यति तदा तदनुसन्धानाद् धियो देवतादि-रूपाणि क्रमेण त्यक्त्वा सर्वससारनिर्मुक्त तद्धेतुना च हीनमद्वय

वास्तवमनाद्यनन्तं ब्रह्म नैरन्तर्येण यो वीक्षते स तदैव तत्क्रतुन्यायाद् भवतीत्यर्थः ।

### मोक्षभेदः

मोक्षस्य द्वौ भेदौ । एकोऽपरमोक्षोऽथवा अपवर्गः, द्वितीयः परो मोक्षो ब्रह्मभावापत्ति र्वा । अस्मिन् देहे एव ब्रह्मसाक्षात्कारानन्तरम् अपरमोक्षो जायते । अय मोक्षो जीवन्मुक्तिसमानः, अयमेव चापवर्ग कथ्यते ।[३१] वस्तुत आसक्तत्यागनिमित्तकः संसारनिवृत्तिमात्ररूपोऽयमपरमोक्षः । अस्मिन्मोक्षे देहस्थितस्य ब्रह्मणि लयो न विवक्ष्यते । द्वितीयो मोक्षः पराभिधानो देहपातानन्तर भवति । 'अविद्यानिवृत्तेरनन्तरमय जायते । अस्मिन् मोक्षे ब्रह्मणि जीवस्य लयोऽभिप्रेतः ।[३२]

एवञ्च भर्तृप्रपञ्चमते ब्रह्मसाक्षात्कारे सत्यपि परमोक्षदशायामविद्या पूर्णतया न निवर्तते । द्वितीयेपरमोक्षे एव अविद्या पूर्णतया निवर्तते ।

---

३१—(क) अपवर्गाख्यमन्तरालावस्थम्—(बृ०आ०उ०शा०भा० ।१।४।१० पृ० १५१ )

(ख) बृ०आ०उ०भा०वा० ३९१–४१२, पृ० १७८५–१७८६ ।

३२—साक्षात्करणसिद्ध्यर्थमतो राजाब्रवीन्मुनिम् ।
अभय त्वामिति वचस्तद्ध्यस्याप्राप्तमुच्यते ॥
( बृ० आ० उ० भा० वा० ४।२।१०१ पृ० १३७४ ) ।
यदि वा द्विविधो मोक्षो जीवस्येव शरीरके ।
एक साक्षात्कृतब्रह्मा मृतेरूर्ध्वं तु तल्लय ॥
( तत्रैव १०२ )

अत्रान-दगिरिः—प्राप्तमभय याज्ञवल्क्येन नाप्राप्त न तु साक्षात्कृतम् । अतो राजाशीरुचितेत्यर्थ । ... ... यथाहुर्द्विविधो मोक्षोऽस्मिन्नेव शरीरे साक्षात्कृतब्रह्मा—मुक्त इत्युच्यते न ब्रह्मणि लीनस्तस्य शरीरपातोत्तरकाल ब्रह्मणि लयो द्वितीयो मोक्षः स त्वाशासितव्यइति ।

अस्मिन् मते परमोक्षप्राप्तेः पूर्वं जीवो हिरण्यगर्भावस्थामाप्नोति।[३३] इयं मोक्षस्य पूर्वकालिकी अन्तरालाऽवस्थोच्यते। अस्यामवस्थायां परमात्मन आभिमुख्यं सदा लभ्यते। अत्र प्रथममोक्षपक्षे परिच्छिन्नकर्मात्मदर्शनं तथा द्वितीयमोक्षपक्षेऽपरिच्छिन्नकर्मात्मदर्शनं मन्यते।[३४]

*जीवन्मुक्तिः*

विज्ञाय प्रज्ञां कुर्वीत (बृ० भा० उ० ४।४।२१) इत्यस्य श्रीभर्तृप्रपञ्चव्याख्यानेन लभ्यते जीवन्मुक्तिरपि सिद्ध्यति। तेन ब्रह्मणि मनसो लयः प्रदर्शितः। आनन्दगिरिणा च तद्व्याख्याने जीवन्मुक्तिः साधिता। तथा—

मुक्तिप्रवेशोपायोऽयं यथोक्तेनेह वर्त्मना।
उक्तो मनस एकस्मिन् प्रत्यये मानसो यतः॥
(बृ० भा० उ० भा० वा० ४।४।७३१ पृ० १८४१)

परं तत्त्वं प्रदर्श्यैनं मनस्यद्वैततां गते।
विज्ञानं केवलं शुद्धं स्वात्मन्येवावतिष्ठते॥
(बृ० भा० उ० भा० वा० ४।४।७३३ पृ० १८४०)

दाह्यं दग्ध्वा यथावह्निर्दाह्यनाशमनु स्वयम्।
नश्यतीदं मनस्तद्वद् द्वैतमद्वैतरूपताम्॥
आपाद्य विषयं सम्यक् स्वयमेव प्रतीयते।
(तत्रैव ७३४)

मनस्यस्मिन्विलीने तु यत्सुखं स्वात्मसाक्षिकम् ।
योगावस्थां परामेतामाहुर्योगविदो जनाः ॥
(तत्रैव ७२५)

आनन्दगिरिः—

मनोलयादनन्तरं परमसुखरूपा परब्रह्मावस्था विद्वदनुभवसिद्धा । तत्र योगसम्मतिमाह । मनसीति । उक्तं हि सर्ववृत्तिनिरोधे त्वसंप्रज्ञातसमाधिरिति । धर्ममेघनामधेयं समाधिमभिधाय चोक्तं ततः क्लेशकर्मनिवृत्तिस्तस्मादविद्यादयः क्लेशाः समूलकाषं कषिता भवन्ति, कुशलाकुशलाश्च कर्माशयाः समूलघातं हता भवन्ति, क्लेशकर्मनिवृत्तेस्तु जीवन्नेव विद्वान्मुक्तो भवति ।

*मोक्षसाधनम्*

अस्मिन् मते मोक्षसाधनं न केवलं कर्म न वा केवलं ज्ञानं किन्तु ज्ञानकर्मसमुच्चयः । एतन्मते एकत्वं नानात्वं चोभयमपि सत्यं पूर्वमुक्तं तेनैकत्वेन ज्ञानान्मोक्षव्यवहारः सिद्ध्यति नानात्वांशेन च कर्मकाण्डाश्रयौ लौकिकवैदिकव्यवहारौ सिद्ध्यतः[३५] ।

एवञ्चास्मिन्मते ज्ञानकर्मसमुच्चयवाद आहतः[३६] । समुच्चयोऽपि द्विविधः, एको हिरण्यगर्भविज्ञानकर्मणोः समुच्चयः, अपरोऽव्यक्तब्रह्मविद्यया सह अव्यक्तसूत्रात्मविद्यायाः समुच्चयः ।[३७] तत्र प्रथमसमुच्चयस्य फलं जीवस्य पूर्ववर्णितान्तरालावस्थाप्राप्तिः[३८] ।

३५—ब्र० सू० २।१।१४ शा० भा०, बृ० भा० उ० शा० भा० १।४।१०, पृ० १५१, १।४।१५ पृ० १८७–१९२ ।

३६—बृ० भा० उ० भा० वा० १।४।१७००–१७०६ पृ० ७६८–७७० । तत्रैव वा० ४०४ पृ० १७८७ वा० ३०२ पृ० ८५१, वा० १४६७ पृ० ७२४ ।

३७—तत्रैव वा० १।४।१७०८–१७०६, पृ० ७७० ।

३८—बृ० भा० उ० भा० वा० १।४।१७१२–१७१३ पृ० ७७६ मता-

*विद्या*

अस्मिन्मते ज्ञानसाधिका विद्या द्विविधा—

परापरत्वभेदेन द्वे विद्ये समुदीरिते ।
(बृ० भा० उ० भा० वा० ३।२।११७½–पृ० ११६७)

तपो विद्या च विप्रस्य निःश्रेयसकरं परम् ।
तपसा कल्मषं हन्ति विद्ययाऽमृतमश्नुते ॥
(३।२।१७८ पृ० ११६८)

अज्ञानन्दगिरिः—ज्ञानकर्मणोरुपायोपेयभावेन समुच्चय. सहार्थो स पूर्वार्धार्थः । कर्मणा ज्ञानप्रतिबन्धकपापहानिस्ततश्च परिपक्व-विद्यया स निर्वाणमाप्नोतीति मन्त्रोत्तरार्धार्थः ।

*प्रसंख्यानवादी*

श्रीमान् भर्तृप्रपञ्चः प्रसंख्यानवादी । अस्य मते 'विज्ञाय प्रज्ञां कुर्वीत' (बृ० भा० उ० ४।४।२१) इति श्रुत्यनुरोधेन पूर्वं तत्त्वमसी-त्यादि वाक्येन प्रज्ञा जायते तदनन्तर मनसैवानुद्रष्टव्यम् । (बृ० भा० उ० ४।४।१९) इत्यनुरोधात् मनोलयपूर्वक ब्रह्मसाक्षात्कार. । अर्थात् प्रथम तत्त्वमस्यादिवाक्यैः शाब्द परोक्षज्ञान ततोऽभ्यासेनो-पासनया वा ब्रह्मावाप्तिः ।

---

नन्दगिरि —शरीरद्वयविवरणानन्तर परमात्मनो जीवरूपमा-पन्नस्य सर्वमपि मोक्षमतिनङ्ध्यावसितम्याज्ञानमात्रेण यतो व्यवपिरतस्तस्य कामादिक्षयद्वारा परमप्राप्त्यान्तराले स्थितिराद्य-समुच्चयफलम् । (तत्रैव वा० १७१६, १७१७ पृ० ७७१)

अज्ञानन्दगिरिः—द्वितीयसमुच्चयफलमाह–मूर्त्तोपास्त्या कामादि-क्षयितः फलमात्मविद्यया स्वर्ग तावन्मात्रोपास्त्या परममृतत्वमिति विद्या चाविद्या चेत्यादावुक्तम् ।

यथोक्तम्—

इह व्याचक्षते केचिदुक्ताद् व्याख्यानतोऽन्यथा ।
कृतायाः करणं कीदृक् प्रज्ञाया इति चोदिते ॥
(बृ० भा० उ० भा० वा० ४।४।७०६ पृ० १८३७)

उच्यते वचसा बुद्धौ वस्तुमात्रं समर्प्यते ।
विज्ञातस्य सतस्तस्य तादात्म्यप्रतिपादनम् ॥
(तत्रैव वा० ७०७)

भावनाज्ञानसन्तानैः प्रज्ञाकरणमुच्यते ।
अस्मिन् काले तु सा प्रज्ञा निष्ठां नीता कृता भवेत् ॥
(तत्रैव वा० ७०८)

आनन्दगिरिः—उच्यत इति—अनुभवानारूढं वस्तु बुद्धौ शब्दे-नार्प्यते तच्च शाब्दं परोक्षज्ञानं विज्ञायेत्युच्यते । परोक्षतया ज्ञातस्य ब्रह्मणः प्रतीचा तादात्म्यसाक्षात्कारणं शब्दज्ञानाभ्यासप्रचयोत्था प्रज्ञा तस्याश्च मुमुक्षुयत्नसाध्यता विवक्षितेत्यर्थः । अहं ब्रह्मेति शाब्दे ज्ञाने सति कृत साक्षात्कारेणेत्याशङ्क्याह—अस्मिन्निति—सा हि शब्देन कृता प्रज्ञा साक्षात्कारकाले निष्ठां नीता सफला स्यादत. शाब्दज्ञानवतापि साक्षात्कारोऽपेक्ष्यत इत्यर्थ. ।

इत्येतदुररीकृत्य विज्ञायेत्युक्तमादरात् ।
प्रमाणवृत्तमुक्त्वैतन्मनसैवेति वाक्यतः ॥
(बृ० भा० उ० भा० वा० ४।४।७०९ पृ० १८३७)

तत्त्वमस्यादिवाक्योक्तौ शब्दमात्रावलोकनम् ।
(तत्रैव वा० ७१२)

तन्मनोऽथ परे तत्त्वे लब्धलक्ष्यं स्व आत्मनि ।
रूपाणि विलिखत्साक्षान्निर्मोकं संप्रतीयते ॥
(तत्रैव वा० ७१२)

अत्रानन्दगिरिः—स्वकार्येण सह मनो निःशेषं साक्षाल्लीयते ब्रह्मणीत्यर्थः ।

परं तत्त्वं प्रपद्यैवं मनस्यद्वैततां गते ।
विज्ञानं केवलं शुद्धं स्वात्मन्येवावतिष्ठते ॥
( तत्रैव वा० ७२१ )

श्रीभर्तृप्रपञ्चस्यैव प्रक्रियाचार्यसुरेश्वरेणालोचिता—

श्रीमद्भर्तृप्रपञ्चस्य श्लोकव्याख्येयमीरीता ।
( तत्रैव वा० ७४१½ )

मनसैवेत्युपक्रम्य सा त्विदानीं विचार्यते ।
न्याय्याऽन्याय्येति वा यत्नाद्विद्वद्भिः प्रविभागशः ॥
( तत्रैव वा० ७४२ )

श्रीभर्तृप्रपञ्चो मण्डनश्चोभावपि प्रसंख्यानवादिनौ, किन्तूभयोः किञ्चिद् वैलक्षण्यम् । श्रीभर्तृप्रपञ्चो ब्रह्मणि कार्यकारणभावं सामान्यविशेषभावं मनुते । श्रीमण्डनश्चाकार्यकारणभावमसामान्यविशेषभावं मनुते ।

अन्ये तु पण्डितंमन्याः सम्प्रदायानुसारतः ।
विज्ञायेति वचः श्रौतमिदं व्याचक्षतेऽन्यथा ॥
( तत्रैव वा० ७६६ )

अत्रानन्दगिरिः—ब्रह्मणि कार्यकारणभावः सामान्यविशेषभावश्च वस्तुतोऽस्तीति भर्तृप्रपञ्चमते प्रज्ञाकरणवाक्यव्याख्या प्रत्युक्ता । सम्प्रत्यकार्यकारणासामान्यविशेषं प्रत्यग् ब्रह्मेत्युपगच्छता मण्डनादीनां तद्व्याख्यामुत्थापयति अन्ये त्विति ।

*ध्यानविधिवादी*

श्रीभर्तृप्रपञ्चो ध्यानविधिवाद्यस्ति । अस्य मते ब्रह्मसाक्षात्काराय ध्यानं विधीयते किं तु ध्यानकाले द्वैताभिधायिनश्शब्दान् न

चिन्तयेत्। यथोक्तमानन्दगिरिणा बृहदारण्यकभाष्यवार्तिकव्याख्याने—

'द्वैताभिधायकाञ्छब्दान् ध्यानकाले न चिन्तयेदिति भर्तृप्रपञ्चोक्त निरस्यति—उक्तेति। यथोदितो न्यायो ध्यानविधिनिरासोपयोगी। उक्तव्याख्यानतोऽन्यस्य व्याख्यानस्य यथोदितन्यायेन दूषितत्वात् तद्दूषणार्थं न यत्यते।'

(बृ० आ० उ० भा० वा० ४।४।९६५, पृ० १८७९)

एतदर्थम् ९६२ इत्यतः ९७४ पर्यन्तवार्त्तिकान्यपि द्रष्टव्यानि।

## भर्तृप्रपञ्चमते साङ्ख्ययोगप्रभावः

भर्तृप्रपञ्चस्य वेदान्तप्रक्रियायां साङ्ख्यदर्शनस्य प्रक्रियाया प्रभाव उपलक्ष्यते। साङ्ख्यप्रक्रियायां यथा पुरुष, प्रकृति, महदादिस्तथैवात्र पुरुषस्थानीयोऽव्याकृतः परमात्मा, प्रकृतिस्थानीयो हिरण्यगर्भ, अहङ्कारस्थानीयो विराड् आदि। पुरुष इत्यस्यैव अन्तर्यामी साक्षीत्यादिनामान्तरम्।[३९]

बृहदारण्यकोपनिषद्भाष्ये आचार्यभर्तृप्रपञ्चसमर्थितस्य परमात्मनो राशित्रयस्य विचारप्रसङ्गे आचार्यशङ्करेणोक्तम्—

---

३९—४० (क) मैक्समूलर—'सिक्स सिस्टम्स्' पृ० २४६-७

(ख) ड्यूसन—'फिलासोफी आफ दी उपनिषदाज्' पृ० २४२।

(ग) श्रीहरियन्ना एम० ए० महोदयस्य लेख —'भर्तृप्रपञ्च एन ओल्ड वेदान्ती' दी इण्डियन एण्टिक्वारी १९२४ ई० पृ० ७७—८६।

(घ) श्रीहरियन्ना एम० ए० महोदयस्य — 'भारतीयदर्शन के मूलतत्त्व', अनुवादक श्रीप्रधाशनारायण शर्मा।

(ङ) श्रीहरियन्ना एम० ए० महोदयस्य लेख —'फ्रेगमेंट आफ भर्तृप्रपञ्च' थर्ड ओरियण्टल कान्फेंस, मद्रास, सितम्बर १९२४ ई०, पृ० ४३९—४५०।

'स्वत उत्थिताऽविद्याऽनागन्तुकाप्युपरञ्जनात्मधर्मं इत्यनया कल्पनया साङ्ख्यचित्तमनुवर्तते ।'

(बृ० आ० उ० शा० भा० २।३।६, पृ० ३२८)

श्रीसुरेश्वराचार्येणापीत्थमेवोक्तम्—

अनात्मधर्मोऽविद्येति वदन्तश्चोपरागवित् ।
इत्येवं साङ्ख्यसिद्धान्तमनुवर्तन्ति संभ्रमात् ॥

( बृ० आ० उ० भा० वा० २।३।१२४, पृ० १०११ )

भर्तृप्रपञ्चसिद्धान्तस्य साङ्ख्यसिद्धान्तेन सह तुलनेत्थं कर्तुं शक्यते । भर्तृप्रपञ्च. साङ्ख्य चोभे अपि परिणामवादं मन्वाते । साङ्ख्यमते प्रकृते. सृष्टिविचारोऽस्मिन् मते ब्रह्मणः सृष्टि र्जायते । भर्तृप्रपञ्चस्यान्तर्यामी साङ्ख्यानुगस्य योगदर्शनस्येव । साङ्ख्यस्य पुरुषोऽत्राव्याकृता प्रकृतिः, कस्य सूत्र साङ्ख्यस्य महत् ( यथा माठरवृत्तौ २२ इत्यत्र वर्णितम् ) एकादशेन्द्रियदेवता अष्टौ ब्रह्मणोऽवस्था पञ्चमात्रा इति कृत्वा साङ्ख्य इवात्रापि चतुर्विशतिस्तत्त्वानाम् । मोक्षश्च मनोलयपूर्वकं परब्रह्मावस्था । मनोलयश्च योगदर्शनस्यैव वर्णितः ।

*केषुचित् सिद्धान्तेषु वैषम्यम्*

साङ्ख्यमते प्रकृतेर्लय. कैवल्यमत्र परापरमोक्षे कर्मप्रध्वंसः । साङ्ख्ये पुरुष. सुखदुःखयोरभोक्ता, अत्रान्तरालावस्थाया पुरुषस्य भोग । साङ्ख्ये एकैव सृष्टि, अत्र जातिपिण्डयो सृष्टिकथनेन समष्टिव्यष्टिरूपेणोभयसृष्टिः । श्रीभर्तृप्रपञ्चाचार्य. साङ्ख्यसिद्धान्तात्स्वमत स्वयमेव भेदयत्यपि यत्र कुत्रापि—

अयं प्रयोजको राशिर्लिङ्गमेव किलाश्रितः ।
इत्युक्त्वा साङ्ख्यत्वभयात् कल्पयन्ति ततोऽन्यथा ॥

( बृ० आ० उ० भा० वा० २।३।११६, पृ० १०१२ )

तार्किकसिद्धान्तसाम्यम्

आत्मविषये कस्मिंश्चिदंशे तार्किकसिद्धान्तसाम्यमपि—

मूर्त्तामूर्त्तादिराशिस्तु प्रयोज्यः साधनं तथा ।
तार्किकैः सह सन्धिं च चिकीर्षन्ति यथाबलम् ॥
(बृ० भा० उ० भा० वा० २।३।११५, पृ० १०१२)

ततश्च कर्ता भोक्ता च बध्यते मुच्यते तथा ।
विज्ञानात्मेति कणभुक्चित्तमेवं समाश्रिताः ॥
(तत्रैव १२० )

उपासना ( भक्तिवादः )

आचार्यभर्तृप्रपञ्चो ज्ञानेन सहोपासनाया अपि महत्त्वमङ्गीकरोति । अत एतच्चाप्यं वेदान्तिभिरुपहस्यते—

इतो विरुद्धमानत्वं स्वतोपास्तद्वयात्मनः ।
शक्यं वैश्वानरवरात्प्रवक्तुं न तु मानतः ॥
(बृ० आ० उ० भा० वा० १।४।४९०, पृ० ५१२)

आनन्दगिरि.—अनुदिनमाराधितदेवताप्रसादादीदृग्वचनं भर्तृप्रपञ्चाना न प्रमाणादित्युपहसति ।

संसारदर्शनाभ्यासाचन्मुक्ति ये प्रचक्षते ।
नाकार्यं विद्यते तेषां वैश्वानरवराश्रयात् ॥
( तत्रैव वा० ७००, पृ० ५७४ )

वयं तु वरहीनत्वाच्चर्मवद् वेष्टितुं वियत् ।
न शक्नुमो विना युक्तीर्गो न श्रद्दधामहे ॥
( तत्रैव वा० ७०१ )

ज्ञातं ब्रह्म यथाग्रच न चापागात्ततस्तमः ।
इत्येतदविरुद्धं स्यात्प्रमादाज्ज्ञातनेदमः ॥
( तत्रैव वा० ३।२।९८, पृ० ११६४ )

दृष्टिभेदमकृत्वैव दृष्टेरित्यादिकां श्रुतिम् ।
केचिद् व्याचक्षते धीराः प्रमादाज्ज्ञातनेदसः ॥
( तत्रैव वा० ३।४।१६७, पृ० १२३६ )

अत्रोपासनयापि ब्रह्मसाक्षात्कारमङ्गीकुर्वाणं श्रीभर्तृप्रपञ्चमुपहसितुकामा वेदान्तिनः कथयन्ति यदयं श्रीभर्तृप्रपञ्चो वैश्वानरदेवस्योपासनया वैश्वानरात्मत्वं गतवानस्ति । अत एव ज्ञानेन सहोपासनयापि मुक्तिं ब्रह्मसाक्षात्कारं वा कामयते ।

वैश्वानरस्योपासना छान्दोग्योपनिषदादिषु श्रूयतेऽपि च । अयमेव हेतुः श्रीभर्तृप्रपञ्चस्योपासनामहत्त्वाङ्गीकारे । एतदर्थम्—

छा० उ० ५।२१।१ आनन्दगिरिव्याख्या द्रष्टव्या ।

एवमेव—गार्हपत्याग्निविद्या—छा० उ० ४ अ० ११ ख० ।

अन्वाहार्यपचनाग्निविद्या—छा० उ० ४ अ० १२ ख० ।

आहवनीयाग्निविद्या—छा० उ० ४ अ० १३ ख० ।

पञ्चाग्निविद्या—छा०उ० ५ अ० ४ ख० तथा ५, ८ ।

शतपथब्राह्मणस्य दशमे ब्राह्मणे शाण्डिल्यसूत्रे चोपासनाया महत्त्वं वर्णितम् तेनायमाचार्यः प्रभावित इव लक्ष्यते ।

*भर्तृप्रपञ्चस्याद्वैतसिद्धान्त उपनिषत्सिद्धान्ताविरुद्धः*

आचार्यभर्तृप्रपञ्चेन परावरभेदेन ब्रह्मणो द्वैविध्यम्, परमोक्षप्राप्तेः पूर्वं जीवनस्य ब्रह्मणो भिन्नत्वम्, परमात्मनो विकारो जीवः,[४०] परस्य ब्रह्मणोऽवस्था अष्टौ, क्वचित् क्वचिच्च परिणाम-

---

४०—बृ० भा० उ० वा० भाष्यस्यानन्दगिरिव्याख्यायाम् ५।१।१, पृ० ७३१ ।

वादाश्रयणम्, आसङ्गाविद्याभ्यां जीवस्य बद्धता, कामवासनादीना-माधारो नात्मा किन्तु हृदयम्। मोक्षः परापरभेदेन द्विविधः, मोक्ष-साधनं ज्ञानकर्मसमुच्चयः प्रसंख्यानम्, क्वचित् क्वचिच्च सांख्यप्रक्रिया-समाश्रयणम् इत्यादीन्यङ्गीकृतानि। एतत्सर्वं लोकव्यवहारसिद्धये, उपनिषत्प्रामाण्यवत् कर्मकाण्डप्रामाण्यसिद्धये, कारणकार्ययोः समान-त्वमितिन्यायरक्षणाय, परब्रह्मणो नित्यत्वे लोकनित्यत्वसिद्धये च तेनानुमतम्। किन्तु निर्विशेषे विज्ञानमये पराख्ये मोक्षेऽद्वितीये च ब्रह्मणि, निर्विशेषब्रह्मवादिसिद्धान्ते च तस्य नो विवादः। अतएव बृहदारण्यकोपनिषदो भर्तृप्रपञ्चभाष्यात् स्वीये भाष्ये वैशिष्ट्यं प्रतिपिपादयिषु भगवता शङ्कराचार्येणैतावदेवोक्तं यदाचार्यभर्तृ-प्रपञ्चस्य भाष्यं माध्यन्दिनशाखामाश्रित्य प्रवृत्तं मदीयं तु काण्व-शाखामाश्रित्य प्रवृत्तन्तथा तदीयं भाष्यं विस्तृतं मदीयं भाष्यमल्पा-क्षरमिति।[४१] आनन्दगिरिणा चोक्तं यद् भर्तृप्रपञ्चभाष्यमस्म-न्मतानुकूलमेव, अस्मत्सिद्धान्ताविरुद्धमेव च।[४२] आचार्यशङ्करस्या-द्वैतप्रक्रियातः श्रीभर्तृप्रपञ्चस्याद्वैतप्रक्रियाया बहवो भेदा यथा-पूर्वमुक्ताः। आचार्यशङ्करेणास्य प्रक्रियायाः कृते एतत्प्रक्रियानुकूल-भाष्यस्य च कृते—

'औपनिषदम्मन्या अपि केचित्प्रक्रियां रचयन्ति।'[४३] 'उपनिषदर्थ-मन्यथा कुर्वन्ति।'[४४] 'तथेयमपि कल्पनोपनिषच्छास्त्रार्थबाधना-न्नादरणीया।'[४५] 'अस्याः कल्पनाया वरमुपनिषत्परित्याग एव।'[४६] इत्यादिशब्दैर्बहुश आक्षेपोऽपि कृतः।

४१—तत्रैवोपोद्घातभाष्ये पृ० २।
४२—बृ० भा० उ० भा० वा० १।४।११६४ पृ० ६६६।
४३—बृ० भा० उ० भा० भा० २।३।६ पृ० ३२८।
४४— „ „ २।३।६ पृ० ३३०।
४५— „ „ ४।३।२२ पृ० ६१६।
४६— „ „ ५।१।१ पृ० ७३३।

एवञ्चाचार्यशङ्करेण श्रीभर्तृप्रपञ्चस्य प्रक्रियायामेव विरोध प्रदर्शितो नतु तत्सिद्धान्ते। तस्मादिद स्फुट यद्श्रीभर्तृप्रपञ्चस्य भगवतश्शङ्करस्य च निर्विशेषब्रह्माद्वैतसिद्धान्त समान एव। आचार्यश्रीशङ्करकाले तथा आचार्यश्रीशङ्करस्य साक्षाच्छिष्य-श्रीसुरेश्वराचार्यसमयेऽस्याद्वैतवादिषु महती प्रतिष्ठा प्रसिद्धिश्चासीत्। बृहदारण्यकोपनिषद्भाष्ये मतान्तरेषु सर्वतोऽधिकमावेनास्यैव मतस्योल्लेख खण्डन च प्राप्येते। आचार्यश्रीसुरेश्वरेण स्वीये श्रीबृहदारण्यकभाष्यवार्त्तिके तथा नैष्कर्म्यसिद्धौ च पदे पदेऽस्य मतस्योल्लेख: क्रियते। मन्ये प्रसिद्धव्याख्याकारश्रीमदानन्दगिरि-कालेप्यस्य ग्रन्थस्योपलब्धिरासीत्। येन श्रीमदानन्दगिरि बृहदा-रण्यकोपनिषद शाङ्करभाष्यस्य व्याख्याने, बृहदारण्यकोपनिषद्भाष्य-वार्त्तिकव्याख्याने नैष्कर्म्यसिद्धिव्याख्याने च श्रीमद्भर्तृप्रपञ्चमत सुविशदमुपास्थापयत्। कालप्रभावादस्य कोऽपि ग्रन्थोऽधुना न प्राप्यते। केवल भाष्ये व्याख्याने च खण्डनमण्डनार्थमुपनिबन्धो मताश एवोपलभ्यते। तदाधारेणास्य मतमत्रोपन्यस्तम्।

○

॥ श्रीहरिः ॥

# अष्टमोऽध्यायः

## आचार्यभर्तृहरिः

श्रीशङ्कराचार्यात् पूर्वतनेष्वद्वैतवादिष्वाचार्यभर्तृहरिरतीव[1] प्रसिद्धो वर्तते। अस्य स्थितिकालः कैश्चन[2] ४००–४५० ई० तथापरैः

---

१—'आचार्यटङ्कभर्तृप्रपञ्चभर्तृमित्रभर्तृहरिब्रह्मदत्तशङ्करश्रीवत्साङ्क-भास्करादिरचितसितासितविविधनिबन्धश्रद्धाविप्रलब्धबुद्धयो न यथावदन्यथा च प्रतिपद्यन्त इति तत्प्रतिपत्तये युक्तः प्रकरणक्रमः।'
(श्रीयामुनाचार्यविरचितसिद्धित्रये प्रारम्भे)

२—(क) द्र० श्रीयुताभ्यङ्करलिमये–सम्पादितवाक्यपदीयस्य (पूना १९६५ ई०) भूमिकायां पृ० १२–१३।

(ख) द्र० श्रीबलदेवोपाध्यायेन स्वसम्पादितवाक्यपदीयद्वितीय-काण्डस्य (वाराणसेय-संस्कृत-विश्वविद्यालय, १९६८ ई०) भूमिकायां लिखितं यद् श्रीहरिस्वामिना शतपथब्राह्मणस्य १।३।२।१६ व्याख्यानान्ते उक्तम्—'अन्ये तु शब्दब्रह्म वेद विवर्ततेऽर्थभावेन प्रक्रिया इत्यत आहुः' इति। श्रीहरि-स्वामिनः कालः ५३८ ई०, तथा दिङ्नागाचार्येण त्रैकाल्यपरीक्षायाम् (भोटभाषायामस्याम्)' अथ विशुद्ध-आकाशम्' एवम् 'तथेदममृतं ब्रह्म' इति श्लोकद्वयमुद्धृतम्। आचार्यदिङ्नागस्य कालः ५०० ई० अस्ति। पूर्वोक्त श्रीहरिस्वामिनो वाक्यं वाक्यपदीयस्य प्रथमकारिकाया 'अनादिनिधनं ब्रह्म' इत्यस्या व्याख्यानम्, अपरं दिङ्नागाचार्योद्धृतं श्लोकद्वयं वाक्यपदीयस्य प्रथमकारि-कायाः स्वोपज्ञवृत्तावुल्लिखितम्। अत आभ्यां श्रीहरि-स्वामिदिङ्नागाचार्याभ्यां पूर्वमस्य कालो निश्चीयते।

केऽप्यन[3] ५९१–६५१ ई० देशश्च कश्मीर मन्येते। प्राचीनाचार्यैः स्वीयग्रन्थेषु सादरमस्य नाम वाक्य सिद्धान्तश्च सगृहीतानि। यथा श्रीपार्थसारथिमिश्रेण शास्त्रदीपिकायाम्[4] सोमानन्दविरचित-शिवदृष्टौ,[5] उमामहेश्वरकृतायां तत्त्वदीपिकायाम्,[6] विमुक्तात्मकृता-

---

(ग) काशिकाग्रन्थे (४७५ ई०) शिशुक्रन्द० (पा० सू० ४।३।८८) व्याख्याने 'वाक्यपदीयम्' इति पदं प्रयुक्तम्।

३—(क) द्र० महासिद्धेः श्रीएस्०कुप्पूस्वामिशास्त्रिलिखितभूमिकायां पृ० ५८ (मद्रास गवर्नमेण्ट ओरियण्टल मैनुस्क्रिप्ट सिरीज न०'४,–१९३७ ई० प्र०)

(ख) श्रीराधाकृष्णन्महोदयस्य इण्डियन फिलास्फी–भाग २ पृ० ४६५ (लन्दनप्रकाशनम् १९५६ ई०)

४—'तथा च हरिणोक्तम् प्रधानस्य करणेनाथिन इज्या प्रवर्तते' इति।

(शास्त्रदीपिकायाम्—अ० १० पा० २ सू० ५७–५८)

अत्र हरिरितिपदेन भर्तृहरिरेव स्यादिति सम्भाव्यते।

५—सोमानन्द (८८० ई०) वैयाकरणानां शब्दाद्वैतमधिक्षिपन् वाक्यपदीयस्य कारिकाद्वयमुद्धरति — अनादिनिधनं ब्रह्म०— (वा० प० १।१) तथा न सोऽस्ति प्रत्ययो लोके० (वा० प० १।१२३) इति च। इमे द्वे कारिके द्रष्टव्ये शिवदृष्टौ २ आ० ६ श्लो० तथा ८ आ० १० श्लो०। शिवदृष्टेर्व्याख्याकार उत्पलदेवाचार्यं स्वव्याख्यायां वाक्यपदीयप्रथमकारिकायां स्वोपज्ञवृत्तावुक्त विवरणपदार्थमनूदितवान्।

६—'महाभाष्यं व्याचक्षाणो भर्तृहरिरपि अद्वैतमेवाभ्युपगच्छति। यथोक्तं शब्दकौस्तुभे स्फोटवादान्ते तदेव पक्षभेदे प्रतिदैव वा ब्रह्मैव वा स्फुटत्यर्थोऽस्मादितिव्युत्पत्त्या स्फोट इति स्थितम्।'

(उमामहेश्वरकृततत्त्वदीपिकायाम् इति एकस्य विदुषो लेखादुद्धृतमेतत्। किं तु उमामहेश्वरनिर्मितवेदान्तविषयकतत्त्वदीपिकाग्रन्थो नोपलभ्यतेऽपि तु वेदान्तविषयक उमामहेश्वरनिर्मिततत्त्वचन्द्रिकाग्रन्थस्य सूचनोपलभ्यते। कैटलागस कैटलागरम् इत्यस्य १९६२ ई० संस्करणे ७० पृष्ठे सूचितमेतत्। अस्य आनन्दगिरिकृतपञ्चीकरण-

यामिष्टसिद्धौ,[7] जयन्तभट्टकृतायां न्यायमञ्जर्याम्,[8] शान्तरक्षितस्य तत्त्वसङ्ग्रहे।[9] मण्डनमिश्रकृतायां स्फोटसिद्धावस्य[10] नामवाक्यसिद्धान्ता उपलभ्यन्ते। महावैयाकरणेन दीक्षितेन वाक्यपदीयव्याख्याकारेण हेलाराजेन चाद्वैतवादित्वेनायं स्मृतः।[11]

---

विवरणटीकाप्यासीत्। मद्रासदेशाभिजनमैलापुरनिवासिश्रीरामशास्त्रिपोल्हम्निर्मिते द्रविडाम्नायदर्शने पृ० २७ तत्त्वचन्द्रिकाया निर्देशोऽस्ति।

वाराणसेय-संस्कृत विश्वविद्यालयसरस्वतीभवनपुस्तकालये वैश्वानरविरचिता तत्त्वदीपिका ( हस्तलिखिता ) तन्त्रविषये उपलभ्यते। ग्रन्थसंख्या—४४७०२ अस्ति।

७—इष्टसिद्धौ शब्दाद्वैतखण्डने—श्रीभर्तृहरेरयं श्लोक उद्धृतः—अनादिनिधनं ब्रह्म　　इत्यादि। ( वा० प० १।१ )

८—न्यायमञ्जर्यां स्फोटस्य ब्रह्मरूपत्वनिरूपणे श्रीभर्तृहरेः श्लोकोऽयमुद्धृतः—वाग्रूपता चेदुत्क्रामेदवबोधस्य शाश्वती।
न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शिनी॥
( वा० प० १।१२५ )

अस्मिन्नेव प्रकरणे वा० प० १४४ कारिकायां स्वोपज्ञवृत्तिगता अपरेऽपि त्रयः श्लोका उद्धृताः। एवमेव न्या० म० प्रतिभावाक्यार्थनिराकरणप्रकरणे श्रीभर्तृहरिसम्मतः प्रतिभावाक्यार्थो निराकृतः।

९—शान्तरक्षितेन तत्त्वसङ्ग्रहे शब्दब्रह्मपरीक्षायामिमं श्लोकं प्रथममाह—नाशोत्पादसमालीढं ब्रह्म शब्दमयं परम्। ( त० स० श० ब्र० प० १२८ श्लो० ) अत्र तच्छिष्येण कमलशीलेन पञ्जिकायामतच्छ्लोकव्याख्याने वाक्यपदीयस्य प्रथमा कारिका अनादिनिधनमित्याद्युद्धृता। अत्रापरा अपि वा० प० कारिकाः पञ्जिकायामुद्धृताः।

१०—स्फोटसिद्धिकारिकासु वाक्यपदीयकारिकासमानपदा उपलभ्यमाना उद्धृतानीव प्रतीयन्ते।

११—( क ) 'तस्य वराटिकान्वेषणाय प्रवृत्तश्चिन्तामणिं लब्धवानिति वासिष्ठरामायणोक्ताभाणकन्यायेन शब्दविचाराय प्रवृत्त

अस्य गुरोर्नामाचार्यवसुरात आसीत् । वाक्यपदीये द्वितीयकाण्डे ४८३ कारिकायाः व्याख्याने पुण्यराजेनोक्तम्—भगवता वसुरातगुरुणा ममायमागमः संज्ञाय वात्सल्यात् प्रणीतः ।' इति ।

संस्कृतवाङ्मये भर्तृहरिनामकस्य महाविदुषस्त्रयो ग्रन्थाः प्रसिद्धाः—(१) भर्तृहरिशतकम्, (२) वाक्यपदीयम्, (३) भट्टि-महाकाव्यम् ।[12] एतद्ग्रन्थत्रयनिर्मातृविषये विवादः समाप्तप्रायः । नवीनतमं कश्चिद् भर्तृहरिरिति मन्यते । आद्ययोर्विषये भूयान् विवादः । ऐतिहासिकाः सन्दिहते यद् भर्तृहरिशतकस्य लेखको भर्तृहरिः वैदिकः, वाक्यपदीयस्य रचयिता महावैयाकरणो विद्वान् बौद्धः, अथवोभयोरपि रचयिता वैदिक एव, वैदिकत्वेऽप्येक एव उत भिन्नाविति ।[13] अस्य भर्तृहरि हरि हरिवृषभ इति नामत्रय

---

सन् प्रसङ्गादद्वैतं औपनिषदं ब्रह्माप्यपि व्युत्पादयितुमित्य-भिप्रायेण भगवान् भर्तृहरिः विवर्तवादमपि प्रसङ्गाद् व्युदपादयत् ।'

( शब्द कौस्तुभे १।१ पस्पशाह्निके आदौ )

( ख ) पदार्थचर्चाविषये ब्रह्मदर्शनतयैव सम्बन्धादिविचारे विनि-गमनात् ।'

( वा० प० ब्रह्मकाण्ड० ३।३५ का० हेला० व्याख्यान )

१२—भट्टिकाव्यटीकासु जयमङ्गला परित्यज्यान्यासु सर्वासु टीकासु स्पष्टतो भर्तृहरिरुदितः ।

१३—( क ) द्र०—आचार्यभर्तृहरिः बौद्ध इति पक्षे श्रीवाचस्पतिमिश्र-विरचिततत्त्वबिन्दुस्तट्टीका च ।

( ख ) द्र०—वाक्यपदीयकारो बौद्ध इत्यस्मिन्नेव पक्षे जर्नल आफ बाम्बे ब्रांच रिसर्च एशियाटिक सोसायटी—भाग १८ इत्यत्र प्रकाशितः श्री के० बी० पाठकमहोदयानां लेखः ।

( ग ) द्र०—वाक्यपदीयकारो वैदिक इति पक्षे अष्टम आल इण्डिया ओरियण्टल कान्फ्रेन्स मैसूर १९३५ ई० सेशन ८ पृ० २५४ इत्यत्र प्रकाशितः श्री वी० ए० रामस्वामिमहाभागानां

प्राप्यते। अनेन च पाणिनीयाष्टके काचिद् व्याख्यालेखि, पातञ्जल महाभाष्यस्य भाष्य टीका वाभाषि[१४] ब्रह्मसूत्राणि च व्याकृतवतेति[१५] विद्वद्भि विचार्यते।

अस्य समुपलभ्यमान प्रमुखो ग्रन्थो वाक्यपदीयमिति। अय ग्रन्थ काण्डत्रयात्मक। आद्य काण्ड शब्दब्रह्मस्वरूपविमर्शकत्वाद्वेतो समग्रग्रन्थस्य प्रस्तावनाभूत मूलतत्त्वम्। द्वितीय काण्ड वाक्यस्वरूप-प्रतिपादनम्। तृतीय काण्ड पदस्वरूपप्रतिपादकम्। तृतीयकाण्डस्य प्रकीर्णकाण्डमित्यप्यभिधान यतो ह्यत्र विविधाना विषयाणा विवरण-मनेकसमुद्देशेपूपलभ्यते। उक्त च—

> वर्त्मनामत्र केषाञ्चिद् वस्तुमात्रमुदाहृतम्।
> काण्डे तृतीये न्यक्षेण भविष्यति विचारणा॥
>
> (वा० प० २।८४३)

अत्र पुण्यराजो व्याचष्टे—

अत्रास्मिन् वाक्यकाण्डे काण्डद्वये वा केषाञ्चिदेव न्यायवर्त्मना

लेख २ शीर्षक—भर्तृहरि ए बौद्ध ? अस्यैव लेखकस्या-परोऽपि लेखो द्रष्टव्य—श्रीशङ्कर भट्टेतिम्' नवम आल इण्डिया ओ० का० त्रिवेन्द्रम् १९३७ ई० सेसन ५ पृ० ५४८ लेख—३।

अस्मिन्नेव पक्षे लवपुरे (लाहौर) प्रकाशिते (१९९१ वै० स०) वाक्यपदीये श्रीचारुदेवशास्त्रिलिखिता भूमिका पृ० ३।

१४—१९९१ वै० स० लाहौरप्रकाशिते वाक्यपदीय श्रीचारुदेवशास्त्रि लिखिताया भूमिकायाम २ पृष्ठ एतत्प्रमाणत्वेन उत्रि च पदे (पा० सू० ८।३।२१) तथा 'ङ सि धुट (पा० सू० ८।३।२९) इति सूत्रस्य भर्तृहरिविवरण तथा नोदात्तोपदेशस्य मा तस्या-नाचमे (पा० सू० ७।३।३४) इतिसूत्रस्य शरणदेवकृतदुर्घट-वृत्तिश्चोद्धृते।

१५—श्रीयामुनाचार्येण सिद्धित्रय ब्रह्मसूत्रभाष्यकर्तृषु अस्य नामोदाहृतम्। द्र० अस्मिन्नेवाध्याये पादटिप्पणी—१।

वस्तुमात्रं बीजमात्रं प्रदर्शितमिव। शिष्टे तु तृतीयेऽस्य ग्रन्थस्य पदकाण्डद्वयनिष्यन्दभूते न्यक्षेण आदरविशेषेण स्वसिद्धान्तपरसिद्धान्तवर्तिनी विचारणा युक्तायुक्तविचारपूर्वकनिर्णीतिः भविष्यति। ततो नायमेतावान् व्याकरणागमसंग्रह इति।

अस्य वाक्यपदीयस्य मूलमस्य गुरुणा वसुरातेनैव संगृहीतम्।

यथोक्तम्—

न्यायप्रस्थानमार्गांस्तानभ्यस्य स्वं च दर्शनम्।
प्रणीतो गुरुणास्माकमयमागमसंग्रहः॥

(वा० प० २।४८२)

अस्या अवतरणिकायां पुण्यराज आह—

अथ कदाचिद् योगतो विचार्य तत्र भगवता वसुरातगुरुणा ममायमागमः संज्ञाय वात्सल्यात् प्रणीत इति।

वाक्यपदीयस्य कतिचनांशा लुप्तप्रायाः। वाक्यपदीयस्य द्वितीयकाण्डस्य ७९ कारिकाया व्याख्याने श्रीपुण्यराजेन लक्षणसमुद्देशबाधसमुद्देशयोश्च चर्चा कृता। लक्षणसमुद्देशस्तु तदानीमपि लुप्तप्राय एवासीत्। यथा तेन निर्दिष्टम्—

'एतेषां वितत्य सोपपत्तिकं सनिदर्शनं स्वरूपं पदकाण्डे लक्षणसमुद्देशे विनिर्दिष्टमिति ग्रन्थकृतैव स्ववृत्तौ प्रतिपादितम्। आगमभ्रंशाल्लेखकप्रमादादिना वा लक्षणसमुद्देशश्च पदकाण्डमध्ये न प्रसिद्धः।'

(वा० प० २।७७ का० पुण्य० व्या०)

एवमेव पुण्यराजेनोक्तम्—

'एतच्च उपमासमुद्देशेऽपि अर्थविचारणावसरे सविस्तरं प्रदर्शयिष्यति।'

(वा० प० २।१२६३ का० पुण्य० व्या०)

एवमेव—

अपाये यदुपामीनं चलं वा यदि वाचलम् ।
ध्रुवमेवातदावेशात् तदापादानमिष्यते ॥
पततो ध्रुव एवाश्वो यस्मादश्वात्पतत्यसौ ।
तथाप्यश्वस्य पतने कुड्यादि ध्रुवमिष्यते ॥

इमे कारिके भट्टोजीदीक्षितप्रभृतिभि र्भर्तृहरिकृतित्वेन स्मृते । किन्त्वद्यत्वे इमे कारिके वाक्यपदीये नोपलभ्यते ।

भर्तृहरेरयं वाक्यपदीय ग्रन्थोऽद्वैतप्रस्थाने शब्दाद्वैतवादस्य समर्थक । शब्द एवाद्वितीय ब्रह्मेत्यनेन प्रतिष्ठापितम् ।[16] तेन व्याकरणप्रधाने वाक्यपदीये वाक्य च पद च वाक्यपदे ते अधिकृत्य कृतेऽस्मिन् ग्रन्थे प्रथमकाण्डस्य ब्रह्मकाण्डमिति समाख्या कृता । आद्ये ब्रह्मकाण्डे च समग्रग्रन्थस्य प्रस्तावनाभूत मूलतत्त्व स्वरूपि । तथोक्तप्रतिज्ञाते वाक्यकाण्ड एव च स्फोटनिरूपणपरस्य ब्रह्म-निरूपणपरस्य च प्रथमकाण्डस्यान्तर्भाव कृतः । अस्य ग्रन्थस्याद्य-कारिकायामेव ब्रह्म, जगत्, ब्रह्मणो जगद्रूपेणावभासने कारण विवर्तश्च निर्दिष्टानि ।

यथा हि—

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥
( वा० प० १ का० १ का० )

यद्यप्यग्रे वाक्यपदीये 'शब्दस्य परिणामोऽयमित्याम्नायविदो विदु' ( वा० प० ब्र० का० १२१ का० ) इत्युक्त्या परिणामवादोत्र

१६—द्र०—श्री वी० आर० स्वामि, एम० ए० महोदयस्य लेखः—'श्री-शाङ्कर अद्वैत' नवम भा० ६० मोरि० का० १९३७ वि० ५ ले० ६ पृ० ५४८ इत्यत्र प्रकाशित' ।

लक्ष्यते। किन्तु अत्रत्यः परिणामशब्दः फलवाची नतूपादानसमसत्ताक-कार्यापत्तिरूपः पारिभाषिकः। अतः 'शब्दस्य परिणामोऽयम्' इत्यस्य शब्दस्य फलरूपोऽयं संसार इत्यर्थः कर्तव्यः। अत एवास्मिन् श्लोके उत्तरार्द्धे 'छन्दोभ्य एव प्रथममेतद्विश्वं व्यवर्तत' (वा० प० ब्र० का० १२१ का०) इतिवचनेन विवर्तवादः स्वीकृतः। अस्याः कारिकायाः व्याख्याने च भर्तृहरिः स्वयं व्याचष्टे—

'अविद्याकारणं जन्मपरिणामासंसर्गं विवर्तं व्यवस्थापयन्ति।' एतट्टीकायां वृषभदेवोऽप्याह—'वाचो व्यतिरेकेणान्यदभिधेयं नास्ति।'

अथवा अत्रत्यः परिणामशब्दो लक्षणया विवर्तपरः। यतो हि कूटस्थनित्यस्य शब्दस्य परिणामासम्भवः। शब्दस्य च कूटस्थनित्यता महर्षिपतञ्जलिना 'नित्यः शब्दार्थसम्बन्ध' इत्यत्र 'तथा कूटस्थै-र्वर्णैरविचालिभिः भवितव्यम्' इत्यादिना सम्यगुपपादिता।

अथवा मायारूपस्वशक्त्युपहितस्य शब्दब्रह्मणः उपाधिभूताया मायाया परिणामसम्भवादेतदाशयेन 'परिणामोऽयम्' इत्युक्तं स्यात्।

एतदपि प्रतीयते यत् पुरा विवर्तपरिणामशब्दौ समानार्थे प्रयुक्ता-वास्ताम्। वाक्यपदीये ब्रह्मसिद्धौ च भूयानेवंविधः प्रयोग उपलभ्यते। यथा हि— शब्दतत्त्वं यदक्षरं विवर्तते' (वा० प० १।१) तथा वाक्य-पदीयस्य १।१४२ कारिकायाः स्वोपज्ञवृत्तौ चैतन्यग्रन्थिविवर्तवद्' इत्युक्तम्, अस्याम्वावश्रीटीकायां विवर्तपदस्य परिणाम इत्यर्थं कृतः। द्रष्टुरेव चिदात्मनस्तथा विपरिणामाद् विवर्तनाद्वा' (ब्र०सि०ब्र०का० पृ० ७) 'अतो वाचो विपरिणामो विवर्तो वा जगत्।' (ब्र० सि० ब्र० का० पृ० १८) 'सर्वमेव ज्ञेयं वाग्रूपान्वितं गम्यत इति तद्-विकारस्तद्विवर्तो वा। (ब्र० सि० ब्र० का० पृ० १९)

वाचस्पतिमिश्रेणापि न्यायकणिकायां वैयाकरणाः शब्दब्रह्म-वादिनो विवर्तवादित्वेन परिणामवादित्वेन च स्मृता—

'ये पुनरभिन्नस्य शब्दब्रह्मणो विवर्तं वा परिणामं वाऽऽर्थमा-चक्षते।'

(न्या० क० पृ० ५९३)

अन्यच्च यद् वाक्यपदीयस्यैकापि टीका परिणामपरा नोपलभ्यते। आद्यकारिकाया वृत्तौ च 'एकस्य तत्त्वादप्रच्युतस्य भेदानुकारेणासत्याविभक्तान्यरूपोपग्राहिता विवर्तः स्वप्नविषयप्रतिभासवत्।' इत्युक्त्या विवर्तवाद समर्थित.। माधवाचार्येणापि सर्वदर्शनसङ्ग्रहे शब्दाद्वैतवादिनो विवर्तवादित्वेनैव परिगृहीता.।[१७] भट्टनारायणकण्ठेन च मृगेन्द्रागमवृत्तौ परमोक्षनिरासप्रकरणे विवर्तवादिषु प्राधान्येन भर्तृहरिरेवोपन्यापित.।[१८]

आचार्यमण्डनमिश्रेण चास्यैव शब्दब्रह्माद्वैतवादमाश्रित्य ब्रह्मसिद्धिर्निरमायीति प्रसिद्धिः। ब्रह्मसिद्धे प्रथमे ब्रह्मकाण्डेऽन्तिमाया कारिकायाम् 'अन्यैर्ब्रह्मविद्भिः' इतिपदाभ्या श्रीभर्तृहरिप्रभृतय एव विवक्षिता स्यु'। यथा—

'अतोऽन्यैर्ब्रह्मविद्याभियुक्तैः सामान्यरूप ब्रह्म निरूपितम्—'स एव महानज आत्मा सत्तालक्षण' तथा 'सत्त्व सर्वभेदयोने प्रकृति परा।' इति

( ब्र० सि० १३ का० पृ० १०५ )

अत्र शङ्खपाणि र्व्याचष्टे—

अन्यैर्ब्रह्मविद्भिरिति पूजार्थम्, न स्वमत पर्युदसितुम्।

( ब्र० सि० श० पा० व्या० २ भागे पृ० १०५ )

---

१७—पाणिनीयदर्शनस्य निरूपणान्ते सांख्यदर्शननिरूपणारम्भे—

'स्वप्नावस्थावदुक्त्वाच प्रपञ्चो विवर्तते।'

१८—'तस्यैव परमात्मन एव तथा वैचित्र्येणावस्थितेरसत्त्वाद् द्वैतप्रतिभासस्य द्विचन्द्रादिज्ञानवद् भ्रान्तत्वात्। तथा चाह भगवान् हरिः—

यथा विशुद्धमाकाशं तिमिरोपप्लुतो जनः।
सकीर्णमिव मात्राभिश्चित्राभिरभिमन्यते॥
तथेदममृत ब्रह्म निर्विकारमविद्यया।
कलुषत्वमिवापन्नं भेदरूपं विवर्तते॥'

( मृ० आ० वृ० प० मो० नि० प्र० )

अत पूर्वमपि शब्दाद्वैतवादसम्प्रदाय आसीत्। यस्मिन् मन्त्र-विग्रहदेवतावादिनो मीमांसका, 'वेदशब्देभ्य एवादौ पृथकसंस्थाश्च निर्ममे' इति वदन् मनुः, 'शब्द इति चेन्नात प्रभवात्'० ( ब्र० सू० अ० १ पा० ३ सू० २८ ) इति ब्रह्मसूत्रे शब्दाज्जगदुत्पत्तिसमर्थका प्राचीनाचार्या 'सोऽयमक्षरसमाम्नाय —ब्रह्मराशि:' इति सिद्धान्त-यन् महर्षिपतञ्जलिश्च परिगण्यन्ते। पतञ्जलेरुक्तौ 'ब्रह्मराशि:' शब्दो ब्रह्मतत्त्वपर । कैयटेन नागेशेन च ब्रह्मपर एव व्याख्यात ।[१९] पातञ्जलमहाभाष्यत प्रागपि व्याडिप्रणीते सङ्ग्रहे शब्दाद्वैत-सिद्धान्तो निरूपितो दृश्यते। यद्यप्यय सङ्ग्रहग्रन्थो नाधुनोपलभ्यते किन्तु महाभाष्ये पस्पशाह्निके एतस्य सङ्केत प्राप्यते।[२०]

शब्दाद्वैतवादस्य बीज परमप्राचीनास्वृङ्मन्त्रब्राह्मणोपनिषत्सु तत्तद्भाष्येषु चोपलभ्यते।

---

१९—पाणिनीयव्याकरणमहाभाष्ये पतञ्जलिनोक्तम्—

सोऽयमक्षरसमाम्नाया वाक्यसमाम्नाय पुष्पित फलितश्चन्द्र-तारकवत् प्रतिमण्डितो वेदितव्यो ब्रह्मराशि: ( पा० म० भा० १।१।२ आह्निके )

अत्र कैयट प्रदीप आह—'चन्द्रतारकवदिति—अनादित्वानि-त्यत्व वाग्व्यवहारस्य सूचयति। ब्रह्मराशिरिति। ब्रह्मतत्त्वमत्र शब्द-रूपतया प्रतिभातं त्यथ।'

अत्र नागेश उद्योत आह—'का सा वाक्—यत्र ब्रह्म च वर्तते। ब्रह्मतत्त्वमेवेति तदुक्त नन्दिकेश्वरेण—'अकार सर्ववर्णाग्र्य प्रकाश परमेश्वर' इत्यादिना सर्ववर्णाना माहेश्वररूपता, वर्णेभ्य एव च महदादिसृष्टिरित्यर्थपरतया चतुर्दशसूत्री योजयता।

२०—किं पुन नित्य शब्द, आहोस्वित् कार्य। सङ्ग्रह एतत्प्राधान्येन परीक्षितम्—नित्यो वा स्यात् कार्यो वेति। तत्रोक्ता दोषा, प्रयोजनान्यप्युक्तानि।

( पा० म० भा० १।१।१ आह्निके )

अत्र प्रदीप—सङ्ग्रह इति ग्रन्थविशेषे। अत्रोद्योत—संग्रहो व्याडि-कृतो लक्षश्लोकसङ्ख्यो ग्रन्थ इति प्रसिद्ध।

ऋचोऽक्षरे परमे व्योमन् यस्मिन् देवा अधिविश्वे निषेदुः।
यस्तन्न वेद किमृचा करिष्यति य इत तद् विदुस्त इमे समासते ॥
( ऋ० वे० १।१६४।३९ )

वाचा विरूपनित्यया।

( तत्रैव ८।७५।६ )

अत्रत्ये सायणभाष्ये द्रष्टव्ये।

यदि वै प्रजापतेः परमस्ति वागेव।

( श० प० ब्रा० ५।१।३।३ )

एष उ एव ब्रह्मणस्पति र्वाग् वै ब्रह्म।

( बृ० ब्रा० उ० १।३।२१ )

शैलिनि र्वाग्वै ब्रह्म।

( तत्रैव ४।१।२ )

स यो वाचं ब्रह्मेत्युपास्ते······यथाकामचारो भवति।

यो वाचं ब्रह्मेत्युपास्ते।

( छा० उ० ७।२।२ )

ॐकार एवेदं सर्वमोंकार एवेदं सर्वम्।

( तत्रैव २।२३।३ )

अत्र श्रीशाङ्करभाष्ये—प्रणवश्च तत्सत्य पर ब्रह्म तत्प्रतीकत्वात्।

श्रीभर्तृहरिश्च—

चत्वारि वाक्परिमिता पदानि तानि विदु ब्राह्मणा ये मनीषिणः।
गुहा त्रीणि निहिता नेङ्गयन्ति तुरीय वाचो मनुष्या वदन्ति।
(ऋ० वे० सं० १।१६४।१०)

इमा श्रुतिमनुरुद्ध्यैव परा वाग् ब्रह्मपदव्यपदेश्या भवतीति व्यवस्थापितम्। यथा वाक्यपदीये स्वोपज्ञवृत्तौ—

'सैषा त्रयी वाक् चैतन्यग्रन्थिविवर्तवदनाख्येयपरिमाणा तुरीयेण मनुष्येषु प्रत्यवभासते। तत्रापि चास्या किञ्चिदेव व्याव-

हारिकम्, अन्यत्तु सामान्यव्यवहारातीतम् । आह–च–चत्वारि वाक परिमिता० ··· ।

(वा० प० १।१४२ स्वो० वृ०)

एतदेव स्पष्टमित्यमुक्तम्—

सैषा संसारिणां संज्ञा बहिरन्तश्च वर्तते ।
तन्मात्रामप्यतिक्रान्तं चैतन्यं सर्वजातिषु ॥
(वा० प० १।१२६)

अपि प्रयोक्तुरात्मानं शब्दमन्तरवस्थितम् ।
प्राहुर्महान्तमृषभं येन सायुज्यमिष्यते ॥
(वा० प० १।१३०)

शिवाद्वैतस्य प्रधानतम आचार्य श्रीसोमानन्दपाद स्वस्मिन् शिवदृष्टिनामके ग्रन्थे भर्तृहरेः शब्दाद्वैतवाद भृशमालोचितवान् ।[21] तत्र शिवदृष्टौ परावाच पश्यन्त्यामन्तर्भावस्तथा तन्मते पश्यन्ती वागेव[22] वैयाकरणाभिमतब्रह्मपदवाच्या ।

---

२१—शिवदृष्टौ द्वितीयाह्निके १२ श्लोकादारभ्य १७ श्लो० यावत् ।

यथाहि—तद्विचाराय राद्धान्त सम्प्रत्येष विधीयते ।
पादौ तावदिन्द्रियत्वे स्थिता वाक्कमसंज्ञिते ॥
(शि० दृ० २।१२)

वस्यात्मता ब्रह्मता वा वक्तु शक्या न साधुभिः ।
इन्द्रियत्वेऽपि सामान्ये पाण्यादेर्ब्रह्मता न किम् ॥
(तत्रैव १३)

तत्र चेत्सूक्ष्मकलना सर्वत्र कलनायत ।
अतः क्रमो हृदादश्चेत्प्राणाद किं न सत्यता ॥
(तत्रैव १४)

इत्यादि ।

२२—यथास्माकं ज्ञानशक्तिर्या सत्तानिर्विकल्पता ।
वैयाकरणसाधूनां पश्यन्ती सा परा स्थितिः ॥
(तत्रैव १)

ब्रह्म

शब्दाद्वैतवादे शब्द एव ब्रह्म।[23] वाक्यपदीयस्य प्रथमकारिकायामेव 'ब्रह्म शब्दतत्त्वं यदक्षरम्' इति वदता ब्रह्मणः स्वरूपं शब्दतत्त्वं प्रत्यपादि। भर्तृहरिणास्याः कारिकायाः स्वोपज्ञवृत्तौ 'शब्दतत्त्वम्' इत्यस्य वृत्तिरित्थमकारि—

'तत्तु भिन्नरूपाभिमतानामपि विकाराणां प्रकृत्यन्वयिच्छब्दोपग्राह्यतया शब्दोपग्राहितया च शब्दतत्त्वमित्यभिधीयते।'

श्रीवृषभदेवेनास्या वृत्तेष्टीकायां 'शब्दोपग्राह्यतया' 'शब्दोपग्राहितया च' इत्याभ्यां पदाभ्यां ब्रह्मणः स्वरूपं शब्द इति निर्णीतम्। यथा तस्य शब्दाः—

'शब्दोपग्राह्यतया' इति शब्द उपग्राह्यः स्वीकर्तव्योऽस्येति। शब्दस्वभावस्य रूपाद्यात्मना विवृत्तः शब्दः स्वीकृतो भवति। 'शब्दोपग्राहितया' इति शब्द उपग्राही ग्रस्येति शब्दनिबन्धना

---

प्रमोत्पलदेवाचार्य स्ववृत्तावाह—वैयाकरणसाधूनामिति साधुग्रहणमर्वाग्जाड्यव्यापनाय।

इत्याहुस्ते परं ब्रह्म यदनादि तथाक्षयम्।
तदक्षरं शब्दरूपं सा पश्यन्ती परा हि वाक्॥
(तत्रैव २)

एवमेवाग्रिमौ ३-४ श्लोकावपि।

२३—(क) प्रमायमान्तरो ज्ञाता सूक्ष्मवागात्मना स्थितः।
व्यक्तये स्वस्य रूपस्य शब्दत्वेन विवर्तते॥
(वा० प० १-११२)

सैषा संसारिणां सज्ञा बहिरन्तश्च वर्तते।
तन्मात्रामनतिक्रान्तं चैतन्यं सर्वजन्तुषु॥
(वा० प० १-१२६)

(ख) स्वामिश्रीहरिहरानन्दसरस्वतीभिः (करपात्रमहोदयैः) वैदिकैः प्रमाणैः स्वीये वेदस्वरूपविमर्शनामके ग्रन्थे शब्दब्रह्म ससाधितम्। द्र० वे० स्व० वि० पृ० ६४-१२८

प्रतिपत्तिस्तस्येति शब्दतत्त्वम् । एतदुक्तं भवति—शब्देन हि तत् परिच्छिद्यते । तस्मिंश्च तत्परिच्छेदके ज्ञाने तद्रूप सन्निविष्टमिति वस्तुनः शब्दाकारज्ञानोत्पत्तेः शब्द उपग्राह्यो स्वीकर्ता भवति ।

(वा० प० १।१)

ह्युर्वतेरुक्तपदस्य श्रीवृषभदेवेनाप्यपरस्यापि कस्यचिद् व्याख्यातुर्व्याख्यानमेकमुल्लिखितम् । तत्राप्ययमेवार्थोऽन्योऽपि स्पष्टतयोक्तः ।

ब्रह्मणः रूप शब्द इति वदता हरिणा सर्वकल्पनाबहिर्भूतस्य ब्रह्मण. कथं शब्दत्वमुपपद्यत इत्याशङ्क्य समाहितं यद् लोके शब्दरूपानुगता एव व्यवहारा दृश्यन्ते, अतः शब्दस्य प्रकृतिभूते ब्रह्मणि शब्दव्यवहारः क्रियते । यथेदं श्रीवृषभदेवेनोक्तम्—

'ननु सर्वपरिकल्पातीततत्त्व तत् कथ शब्दतत्त्वमित्युच्यत इत्याह विकाराणां प्रकृत्यन्वयित्वात् इति । विकारा हि प्रकृतिरूपेणान्विता दृष्टा. । यथा शकनकपालामत्रभूदणानि । रूपादयश्चैते शब्दरूपानुगता दृश्यन्त इति प्रकृतिभूते ब्रह्मणि शब्दापदेश. ।

(वा० प० १–१)

अस्यामेव कारिकाया शब्दतत्त्वाक्षरपदयो पार्थक्य विविदिषुणा श्रीवृषभदेवेन शब्दतत्त्वमेव ब्रह्मेति पुनः प्रतिपादितम्—

'पूर्वं रूपादिषु सूक्ष्मशब्दानुगमेन ब्रह्मणि शब्दतत्त्वाभिधानम् । इह तु स्थूलवर्णाकारत्वेनाक्षरव्यपदेश इति विशेषः ।

द्रव्यसमुद्देशेऽपि शब्द एव ब्रह्मतत्त्वमिति निर्दिष्टम्—

'सत्यामाकृतिसंहारे यदन्ते व्यवतिष्ठते ।
तन्नित्यं शब्दवाच्यं तच्छब्दतत्त्वं न भिद्यते ॥'

( वा० प० का० ३ द्र० स० ११ )

अत्र हेलाराजः—

'सविच्च पश्यन्तीरूपा परा वाक् शब्दब्रह्ममयीति ब्रह्मतत्त्व शब्दात् पारमार्थिकान्न भिद्यते ।'

इदमेव शब्दब्रह्मत्वं च महाभाष्ये पस्पशाह्निके—'चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यां आविवेश' इति मन्त्रः शब्दपरके व्याख्याने 'महान् देवः' इत्यनेन शब्दः इति प्रतिपादितम्, तथात्र उद्योतकारेण-'महान् देवः शब्दः' इत्यस्य व्याख्या—'महान् परब्रह्मरूपो देव.' इत्यकारि । तद् यथा—

'चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताश्च, त्रयो अस्य पादाः त्रयः काला भूतभविष्यद्वर्तमानाः, द्वे शीर्षे द्वौ शब्दात्मानौ नित्यः कार्यश्च । सप्त हस्तासो अस्य सप्त विभक्तयः, वृषभो वर्षणात्, रोरवीति शब्दं करोति कुत एतद् रौतिः शब्दकर्मा महो देवो मर्त्यां आविवेशेति महान् देवः शब्द मर्त्या मरणधर्माणो मनुष्यास्तानाविवेशेत्यर्थः ।'

(महाभाष्ये पस्पशाह्निके)

अत्र नागेशः—

'महान् परब्रह्मरूपः देवोऽन्तर्यामिरूपः शब्दो मर्त्येष्वाविष्ट इत्यर्थः ।

(पा० म० भा० प० उद्योते)

अयं च शब्दो द्विविधः—नित्य अनित्यश्च, तत्र नित्योऽविवृत्तः, अनित्यश्च विवृत्तः । तत्र नित्योऽविवृत्त एव शब्द. ब्रह्म । एतत् 'अपि प्रयोक्तुः' इत्यादिकारिकायाम् स्वोपज्ञवृत्तौ, श्रीवृषभदेव-टीकायां चोपपादितम् । तद् यथा—

अपि प्रयोक्तुरात्मानं शब्दमन्तरवस्थितम् ।
आहु र्महान्तमृषभं येन सायुज्यमिष्यते ॥
(वा० प० १–१३१)

इह द्वौ शब्दात्मानौ–नित्य कार्यश्च । तत्र कार्यो व्यावहारिकः पुरुषस्य वागात्मनः प्रतिबिम्बोपग्राही । नित्यस्तु सर्वव्यवहारयोनिः

संहृतक्रमः सर्वेषामन्तः संनिवेशी प्रभवो विकाराणामाश्रयः कर्मणामधिष्ठानं सुखदुःखयोः, सर्वत्राप्रतिहतकार्यशक्तिः घटादिनिरुद्ध इव प्रकाशः परिगृहीतभोगक्षेत्रावधिः, सर्वमूर्तीनामपरिमाणा प्रकृतिः, सर्वप्रबोधरूपतया सर्वप्रभेदरूपतया च नित्यप्रत्यवभासस्वप्नप्रबोधानुसारी प्रवृत्तिनिवृत्तिपदाभ्यां पर्जन्यदवाग्निवच्च प्रसवोच्छेदशक्तिरूपः सर्वेश्वरः सर्वशक्ति महान् शब्दवृषभः, तस्मिन् खलु वाग्योगविदो विच्छिद्याहङ्कारग्रन्थीनत्यन्तविनिर्भागेन संसृज्यन्ते। आह च—

चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यां आविवेश।

अत्र श्रीवृषभदेव —

परमात्मनोऽपि शब्दरूपता प्रतिपादयन्नाह अपि प्रयोक्तु इति। द्वे शब्दरूपे विवृत्तोऽविवृत्तश्च। अविवृत्तो नित्यः विवृत्तोऽनित्य।
(वा० पा० १—१३१ वृ० टी०)

अनेन शब्दब्रह्मणैव सर्वं स्थावरजङ्गमादिकं जगत् चैतन्यं भासते। एतत् साधयितुं भगवान् हरिराह—

सैषा संसारिणां संज्ञा बहिरन्तश्च भासते।
तन्मात्रामप्यतिक्रान्तं चैतन्यं सर्वजातिषु॥
(वा० प० १।१२७)

अत्रेयं स्वोपज्ञवृत्तिः—

'योऽयं चैतन्ये वागरूपतागमस्तेन लोके ससंज्ञो विसंज्ञ इति व्यपदेशः क्रियते। एवं ह्याह—

अर्थक्रियासु वाक् सर्वान् समीहयति देहिनः।
तदुत्क्रान्तौ विसंज्ञोऽयं दृश्यते काष्ठकुड्यवत्॥

अन्तःसंज्ञानामपि सुखदुःखसंवित्मात्रा यावद्वाग्रूपतानुवृत्तिस्तावदेव भवति। बहिःसंज्ञेषु तन्निबन्धनो लोकव्यवहारस्तदभावा-

त्रियतमुत्सीदेत्। न हि सा चैतन्येनानाविष्टा जातिरस्ति यस्या स्वपरसम्बन्धो यो वाचा नानुगम्यते। तस्माच्चितिक्रियारूपमलब्धवाक्शक्तिपरिग्रहं न विद्यते। वाग्रूपत्वमेव चितिक्रियारूपमित्यन्ये।' (स्वो० वृत्तिः)

एवञ्चात्र वाक्चैतन्ययोरभेदः प्रतिपादितः। सर्वजातिषु सर्वजातेषु सर्वभूतेषु इत्यर्थः। वाग्रूप चैतन्य तु स्थावरेषु वृक्षादिषु तथा जङ्गमेषु मनुष्यादिषु सर्वत्र विद्यते किन्तु स्थावरेषु केवल स्वसंबोधानुगम एव जङ्गमेषु च स्वपरोभयसंबोधानुगम इति विशेष।

जाग्रदवस्थाया स्वप्नावस्थायामुभयत्र वाक्तत्त्वमेव कर्तृ कर्म करणभावेनावतिष्ठते। यथाह हरि:—

प्रविभागे यथा कर्ता तथा कार्ये प्रवर्तते।
अविभागे तथा सैव कार्यत्वेनावतिष्ठते॥
(वा० प० १।१२८)

अत्र स्वोपज्ञवृत्ति —

प्रविभक्तसाध्यसाधनरूपो हि शब्दब्रह्मणो विवर्तः। प्राप्तजन्मादिविक्रिया वागविभागमन्ययो जागरणवृत्तिकाले वाग्रूपतामनुगच्छन्तो निर्वृत्तविक्रियाप्राप्तिभि कार्येषु वर्तन्ते। स्वप्नाद्यविभागे तु सैव वागविषया बाह्यवस्तुस्वरूपा सती निर्वृत्तिविक्रियाप्राप्तिषु धर्मभाव प्रतिपद्यते। आह च—

प्रविभज्यात्मनात्मानं सृष्ट्वा भावान् पृथग्विधान्।
सर्वेश्वरः सर्वमयः स्वप्ने भोक्ता प्रवर्तते॥

अत्र हरिकारिकाया कार्यत्वेनेति पद कर्तृकरणयोरुपलक्षणम्।

वाग्रूपतैव चैतन्यम्, चैतन्य वाग्रूपतोऽभिन्नमिति वा साधयन् भगवान् हरिरभिधत्ते—

वाग्रूपता चेदुत्क्रामेदवबोधस्य शाश्वती।
न प्रकाशः प्रकाशेत् सा हि प्रत्यवमर्शिनी॥
(वा० प० १।१२५)

स्वोपज्ञवृत्तिश्चेत्थमत्र—

'यथा प्रकाशत्वमग्नेः स्वरूपं चैतन्यं वान्तर्यामिणस्तथा ज्ञानमपि सर्वं वाग्रूपतानुगतम्। इत्यादि।'

अर्थात् वाचोऽभावे शब्दस्याभावे वा चितेः प्रकाशनमसम्भवम्। अतश्चितेः प्रकाशनं शब्दरूपाधीनमेव। चितेश्शब्दस्य च भिन्नरूपत्वे प्रत्यवमर्शो न सम्भवेत्। कारिकास्थम् प्रत्यवमर्शिनीपदम् अनुव्यवसायवाचि। एतत्सर्वं स्वोपज्ञवृत्तौ विस्तरेण स्पष्टीकृतम्। अत एव च श्रीभर्तृहर्यनुगामिभिः मण्डनमिश्रैः ब्रह्मसिद्धौ वाग्रूपाधीनमेव चितश्चितित्वम्, वाग्शक्तिरेव वा चितिरित्युक्तम्। यथा हि—

'शब्दसंस्पर्शेऽर्थे बोधोत्कर्षदर्शनात् तत्प्रतिसंहारे च मन्दचेतितानामप्यसञ्चेतितकल्पत्वात् पथि गच्छतस्तृणादीनां बोधापकर्षाद् वाग्रूपाधीनमेव चितश्चितित्वम्, वाग्शक्तिरेव वा चितिः।

(ब्र० सि० का० १ का० १ पृ० १९)

अस्मिन् मते शब्दब्रह्मणः समवायिनी शक्तिः स्वातन्त्र्यशक्तिः, तयोश्च शब्दब्रह्मशक्त्योस्तादात्म्यम् शक्तिशक्तिमतोश्चाभेदात् शब्दब्रह्म एकमेव तत्त्वम्।[२४]

यद्यपि

द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च तत्।
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति॥

इतिकारिकानुसार ब्रह्मणो द्वौ भेदौ शब्दब्रह्म तथा पर ब्रह्म।

२४—२०—शब्दब्रह्मदर्शनम् इतिलेख श्री टी० वी० रामचन्द्रदीक्षितमहोदयस्य जर्नल आफ ओरियण्टल रिसर्च मद्रास १९२८ ई० पृ० १५८।

पर ब्रह्म तावत् सूक्ष्मप्रणवरूप त्रिमात्रमोंकारम्—यथा प्रश्नोपनिषदि—एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोंकारः।

तस्माद् विद्वानेतेनैवायतनेनैकतरमन्वेति। (प्र० उ० ५ प्र० २)

अपरं ब्रह्म च शब्दब्रह्म। किन्तु वैयाकरणाः परब्रह्म शब्दब्रह्मैवेति मन्यन्ते।

अत एवोक्तम्—

यदेकं प्रक्रियाभेदैर्बहुधा प्रविभज्यते।
तद्व्याकरणमागम्य परं ब्रह्माधिगम्यते॥
(वा० प० १।२२)

शब्दः—वाक्

अस्मिन्ग्रन्थे शब्दो वाक चैवमेव तत्त्वम्। शब्दो द्विविधः एकः शब्दाना निमित्तरूप (स्फोटः) अपरोऽर्थप्रत्यायको वैखरीरूपः। यथोक्तम्—

द्वावुपादानशब्देषु शब्दौ शब्दविदो विदुः।
एको निमित्तं शब्दानामपरोऽर्थे प्रयुज्यते॥
(वा० प०१–४४)

अथ भाव स्फोटरूपः शब्दो वैखर्या निमित्त भवति। वैखरीशब्दश्च अर्थबोधेच्छया उच्चारितो भवति।

सिद्धान्तशैवादिमते चतस्रो वाचो भवन्ति। यथा रत्नत्रये (अष्टप्रकरणे) निर्दिष्टा परा, पश्यन्ती, मध्यमा वैखरी इति। किन्तु श्रीभर्तृहरिमते पश्यन्ती मध्यमा, वैखरी इति तिस्रो वाचो भवन्ति। यथाह—

वैखर्या मध्यमायाश्च पश्यन्त्याश्चैतदद्भुतम्।
अनेकतीर्थभेदायास्त्रय्या वाचः परं पदम्॥
(वा० प० १–१४३)

अथ 'संविद्रूपा पश्यन्ती परा वागेव ब्रह्म' इति अनेकशः प्रतिपादितम्। तत्र परारूपायाः वाचोऽभावे कथमेतत्सङ्गच्छत इति विचारे विद्वांसो बहु विचारितवन्तः। वस्तुतस्तिस्र एव वाचोऽत एव मध्यमेति संज्ञा सार्थिका। अन्यथा नोपपद्येत। अत तिस्रोऽपि वाचः स्थूला, सूक्ष्मा, परा चेति भेदत्रयेण वाचो नव भेदा भवन्ति। तत्र परारूपा पश्यन्त्येव ब्रह्मेति। अपरे तु केवलो पश्यन्त्येव परापरभेदेन द्विधा। जिज्ञासारूपा सैव सूक्ष्मा पश्यन्ती, जिज्ञासाहीना सैव परा पश्यन्ती इति समादधुः।

द्रष्टव्यमेतदर्थं वाक्यपदीयप्रथमकाण्डस्य १४३ कारिकाया व्याख्यान श्रीसूर्यनारायणशुक्लकृतं तथा श्रीरघुनाथशर्मकृतम्।

शिवदृष्टावपि वैयाकरणमतस्यानुवादे पश्यन्त्येव परा इति स्वीकृतम्—

इत्याहुस्ते परं ब्रह्म यदनादि तथाक्षयम्।
तदक्षरं शब्दरूपं सा पश्यन्ती परा हि वाक्॥
(शि० दृ० २।२)

*सत्ताद्वैतवादः*

अथ शब्दाद्वैत एव सत्ताद्वैतः। सत्तापदेनात्र जाति विवक्षिता। जातिश्च शब्दार्थः। शब्दार्थयोश्चाभेदः। सत्तायाश्च नित्यत्वात् सर्वत्रानुस्यूतत्वाच्च सत्तैव ब्रह्म, तेन च सत्ताब्रह्मवादः शब्दब्रह्मवादश्चैक एव। एतत्सर्वं वाक्यपदीये त्रिषु काण्डेषु सुस्पष्ट किन्तु तृतीये काण्डे जातिसमुद्देशे, द्रव्यसमुद्देशे, सम्बन्धसमुद्देशे कालसमुद्देशे च सुस्पष्टतरं प्रतिपादितम्।

तद् यथा भर्तृहरिणा शब्दार्थो जातिरित्यभिहितम्—हेलाराजेन च कारिकाया इत्यमवतरणं कृतम्—

(हेलाराजः) 'इदानीं जातौ शब्देनाभिधीयमानायां तत्र

जात्यन्तराभावाद्धिनिमित्ता शब्दस्य प्रवृत्तिरायातेत्याशङ्कयोपपादयितुमाह—

स्वा जातिः प्रथमं शब्दैः सर्वैरेवाभिधीयते ।
ततोऽर्थजातिरूपेषु तदध्यारोपकल्पना ॥
( वा० प० का० ३ जा० स० ६ )

(यथाह हेलाराज ) स्वा असाधारणी आत्मीया गोशब्दत्वादिका न तु सकलशब्दसाधारणी शब्दत्वादिः । एव चासाधारण्येन विशेषणात्तया सम्बन्धाव्यभिचारः शब्दस्यार्थजात्या सम्बन्धव्यभिचारेऽपीति स्वा जातिः एव मुख्यमभिधेयमुक्त भवति ।

अस्याः कारिकाया एव व्याख्यानेऽग्रे प्रथमकाण्डे साधितमपि शब्दार्थयोरभेदस्य पुनः स्पष्टीकृतम् । तद्यथा —

अर्थस्य स्फटस्येव शब्दस्वरूपाभेदेनावबोधेऽपि यथा प्रतिपादितन्यमाश्रयेण ततः स्वजातिप्रत्यायनानन्तरमर्थजातीना गोत्वादीनामात्मसु तस्याः शब्दजातेः समारोपस्य कल्पना न परमार्थः, शब्दविवर्तत्वेनार्थस्य शब्दात्तत्त्वतो भेदाभावात् ।

(वा० प० का० ३ जा० स० ६ हेला०)

अतः पर तिसृभिः कारिकाभिर्जातेः सत्यत्वम्, सत्तारूपत्वम, आत्मत्व च साधितम् । तद् यथा हरे कारिका हेलाराजस्य च व्याख्यानम्—

'अत्रापि मते जातिव्यक्तिप्रविभागमाह—

सत्यासत्यौ तु यौ भावौ प्रतिभावं व्यवस्थितौ ।
सत्यं यत्तत्र सा जातिरसत्या व्यक्तयः स्मृताः ॥
( वा० प० का० ३ जा० स० ३२ )

अविद्याप्रवृत्तिरूपस्य सर्वपदार्थेष्वागमापायिनोऽसत्यत्वाद् व्यक्तिरितिव्यवहारः । तदेव हि सत्य यस्मिस्तत्त्व न विहन्यते ( वा० स०

भा० पस्पशाह्निके) इत्यन्वयिरूपं भेदप्रत्ययेष्वबाध्यमानं सत्यं जातिः इति व्यवहृतमद्वैतिभिः। तद्यथा—रुचकस्वस्तिककुण्डलादयो विकाराः परस्परोपमर्दनं भवन्तोऽस्थिरप्रत्ययविषयाः, सुवर्णमित्येव तु सत्यमन्वयिविज्ञानावसेयसत्त्वम्। एवमभेदान्तरविवक्षायां तेज इत्येव सत्यम्। तत्राप्यभेदान्तरकारणमित्यन्या परा प्रकृतिः सत्या सर्वविकारानुयायिनी प्रशान्तकल्लोला चिदेकघना ब्रह्मेत्यागमविदः। तदुक्तम्—

'पृथिवीधातौ किं सत्यम्, विकल्प, विकल्पे किं सत्यम्, विज्ञानम्, विज्ञाने किं सत्यम् ॐ मय नद् ब्रह्म।' इति। 'प्रतिभावम्' इति परमतेन वस्तुना भेदाद् वीप्सा। चिन्मात्रस्य सर्वत्रानुगमादेव महासत्तारूपमभावप्रतियोगि विश्वस्य जगत सत्यरूपमयदाततदर्शनैः साक्षात्कृत्योपदिष्टम्। प्रामाण नस्ते भगवन्त ॥३२॥

इत्थं चाद्वयनये परमार्थसत्येकैव जातिर्महासत्ताख्या परब्रह्मस्वभावा, तस्या एव गोत्वादिजातिभेदेन विवर्ते व्यवहार इत्याह—

सम्बन्धिभेदात्सत्तैव भिद्यमाना गवादिषु।
जातिरित्युच्यते तस्यां सर्वे शब्दा व्यवस्थिताः॥
॥३३॥

वक्ष्यमाणैराश्रयादिभिः स्वसम्बन्धिभिः भिद्यमाना उपचरितभेदा गवाश्वादिषु सत्तैव महासामान्यमेव जातिः गोत्वाश्वत्वादिका, अपरसामान्यम्, नान्या परमार्थभिन्ना सा विद्यते। तथा हि गोसत्ता गोत्वम्, नापरमन्यत् प्रतिभासते। एवमश्वस्य सत्ता अश्वत्वमित्यादि वाच्यम्। तस्याम् एव च गवादिभेदभिन्नाया सत्तारूपाया जातौ सर्वे गवादयो डित्थादयश्च शब्दा वाचकत्वेन व्यवस्थिताः इत्यसाङ्कर्येण नियतोपाधिवशाज्जात्यभिधायिनः सिद्धाः॥३३॥

सर्वशब्दविषयत्वमेवाभिव्यनक्ति—

तां प्रातिपदिकार्थं च धात्वर्थं च प्रचक्षते ।
सा नित्या सा महानात्मा तामाहुस्त्वतलादयः ॥

॥३४॥

सर्वभावेषु सद्रूपं सामान्यमनुगतम् । अभावस्यापि बुद्ध्याकारेण निरूपणात्, महासत्तयानयावियोगात् प्रातिपदिकमात्रवाच्या सत्ता । तदुक्तम्—

'प्रातिपदिकार्थः सत्ता ।' इति ।

धातुभिरपि साधनाधीनलब्धजन्मसु क्रियाव्यक्तिषु समवेता यथोपाध्युपगृहीतनानात्वा सत्तैवाभिधेयत्वमापद्यते । सिद्धसाध्यरूपार्थद्वयात्मना च तस्या एव वृत्तेस्तदपरराश्यभावात् सर्वशब्दविषयत्वं सत्तायाः । प्रत्ययभागेनाप्यत्र यथायथं संख्याकारकाद्युपाधिविशिष्टा सत्तैवाभिधीयते । सा चोदयव्ययरहितत्वाद् नित्या, सत्प्रत्ययस्य सर्वदानुवृत्तेः ।' ' इति सत्तारूपं सर्वं जगदाख्यात भवतीति सत्ताद्वैतवादः साङ्ख्यनयेनाप्युपवृंहित । ॥३४॥

जाति पदार्थः, जातिरेव च सत्ता, तथा सत्तैव ब्रह्मेति सुस्पष्ट हेलाराजेन 'प्राप्तिक्रमा विशेषेषु' ( वा० प० का० ३ जा० स० ३५) इति कारिकायामुक्तम्—

'साधनसम्बन्धहेतुकप्रतीयमानरूपापरामर्शे सत्तव सत्त्व द्रव्यमित्युच्यत इति सिद्धसाध्यरूपो द्विधा विवर्त्त सन्मात्ररूपस्य परस्य ब्रह्मणः प्रतिपादित । तदेव हि सर्वत्रानुगतम् । नचात्र दर्शने सद्भ्यः सत्ता व्यतिरिक्ता भावत इति सर्वं तन्मयम् । ततश्च सर्वशब्दाना सत्तावचनत्वाज्जातिपदार्थव्याप्ति । (वा० प० ३का० जा० स० ३५ हे० व्या०)

'तदेव ब्रह्म सवभावेषु समानरूप सत्तात्मकमन्यस्य तद्व्यतिरिक्तस्याभावात् ।

(वा० प० का० ३ जा० स० ३६ का० हे० व्या०)

'यद्यपि सर्वं सत्तात्मकपरब्रह्ममयम् ।

(वा०प० ३ का० ३ जा० स०८० का०हे० व्या०)

एवमेव सम्बन्धसमुद्देशेऽपि सत्तात्मकस्य ब्रह्मणो निर्देशः।

यथा हि—'प्रकाशरूपस्य हि परस्य तत्त्वस्य सर्वथा विभिन्नस्वभावस्य महासत्तात्मनः।'

(वा० प० का० ३ स० स० ६१ हे० व्या०)

*भावाद्वैतम्*

इद सत्ताद्वैतमेव भावाद्वैतपदेनाप्यभिधीयते। श्रीमण्डनमिश्रस्य भावाद्वैतवादित्वेन प्रसिद्धिरस्त्येव।[२५] सत्तापदार्थं भावपदार्थश्च समानार्थकः। यथा सत्ता नित्यरूपा तथा भावोऽपि नित्य। एतद् वाक्यपदीये विशेषतो जातिसमुद्देशे द्रव्यसमुद्देशे सम्बन्धसमुद्देशे च प्रतिपादितम्।

सत्ता भावश्चैकमेव तत्त्वम्। यथा—

'तत्र च भावस्य परमार्थरूपस्य सत्तात्मकस्य।'

(वा० प० का० ३ जा० स० ३६ हे०)

यदि सर्वं हि भावरूप नित्य तर्हि कथ वस्तुनो जन्मनाशौ भावाभावौ च प्रतिपद्यते। अत्र समाहित यद् भावस्य अभावो विरोधी। अतो भावस्य ( सत्तात्मकवस्तुन ) अभाव केवल तिरोभावरूपोऽर्थ। यथोक्त हेलाराजेन—

'तत्र भवनधर्मणो भावस्याभावविरोधात्तिरोभावमात्र विनाश।'

(वा० प० का० ३ जा० स० का० ३८ हे० व्या०)

पुनरग्रे—

'अनपायोपजनविकारित्वान्नित्या ब्रह्मात्मिका सत्ता निरन्वयविनाशासहेत्यभावो नाम न भावाद् व्यतिरिक्त'। केवल प्रागूर्ध्वं

२५— आचार्यमण्डनमिश्र ' इतिनामके द्वादशाध्याये एतन्निरूपितम्।

च तिरोभावमात्रं भावावभासस्य यदस्माभिरभ्युपगम्यते सैव नास्तिता कथ्यते।'

(वा० प० का० ३ जा० स० ३८ हे०)

श्रीहरि भावपदेन ब्राह्मणत्वादीन् प्रतिपादयति—

ब्राह्मणत्वादयो भावाः सर्वप्राणिष्ववस्थिताः।

(वा० प० का० ३ जा० स० ४४ का०)

अत्र हेलाराजो भावपदमित्थं निर्वक्ति—

'भवन्ति सर्वत्रेति भावा ब्राह्मणत्वक्षत्रियत्वादयः सामान्यविशेषाः।'

भावाद्वैतस्य सर्वोऽपि सिद्धान्तः निष्कृष्य हेलाराजेन निम्नाङ्कितकारिकायामित्थमुल्लिखितः—

नाभावो जायते भावो नैति भावोऽनुपाख्यताम्।
एकस्मादात्मनोऽनन्यौ भावाभावौ विकल्पितौ॥

(वा० प० का० ३ स० स० ६१ का०)

(हेलाराज)—द्वैतनये प्रागभावोपमर्देन भावनिवृत्तिः। भावोपमर्देन प्रध्वंससम्भवः। द्वयमपि नतद्युक्तम्, भावाभावयोरन्योन्यस्वभावोपगमसम्भवात्। स्वभावस्यानपायात्। अतश्चात्यन्तविवेके भावोपाधितया अभावस्य अभावोपाधितया भावस्य प्रतीतिर्न स्यात्। तस्मादेकमेवाद्वयं तत्त्वमात्मशब्दवाच्यं व्यवहारे विकल्पदशाया भावाभावोपाधिरूपप्रविभक्तं चकास्ति। प्रकाशरूपस्य हि परस्य तत्त्वस्य सर्वथाविभिन्नस्वभावस्य महासत्तात्मनोऽभावप्रतियोगिनोऽविद्यावशात् सावृतलोकयात्रानिर्वर्तनसमर्थस्य बहिरिदन्तया प्रतिभाने वर्तमानकालोपाधितयार्थक्रियाकारिणो भावरूपता, अतीतानागतकालोपाधितया चान्तरेव संस्काररूपतयानुवर्तनाद् बाह्येन्द्रियविषयतानुपगमात् सर्वप्रमातृसाधारणार्थक्रियाकरणादभावरूपतया व्यवहारः।

एवमेव तृतीयकाण्डे द्रव्यसमुद्देशे १४ कारिकायाः व्याख्यानेऽपि इद स्पष्टीकृतम् ।

जीवः

एकमेव शब्दब्रह्म कालाख्यया स्वातन्त्र्यशक्त्या ( अविद्यया ) भोक्तृभोक्तव्यभोगरूपेण, दृश्यदर्शनद्रष्टृरूपेण भासते । यथाह हरि —

एकस्य सर्वबीजस्य यस्य चेयमनेकधा ।
भोक्तृभोक्तव्यरूपेण भोगरूपेण च स्थितिः ॥
( वा० प० १-४ )

तस्य शब्दार्थसम्बन्धरूपमेकस्य दृश्यते ।
तद् दृश्यं दर्शनं द्रष्टा दर्शने च प्रयोजनम् ॥
( वा० प० का० ३ द्र० स० १४ )

अत्र भोक्ता जीव, ( पुरुष ) भोक्तव्या विषया, भोग विषयोपभोगाज्जन्यसुखदुःखाद्यनुभवस्तथैवमेव हि दृश्य विषय, द्रष्टा जीव, दर्शनम् साध्यस्वभावक्रिया च ।

अत्र द्रष्टृपदेन जीवात्मा गृह्यत इति विवृण्वन्नाह हेलाराज —

'द्रष्टापि जीवात्मा अविद्याकृतावच्छेदो नियत ससारी भोक्ता ब्रह्मैव चेतनत्वाद् भावतो भेदानुपपत्तेः ।

इदमेव च तथ्य तृतीयकाण्डे सम्बन्धसमुद्देशेऽप्याह—

यत्र द्रष्टा च दृश्यं च दर्शनं वा विकल्पितम् ।
तस्यैवार्थस्य सत्यत्वं श्रितास्त्रय्यन्तवेदिनः ॥
( वा० पा० ३ का० स० स० ७२ )

ब्रह्मजीवयो र्न वस्तुतो भेद किं तु ब्रह्मैव जीवरूपेण भोक्तृरूपेण वा अवतिष्टते । स्वेदेवः स्वैमय एव परमात्मा भोक्तापि जीवो भवतीति स्वोपज्ञवृत्तौ भगवान् हरिराह—

प्रविभज्यात्मनात्मानं सृष्ट्वा भावान् पृथग्विधान् ।
सर्वेश्वरः सर्वमयः स्वप्ने भोक्ता प्रवर्तते ॥
( वा० प० १।१२८ स्वो० वृतौ )

अस्य स्वोपज्ञवृत्तिस्थस्य श्लोकस्य व्याख्या अस्मद्गुरुभिः श्रीशुक्ल-महोदयैरित्थं कृता—

'एतदुक्तं भवति—जाग्रदवस्थाया कर्तृकरणविभाग सम्भवति बाह्यस्य तदानी सत्वात् इति सा प्रविभाग इत्युच्यते । स्वप्नावस्थाया तु वाग्रूप शब्दब्रह्मैव कर्ता कार्यं करण च तदानी बाह्यस्याभावात् इति सा अविभाग इत्युच्यते । यद्यपि जागरणेऽपि सैव कर्ता कार्यं करण च तथापि प्रसिद्धत्वादेवमुक्तम्, कार्यत्वेन कर्तृत्वकरणत्वे उपलक्ष्येते । वस्तुत पारमार्थिकमेकमेव किन्तु व्यावहारिकमनेकता—यथा········ यद्यपि सर्वं सत्तात्मकपरब्रह्ममयम्, तथापि व्यवहारेऽविद्याप्रवृत्तिरूपे यथावभास भेदस्यासत्यस्यानपह्नवनीयत्वाद द्रव्यादिसत्ताश्रय. प्रविभागोऽयमविरुद्धः ,''''''''''''''इद यथा चिन्तामणिरर्थिना यथाशयमाकारनानात्वमुद्दर्शयति तथानन्तशक्ति सन्मात्र ब्रह्म अविद्या-विलसितसहृ सासारिकप्रमातृविषये नानारूप चकास्त्यन्ते वस्तुसतत्त्व-मुद्घाटितम् ।

(वा० प० का० ३ जा० स० ४० का० हे० व्या०)

विवर्तः

आचार्यभर्तृहरिः परिणामवादमभिप्रैति उत विवर्तवादमित्यत्र महान् मतभेद । आचार्य स्वयमेव वाक्यपदीये प्रथमकारिकायाम् 'अनादिनिधनम्' ( वा० प० ब्र० का० १ का० ) इत्यत्र विवर्तते इतिपदेन विवर्तवाद समर्थयति । पुनरग्रेऽत्रैव ब्रह्मकाण्डे 'शब्दस्य परिणामोऽयमित्याम्नायविदो विदुः' (वा० प० ब्र० का० १२० का०) इत्यत्र परिणामपक्षमनुमनुते । एतदसामञ्जस्य न केवल

श्रीभर्तृहरिशब्देष्वेव अपि तु श्रीवाचस्पतिमिश्रशब्देष्वपि। श्रीमिश्रैरुक्तम्—

'ये पुनरभिन्नस्य शब्दब्रह्मणो विवर्तं वा परिणामं वार्थमाचक्षते।'

(न्यायकणिकायाम् पृ० २९३)

बौद्धदर्शनस्य महापण्डितौ शान्तरक्षितकमलशीलौ च इमां समस्यामतोऽपि दुरूहामकुरुताम्। तौ हि एकत्र शब्दब्रह्मवादिनं परिणामवादिनं स्वीकुरुतोऽपरत्र च विवर्तवादिनम्। तथाहतु—

'नाशोत्पादासमालीढं ब्रह्म शब्दमयं परम्।
यत्तस्य परिणामोऽयं भावग्रामः प्रतीयते॥

(तत्त्वसंग्रहे १२८)

पूर्वापरादिविभागरहितमनुत्पन्नमविनाशि यच्छब्दमयं ब्रह्म तस्यायं रूपादिर्भावग्रामः परिणामः प्रतीयते। यथोक्तम्—

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥ इति

तत्र आदि'—उत्पाद., निधनं-नाश तदभावादनादिनिधनम्। अक्षरम्। अकाराद्यक्षरस्य निमित्तत्वात्। एतेनाभिधानरूपेण विवर्तो दर्शितः। अर्थभावेनेत्यादिना पुनरभिधेयविवर्तः। प्रक्रियेति भेदाः। ब्रह्मेति नामसङ्कीर्तनम्। अस्यैव श्लोकस्यार्थं निदिशति—'नाशोत्पादासमालीढमिति।'

(पूर्वोक्तश्लोकस्य तत्त्वसंग्रहपञ्जिकायाम्)

इत्यत्रात्र परिणामवादोऽभिहितः। अतोऽग्रे पुनः शब्दब्रह्मपरीक्षाप्रस्तावे—

'अर्थाविभागमेवेदं ब्रह्मतत्त्वं सदा स्थितम्।
अविद्योपप्लवाल्लोको विचित्रं त्वभिमन्यते॥

(तत्त्वसंग्रहे १४४)

अथापि स्यादविभक्तमेव सदा ब्रह्मात्मकं तत्त्वमविकारि परमार्थतोऽवस्थितम्। न तस्य परमार्थेन परिणामः, किन्त्वविद्यातिमिरोपहतबुद्धिलोचना नीलादिभेदेन विचित्रमिव मन्यन्ते। यथोक्तम्—

यथा विशुद्धमाकाशं तिमिरोपप्लुतो जनः।
सङ्कीर्णमिव मात्राभिश्चित्राभिरभिमन्यते॥
तथेदममृतं ब्रह्म निर्विकारमविद्यया।
कलुषत्वमिवापन्नं भेदरूपं विवर्तते॥
इति'

इत्यस्यात्र विवर्तवादः स्पष्टीकृतः।

अत्र व्याख्यायां यद्यपि श्रीकमलशीलेन विवर्तवादपोषकत्वेन—'यथा विशुद्धमाकाशम्' इति तथा 'तथेदममृतम्' इति द्वौ श्लोकौ उद्धृतौ, अनयोः श्लोकयोर्निर्मातुः नाम च नोदाहृतम्। किन्तु श्रीमृगेन्द्रागमवृत्तौ परमोक्षनिरासप्रकमे श्रीभट्टनारायणकण्ठेन इमे कारिके श्रीभर्तृहरेरिति सूचिते। स मृगेन्द्रागमस्य—

'वेदान्तेष्वेक एवात्मा चिदचिद्व्यक्तिलक्षितः।'
( श्रीमृगेन्द्रागमे ११२ )

इति सूत्रव्याख्यायामेवमाह—

'आत्मैवेद जगत्सर्वम्' (छा० ७।२५।२), 'नेह नानास्ति किञ्चन' (बृ० आ० उ० ४।४।१९), तथा एको वशी सर्वभूतान्तरात्मा एकं बिम्बं बहुधा यः करोति ( कठोप० ५।१२ ) इत्यादिश्रुतिभिः परमात्मैव सकलचिदचिद्भावाविर्भावतिरोभावप्रकृतिभूतः परिपूर्णषाड्गुण्यवैभवः स्वतन्त्र एकोऽपि सन् संसरति। तत्तद्विविधमनोलक्षणोपाधिभेदस्वभावान्तरानुविधायी यथावदवगतोऽभ्युदयाय भवतीति वेदान्तविदः प्रतिपन्नाः। स एव हि सत्त्वात्मन्युपाधौ शान्त इव रजोबहुले तु रागवानिवाज्ञानात्मके तु तमसि मुग्ध

इवास्ते। न तु ततोऽन्यत् पृथक् किञ्चिद् अवतिष्ठते। तस्यैव तथा तथा वैचित्र्येणावस्थितेरसत्यत्वाद् द्वैतप्रतिभासस्य द्विचन्द्रादिज्ञानवद् भ्रान्तत्वात्। तथा चाह भगवान् हरिः—

यथा विशुद्धमाकाशं तिमिरोपप्लुतो जनः।
सङ्कीर्णमिव मात्राभिश्चित्राभिरभिमन्यते॥
तथेदममृतं ब्रह्म निर्विकारमविद्यया।
कलुषत्वमिवापन्नं भेदरूपे प्रवर्तते॥

एवं चाभिन्नमेवेदं परं ब्रह्म परमात्मलक्षणम्, मनसो हि संसारधर्माः सुखदुःखादिभि र्योगः। परमात्मा तु सूर्य इवाम्भःप्रतिबिम्बभेदैरुपाधिभिरभिन्नोऽपि भिन्न इव प्रतिभाति। तथा च श्रुतिः—'यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन्। उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा।'

इमे कारिके वाक्यपदीयप्रथमकाण्डस्य प्रथमकारिकायाः'अनादिनिधनम्' इत्यस्याः स्वोपज्ञवृत्तौ किञ्चिद्भेदेनोपलभ्येते।

इत्यञ्चानुमीयते यत् पुरा विवर्तपरिणामशब्दौ समानार्थसम्पृक्तौ पर्यायवाचिनावास्ताम्। अत एव भगवता श्रीशङ्कराचार्येण ब्रह्मसूत्रे भाष्ये परिणामार्थे विवर्तपदोपादानं कृतम्।

रचनानुपपत्त्यधिकरणे पूर्वपक्षरूपेण सांख्यसिद्धान्तोपपादने परिणमते इत्यर्थे विवर्तते इति पदमुपात्तम्—

'त्रिगुणं प्रधानं मृद्वदचेतनं चेतनस्य पुरुषस्यार्थं साधयितुं स्वभावेनैव विचित्रेण विकारात्मना विवर्तते।'

दर्पणनामिकायां टीकायाम् 'विवर्तते' इतिपदस्यार्थः 'उत्पद्यते' इति कृत.। यथा हि—

श्रीलक्ष्मीरमणं नौमि गौरीरमणरूपिणम् ।
स्फोटरूपं यतः सर्वं जगदेतद् विवर्तते ॥
(वै० भू० सा० १ श्लो० )

• ·········एतत् मत्यन्तसान्निध्येन बुद्ध्या विषयीक्रियमाणम् । विवर्तते—उत्पद्यत इत्यर्थ ।

(वै० भू० सा० द० टी०)

महाकविभवभूतिनापि जलविकारे जलपरिणामे तरङ्गादौ विवर्तपदं प्रयुक्तम्—

एको रसः करुण एव निमित्तभेदाद्,
भिन्नः पृथक् पृथगिवाश्रयते विवर्तान्,
आवर्तबुद्बुदतरङ्गमयान् विकारान्,
अम्भो यथा सलिलमेव हि तत्समस्तम् ॥
(उ० रा० च० ३ अ० ४७ श्लो०)

ब्रह्मसिद्धौ अनेकत्र समानाश्रयत्वेन विवर्तपरिणामशब्दयोः प्रयोग. कृत.।[२६]

इदमपि प्रतीयते यत् पुरा शब्दपरिणामवादिनस्तथा शब्दविवर्तवादिनश्च उभयविधा विद्वांस आसन् । शब्दपरिणामवादिना व्याख्या-

---

२६—'द्रष्टुरेव चिदात्मनस्तथा तथा विपरिणामाद् विवर्तनाद्वा ।'
( ब्र० सि० ब्र० का० पृ० ७ )
अतो वाचो विपरिणामो विवर्तो वा जगत् ।'
( तत्रैव पृ० १८ )
सर्वं ह्येव वागूपान्वितं गम्यत इति तद्विकारस्तद्विवर्तो वा ।'
( तत्रैव पृ० १९ )

नादिव यालवदाम्नातम् ।२७

न्यायमञ्जर्याम्—शब्दविवर्तवादखण्डनावसरे विवर्तवादस्य तिस्रो व्याख्या कृत्वा सर्वा निरस्ता । तत्र विवर्तपदस्य परिणामपरत्वेनाद्येयं व्याख्या । यथा—

विवर्तवादोऽपि न समञ्जसः, तथा हि विवर्ते क्षीरमिव दधिरूपेण परिणामित्वेन विकारितया वा क्षीरादेरिवानित्यत्वप्रसङ्गात् । इत्येषा व्याख्या । द्वितीया—यथार्थरूपेण ब्रह्म शुक्तिरिव रजताकारतयाऽवभासत इतीयं विवर्तवाचो युक्तिः, इयमपि न साधीयसी । ......इत्यादि । तृतीया—अथ शब्दब्रह्मैव सृजति जगन्तीत्यय विवर्तप्रकार उच्यते, सोऽपि न सम्यक् ।

(न्या० म० शब्द वि० वा० खण्डने)

एवमेव न्यायवार्तिकतात्पर्यटीकायाम्—

'ननु मा भूद् विकार परिणामोऽपान्तर तु भविष्यति ततो नित्या वर्णा भविष्यन्तीत्यत आह । एतावच्चैतदिति । परिणामो वेत्यापातत कार्यकारणभावो वेति परमार्थ । न जातु क्षीरं तदवयवा वा दधिरूपेण परिणमन्ते न ह्यवयवा अवयविस्वभावाः, तस्मात् कार्यकारणभाव एव तात्त्विक इति ।

(न्या० वा० ता० टी० शब्दविकारनिरासे पृ० ३२४)

शब्दविवर्तवादिपक्षस्तु प्रसिद्ध एव । श्रीमाधवेन सर्वदर्शनसंग्रहे वैयाकरणाः शब्दविवर्तवादित्वेनैव स्मृताः । तथा सांख्यदर्शननिरूपणारम्भे वैयाकरणाः शब्दविवर्तवादिन इति ध्वनितम् । वाक्यपदीयस्यैकापि परिणामपरा टीका अद्यत्वे नोपलभ्यते । कैयटेनापि

२७—( क ) अच्युतलेखमालाया प्रकाशित श्रीहाराणचन्द्रभट्टाचार्यस्य लेख —'शब्दब्रह्मवाद द्रष्टव्य ।

( ख ) वाक्यपदीयस्य 'शब्दस्यपरिणामोऽयम्' १।१२० कारिकाया पूज्यपादश्रीसूर्यनारायणशुक्लकृतटीका द्रष्टव्या ।

शब्दविवर्तपक्ष एवाङ्गीकृतः।[२८] वाक्यपदीयस्य श्रीभर्तृहरिनिर्मितस्वोपज्ञवृत्तौ अनादिनिधनमिति प्रथमकारिकागतस्य 'विवर्तते' इति पदस्य विवर्तपरैव व्याख्या कृता—

'एकस्य तत्त्वादप्रच्युतस्य भेदानुकारेणासत्या विभक्तान्यरूपोपग्राहिता विवर्तः स्वप्नविषयप्रतिभासवत्।'

(वा० प० १।१ स्वोपज्ञवृत्तौ)

अत्र तत्त्वादप्रच्युतस्येत्यादिकथनेन उपादानविषमसत्ताककार्यापत्तिरूपो विवर्तः अत्र स्पष्टीकृतः।

विवर्त एव श्रीभर्तृहरिसिद्धान्तः इति प्रथयता श्रीवृषभदेवेन शब्दस्य परिणामोऽयम् (वा० प० १।१२०) कारिकाटीकायामुक्तं यत्—आम्नायविदः वेदविदः। न तु वयं कल्पयामः।

श्रीभर्तृहरे विवर्तवाद एवेति अभिप्रयता पूज्यपादश्रीरघुनाथशर्मणा अम्बकर्त्रीनामिकायां टीकायाम् 'शब्दस्य परिणामोऽयमित्याम्नायविदो विदु' (वा० प० १।१२०) इतिकारिकाव्याख्यानावसरे उक्तं यद् 'विवर्त एव शब्दब्रह्मवादिनां पक्षः, अन्ये आम्नायविदो विद्वांसः शब्दस्य परिणामभूतमिदं जगदिति वदन्ति।' श्रीशर्मणा

---

२८—पातञ्जले महाभाष्ये—'सक्तुमिव तितउना पुनन्तो।
यत्र धीरा मनसा वाचमक्रत।
अत्रा सखायः सख्यानि जानते।
भद्रैषां लक्ष्मीर्निहिताधिवाचि॥'

इति ऋगुक्ता। कैयटेन प्रदीपेऽस्या व्याख्यानं उक्तम्—सखायः समानख्यानयो भेदग्रहस्य निवृत्तत्वात् सर्वमेकमिति मन्यन्ते। सख्यानीति सायुज्यानीत्यर्थः। एकगम्य ज्ञानेनैव प्राप्य।

(पा० म० भा० पस्प० आ० प्रदीपे)

एवमेव भाष्योद्धृताया· 'चत्वारि शृङ्गा.' इत्यस्या ऋचोऽपि प्रदीपव्याख्याने 'अज्ञानमेवगुहा, व्याकरणप्रदीपेन तु तानि प्रकाशन्ते' इत्युक्तम्। तेनात्र विवर्तवाद एवेति ज्ञायते।

तत्रोक्तं यद् 'आम्नायविद्' पदेन अयथार्थवेदिनां परिहासः कृतो वर्तते। आम्नायविदोऽपि भूत्वा वैयाकरणसिद्धान्तं न बुध्यन्ते, साङ्ख्यवैशेषिकादिसिद्धान्तं वैयाकरणसिद्धान्तेऽपि आरोपयन्ति। अस्याः कारिकाया उत्तरार्द्धे प्रयुक्ते 'एतद्विश्वं व्यवर्तत' इति वाक्ये 'व्यवर्तत' पदस्य व्यजायत इति व्याख्या श्रीशर्मणा कृता।

स्फोटसिद्धौ प्रारम्भे एव गोपालिकानाम्न्या टीकया जगदिदं शब्दस्य विवर्तभूतं विकारभूतं चोभयमप्यङ्गीकृतम्। तस्यायमाशयो यत् स्फोटस्य विवर्तभूतं तथा ध्वनेः वैखर्या वा विकारभूतं परिणामरूपं वा। अत एव च 'वागेव विश्वा भुवनानि जज्ञे।' 'स भूरिति व्याहरत् भुवमसृजत' इत्यादिश्रुतयः सङ्गच्छन्ते।

केश्चन विद्वद्भिः प्रथमकारिकागते 'शब्दतत्त्वम्' इति पदे तथा शब्दस्य परिणामोऽयम्' इतिकारिकागते 'शब्दस्य' इति पदे दृष्टिं निक्षिपता एव व्याख्यायते यद् शब्दतत्त्वस्य विवर्तस्तथा शब्दस्य परिणामः। शब्दतत्त्वम् अर्थाद् शब्दस्य वैखरीरूपस्य तत्त्वं पराख्यो भेदस्तस्य विवर्तरूपं जगत्, तथा शब्दस्य व्यवहारोपयोगिनो वैखरीरूपस्य इदं जगत् परिणामरूपम्। तदेतत् केवलं वाग्विलसितम्। शब्दतत्त्वं शब्दश्च न पृथक् पदार्थभूते। इत्थमेव स्वोपज्ञवृत्तौ तथा श्रीवृषभदेवेन स्वटीकाया च व्याख्यातम्। अन्यच्च वाक्यपदीये सर्वत्र शब्दपदं शब्दतत्त्वपदं च समानार्थकत्वेन पर्यायवाचित्वेन वा प्रतिपादिते। यथा—

तत्त्वावबोधः शब्दानां नास्ति व्याकरणादृते॥
(वा० प० १।१३)

इति कारिकायाः स्वोपज्ञवृत्तौ श्रीभर्तृहरिणोक्तम्–शब्दस्य तत्त्वम् अवैतथ्यम् अनपगतसंस्कार साधुस्वरूपम्। तद् यस्याविकलम्। एवमेव—

अनुनिष्पादिकल्पेन येऽन्तराल इव स्थिताः ।
शब्दास्ते प्रतिपत्तॄणामुपायाः प्रतिपत्तये ॥
(वा० पा० ३ का० सं० स० ६७)

अत्र हेलाराजः—'प्राकृतध्वनिभिरभिव्यक्ते शब्दतत्त्वे ततश्च ते शब्दतत्त्वाद् बहिर्भूता न भिन्दन्ति ।'

तथा—

तन्नित्यं शब्दवाच्यं तच्छब्दतत्त्वं न भिद्यते ।
(वा० प० ३ का० द्र० स० ११)

अत्र हेलाराजः—सविकल्प पश्यन्तीरूपा परावाक् शब्दब्रह्ममयीति ब्रह्मतत्त्वं शब्दात् पारमार्थिकान्न भिद्यते ।

यदन्तः शब्दतत्त्वं तु नादैरेकं प्रकाशितम् ।
तदाहुरपरे शब्दं तस्य वाक्ये तथैकता ॥
(वा० पा० २ का० ३० का०)

शब्दस्य परिणामोऽयम् (१।१२०) इति कारिकायामपि 'परिणामोऽयम्' इत्युपक्रम्य 'विश्वं व्यवर्तत' इति पर्यवसानेन उपक्रमोपसंहाराभ्यां विवर्तपक्ष एव निश्चीयते। अत एव संसारोऽलातचक्रवद् भ्रमरूप एव । यथोक्तम्—

अत्यन्तमतथाभूते निमित्ते श्रुत्युपाश्रयात् ।
दृश्यतेऽलातचक्रादौ वस्त्वाकारनिरूपणा ॥
(वा० प० १।१३०)

वाक्यपदीयेऽस्य स्वोपज्ञवृत्तौ पुण्यराजीये हेलाराजीये श्रीवृषभदेवटीकायां च बहुशो विवर्तपक्षव्यवस्थापनेन श्रीभर्तृहरेः हृदयं विवर्तपक्ष एवेत्यवसीयते ।

*यथा वाक्यपदीये—*

विवर्ततेऽर्थभावेन ( १।१ ) ज्योतिः शुद्धं विवर्तते (१।१८)

अथायमान्तरो ज्ञाता सूक्ष्मे वागात्मनि स्थितः ।
व्यक्तये स्वस्य रूपस्य शब्दत्वेन विवर्तते ॥
( १।११३ )

अन्तःकरणतत्त्वस्य वायुराश्रयतां गतः ।
तद्धर्मेण समाविष्टस्तेजसैव विवर्तते ॥
( १।११५ )

सर्वशक्त्यात्मभूतत्वमेकस्यैवेति निर्णयः ।
भावानामात्मभेदस्य कल्पना स्यादनर्थिका ॥
( वा० प० ३ जा० स० २२ )

निर्भासोपगमो योऽयं क्रमवानिव दृश्यते ।
अक्रमस्यापि विश्वस्य तत् कालस्य विचेष्टितम् ॥
( वा० प० ३ का० का० स० ४६)

अत्र कालः—ब्रह्मशक्तिरविद्या ।

यथा स्वोपज्ञवृत्तौ—

विवर्ततेऽर्थभावेन—एकस्य तत्त्वादप्रच्युतस्य··· · ······विवर्तः । स्वप्नविषयप्रतिभासवत् । ( १–१ )

परस्परविलक्षणा भोक्तृभोक्तव्यभोगग्रन्थयो विवर्तन्ते । (१–४)

योऽयं शब्दः··· ··स्थानकरणाद्यनुगृहीतो विवर्तते । (१–४७)

नादात्मना प्राप्तविवर्तेन । (१–४८)

शब्दरूपव्यक्त्यर्थं स्थूलेन्द्रियगम्येन रूपेण विवर्तते । (१–१३)

प्रविभक्तसाध्यसाधनरूपो हि शब्दब्रह्मणो विवर्तः । ( १–१२८ )

केचित्प्रतिभात्मनि विवर्तन्ते । सत्तालक्षण महान्तमात्मानमविद्यायोनिं पश्यन्तः प्रतिबोधेनाभिमुखा भवन्ति । ( १–१४६ )

निरुद्धबीजा वृत्तिकाले प्रथम सूक्ष्मेणापि वर्त्मना विवर्तमात्रा-मनुभूय क्रमेण—( वा० प० २ का० १५३ )

*यथा पुण्यराजीये—*

श्रीपुण्यराजेनापि विवर्तवाद एव श्रीभर्तृहरिपक्ष इति ध्वनितः— ननु शब्दार्थौ वाच्यवाचकाविति प्रसिद्धम्। अथ कथ तयोरभेद इत्यादाङ्क्याह प्रकाशकेति। तस्य हि शब्दतत्त्वस्यान्तरस्य ज्योती-रूपस्य शक्तिभेदमिथ्याभ्यासभावनानुगमात् परिकल्पितभेदमात्रः तत्त्व-मेव तत्राविशेषो विशेष इव व्यामोह जनयति।

(वा० प० २ का० ३२ का० पु० व्या०)

*यथा हेलाराजीये—*

विश्वसकलनायामशेषविवर्तानुगुण्य ब्रह्मणः प्रतिपादितम्।

( वा० प० ३ का० द्र० स० १४ )

नेद सांख्यनयवत् परिणामदर्शनम्, अपितु विवर्तपक्षः।

( तत्रैव १५ )

न परिणतिदर्शनाभिप्रायेणाय विकारशब्दः अनिरात्मत्वप्रसङ्गात्, अपि विवर्तपर्यायोऽयम्। ( वा० प० ३ का० जा० स० ३६ )

तदेव ब्रह्म सर्वभावेषु समानरूप सत्तात्मकमन्यस्य तद्व्यतिरिक्त-स्याभावात्। ( तत्रैव ३६ )

अविद्यापरिकल्पितस्य भावभेदस्यापारमार्थिकत्वात्। (तत्रैव २२)

परिणामनिषेधेन विवर्ताभ्युपगमात्र विकृतम्।

( वा० प० ३ का० द्र० स० १२ )

सम्बन्धसमुद्देशे प्रदर्शितदिशाक्रम ब्रह्मविवर्तरूप विश्वम्।

(वा० प० ३ का० का० स० ४६ )

द्वैतदर्शनमपोह्य विवर्ताश्रयेणाद्वैतनय स्वमतेन सिद्धान्तयितु-मुपक्रमते।'

( वा० प० ३ का० स० स० ६२ )

तस्य चिद्रूपस्य चिच्छक्तिपरिणामिनीतिविकाराभावान्नेद साख्यनयवत् परिणामदर्शनम्, अपि तु विवर्त्तरूप ।'

( वा० प० ३ का० द्र० स० १५ )

श्रीवृषभदेवो वाक्यपदीयस्यादावेव परिणामलक्षणमलक्षयत् । तेनोक्तम्—

'अस्य चिद्रूपस्य विवर्तस्य प्रधान परिमाणवोऽ ब्रह्मा न निमित्तम्, अपि तु ब्रह्मं वेति दर्शयति ।

( वा० प० ११ )

*विवर्तस्य भेद*

विवर्तस्य चातुर्विध्यम्—

*प्रथममय विवर्त्तो मूर्तिक्रियाभेदेन द्विविधोऽभिमत ।*

वाक्यपदीयस्य प्रथमकारिकायाः स्वोपज्ञवृत्तौ विवर्तलक्षणनिरूपणानन्तरमुक्तम्—

'उक्त च मूर्तिक्रियाविवर्तौ अविद्याशक्तिप्रवृत्तिमात्र तौ विद्यात्मनि तत्त्वान्तत्त्वाभ्यामनाख्येयौ एतद्धि अविद्याया अविद्यात्वम् ।'

*अत्र गोघटादिरूपाणामर्थानामवस्थान स मूर्तिरूपो विवर्त । यत्तु तेषामेव जायते नश्यति इत्यादिना उत्पादविनाशक्रियोपहित रूपेणावस्थान स क्रियारूपो विवर्त ।*

एवमेव जातिसमुद्देशेऽपि—'सिद्धसाध्यरूपो द्विधा विवर्त्त सन्मानस्य परस्य ब्रह्मण प्रतिपादित ।'

( वा० प० ३ का० जा० स० ३५ )

द्विविधोऽप्ययं विवर्त पुनरविद्याशक्तिरूपतया तथा प्रवृत्तिरूपतया चावस्थाभेदेन चातुर्विध्यं भजते । यदा मूर्तिक्रियारूपविवर्त्तयोर्दर्शन नास्ति तदा प्रथम । यदा तयो दर्शन तदा द्वितीय ।

- अयमर्थो हेलाराजेनेत्थं निरूपितः—

'अनेन च प्रधानकर्तृकर्मरूपकारकनिर्देशेन कारकान्तरस्याप्याक्षेपात् सिद्धरूपो विवर्तः प्रतिपादितः । दर्शनशब्देन च प्रधानक्रियानिर्देशेन क्रियान्तरस्य क्षेपात् साध्यस्वभावक्रियाविवर्तोऽप्युक्तः । कालशक्त्यवच्छिन्नो हि क्रियाविवर्त, दिक्शक्त्यवच्छिन्नश्च मूर्तिविवर्त इति मूर्तिक्रियाविवर्तरूपं विश्वं प्रतिपादितम् ।

( वा० प० ३ द्र० स० १४ )

एतदर्थम्—वाक्यपदीयस्य १–१ कारिकाया अम्बाकर्त्रीव्याख्या द्रष्टव्या ।

शैवाद्वयवादः

भगवान् भर्तृहरि, व्याख्याकारो पुण्यराजः अभिनवगुप्तगुरुर्हेलाराजश्च त्रयोऽमी कश्मीराभिजना आसन ।[२९] अतः कश्मीरशैवदर्शनेनेमे प्रभाविताः । वाक्यपदीये स्वोपज्ञवृत्तौ पुण्यराजीये, हेलाराजीये च कश्मीरशैवदर्शनसिद्धान्ताः शब्दतोऽर्थतश्च स्पष्टं सलक्ष्यन्ते ।[३०] अस्य वाक्यपदीयस्य केषाञ्चिदंशानां टीका फुल्लराजेनापि कृता ।[३१] अयमपि नाम्ना कश्मीराभिजन प्रतीयते । वैयाकरणाः शैवाद्वैतदर्शनेन प्रभाविता आसन् । तत्र शैवागमाश्रितानि

२९—१९६८ ई० वाराणसेय-संस्कृत-विश्वविद्यालय प्रकाशित वाक्यपदीयस्य द्वितीयकाण्डस्य उपोद्घाते श्रीबलदेवोपाध्यायेन निर्णीतमेतत् ।

३०—द्र०—शब्दब्रह्मवाद, विमर्शवाद वा० प० १–२ १–१४, १–३० कारिकाणां श्रीसू० ना० शुक्लकृतटीकायां तथा श्रीकान्तिचन्द्र पाण्डेयस्य शैवदर्शनबिन्दौ पृ० ६५–७० ।

३१—काशीचौखम्बाप्रकाशिते वाक्यपदीये हेलाराजटीकायां ये कतिपय स्थलेषु इदं लिखितमस्ति—'इतो ग्रन्थपातसन्धानाय फुल्लराजकृति लिख्यते ।' द्र०—साधनसमुद्देशे ३४ तथा ६५ कारिकयो हे० रा० टीका तथा प० श्रीरामगोविन्दशुक्ललिखिता वा०प० हिन्दीटी० भूमिका, चौ० स० सी० का० प्र० ।

चत्वारि दर्शनानि । नन्दिकेश्वरदर्शनम्, प्रत्यभिज्ञादर्शनम्, क्रम-दर्शनम्, कुलदर्शनं च । एषु नन्दिकेश्वरदर्शनेन, विशेषतो वैयाकरणा प्रभाविताः। नन्दिकेश्वरदर्शनं नन्दिकेश्वरकृतषड्विंशतिकारिकासु निबद्धम्। अत्रोपमन्युकृता टीका नन्दिकेश्वरकाशिकेति नाम्ना प्रसिद्धा। अस्याः प्रामाण्यं श्रीनागेशेन पातञ्जलमहाभाष्यस्य प्रदीपस्य व्याख्याने उद्योते द्वितीयाह्निके १।१ २ इत्यत्र स्वीकृतम्। श्रीकान्तिचन्द्रपाण्डयेन स्वीये ग्रन्थे शैवदर्शनविन्दौ शैवाद्वैतदर्शनप्रकरणे पृ० ६७ इत्यत्र नन्दिकेश्वरः पाणिनिगुरुरासीदिति निर्णीतम्। नन्दिकेश्वरः स्वातन्त्र्यवादमङ्गीकरोतिस्म—

स्वेच्छया स्वस्य चिच्चक्रं निग्रमुन्मूलयत्यसौ।

अयमेव स्वातन्त्र्यवादसिद्धान्तः प्रत्यभिज्ञाहृदयस्यक्षेमराजवाक्ये-ऽप्युपलभ्यते—'स्वेच्छया स्वभित्तौ विश्वमुन्मीलयति।' इदमेव च तत्त्वं महर्षिपाणिनिना 'स्वतन्त्रः कर्ता' इति सूत्रयता सूचितम्। 'कारके' ( १।४।१ ) 'स्वतन्त्रः कर्ता' ( १।४।५४ ) इति च सूत्रद्वयस्य पातञ्जले महाभाष्ये तद्व्याख्याने कयटकृते प्रदीपे च स्वातन्त्र्यवाद-सिद्धान्तः प्रदर्शितः।

श्रीकैयटश्च श्रीभर्तृहरिणा प्रभावित आसीत्। यतो हि श्रीकैयटः स्वयं लिखति—

तथापि हरिबद्धेन सारेण ग्रन्थसेतुना।
क्रममाणः शनैः पारं तस्य प्राप्तास्मि पङ्गुवत्॥

श्रीभर्तृहरेः श्रीकैयटस्य च वाक्ययोः साम्यमप्युपलभ्यते—

*प्रागन्यतः शक्तिलाभान्न्यग्भावापादनादपि।*
तदधीनप्रवृत्तित्वात् प्रवृत्तानां निवर्तनात्॥
अदृष्टत्वात् प्रतिनिधेः प्रविवेके च दर्शनात्।
आरादप्युपकारित्वे स्वातन्त्र्यं कर्तुरुच्यते॥
( वा० प० ३ का० सा० समु० १०२ )

एवमेव कैयटोऽपि महाभाष्ये—

'तदधीनप्रवृत्तिनिवृत्तित्वात् करणादीनाम्, तस्य च प्रागन्यतः शक्तिलाभात् प्रातिनिध्यदर्शनात् करणाद्यभावेऽपि आस्ते शेते इत्यादौ केवलस्य कर्तुं दर्शनात् कर्तृरहितानां करणानामदर्शनात् प्राधान्यं कर्तुः ।

(पा० म० भा० प्रदीपे १।४।१)

नन्दिकेश्वरेण ब्रह्मणो जगतश्च स्वरूपमित्यमभ्यधायि—

अकारो ब्रह्मरूपः स्यान्निर्गुणः सर्ववस्तुषु ।
चित्कलाभिः समाश्रित्य जगद्रूप उदीरितः ॥

अग्रिमासु कारिकासु मायादीनां स्वरूपमुक्तम् ।

एवं च स्वातन्त्र्यवादे—कर्ता शक्तिमान् स्वतन्त्र, शक्तिशक्ति-मतोरैक्यम्, सांसारिकस्य कर्तुरापेक्षिकमवच्छिन्नं च स्वातन्त्र्यम्, परिमितत्वात् । अपरिच्छिन्नस्य शिवादिशब्दनिर्दिष्टस्य च कर्तुरवच्छेदकशून्यं स्वातन्त्र्यम् ।[३२]

## कालशक्तिः (अविद्या)

शब्दब्रह्मवादिनां मते शब्दब्रह्मैव जगद्रूपेण विवर्तते । तत्र कारणं कालशक्तिः ।[३३] कालशक्तिमुपाश्रित्य एकं नित्यमपि ब्रह्म जगदुत्पत्तिस्थितिलयरूपेण आभासते भगवता श्रीभर्तृहरिणा वाक्यपदीये आदिकाण्डे द्वितीयकारिकायामेकमेव ब्रह्म जगतस्थित्यादिरूपेण तथा भासत इत्याशङ्क्याह—

---

३२—श्रीभर्तृहरेः स्वातन्त्र्यवादस्य विशेषज्ञानार्थं 'स्वातन्त्र्यवादी भर्तृहरि' इतिनामकः श्रीकान्तिचन्द्रपाण्डेयस्य लेखो द्रष्टव्यः ।

३३—श्रीनारायणचन्द्रभट्टाचार्यमहाशयेन कालसिद्धान्तदर्शिनीग्रन्थे कालविषयं बहुप्रपञ्चितम् ।

अध्याहितकलां यस्य कालशक्तिमुपाश्रिताः ।[३४]
जन्मादयो विकाराः षड् भावभेदस्य योनयः ॥
( वा० प० ब्र० का० ३ श्लो० )

इति समाहितम्—

अर्थाद् ब्रह्मणः कालशक्त्या जगतो जायतेऽस्ति विपरिणमते वर्द्धते ह्रसति नश्यति इत्येवरूपा. षड्विकारा बुध्यन्ते । अथ काल. जगतो निमित्त सूत्रधारो ब्रह्मणो जगत्कर्तृत्वनिर्वाहक इत्यादिरूपेण अनेकधा स्पष्टीकृतः कालसमुद्देशे भगवता हरिणा । यथा हि—

उत्पत्तौ च स्थितौ चापि विनाशे चापि तद्वताम् ।
निमित्तं कालमेवाहु विभक्तेनात्मना स्थितम् ॥
( वा० प० ३।६।३ )

तमस्य लोकयन्त्रस्य सूत्रधारं प्रचक्षते ।
प्रतिबन्धाभ्यनुज्ञाभ्यां[३५] तेन विश्वं विभज्यते ॥
( वा० प० ३।६।४ )

यदि न प्रतिबन्धीयात् प्रतिबन्धं च नोत्सृजेत् ।
अवस्था व्यतीकार्येरन् पौर्वापर्यं विना कृताः ॥
( तत्रैव ५ )

---

३४—'अध्याहितकला यस्य कालशक्तिमुपाश्रिता ।' इति पाठो हेलाराजसम्मत । एतदर्थं वाक्यपदीयस्य ३।६।१४ का० व्याख्या द्रष्टव्या । अध्याहृता. कला यस्य कालशक्तिमुपाश्रिता । इत्यपि पाठ ।

३५—कालस्य द्वे शक्ती १—प्रतिबन्धशक्तिः २—अभ्यनुज्ञाशक्तिश्च । एतदर्थं वाक्यपदीयस्य इमा कारिका द्रष्टव्याः—विशिष्टकालसम्बन्धात् ( ३।६।६ ) प्रतिबद्धाश्च यास्तेन० ( ३।६।१५ ) विशिष्टकाल० ( ३।६।१६ ) जराख्या० ( ३।६।२४ ) प्रतिबन्धाभ्यनुज्ञाभ्याम्—( ३।६।३० ) प्रतिबन्धा० ( वा० प० ३।६।७३ ), द्वे एव कालस्य विभो. केषाञ्चिच्छक्तिवर्त्मनि । करोति याभ्या भावानामुन्मीलननिमीलने ( वा० प० ३।६।५६ ) अस्या हेलाराजटीका च ।

तस्यात्मा बहुधा भिन्नो भेदैर्धर्मान्तराश्रयैः ।
न हि भिन्नमभिन्नं वा वस्तु किञ्चन विद्यते ॥
(तत्रैव ६)

नैको न चाप्यनेकोऽस्ति न शुक्लो नापि चासितः ।
द्रव्यात्मा स तु संसर्गादिवंरूपः प्रकाशते ॥
(तत्रैव ७)

संसर्गिणां तु यो भेदो विशेषास्तस्य ते मताः ।
स भिन्नस्तैर्व्यवस्थानां कालो भेदाय कल्पते ॥
(तत्रैव ८)

'आसु उत्पत्तौ च स्थितौ वापि' इति कारिकाया व्याख्याने श्रीहेलाराजेनेत्थं कालस्य निमित्तत्वं व्याख्यायि—

जन्मस्थितिविनाशाः समस्तक्रियाव्रातान्तर्भावनहेतव इति तद्द्वारेण जन्मादिमत्ता पदार्थानां निमित्तकारणं व समाहु । तदपेक्षो हि पदार्थानामुदयादिरवतिष्ठते प्रविभक्तशरीर । तथा हि केचिद वसन्ते प्रसूयन्ते, अपरे शरदि, प्रावृष्यन्त इत्यादि वाच्यम । एव स्थितिविनाशयोरपि । उपाधिभेदाच्च भिद्यमान काल संसर्गिषु भेदायालम् ।

(वा० प० ३।९।३ हे० व्या०)

एक एव कालो यथाहोरात्रादिव्यवहार लभते तथा हेलाराजेन 'संसर्गिणा तु' इति कारिकायां व्याख्यातम्—

*संसर्गिण कालस्य सम्बन्धिन सूर्यादिग्रहप्रचाररूपा क्रिया-विशेषा । तेषा भेदेनोपहितात्मातिशयोऽसावहोरात्रपक्षमासर्त्वयन-संवत्सरयुगमन्वन्तरादि व्यवस्थाभेदमासादयति । तथा हि दिवस-करोदयास्तमयावधिपरिच्छिन्न कालोऽहरितिव्यपदेश्य । तदुदय-विच्छेदोपहितभेदस्तु निशा । आवर्तमानश्चाहोरात्राभ्या पक्षादिव्य-*

पदेश यथायोगमासादयति । अक्षिपक्ष्मगतनिमेषोन्मेषादिक्रियोपहित-भेदस्तु क्षणलवकाष्ठादिव्यवहारं वर्तयति ।

(वा० प० ३।९।८ हे० व्या०)

महामहोपाध्यायश्रीहाराणचन्द्रभट्टाचार्येण कालसिद्धान्तदर्शिन्यां कालविषये वाक्यपदीय मतमित्थं सिद्धान्तितम्—

स च सर्वव्यापकः कालः स्फोटापरनामधेयस्य शब्दात्मकस्य ब्रह्मणः स्वातन्त्र्यशक्तिरूपः । जगतो जन्मादिकारणभूताः सन्त्यन्या ब्रह्मणोऽवान्तरशक्तयः कलाभिधेयाः, ताश्च कलानामिकाः शक्तय एतस्याः कालशक्तावन्तर्भूताः तासां कलानां जन्मादिकार्यपरम्पराजनने यथायथं प्रतिबन्धाभ्यनुज्ञाभ्यां नियामिका सैव कालशक्तिः, या हि अध्याहितकला यस्यैति (वा० प० ब्र० का० १–२) कारिकया पूर्वं कथिता । तथा च जगतो जन्मादौ नियामकरूपेण सहकारित्वात् कालो निमित्तकारणम् । कलारूपाः शक्तयस्तूपादानकारणम् । अनयैव कालाख्यया स्वातन्त्र्यशक्त्या ब्रह्मणो जगत्कर्तृत्वं निर्वहति । स्वातन्त्र्यस्य कर्तृप्रयोजकत्वात्, यथाह भगवान् पाणिनिः स्वतन्त्रः कर्ता (१।४।५४) इति ।[36]

अस्य कालस्य जगतो जन्मादौ सहकारित्वं स्वातन्त्र्यशक्तित्वं च भगवता हरिणा स्वोपज्ञवृत्तौ श्रीहेलाराजेन स्वव्याख्यायां च स्पष्टीकृतम् ।[37]

---

३६—कालसिद्धान्तदर्शिन्याम् पृ० २८–२६ ।

३७—(क) अध्याहितकलां यस्य कालशक्तिमुपाश्रिताः ।
जन्मादयो विकाराः षड् भावभेदस्य योनयः ॥

(वा० प० १।३)

कालशक्तेन स्वातन्त्र्येण सर्वाः परतन्त्रा जन्मादिमत्यः शक्तयः तं समाविष्टाः कालशक्तिवृत्तिमनुपतन्ति । . .
सर्वेषां हि विकाराणां—कारणान्तरेषु सत्स्वपि प्रागभावानां प्रतिबन्धाभ्यनुज्ञाभ्यां सहकारिकारणं कालः (स्वोपज्ञवृत्तिः)

जगतो जन्मस्थितिलयेषु कालस्य सहकारित्वमितिविषये भगवता महाभाष्यकारेण पतञ्जलिनेत्थं सङ्केतितम्—

'येन मूर्तीनामुपचयापचयाश्च लक्ष्यन्ते तं कालमाहुः।'

( महाभाष्ये २।२।५)

अस्य व्याख्याया कैयट—येन मूर्तीनामिति—तरुतृणलताप्रभृतीनां कदाचिदुपचयोऽन्यदा त्वपचयः स प्रत्ययान्तराविशेषेऽपि यत्कृतः स काल इत्यर्थः।

( म० भा० प्रदीपे २।२।५ )

अत्र येन इति पदेन कालस्यैकत्वं ध्वनितम्। एकत्वेऽपि कालस्य क्षणदिनमाससंवत्सरादिव्यवहारे सूर्यक्रियाया उपाधि र्हेतु। अनेन सूर्यक्रियाया कालोपाधित्वेन क्षणाहोरात्रादिव्यवहारा प्रवर्तन्ते। यथाह भगवान् महाभाष्यकारः—

'तस्यैव कयाचित् क्रियया युक्तस्याहरिति च भवति रात्रिरिति च। कया क्रियया? आदित्यगत्या। तयैवासकृदावृत्तया मास इति भवति संवत्सर इति च। ( महाभाष्ये २।२।५ )

अत्र कैयट इत्थं प्रदीपयति—

'एक एव तस्यैकत्वात् कथमहरादिविभाग इत्याह तस्यैवेति। परोपाधिक एव सर्वस्य भेद।' (म० भा० प्रदीपे २।२।५)

---

(ख) तथ — जलयन्त्रभ्रमावेशसदृशीभिः प्रवृत्तिभिः।
सकला कालयन्, सर्वाः कालाख्या लभते विभुः॥
( वा० प० ३।९।१४ )

अनेनैतत् सूचयति—विश्वात्मक एव परब्रह्माभिधान आद्यो भावः, स एव नानाविधकार्यकारित्वाच्च तच्छक्तित्वेन व्यवह्रियते, तथा च क्रमिकांश्चक्रभ्रमवत् परावर्तमानान् भावान् प्रकाशयन् कालयति भूतानीति काल इत्युच्यते। स विभुः। स्वतन्त्र', अत एव स्वातन्त्र्यशक्तिः कालः इति वाक्यपदीये ( १।३ ) सिद्धान्तितम्। ( हेलाराजव्या० )

इममेव महाभाष्यस्यार्थं मनसि निधाय भगवान् हरिः कारिकायां निबन्धयति—

मूर्तीनां तेन भिन्नानामाचयापचयाः पृथक् ।
लक्ष्यन्ते परिणामेन सर्वासां भेदयोगिना ॥
(वा० प० ३।९।१३)

अत्र न केवलं महाभाष्यस्यार्थसाम्यं किन्तु अक्षरसाम्यमपि वर्तते। इदमेव तत्त्वम्-संसर्गिणा तु ये भेदा विशेषास्तस्य ते मताः। स भिन्नस्तैर्व्यवस्थानां कालो भेदाय कल्पते। (वा०प० ३।९।८) इति कारिकायां तथास्या हेलाराजव्याख्याने च स्पष्टीकृतम्।[38]

कालस्य स्वातन्त्र्यशक्तिः, स्वातन्त्र्यशक्त्या च ब्रह्मणो जगत्कर्तृत्वम्। कर्तृत्वप्रयोजकता तु स्वातन्त्र्यस्यैव भवतीति तु स्वतन्त्रः कर्ता (१।४।५४) इति सूत्रं प्रणयता भगवता पाणिनिना प्रतिपादितमेव।

शब्दब्रह्मणः कालाख्यायाः स्वातन्त्र्यशक्त्याः बह्व्यः कलाख्याः शक्तयः। कलाख्यां शक्तिमुपाश्रित्यैव कालाख्या स्वातन्त्र्यशक्तिः जगतो जन्मादौ हेतुर्भवति। स्पष्टं चैतत्-अध्याहितकलां यस्य (वा० प० १।३) इति कारिकायां। तासां कलानां च परिचयः।

---

३८—बौद्धास्तु अपरं कालतत्त्वं किञ्चिन्न मन्यन्ते। तेषां मते बुद्धिसंकलनमेव कालतत्त्वमुच्यते। एतदुक्तम्—

कलाभिः पृथगर्थाभिः प्रविभक्तः स्वभावतः ।
केचिद् बुद्ध्यनुसंहारलक्षणं तं प्रचक्षते ॥
(वा० प० ३।९।५७)

तं कालमित्यर्थः। अत्र केचिद् इत्यनेन बौद्धा इति हेलाराजेन स्पष्टीकृतम्— तत्र तावत् कालतत्त्वं नास्त्यपरो बाह्यः कश्चित् काल इति बौद्धप्रवादः। (वा० प० ३।९।५७)

अयमेव बौद्धाभिमतः कालसिद्धान्तोऽद्वैतवेदान्तिभिरपि स्वीकृत इति मुक्तावलीदीपिकायाम् (१०—१४) उक्तम्।

जलयन्त्रभ्रमावेशसदृशीभिः प्रवृत्तिभिः ।
स कलाः कालयन् सर्वाः कालाख्यां लभते विभुः ॥
(वा० प० ३।९।१४)

इतिकारिकया हरिणा दत्ता। अस्या व्याख्याने हेलाराजेन च काल एव स्वातन्त्र्यशक्तिस्तया च परब्रह्म जगदुत्पत्तिस्थितिनियामको भवतीति निरूपितम्—'जलस्योद्धरणार्थं यन्त्रमरघट्टप्रायम्, तस्य भ्रमः परिवर्तनं तेनावेशस्तस्यैव क्षोभः, तत्तुल्याः परावर्तमानस्य कालस्य पुनः पुनर्वसन्तादिभावेनावृत्तयः, ताभिर्यं विभु व्यापको नित्योऽपि कालयति क्षिपति कलाः भावपर्यायाः समुत्सृजति स्वकारणेभ्यः प्रवर्तयतीति कालाख्यामन्वर्थां लभते। अनेनैतत् सूचयति—विश्वात्मैक एव परब्रह्माभिधानः सत्यो भावः। स एव नानाविधकार्यकारितयाऽनन्तशक्तित्वेन व्यवह्रियते। तथा च क्रमिकारचक्रं भ्रमयन् परावर्तमानान् भावान् प्रकाशयन् कालयति भूतानीति काल इत्युच्यते। स विभुः स्वतन्त्रः अत एव स्वातन्त्र्यशक्तिः कालः इति वाक्यपदीये सिद्धान्तितम्—'अभ्याहितकला यस्य कालशक्तिमुपाश्रिताम्' इत्यत्र। इहापि सिद्धान्तयिष्यति–'शक्त्यात्मदेवतापक्षैर्भिन्नं कालस्य दर्शनम्' इति। यथा हि भ्रामको बाहुना जलयन्त्रं परिवर्तयति, तथा कालशक्त्या विभु र्भावानिति।'

प्रत्यभिज्ञादर्शने कला चतुर्विधा–अविद्या, रागः, कालः, नियतिश्च।[१९] आचार्याभिनवगुप्तपादैरपि ईश्वरप्रत्यभिज्ञा-

१९—महार्थमञ्जर्या—अष्टादशगाथायाम्—परिमलव्याख्यायाम्—'उक्तं श्रीमत्स्वच्छन्दे—

मलप्रध्वस्तचैतन्यं कलाविद्यासमन्वितम् ।
रागेण रञ्जितात्मानं कालेन कलितं तथा ॥
नियत्या यमितं भूयः पुंभावेनोपबृंहितम् ।
प्रधानाशयसम्पन्नं गुणत्रयसमन्वितम् ॥

विमर्शिन्याम् (३।१९) एतत् प्रतिपादितम्। सिद्धान्तागमे विन्दुरूपाया महामायायाः पञ्च कलाः सन्ति। या आश्रित्य माया महामायारूपो विन्दु शुद्धाशुद्धजगदुपादानमुपपद्यते।[४०]

इयं कालाख्या स्वातन्त्र्यशक्ति, तदन्तर्गताः कलाख्याः शक्तयश्च शब्दब्रह्मणो न भिद्यन्ते शक्तिशक्तिमतोरभेदाङ्गीकारात्। कालदावते: शब्दब्रह्मापेक्षया वास्तवभेदाभावेन शब्दब्रह्मण्येव पर्यवसानम्। अत एव भगवता हरिणा साधनसमुद्देशेऽधिकरणाधिकारे कालाकाशयो र्ब्रह्मरूपता प्रदर्शिता—

कालात् क्रिया विभज्यते आकाशात् सर्वमूर्तयः।
एतावाँश्चैव भेदोऽयमभेदोपनिबन्धनः॥
(वा० प० ३।७।६)

श्रीहेलाराजेन ब्रह्मणि कल्पितो भेद इत्थ व्याख्यातः—

.......... कालाकाशयोरपि च भेदः शक्तित्वादत्यन्ताभिन्नपरब्रह्मनिमित्तः—तस्माद्धि ते शक्ती पृथक्क्रियेते इत्युपपादितं प्रथमकाण्डे।
(वा० प० ३।७।६ हे० व्या०)

लघुमञ्जूषायां नागेशभट्टेनापि अस्याः कारिकायास्तात्पर्यमित्थं प्रतिपादितम्—

'भेदरहित यद् ब्रह्म तद्रूपनिबन्धन वस्तुभूतं यस्य स इत्यर्थ.। ईश्वर एव तत्तदाधारत्वविशिष्टस्तत्तत्संज्ञा लभत इति तात्पर्यम्।'
(लघुमञ्जूषायाम् एतावानेवेति पाठान्तरम्)

---

बुद्धितत्त्वसमासीनमहङ्कारसमन्वितम्।
मनसा बुद्धिकर्माक्षैस्तन्मात्रैः स्थूलभूतकैः॥'
(त्रिवेन्द्रममुद्रितेग्रन्थे पृ० १५–१६)

४०—द्र०-अघोरशिवाचार्यकृतायाम्–तत्त्वत्रयनिर्णयवृत्तौ ३, रत्नत्रये ८६, रत्नत्रयव्याख्यायाम् ८५ (अघोरशिवाचार्यकृतायाम्), शिवार्कमणिदीपिकायाम् २।२।३८, मृगेन्द्रवृत्तौ, मृगेन्द्रवृत्तिदीपिकायां च १।१०।१४।

हेलाराजोऽपि शक्तिशक्तिमतो धर्मधर्मिभावसत्त्वेन शब्दब्रह्मणः कालशक्तेश्चाभेदं प्रतिपादितवान्—

'इदानीं धर्मधर्मिणोरव्यतिरेकं भाविकमाश्रित्य ।'

( वा० प० ३।९।५४ )

शक्तिशक्तिमतोरैक्यं तु वाक्यपदीये आरम्भ एव हरिणा प्रबलतरं समर्थितम्—

एकमेव यदाम्नातं भिन्नं शक्तिव्यपाश्रयात् ।
अपृथक्त्वेऽपि शक्तिभ्यः पृथक्त्वेनेव वर्तते ॥

( वा० प० १।२ )

यद्यपि ब्रह्मणः कालशक्तिरेका तथापि 'शक्तिभ्यः' इत्यत्र बहुवचनं तु कालशक्त्यन्तर्गतकलादिशक्तीनां परस्परसमारोपितभेदमाश्रित्योक्तम् ।

भर्तृहरितः परवर्तिभिः काश्मीरकशैवाचार्यैरपि एवमेव शक्ति-शक्तिमतोरभेदः स्वीकृतः—

शक्तिश्च शक्तिमद्रूपाद् व्यतिरेकं न वाञ्छति ।
तादात्म्यमनयो　नित्यं　वह्निदाहिकयोरिव ॥

( वा० प० ३।१।६२ )

(अभिनवगुप्तप्रणीतबोधपञ्चदशिकायाम्—३)

कालस्तु ब्रह्मणः शक्तिरिति प्रतिपादितम्, किन्तु शक्तिमतोऽतिरिक्तो जीवो देवता वेत्यपि पक्ष आसीदिति हरिणोक्तं हेलाराजेन च व्याख्यातम्—

'शक्त्यात्मदेवतापक्षैर्भिन्नं कालस्य दर्शनम् ।'

'आत्मा—पुरुषः—जीव एव कालः ।'

इति ।

'अन्ये तु विग्रहवती महाप्रभवा देवता कालत्वेन प्रतिपन्नाः ।'

( हे० व्या० )

एवमेव कालो न स्वातन्त्र्यशक्तिः किन्तु कारणशक्तिः इत्यपि पक्षान्तरं वाक्यपदीये ३।९।६२ कारिकायामुद्भाव्य हेलाराजः स्वव्याख्यायां प्रत्याचख्यौ। श्रीनागेशभट्टेन च लघुमञ्जूषायां तिङर्थवादे कालस्य क्षणरूपत्वं शब्दतन्मात्रपरिणामत्वं चाभिहितम्। तद् महाभाष्यवाक्यपदीयस्वारस्यविरुद्धतया विचारणीयमेव। वस्तुत एतन्मतम् 'क्षणतत्क्रमयोः संयमाद् विवेकजं ज्ञानम्।' (३।५) इति-पातञ्जलयोगसूत्रानुसारमिति।

इयं कालशक्ति र्ब्रह्मणः पारमार्थिकी, शाङ्करवेदान्ते ब्रह्मणः शक्तिरविद्या यथा कल्पिता तथेयं कल्पिता न। शाङ्करमते अविद्यायाः कल्पितत्वेनापारमार्थिकत्वाद् मोक्षदशायां निवृत्तिः, किन्त्वस्मिन् शब्दब्रह्मवादे कालशक्तेः पारमार्थिकत्वान्मोक्षदशायामनिवृत्तिः। मोक्षदशायां कालशक्ते र्विद्यमानत्वेन ब्रह्मणश्च सत्त्वेन न द्वैतापत्तिः। यतो हि शक्तिशक्तिमतोरभेदाङ्गीकारेण कालशक्ते र्ब्रह्मणोऽव्यतिरेकेणानवस्थानादद्वैतस्योपपत्तेः।

केचन वेदान्तिन इमां कालशक्तिमविद्यां मन्यते। यथा श्रीमधुसूदनसरस्वतीभिः सिद्धान्तबिन्दोरष्टमश्लोकव्याख्यावसरे शाङ्करसिद्धान्ते कालपदार्थस्यानङ्गीकारात्—'दिक्कालौ त्वप्रामाणिकत्वानोक्तौ' इत्युक्तम्। पुनश्च कालपदार्थानङ्गीकारे कथङ्कारं कालव्यवहार उपपद्यतामिति चिन्तायां तत्रोपपत्तिः प्रदर्शिता—

'कालस्तु अविद्यैव, तस्या एव सर्वाधारत्वात्।'

(सि० बि० ८ श्लो०)

अस्य न्यायरत्नावलीव्याख्यायां श्रीगौड़ब्रह्मानन्दस्वामिभिः सुस्पष्टतरं कालस्याविद्यारूपस्य सर्वाधारत्वं प्रतिपादितम्। इदमेव काश्मीरकसदानन्दप्रणीतायामामद्वैतब्रह्मसिद्धावपि प्रथममुद्गरप्रहारेऽभिहितम्—

'कालस्याविद्यात्मकत्वस्वीकारात्।'

'मायैव काल इति वेदान्तिनः।'

केचन तु ब्रह्माविद्ययो सम्बन्ध एव काल इत्यप्यरोचन्। यथा तत्रैव श्रद्वैतब्रह्मसिद्धौ प्रथममुद्गरप्रहारे—

'मायाचित्सम्बन्ध एव कालः इति तदेकदेशिन ।

इमदत्र तत्त्वम्—काल—क्रमाख्या कालशक्ति,[४१] शब्दब्रह्मण स्वातन्त्र्यशक्ति,[४२] एकोपि उपाधिभेदाद बहुभेदवान्[४३], (अयमेव अविद्या) विवर्त्तस्य चायमेव कारणम्[४४], कालसहायतयैव ब्रह्म क्रीडति[४५] सर्वेषा कलनादेवाय काल ।[४६] अयमविद्याख्या ब्रह्मणः शक्ति—'यथाहु—सर्वशक्त्यात्मभूतत्वाद् ब्रह्मणोऽनेकविकारप्रदर्शन-सामर्थ्यलक्षणा अविद्याख्या शक्ति कार्यभेदादुपचरितनानात्वा समस्तीत्यागमविद ।'

(वा० प० ३ जा० स० ३६ हे० व्या०)

अविद्या तथा कालशक्तिश्च ब्रह्मणो द्वे भिन्ने शक्ती स्त । अनयोरवान्तरभेदश्चेत्थ प्रतिपादित —

अक्रमेऽपि ब्रह्मणि भेदावभासनम अविद्याकृतम। तत्रैव क्रमावभासन कालाख्यस्वातन्त्र्यशक्तिकृतम्। ते च शक्ती न ब्रह्मणो भावात् परमार्थतो भिन्ने इति स एव तावत एव चकास्ति ।

(वा० प० ३ जा० स० ८३ हे० व्या०)

---

४१—क्रमाख्या कालशक्ति, ब्रह्मणो ज मवस्तु पदार्थेषु जन्मादिक्रिया-द्वारकमब पौर्वापर्येणावभासोपमभिधायिनी नापरो द्रव्यभूत काल ।
(वा० प० ३ जा० स० ३७ हे०)
द्र०—वा० प० ३ जा० स० ३६–४० का० हे० व्या० ।

४२—वा० प० ३ का० स० ६२ वा० तथा ७२ का० हे० तथा स० समु० ८३ का० ।

४३—वा० प० ३ का० स० ६८ ।

४४—वा० प० ३ का० स० ३६, ४६ ६२, ७२ ।

४५—वा० प० ३ का० स० ७२ ।

४६—वा० प० ३ का० स० ७३ तथा ७६–७८ ।

मैत्रायण्युपनिषदि ५।१५ तथा मैत्रायण्यारण्यके ६ प्रपाठके कालतः चराचरसृष्टि र्वेगिता । तत्रेदमपि वर्णितं यत्सूर्यात्पूर्वम्—अकालः, तदनन्तरं संवत्सरादिः कालः । कालस्यापि द्वौ भेदौ—अकलः सकलश्च । एतद्विषये विशेष—ज्ञानार्थं तत्रैव द्रष्टव्यम् । अथर्ववेदे कालसूक्ताभ्याम् १९।६। ५३–५४ अपि कालात् सृष्टि र्जातेति वर्णितम् । एवमेव तैत्तिरीयारण्यके प्र० ३ अ० ११ इत्यत्र कालतत्त्वं सम्यग् विवेचितम् ।

## द्रव्यस्य द्वैविध्यम्

अनेया कालशक्त्या अविद्यया वा द्रव्यस्य द्विविधं रूपं भवति—पारमार्थिकं सांव्यवहारिकं च । तत्र पारमार्थिकं द्रव्यं स्वभावः, सांव्यवहारिकं द्रव्यं च लोके दृश्यमानम् इदंतदितिशब्दाभ्यां व्यवहारयोग्यं वस्तुमात्रम् । इदं द्रव्यसमुद्देशे भूयोद्रव्यसमुद्देशे च हेलाराजेनेत्थं स्पष्टीकृतम्—

द्रव्यं च द्विविधम्, पारमार्थिकं सांव्यवहारिकं च । इह तु पारमार्थिकं द्रव्यं निरूप्यते…………स्वभाव इति सत्ताद्वैतवादिभिः स्वभाव आत्मभूता सत्तेति कृत्वा ।

(वा० प० ३ द्र० स० १)

तत्र पूर्वं द्रव्यं लक्ष्यते । तथा हि इदंतदितिसर्वनामप्रत्यवमर्शनयोग्यं द्रव्यम् । इदमिति प्रत्यक्षार्थवाचकम्, तदिति प्रमाणान्तरावगतपरोक्षाभिधानम् ।…… ……तथा च प्रत्यक्षपरोक्षाकारभेदावधीरणेन वस्तुमात्रं तद्वाच्यं द्रव्यं लक्षितं भवति ।

(वा० प० ३ भूयोद्र० स० ३)

परमार्थं वस्तु विकल्पानामविषयः शब्दब्रह्मैव, तदेव अनादिसिद्धाविद्यावशाद् नानाविधभेदावभासं भजते । इति द्रव्यसमुद्देशे ८-१० कारिकासु श्रीहेलाराजेन साधूपवर्णितम् ।

मोक्षः

अस्मिन् मते परब्रह्मणः प्राप्ति, परब्रह्मणोऽधिगम, परब्रह्मण सायुज्य वा मोक्ष इत्यभिधीयते । व्याकरणस्य महत्प्रयोजनमभिदधता भगवता श्रीभर्तृहरिणा एतन्मोक्षार्थमेव व्याकरण महोपयोगीति प्रसाधितम् । तेनोक्तम्—

प्राप्त्युपायोऽनुकारश्च······ ··

( वा० प० १–५ )

अत्र स्वोपज्ञवृत्तौ—'ममाहमित्यहङ्कारग्रन्थिसमतिक्रममान ब्रह्मणः प्राप्ति'। इत्युक्तम् । अत्र ब्रह्मण प्राप्ति सायुज्यमोक्ष इत्यर्थः । यथोक्तम्—

तद्व्याकरणमागम्य परं ब्रह्माधिगम्यते ।

( वा० १–२२ )

अपि प्रयोक्तुरात्मानं शब्दमन्तरवस्थितम् ।
प्राहु र्महान्तमृषभं येन सायुज्यमिष्यते ॥

( वा० प० १–१३१ )

अत्र स्वोपज्ञवृत्तौ 'तस्मिन् खलु वाग्योगविदो विच्छिन्नाहङ्कारग्रन्थीनत्यन्तविनिभागेन संसृज्यन्ते । आह च—

'चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य । त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ आविवेश ।' (वा० प० १–१३१) पातञ्जले महाभाष्ये च पस्पशाह्निके—'चत्वारि शृङ्गा इतिमन्त्रस्य व्याख्यानावसरे महता देवेन न साम्य यथा स्यादित्यध्येय व्याकरणमित्युक्तम् । अत्र कैयटेन

महता परेण ब्रह्मणेत्यर्थ ' इति प्रतिपादितम ।

एतत्प्रतीकमादाय नागेशेन—

'ब्रह्मणा—शब्दब्रह्मणा, साम्यम् सायुज्यम्' इति व्याख्यातम् ।

एवं च शब्दरस्य जीवात्मन ( अविद्यावशस्य ) महता शब्द-ब्रह्मणा ( परब्रह्मणा ) ऐक्य[४७] तादात्म्य वा मोक्षः। अस्याः ( वा० प० १।५ ) कारिकाया. स्वोपज्ञवृत्तौ ब्रह्मण प्राप्ति-र्दशविधोक्ता।

*मोक्षसाधनम्*

शब्दब्रह्मणः सायुज्यरूपमोक्षावाप्तये शब्दस्य याथार्थ्यज्ञान कारणन्तत्र च व्याकरण परम साधनम्। व्याकरणद्वारा यो हि शब्दसस्कार स हि शब्दरूपपरमात्मन सिद्धयुपाय.। अतो हि य शब्दस्य षड्भावविकाररूपा प्रतिभा जानाति स शब्दरूपपरब्रह्मण सायुज्यमेति। यथाह हरिः—

तस्माद् यः शब्दसंस्कारः सा सिद्धिः परमात्मनः।
तस्य प्रवृत्तितत्त्वज्ञस्तद् ब्रह्मामृतमश्नुते॥
( वा० प० १।१३२ )

अस्या कारिकाया स्वोपज्ञवृत्तौ उक्तमेवार्थं द्रढयितु हरिस्त्रीन् श्लोकानुद्धृतवान्—

'आह च—
प्राणवृत्तिमतिक्रान्ते वाचस्तत्त्वे व्यवस्थितः।
क्रमसंहारयोगेन संहृत्यात्मानमात्मनि॥१॥
वाच सस्कारमाधाय वाचं ज्ञाने निवेश्य च।
विभज्य बन्धनान्यस्याः कृत्वा ता छिन्नबन्धनाम्॥२॥
ज्योतिरान्तरमासाद्य छिन्नग्रन्थिपरिग्रहः।
परेण ज्योतिषैकत्व छित्त्वा ग्रन्थीन् प्रपद्यते॥३॥'

४७—जीवस्य शब्दब्रह्मणा सहैक्य मोक्ष इति वा० प० १।१३२ कारिकाया स्वोपज्ञवृत्तौ श्रीहरिणा प्रतिपादित तदनुपदमेवाग्रे निरूप्यते।

अत्र-आत्मनि-बुद्धो, आत्मानम्-शब्दम्, वन्धनानि-भेदरूपाणि, छिन्नबन्धनाम्-अविद्याहङ्काररहिता कृत्वा-इत्यर्थः।

शब्दब्रह्मणो विवर्तभूत जगत्। अतः शब्दस्य याथार्थ्यस्य ज्ञानेन मोक्षः। याथार्थ्यस्य ज्ञानाय व्याकरण परमोयोगोत्वर्थमनेकधा श्रीहरिः प्रत्यपादयत्—

तद्व्याकरणमागम्य परं ब्रह्माधिगम्यते।
(वा० प० १।२२)

प्रत्यस्तमितभेदाया यद् वाचो रूपमुत्तमम्।
यदस्मिन्नेव तमसि ज्योतिः शुद्धं विवर्तते॥
(वा० प० १।१८)

अर्थप्रवृत्तितत्त्वानां शब्दा एव निबन्धनम्।
तत्त्वावबोधः शब्दानां नास्ति व्याकरणादृते॥
(वा० प० १।१३)

गत्या विशुद्धिस्तत्रोक्ता विद्यैवैकपदागमा।
युक्ता प्रणवरूपेण सर्ववादाविरोधिना॥
(वा० प० १।९)

प्राप्तरूपविभागाया यो वाचः परमो रसः।
यत्तत्पुण्यतमं ज्योतिस्तस्य मार्गोऽयमाञ्जसः॥
(वा० प० १।१२)

अन्यत्र स्वोपज्ञवृत्तौ शब्दार्थविषये व्याकरणविषये च बहूपपादितम्।

आसन्नं ब्रह्मणस्तस्य तपसामुत्तमं तपः।
प्रथमं छन्दसामङ्गमाहुर्व्याकरणं बुधाः॥
(वा० १।११)

इदमाद्यं पदस्थानं सिद्धिसोपानपर्वणाम् ।
इयं सा मोक्षमाणानामजिह्मा राजपद्धतिः ॥
(वा० प० १।१६)

अत्र सिद्धिः—मोक्षः

यद्यपि वाक्यपदीयस्य स्वोपज्ञवृत्तावहङ्कारग्रन्थिनिरासेन ब्रह्मावाप्तिः प्रतिपादिता तथा दशप्रकाराणां ब्रह्मावाप्तीनां प्रधानं साधनं ब्रह्मराशिरेवेत्युक्तम् । यथा—

प्राप्त्युपायोऽनुकारश्च तस्य वेदो महर्षिभिः ।
एकोऽप्यनेकवर्त्मेव समाम्नातः पृथक् पृथक् ॥
(वा० प० १।५)

अत्र स्वोपज्ञवृत्तौ—

'ममाहमित्यहङ्कारग्रन्थिसमतिक्रममात्रं ब्रह्मणः प्राप्तिः, विकाराणां प्रकृतिभावापत्तिरित्यपरे, वैकरण्यम्, असाधना, परितृप्तिः, आत्मतत्त्वम्, आत्मकामनागन्तुकार्यत्वम्, परिपूर्णशक्तित्वम्, कालवृत्तीनामात्ममात्रास्वसमावेश, सर्वात्मना नैरात्म्यमिति प्राप्तिविकल्पाः । प्राप्त्युपायो ब्रह्मराशिः । यथाभ्युदयस्य दानतपोब्रह्मचर्यादिः । एवं ह्याह-वेदाभ्यामात् परमान्तरं शुक्लमजरं ज्योतिरस्मिन्नेवापारे तमसि वीते विवर्तते । इति ।'

अस्या वृत्तेः अस्माकमीटीकायां ब्रह्मावाप्तेः ब्रह्मराशिसाधनस्य माहात्म्यमित्थमभ्यधायि—

'एवं दशसु विकल्पेषु या कापि ब्रह्मप्राप्तिर्भवतु, किन्तु तस्याः प्राप्त्युपायो वेदराशिः ।

### सृष्टिप्रक्रिया

प्रलयान्ते सृष्टेः पुनरावर्तनकालेऽनादिनिधनं सर्वग्राह्यग्राहकाकारविवर्जितं शब्दब्रह्म (पश्यन्तीरूपम्) सृज्यमानप्रपञ्चवैचित्र्यहेतुप्राणिकर्मसहकृतं अपरिमितानिर्वचनशक्तिविशेषविशिष्टस्वातन्त्र्य-

शक्तिसहितं नामरूपात्मकं निखिलं प्रपञ्चं प्रथमं बुद्ध्यावकलय्य इदं करिष्यामीति सङ्कल्पयति ततो निजया कालाख्यया स्वातन्त्र्यशक्त्या आकाशादीनि अपञ्चीकृतानि तन्मात्रपदवाच्यान्युत्पादयति ततो भूतादयो जायन्ते ।

इदम् 'अनादिनिधनं ब्रह्म' इति वाक्यपदीयप्रथमकारिकायाः स्वोपज्ञवृत्तौ श्रीहरिणेत्थं प्रतिपादितम्—

'तत एव हि शब्दादयादुपसंहृतक्रमात् ब्रह्मणः सर्वविकारप्रत्यस्तमये सर्वतश्चिनाकृतात्पूर्वं विकारग्रन्थिरूपत्वेनाभ्यवदेयाज्जगदाख्या विकाराः प्रक्रियन्ते ।' तथा ह्युक्तम्—

यः सर्वपरिकल्पानामाभासेऽप्यनवस्थितः ।
तर्कागमानुमानेन बहुधा परिकल्पितः ॥१॥
व्यतीतो भेदसंसर्गौ भावाभावौ क्रमाक्रमौ ।
सत्यानृते च विश्वात्मा प्रविवेकात्प्रकाशते ॥२॥
अन्तर्यामी स भूतानामराद् दूरे च दृश्यते ।
सोऽत्यन्तमुक्तो मोक्षाय मुमुक्षुभिरुपास्यते ॥३॥
प्रकृतित्वमपि प्राप्तान् विकारानाकरोति यः ।
ऋतुधामेव ग्रीष्मान्ते महतो मेघसंप्लवान् ॥४॥
तस्यैकमपि चैतन्यं बहुधा प्रविभज्यते ।
अङ्गाराङ्कितमुत्पाते वारिराशेरिवोदकम् ॥५॥
तस्मादाकृतिगोत्रस्थाद् व्यक्तिग्रामा विकारिणः ।
मारुतादिव जायन्ते वृष्टिमन्तो बलाहकाः ॥६॥
त्रयीरूपेण तज्ज्योतिः परमं परिवर्तते ।
पृथक्तीर्थप्रवादेषु दृष्टिभेदनिबन्धनम् ॥७॥

शान्तविद्यात्मकं योंऽशः तद्रु हेतदविद्यया ।
तया ग्रस्तमिवाजस्रं या निर्वक्तुं न शक्यते ॥८॥
संवर्तः परिवर्तानां परिमाणं न विद्यते ।
तस्या या लब्धसंस्कारा न सुखात्मन्यवतिष्ठते ॥९॥
यथा विशुद्धमाकाशं तिमिरोपप्लुतो जनः ।
संकीर्णमिव मात्राभिश्चित्राभिरभिमन्यते ॥१०॥
तथेदममृतं ब्रह्म निर्विकारमविद्यया ।
कलुषत्वमिवापन्नं भेदरूपं विवर्तते ॥११॥
ब्रह्मेदं शब्दनिर्माणं शब्दशक्तिनिबन्धनम् ।
विवृत्तं शब्दमात्राभ्यस्तास्वेव प्रविलीयते ॥१२॥

इत्यनाद्यनन्तात् शक्तिसहिताद् शब्दब्रह्मणः सर्वनामरूपात्मकं जगज्जायत इति वाक्यपदीयकारमतम् ।[४८]

---

४८—(क) अथर्ववेदे ब्रह्मसूत्रशाङ्करभाष्ये च जगतः शब्दप्रभवत्वमुपपादितम्—
ऋचो अक्षरे परमे व्योमन् यस्मिन् देवा अधि विश्वे निषेदुः ।
यस्तन्न वेद किमृचा करिष्यति य इत् तद् विदुस्त इमे समासते ॥
(अ० वे० ९।५।१०।१८)
ऋचः पदं मात्रया कल्पयन्तोऽर्धर्चेन चाक्लृपुर्विश्वमेजत् ।
त्रिपाद् ब्रह्म पुरुरूपं वि तष्ठे तेन जीवन्ति प्रदिशश्चतस्रः ॥
(तत्रैव १९)
गौरिन्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी ।
अष्टापदी नवपदी बभूवुषी सहस्राक्षरा भुवनस्य पङ्क्तिस्तस्याः
समुद्रा अधि वि क्षरन्ति ॥ (तत्रैव २१)
(ख) शब्द इति चेन्नातः प्रभवात् · ·(ब्र० सू० १।३।२८)
इति सूत्रभाष्ये श्रीशङ्कराचार्येण पूर्वपक्षरूपेण शब्दतो जगत्सृष्टिः सप्रमाणं निरूपिता ।

श्रीनागेशभट्टास्तु परमेश्वरस्य सिसृक्षात्मिका मायावृत्ति जायते, ततो बिन्दुः, अस्माद् बिन्दोः शब्दब्रह्मापरनामधेयं चेतनमिश्रं नादमात्रमुत्पद्यते। एतज्जगदुपादानमेव 'रवः' 'परा' आदिपदैर्व्यवह्रियते इत्यादिप्रकारेण वैयाकरणाभिमतां सृष्टिप्रक्रियामाहुः। एवंविधे सिद्धान्ते शब्दब्रह्मणोऽनित्यत्वापत्तिः। एतत्सर्वं श्रीसूर्यनारायणशुक्लमहोदयैः वाक्यपदीयस्य भावप्रदीपनामिकायां स्वीयटीकायां सम्यगुपपादितम्। तत्र वैयाकरणसृष्टिप्रक्रियाप्रतिपादनेन सह श्रीनागेशभट्टप्रोक्तप्रक्रिया सविस्तारं तथा तन्त्रोक्तशब्दसृष्टिवादप्रक्रिया च सविस्तारं प्रदर्शिता।[४९] तत्रोक्तं यद् श्रीनागेशप्रतिपादिता शब्दसृष्टिप्रक्रिया तन्त्रसम्मता न तु वैयाकरणश्रीभर्तृहरिसम्मता।

एवमेव इयं शब्दसृष्टिप्रक्रिया बौद्धैरपि अभिमन्यते।[५०]

श्रीहेलाराजेन शब्दाद्वैतवादस्य सृष्टिप्रक्रिया साङ्ख्योक्तसृष्टिप्रक्रियासमानैरयमिहितम्—

तां प्रातिपदिकार्थं च धात्वर्थं च प्रचक्षते।
सा नित्या सा महानात्मा तामाहुस्त्वतलादयः॥
( वा० प० ३ जा० स० ३४ )

इति कारिकाव्याख्यानावसरे यथा—

एते सत्तामात्रस्यात्मनो महतः षड्विशेषपरिणामाः, यत्तत्परं विशेषेभ्यो लिङ्गमात्रं महत्तत्त्वम्, तस्मिन्नेव सत्तामात्रे महत्यात्मन्य-

---

४९—वाक्यपदीये भावप्रदीपसहिते (चौखम्बा स० सी० काशी १९६३ ई० स०) का० १२० पृ० ९४–१०० ।

५०—द्र०—(क) भर्तृहरि ए प्री शङ्कर अद्वैतिन्, ले० श्री बी० आर० स्वामी—आल इण्डिया ओरियण्टल कान्फ्रेंस १९३७ ई० सेक्सन ५ लेखः ६ पृ० ५४८ इत्यत्र प्रकाशितः ।

(ख) हू आर दी अनित्यस्फोटवादिन, ले० श्री के० ए० सुब्रह्मण्यम् ऐयर, एम० ए०, अष्टम आल इण्डिया ओरि० का० मैसूर १९३३ ई०, प्रका० १९३५ ई० पृ० २५८–२६३ ।

वस्थाय विवृद्धिकाष्ठामनुभवन्ति । प्रतिसंसृज्यमानाश्च तस्मिन्नेव सत्तामात्रे महत्यात्मन्यवस्थाय यत्तन्निःसत्तासत्त नि.सदसदव्यक्तमलिङ्गं तस्मिन् प्रविशन्त्येवं साङ्ख्ये बुद्धितत्त्व महच्छब्दवाच्यमाद्यं जगत्कारण निर्दिष्टमित्यतोऽनन्तरस्य विकारग्रामस्य कारणरूपानुगमात् सत्तारूपत्वमविरुद्धमिति सत्तारूप सर्वं जगदाश्रत भवतीति सत्ताद्वैतवादः साङ्ख्यनयेनाप्युपबृंहितः ।

(वा० प० ३ जा० स० ३४ हे०)

## शब्दब्रह्मातिरिक्तपदार्थस्य खण्डनम्

वैयाकरणनये वैशेषिकोक्तगुणकर्मसामान्यविशेषसमवायाभावपदार्थानामस्तित्वं नाभिमन्यते । अस्मिन् मते सत्तैव[५१] ब्रह्म तच्च द्रव्यम् । 'गुणा अपि सामान्यविशिष्टा उच्यमाना द्रव्य पदार्थः[५२]

५१—द्रव्यसमुद्देशे—आत्मा वस्तु स्वभावश्च शरीर तत्त्वमित्यपि ।
द्रव्यमित्यस्य पर्यायास्तच्च नित्यमिति स्मृतम् ॥
( वा० प० ३ द्र० स० १ )

अस्या कारिकाया व्याख्याने हेलाराजेनोक्तम्—'तथा हि आत्मा अद्वैतवादिभिरात्मशब्देन तद् द्रव्यमुक्तम् । ' वस्तु स्वलक्षणम र्थक्रियाकारि द्रव्यमिति बौद्धैरुक्तम् । स्वभाव इति सत्ताद्वैतवादिभि' स्वभाव आत्मभूता सत्तेतिकृत्वा । तथा हि जगत्पोपसहारे सत्तैव सत्त्वमिति स्वसम्बन्धिभिरुपाधिरूपसहितभेदा सैव द्रव्यम् । इत्यादि ।

५२—वा० प० ३ भूयोद्रव्य स० ३ कारिकाया हेलाराज' । ( पृ० १६० पूना प्र० १९६३ ई० ) गुणविषये इमावपि लेखौ द्रष्टव्यौ—

(क) दी कन्सेप्सन आफ गुण एमग दी वैयाकरण्‍ज, ले० श्री के० ए० सुब्रह्मण्यम् ऐयरमहोदय, इण्डियन इण्टीक्वारी—भाग ५ स० ६ ई० १६४३ प्रका० ।

(ख) दी प्वाईण्ट आफ व्यू आफ दी व्याकरणाज, ले० श्री के० ए० सुब्रह्मण्यम् ऐयर, दी जर्नल आफ ओरियण्टल रिसर्च, मद्रास,

इत्युक्त्या गुणस्य कर्मण्येवान्तर्भावः।' कर्मणोऽपि जातावन्तर्भावः—यथाह—एवं क्रियाप्यभेदेनाभिधीयमाना जातिः। तवेदं तदिति स्वातन्त्र्येण विशेष्यतयाभिधीयमाना जातिगुणक्रिया अपि द्रव्यमिति यथावसरमग्रे निर्णेष्यत एव।

( वा० प० ३ का० जा० स० ११ )

क्रिया नाम प्राप्तक्रमा, क्रमसंहारश्च ब्रह्म, अतः क्रिया न पदार्थः। यथाह—

प्राप्तक्रमाविशेषेषु क्रिया सैवाभिधीयते।
क्रमरूपस्य संहारे तत्सत्त्वमिति कथ्यते॥

( वा० प० ३ का० जा० स० ३५ )

पारतन्त्र्य च शक्तिलक्षणमिति, क्रियापि द्रव्यपरतन्त्रा शक्तिरिति व्यपदिश्यते।

( वा० प० ३ का० दि० स० १ )

सामान्य जातिः, जातिस्तु सत्ता, सत्तायाश्च ब्रह्मरूपत्वेन द्रव्यत्वमङ्गीकृतमेव।

समवायादिसम्बन्धानपि शक्तित्वेन शब्दार्थत्वेन वा स्वीकृत्य तेषां पदार्थत्वेन पृथक् परिगणनं निराकृतम। यथोक्तम्—

पदार्थीकृत एवान्यैः सर्वत्राभ्युपगम्यते।
सम्बन्धस्तेन शब्दार्थः प्रविभक्तुं न शक्यते॥

( वा० प० ३ का० सं० स० १२ )

यद्येकः पदार्थोऽपरत्र केनापि सम्बन्धेनैव तिष्ठेत् तर्हि समवायोऽपि केनापि सम्बन्धेन तिष्ठेत, स च सम्बन्धो नोपलभ्यते।

---

वाल्यूम १८, भाग २ पृ० ८४–९६ अयं लेखः पञ्चदश आल इण्डिया ओरियण्टल कान्फेंस बम्बई—विवरणे, वर्णीकृत-संस्कृतविभागेऽपि प्रका०।

यदि कश्चित् सम्बन्धः कल्प्यते तर्हि तस्य सम्बन्धस्यापि सम्बन्धः कल्प्यतामित्यनवस्थापत्तिः। एवंरीत्या समवायो नाङ्गीकर्तव्यः। यथाहि—

स्वाश्रयेण तु संयुक्तः संयुक्तं विभु गम्यते।
समवायस्य सम्बन्धो नापरस्तत्र दृश्यते॥
(तत्रैव १६)

सम्बन्धस्याविशिष्टत्वान्नचात्र नियमो भवेत्।
तस्माच्छब्दार्थयो नैव सम्बन्धः परिकल्प्यते॥
(तत्रैव १७)

अत्रैव समवाय शक्तित्वेनाङ्गीकृत्य तस्य पदार्थान्तरत्व निरस्तम्। यथाह—

तां शक्तिं समवायाख्यां शक्तीनामुपकारिणीम्।
(वा० प० ३ का० स० स० १०)

एवमेव विशेषेऽपि जातिं स्वीकृत्य विशेषस्य पदार्थान्तरत्व खण्डिनम्।
यथोक्तम्—

व्यावृत्तिधर्मसामान्यं विशेषे जातिरिष्यते।
(वा० प० ३ का० जा० स० १४)

अभावोऽपि न पदार्थः। यतोऽस्मिन् भावाद्वैतवादे सत्ताद्वैतवादे वा अभावोऽस्त्येव नहि। भावाभावयो. परस्परविरोधाद् अभावो भवितुमेव नार्हति। यथा—

नाभावो जायते भावो नैति भावोऽनुपाख्यताम्।
एकस्मादात्मनोऽन्योन्यौ भावाभावौ विकल्पितौ॥
(वा० प० ३ का० स० स० ६१)

अत्र हेलाराजेन स्वीये प्रकाशाख्ये व्याख्याने भावाभावयो र्व्यवहार उपाधिकृत इति प्रतिपादयता उक्तम्—

'न च सर्वथा तदानीमसत्ता ।'

एक एव शक्तिमद्ब्रह्मपदार्थ इति निरूपयन्नाह—

तस्माद् द्रव्यादयः सर्वाः शक्तयो भिन्नलक्षणाः ।
संसृष्टा पुरुषार्थस्य साधिका न तु केवलाः ॥

( वा० प्र० ३ का० जा० स० २१ )

अत्र हेलाराजः—

'द्रव्यगुणकर्मसामान्यविशेषसमवायलक्षणाः पदार्था न पृथग्भूताः । एकस्यैव विलक्षणव्यापारानुमेया इति ।·· ···वरमेकमेव शक्तिमदस्तु ।

दिक्कालावपि न पृथक् पदार्थौ किन्तु ब्रह्मणः शक्तिरिति कृत्वा खण्डितौ । उक्तम्—

दिक् साधनं क्रिया काल इति वस्त्वभिधायिनः ।
शक्तिरूपे पदार्थानामत्यन्तमनवस्थिताः ॥

( वा० प० ३ का० दिक् स० १ )

अत्र हेलाराज—'तथा हि परोपाधिरूपा शक्तयो दिगाद्या, पारतन्त्र्यं च शक्तिलक्षणमिति । ·············वैशेषिकनये च दिग् द्रव्यं नोपपद्यते, कार्यानुमेयत्वेन पदार्थोपकारकरूपस्य शक्तितत्त्वस्य न्याय्यत्वात् ।'

एवमेव कालस्यापि पदार्थान्तराभाव. साधित कालसमुद्देशे । पदार्थविषये द्रव्यसमुद्देशे, सम्बन्धसमुद्देशे भूयोद्रव्यसमुद्देशे गुणसमुद्देशे दिक्समुद्देशे कारिकासु हेलाराजव्याख्याया च बहु विचारितम् ।

सङ्ख्यनयेऽपि दिक्कालावकाशमिति मत्वा दिक्कालयोः पदार्थान्तरत्वं नाङ्गीकृतम् । यथा साङ्ख्यसूत्रे तद्वृत्तौ च—

दिक्कालौ सिद्धौ कथं गणनाया न श्रुताविव्याह—दिक्कालावाकाशादिभ्य. ( सा० सू० २।१६ ) तत्तदुपाधिभेदादाकाशमेव दिक्कालशब्दवाच्यम् । तस्मादाकाशेऽन्तर्भूतौ । आदिशब्दः सप्ततायात सप्तम्यर्थे पञ्चमी । ( अनिरुद्धवृत्ती )

### सिद्धान्तशैवपरमेश्वराद्वयशाङ्करनिर्विशेषब्रह्माद्वैतवादेभ्यः शब्दब्रह्मवादे वैशिष्ट्यम्

सिद्धान्तशैववादिमते, परमेश्वराद्वयवादे, शाङ्कराभिमतनिर्विशेषब्रह्माद्वैतवादे तथा शब्दब्रह्माद्वैतवादे च एषु चतुर्ष्वपि अविद्याया प्राधान्यम्, अविद्यावशेनैव निखिलजगदादिप्रपञ्चस्तथा अविद्याविलयेनैव मोक्षः। सिद्धान्तशैवे परमेश्वराद्वये शब्दब्रह्मवादे च शब्दस्य स्पष्टमेव प्राधान्यम्। निर्विशेषब्रह्माद्वैतवादेऽपि ब्रह्मणो रूप प्रणवमित्युपनिषत्सु माण्डूक्यकारिकाया च प्रतिपादितम्।[५३] अत एतेषां सिद्धान्त सम्यग्विविच्य शब्दाद्वैतवादस्य पार्थक्य प्रदर्श्यते।

सिद्धान्तशैववादिमते शिवस्तस्य समवायिनी शक्तिः ज्ञानशक्ति-

---

५३—(क) ॐकार सम्प्रास्रवत् तद्यथा शङ्कुना सर्वाणि पर्णानि संतृण्णान्येवमोंकारेण सर्वा वाक् संतृण्णा। ॐकार एवेदं सर्वमोंकार एवेदं सर्वम्।

(छा० उ० २।२३।३)

(ख) अत्र शङ्कराचार्येण भाष्ये—प्रणवस्य तत्सत्य ब्रह्म तत्प्रतीकत्वात्।

(छा० उ० २।२३।१ १)

(ग) ओमित्येतदक्षरमिदं सर्वं तस्योपव्याख्यानं भूतं भवद् भविष्यदिति सर्वमोंकार एव। यच्चान्यत् त्रिकालातीतं तदप्योंकार एवेति।

(माण्डूक्योपनिषदि १।१)

अपरमूपनिषत्स्वपि प्रणवमाहात्म्यम्—क० उ० १।२।१५, १६, १७, प्र० उ० ५।२।७, मु० उ० २।६, तै० उ० ८।१, म० उ० ४।२, ५ अथर्वशिखोपनिषदि १।२।

एवमेव योगसूत्रेऽपि—तस्य वाचकः प्रणवः। (यो० सू० १।२७)

(घ) प्रणवो ब्रह्म निर्भयम्।

(माण्डूक्यकारिकायाम् १।२५)

प्रणवो ह्यपरं ब्रह्म प्रणवश्च परः स्मृतः।

(तत्रैव १।२६)

स्तयोश्च तादात्म्यम्, अतः शिवशक्तिरचैकमेव तत्त्वम्। शिवस्य परिग्रहशक्तिः बिन्द्वाख्या क्रियाशक्तिः, परिग्रह उपादानकारणम्। स च बिन्दु द्विविधः शुद्धोऽशुद्धश्च। शुद्धबिन्दुरेव महाविन्दु महामायेति। अशुद्धबिन्दु र्माया उच्यते। बिन्दो समवायिन्या शक्तेः यः सम्बन्धः स एव विकल्प. भेदज्ञानमित्याख्यायते। त च विकल्पमाश्रित्य शिव. शुद्धबिन्दु क्षोभयति। तेन च स शब्दार्थधारा जनयति। सा च शब्दधारा—परापश्यन्तीमध्यमावैखरीरूपा शुद्धा। ततोऽशुद्धबिन्दुः क्षुब्धः अशुद्धा शब्दधारां जनयति, सा च परापश्यन्तीमध्यमावैखरीरूपा अशुद्धा। द्विविधस्यापि बिन्दोः जडत्वेन अचिदात्मकत्वात् तत्परिणामो द्विविधापि परादिरूपा वाग् अचिदेव। तस्या अतिक्रम एव बन्धनच्छेदलक्षणो मोक्ष, न तु तत्तादात्म्यम्। स च दीक्षादिव्यापारेण सम्पाद्यते। अष्टप्रकरणग्रन्थे रत्नत्रय एतत्स्पष्टम्।[५४]

परमेश्वराद्वयवादे प्रकाशः विमर्शश्चेति वस्तुद्वयम्। प्रकाश एव शिवः विमर्शस्तु तस्य स्वातन्त्र्यशक्ति. उमा इति चाख्यायते। प्रकाशस्य विमर्शव्यतिरेकेण विमर्शस्य प्रकाशव्यतिरेकेणाभावादेकमेव तद्द्वय मन्यते। अतएवाद्वैतमिति। विमर्शश्च परा वाक् प्रकाशश्च अर्थ इति। इदमेव शब्दार्थयुगल निरञ्जन परब्रह्मेति परमेश्वराद्वयवादिमतम्। विमर्श एव पूर्णाहन्ता, यदा च शिवः स्वकीयस्वातन्त्र्येण स्वातन्त्र्यशक्ति सङ्कोचयति तदाहमिद जानामीति भेदमनुभवति इति स्वातन्त्र्यशक्तिरहितोऽसौ जडवर्ग. स्वातन्त्र्यशक्तिसहितश्चांशश्चेतनवर्गो जायते इति। एतदयम् अष्टप्रकरणे रत्नत्रये ६०–८३ कारिका द्रष्टव्या।

५४—शब्दतत्त्वममोघा वाग् ब्रह्मकुण्डलिनी ध्रुवम्। (म० प्र० र० त० ६०) बिन्दुरेव समाख्यात। (तत्रैव ६१) स्वरूपज्योतिरेवान्तः सूक्ष्मा वागनपायिनी (तत्रैव ७५) परमात्मैव वागात्मा चात्मवात्मेति च श्रुते. (तत्रैव ८१)

शाङ्कराद्वैतवादे तु—परमेश्वराद्वैतवादिभिरभ्युपेतं यन्मतम्—प्रकाशः शिवः, तस्य प्रकाशको विमर्शः इति, तन्नाभिमन्यते यतो हि प्रकाशस्य स्वप्रकाशत्वमभ्युपेत्य प्रकाशस्य प्रकाशनार्थं विमर्शो नाङ्गीक्रियते। प्रकाश एव ब्रह्म तदेव अनिर्वाच्यया अविद्यया नानारूपेण भासते इति।

शब्दब्रह्मवादे तु विमर्शः (परावाक्) एव ब्रह्म तदेव कालशक्त्य-परनामधेयया अविद्यया नानारूपेण भासते इति।

यद्यपि एषु अग्रिमेषु त्रिषु वादेषु नातिभेदः। यतो हि परमेश्वराद्वयवादे प्रकाशविमर्शयोः भेदाप्रतिभासात्—प्रकाश एव विमर्शः। ब्रह्मवादे च प्रकाश एव एकं तत्त्वम्। शब्दब्रह्मवादे च विमर्श एव एकं तत्त्वम्। तथापि तत्त्वनिरूपणप्रणालीनां भिन्नतया त्रयाणां भिन्नतैव।

सिद्धान्तशैवादिमते तु बिन्दोः जडत्वात् तत्परिणामभूता द्विविधापि वाग् अचिदेव। वाचोऽतिक्रमे बन्धनच्छेदलक्षणे मोक्षेऽपि केवलं वाचश्चित्त्वेन प्रतिभासनमेव भवति। किन्तु शब्दब्रह्माद्वैतवादे तु मोक्षावस्थायां शब्दब्रह्मणस्तादात्म्यं भवति।[४५]

शङ्कराभिमतब्रह्माद्वैतवादे श्रीभर्तृहर्यभिमतशब्दब्रह्माद्वैतवादे च प्रकाशरूपे ब्रह्मणि अप्रकाशरूपायाः अविद्यायाः कथमावरणम् इत्यादिविधा अनेकाः शङ्काः उद्भाव्य, अनादित्वेन चाविद्यायोग इति समाधानमकिञ्चित्करमिति प्रदर्श्य परमेश्वराद्वयवादसिद्धान्तः सम्यगिति प्रमेयबहुलो म०म०श्रीगोपीनाथकविराजमहाभागानां लेखः, कल्याणपत्रस्य शिवाङ्के प्रकाशितः एतदर्थं द्रष्टव्यः।[४६]

---

४५—पूज्यपादश्रीसूर्यनारायणशुक्ल—प्रणीतायाः वाक्यपदीयस्य भाव-प्रदीपटीकाया उद्धृतमेतत्। विशेषस्तु तत्र द्रष्टव्यः।

४६—श्रीसुन्दरमहोदयेन परितनलिखितटीकायाटिप्पण्यां म० म० श्री गो० ना० कविराजमहोदयलेखस्य सारांशो कश्चिदनूदितः।

प्रमाणम्

श्रीभर्तृहरिमते प्रत्यक्षानुमानागमाभ्यासादृष्टानि पञ्च प्रमाणानि। तत्र प्रत्यक्षं द्विविधं लौकिकमलौकिकं च। लौकिकं सामान्यप्रसिद्धम्। अलौकिकमिन्द्रियसन्निकर्षरहितम् ऋषीणाम्। एतत् प्रथमकाण्डे ३७–४० कारिकासु स्पष्टम्। अनुमानस्य विशेषचर्चा नास्ति। किन्तु खण्डनाभावात्तदभिमतमासीदिति प्रतीयते। आगमप्रमाणस्य कृते बहूपपादितम्। अभ्यासप्रमाणमिति विषये 'परेषामसमाख्येयमभ्यासादेव जायते।' (वा० प० १–३५) इत्यत्र मणिरूप्यादिज्ञानायावश्यकं तदिति निर्दिष्टम्। इदं लौकिकमार्षं ज्ञानमिति अदृष्टमपि एकं प्रमाणम्। अनेन प्रमाणेन पितृरक्षःपिशाचानां सिद्धयो ज्ञायन्ते। एतद् वा० प० प्रथमकाण्डे ३६ कारिकायां वर्णितम्।

अनेन प्रकारेणाचार्यभर्तृहरिणा व्याकरणप्रधाने वाक्यपदीये ग्रन्थे व्याकरणप्रमेयप्रतिपादनपुरःसरं वैयाकरणाभिमतशब्दब्रह्माद्वैतदर्शनमपि प्रतिपादितम्। तत्र प्रथमं ब्रह्मकाण्डं विशुद्धं शब्दब्रह्मनिरूपणपरम्। अपरस्मिन्नपि सत्यपि पदवाक्यार्थविचारपरे काण्डद्वये, मध्ये मध्ये व्याकरणदर्शनविरोधि साङ्ख्यवैशेषिकसौगतादिमतमालोचितं तथा वैयाकरणाभिमतपदार्थश्च निरूपितः। आचार्यभर्तृहर्यभिमतशब्दब्रह्माद्वैतदर्शने शब्दतत्त्वमेव ब्रह्म, ब्रह्मणश्च समवायिनी शक्तिः स्वातन्त्र्यशक्तिः, या कालशब्देनाविद्याशब्देन च व्यपदिश्यते किन्त्वियं शङ्कराचार्याभिमताविद्येवानिर्वचनीया न। अनयैव च शब्दब्रह्मशक्त्या जगद् भासते। शब्दतत्त्वस्य ब्रह्मणो विवर्त्तः। जीवस्य न पृथक्सत्ता जीवोऽप्यनया शक्त्यैव भासते। अस्याः शक्तेः कार्यं ब्रह्मणो दृश्यदर्शनद्रष्टृरूपेणाथवा भोक्तृभोक्तव्यभोगरूपेणावभासनम्। अस्मिन् मते विवर्त्तवादः सिद्धान्तितो न

तु परिणामवादः । शब्दब्रह्मण सायुज्यावाप्तिरेव मोक्ष । मोक्षस्य साधनं व्याकरणद्वारा शब्दसंस्कारज्ञानपूर्वकं शब्दस्य याथार्थ्यज्ञानं तेनाविद्याहङ्कारनाशस्ततो मुक्ति । मात्राख्यया स्वातन्त्र्यशक्त्या आकाशादीन्यपञ्चीकृतानि तन्मात्राशब्दवाच्यान्युत्पद्यन्ते ततो भूतादयो जायन्त इत्येव सृष्टिक्रमो मन्यते । श्रीभर्तृहरिमते सृष्टिक्रमः प्रायः साङ्ख्यदर्शनोक्तसृष्टिक्रमसमान एव । वैशेषिकदर्शनोक्तगुणकर्मसामान्यविशेषसमवायाख्या द्रव्यातिरिक्ताः सर्वे पदार्था अत्र खण्डिताः । अस्मिन् मते आत्मनो द्रव्यत्वं नित्यत्वं चाङ्गीक्रियेते । शब्दब्रह्मातिरिक्तस्य कस्यापि सत्ता न स्वीक्रियते । शब्दार्थो जाति जातिश्च सत्तेति रीत्याऽस्य सत्ताद्वैतवादो भावाद्वैतवादश्चापि व्यपदिश्यते । आचार्यभर्तृहरे शब्दब्रह्मवाद शैवाद्वैतादिदर्शनाद् आचार्यश्रीशङ्कराभिमतनिर्विशेषब्रह्माद्वैतदर्शनाच्च यथोक्तं स्वीयं वैशिष्ट्यं धारयति । येनाद्वैतवादिदर्शनेषु श्रीभर्तृहरेः शब्दाद्वैतवादोऽपि प्रमुखस्थानं लभत इति ।

o

॥ श्रीहरि. ॥

# नवमोऽध्यायः

## आचार्यब्रह्मदत्तः

भगवतश्शङ्कराचार्यात् पूर्वतनेषु वेदान्तिष्वाचार्यब्रह्मदत्त प्रमुखतमोऽस्ति। अनेनापि ब्रह्मसूत्रस्य भाष्य व्यरचीति श्रीयामुनाचार्येण सिद्धित्रये तथा अज्ञातनामविदुषा प्रपञ्चहृदये सूचितम।[1] मध्वसम्प्रदायस्य मणिमञ्जरीनामके ग्रन्थे (६।२।३) भगवतश्शङ्करस्य समकालिकोऽयमिति लिखित किन्त्वस्य प्रामाणिकताया विद्वद्भि सन्दिह्यते।[2] श्रीसुरेश्वराचार्येण बृहदारण्यकभाष्यवार्त्तिके, वेदान्तदेशिक—श्रीवेङ्कटनाथेन तत्त्वमुक्ताकलापस्य सर्वार्थसिद्धिवृत्तौ च वेदान्ताचार्यत्वेनायं स्मृत।[3] संक्षेपशारीरकस्य श्रीपुरुषोत्तम-

---

१—(क) '... ... ............ भर्तृहरिब्रह्मदत्तशङ्करश्रीवत्साङ्कभास्करादिविरचित ...... ।' (सिद्धित्रये पृ० ५)।

(ख) ब्रह्मकाण्डस्य भगवत्पादब्रह्मदत्तभास्करादिभि मतभेदेनापि कृतम्।' (प्रपञ्चहृदये पृ० ३९)

२—द्र०—म० म० श्रीगोपीनाथकविराजमहोदयस्य वेदान्तदर्शनभूमिकाया पृ० १२। एतद्विषयेऽस्यैव लेखकमहोदयस्यापरोऽपि लेख—'शकर से पूर्व आचार्य, कल्याणपत्रिकाया वेदान्ताङ्के (१९९३ वं०) प्रकाशित'।

३—(क) 'इह तु ब्रह्मदत्तादिमतेन ज्ञानाभ्य[illegible] विधिमाशङ्क्य निरस्यते।

श्रुतसुबोधिनीटीकायां साम्प्रदायिकोऽयमितिकथनेनास्य महत्प्रामाणिकत्वमुपपादितम्।[४] एभि र्वेदान्तिप्रवरं सम्मानित. प्राचीनो वेदान्ताचार्य इत्ययगम्यते। किन्त्वस्य स्थितिकालविषये किमपि न परिज्ञायते। अथाप्यस्याचार्यस्य स्थितिकालोऽनिर्णीत एवेति श्रीहरियन्ना एम्० ए० महोदयेन स्वीये लेखे प्रकटितम्।[५] श्रीहरियन्नामहोदयेनेदमपि सूचितं यदनेन ब्रह्मसूत्रभाष्यं तथा छान्दोग्योपनिषदोऽपि भाष्यं विरचितम्। अत एव संक्षेपशारीरकस्य ३।२१७ श्लोकस्य सुबोधिनीटीकायां छान्दोग्यवाक्यकारप्रसङ्गेऽस्य नाम गृहीतम्।

अस्य यत् सूचितं ब्रह्मसूत्रभाष्यमथवा छान्दोग्योपनिषद्भाष्यमथवाऽपरः कोऽपि ग्रन्थोऽधुना नोपलभ्यते, केवलं वेदान्तग्रन्थेषु सट्टीकासु चास्य मतस्योल्लेखः प्राप्यते। तदनुसारं ब्रह्मजीवजगन्मोक्षादिविषये यत् किमपि श्रीब्रह्मदत्तसिद्धान्तीयमत्रोपस्थाप्यते।

श्रीब्रह्मदत्तोऽद्वैतवाद्यासीत्।[६] अस्य मते यद्यपि ब्रह्म नित्यं जीवस्तु जनिमान् अनित्यस्तथाप्युभयोर्भिन्नत्वेन प्रतीतावपि ब्रह्मणो

---

४—मायामात्रं सर्वमित्येतत् साम्प्रदायिकमिति चेत्, ब्रह्मदत्तादिभिरुक्तत्वादित्याह—'मायैवात्र नवम्' इत्यादि।' ( सं० शा० ३।२१७ सु० टी० पृ० ७३१ )।

५—द्र० श्रीहरियन्ना एम्० ए० महोदयस्य—'ब्रह्मदत्त एन ओल्ड वेदान्तिन्' इति शीर्षको लेखः, दी जर्नल आफ ओरियण्टल रिसर्च, मद्रास १९२८ ई० इत्यत्र प्रकाशितः, पृ० १–९।

६—श्रीयामुनाचार्य. सिद्धित्रये प्राचीनवेदान्ताचार्याणां नामानि परिगणितवान्—

'आचार्यटङ्कभर्तृप्रपञ्च'''ब्रह्मदत्त शङ्कर०'' इत्यादि। अत्र सिद्धित्रये टिप्पणीकार. सत्सम्प्रदायाचार्य. स्वामी श्रीरामशास्त्री निर्णीतवान्—'भर्तृप्रपञ्चभर्तृमित्रभर्तृहरिब्रह्मदत्ता निर्विशेषब्रह्मवादमास्थिषत।

न जीवो भिन्नः किन्त्वभिन्न एव। अत एव श्रीसुरेश्वराचार्येणायं ब्रह्मदत्तोऽद्वैतवादित्वेन स्मृतः। यथा—

> सकृत्प्रवृत्त्या मृद्नाति क्रियाकारकरूपभृत्।
> अज्ञानमागमज्ञानं साङ्गत्यं नास्त्यतोऽनयोः॥
> (नै० सि० १।६७)

एवं तावदनानात्वे ब्रह्मणि ज्ञानकर्मणोः समुच्चयो निराकृतः।
(नै० सि० १।६७)

अत्र ब्रह्मदत्ताचार्यमतमेव निराकृतम्। यतो हि एतद्श्लोकस्यावतरणिकायामुक्तम्—

'केचित्स्वसम्प्रदायबलावष्टम्भादाहुः ... ........।'

अत्र 'केचित्' इत्यस्य व्याख्याने ब्रह्मदत्त एव गृह्यत इति ज्ञानामृतविरचितविद्यासुरभिटीकायां स्पष्टीकृतम्।[७] अतो नैष्कर्म्यसिद्ध्युक्तेन 'एवं तावदनानात्वे ब्रह्मणि' इत्यादिना अनानात्ववादी ब्रह्मदत्त इत्यवसीयते।

इतोऽग्रिमश्लोकस्य चन्द्रिकाटीकायामप्यस्य ब्रह्मदत्तस्याद्वैतवादित्वं स्पष्टीकृतम्—

> अनुत्सारितनानात्वं ब्रह्म यस्यापि वादिनः।
> तन्मतेनापि दुस्साध्यो ज्ञानकर्मसमुच्चयः॥
> (नै० सि० १।६८)

---

७—इयं टीका—अप्रकाशिता। गवर्नमेंट ओरियण्टल मैनुस्क्रिप्ट लाईब्रेरी मद्रास इत्यत्र सुरक्षितेति श्रीहरियप्पा एम्० ए० महोदयेन दी जर्नल आफ ओरियण्टल रिसर्च, मद्रास १९२८ ई० इत्यत्र प्रकाशिते 'ब्रह्मदत्त एन ओल्ड वेदान्तिन्' इति नामके स्वीये लेखे पृ० १ इत्यत्र सूचितम्। अधुनापीयमप्रकाशितैव।

अस्य चन्द्रिकाटीकायामित्थमाह—

'नानारसत्वशून्यमद्वयं ब्रह्मेत्यभ्युपगम्य तज्ज्ञानस्य कर्मणा समुच्चयो निराकृत । सम्प्रति द्वैताद्वैतं ब्रह्मेत्यभ्युपगमेऽपि न समुच्चय इत्याह एव तावदिति । प्रभृतारितेति ।

(नै० सि० १।६८ च० टी०)

आचार्यश्रीब्रह्मदत्त इव आपंवेदान्ताचार्यं आश्मरथ्योऽपि ब्रह्मणो जीवस्य जन्म मनुते मुक्तौ च ब्रह्मणि लयो मन्यते । किन्त्वनयोरियान् भेदो यदाश्मरथ्यो भेदाभेदवाद्यय स्वद्वैतवादी । ब्रह्मदत्तो जीवस्य जनिमत्त्वादिना ब्रह्मणो भिन्नत्वेन प्रतीतावपि ससारदशायामप्यभेद स्वीकरोति । आश्मरथ्याचार्यस्तु ससारदशाया जीवस्य ब्रह्मणो भेद मुक्तौ चाभेद मन्यते । एतच्च नैष्कर्म्यसिद्धे १।६९ श्लोकस्य चन्द्रिकाटीकायामुक्तम् । किन्तु केवल तयोर्नाम न निर्दिष्टम् ।

यथा हि—

ब्रह्मात्मा वा भवेत्तस्य यदि वानात्मरूपकम् ।
आत्मनास्ति भवेन्मोहादितरस्याप्यनात्मनः ॥
(नै० सि० १।६६ )

अत्र चन्द्रिकायाम्—'भेदाभेदपक्ष जीवपरमात्मनो ससारदशाया-मप्यभेद केचिदिच्छन्ति । केचित्तु ससारदशाया भेद एव मुक्ति-दशायामेवाभेद इति मन्यन्ते ।

नहा

एतन्मते ब्रह्मैव केवल नित्यम् । ब्रह्मणो जीवो जगच्चोत्पद्येते, ब्रह्मण्येव चान्ते विलीयेते । यथा तत्त्वमुक्ताकलापे तस्य सर्वार्थसिद्धि-वृत्तौ च वेदान्तदेशिकश्रीवेङ्कटनाथेनोक्तम्—

'एकं ब्रह्मैव नित्यं तदितरदखिलं तत्र जन्मादिभागित्याम्नातम् तेन जीवोऽप्यचिदिव जनिमानित्यनघ्येतृचोद्यम्। तन्नित्यत्वं हि साङ्गश्रुतिशतपठितम्, सृष्टिवादः पुनः स्याद्देहाद्द्वारतोऽस्येत्यवहितमनसाम्............एकरहस्यम्।'

( त० मु० क० २-१६ )

अत्र सर्वार्थसिद्धिवृत्तावुपक्रमन्नाह—

'ब्रह्मदत्तादिभिरुक्तं जीवानां स्वरूपम् सृष्टिसंहृतिविषयत्वमनूद्य दूषयति एकमिति।'

( त० मु० क०—स० सि० वृ० २-१६ पृ० १७५ )

*जीवः*

अस्य मते जीवोऽनित्यो जनिमान्, ब्रह्मणश्च जायते, ब्रह्मण्येव च लीयते। यथोक्तं तत्त्वमुक्ताकलापे—

'एकं ब्रह्मैव नित्यं तदितरदखिलं तत्र जन्मादिभाग् इत्याम्नातम्। तेन जीवोऽपि अचिदिव जनिमान्।'

( त० मु० क० २-१६ )

अतः परमग्रिमश्लोकस्य वृत्तिमुपक्रमन्नाह सर्वार्थसिद्धौ—

'आत्माऽऽनित्यत्ववादिनश्चतुर्विधाः, तेषु ज्ञानात्मवादिनश्शरीरस्थितावप्यात्मनो भिदुरत्वमाहुः, प्राणेन्द्रियात्मवादिन आत्मानम् आशरीरस्थायिनम्, पौराणिकैकदेशिनस्तु प्रलयान्तम्, औपनिषदाभासास्तु मोक्षावधिम्।'

( त० मु० क०—स० सि० वृ० २-१७ )

अत्र औपनिषदाभासाः इति पदेनाचार्यब्रह्मदत्तोऽभिप्रेतः।

पुरा जीवजन्मवादिसम्प्रदायोऽप्यासीत्। यस्य सङ्केत उपनिषदि, पुराणे, आचार्यमहाकविवचनेषु चोपलभ्यते। यथा हि—

(१) 'तोयेन जीवान् व्यससर्ज भूम्याम्।'

( महानारायणोपनिषदि १-४ )

(२) प्रकृति र्या मयाख्याता व्यक्ताव्यक्तस्वरूपिणी।
पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि॥

( विष्णुपुराणे ६।४।२९ )

(३) 'यद्यय जीव. परमात्मकार्यतया परमात्मैव न भवेत्तदा तद्व्यतिरिक्ततया परमात्मज्ञानादेतद्विज्ञानं न सेत्स्यति, 'आत्मा वा इदमेक एवाग्र आसीदिति प्राक् सृष्टेरेकत्वावधारणात्,

यथा सुदीप्तात्पावकाद् विस्फुलिङ्गाः,
सहस्रशः प्रभवन्ते सरूपा.।
तथाक्षराद् विविधाः सौम्य भावाः,
प्रजायन्ते तत्र चैवापियन्ति॥

इत्यादिभि र्ब्रह्मणो जीवानामुत्पत्तिश्रवणात्।'

( ब्र० सू० १।४।२० श्रीभाष्ये )

एतदाचार्याश्मरथ्यमतं ब्रह्मसूत्रश्रीभाष्ये सूचितम्।

(४) आत्मानमात्मना वेत्सि सृजस्यात्मानमात्मना।
आत्मना कृतिना च त्वमात्मन्येव प्रलीयसे॥

( कुमारसम्भवे २-१० )

महाकविकालिदासेन तदानीन्तनप्रचलितसम्प्रदायसिद्धान्तानुसार-

मेतत्प्रोक्त स्यात्। श्रीसुरेश्वराचार्येणापि मानसोल्लासे जीवजन्म-विषय उदीरितम्।

आचार्यब्रह्मदत्तो जीवस्य जन्मादि मनुते, श्रीबादरायणश्च ब्रह्मसूत्रे जीवस्य जन्मादि निषेधति। बादरायणो सूत्रयति—'उत्पत्त्य-सम्भवात्' (ब्र० सू० २।२।४२) 'यावद् विकार तु विभागो लोकवत्' (ब्र० सू० २।३।७) तथा उत्पत्त्यसम्भवाधिकरणे वियदधि-करणे च जीवस्य जन्मादि सयुक्ति व्यावर्त्तयति। यदा श्रीयामुनाचार्य सिद्धित्रये (पृ० ५) श्रीब्रह्मदत्त ब्रह्मसूत्रभाष्यकर्तृत्वेन स्मरति तदाचार्यब्रह्मदत्त उक्तोभयाधिकरणे स्वमतानुसारमेव व्याचक्षीत। जीवस्य जन्मस्वीकारेण श्रीवेङ्कटाचार्यस् तत्त्वमुक्ताकलापस्य सर्वार्थसिद्धिटीकायाम् (२।१७) एनम्—औपनिषदाभासेत्युक्त्या परिहसितवान्।

सक्षेपशारीरकस्य श्रीपुरुषोत्तमप्रणीतसुबोधिनीटीकाया छान्दोग्य-वाक्यकारत्वेन ब्रह्मदत्तमेवाभिज्ञाय तस्य मायावादपक्ष वर्णितवान। जीवजन्मवादित्वेऽपि मायापक्षस्वीकारेण तस्याद्वैतवादिता स्पष्टी-कृता। यथा श्रीपुरुषोत्तमेन सक्षेपशारीरकस्य ३।२१७ श्लोकस्य टीकावतरणिकायामुक्तम्—

मायामात्र सर्वमेतन्न साम्प्रदायिकमिति चेन्न ब्रह्मदत्तादिभिरुक्त-त्वादित्याह—

आत्रेयवाक्यमपि संव्यवहारमात्रम्,
कार्यं समस्तमिति नः कथयाम्बभूव।
सत्कार्यवादविषयो न हि दोषराशिः,
मायामये भवितुमुत्सहते विरोधात्॥
(स० शा० ३।२१७)

सुबोधिनीकारश्रीपुरुषोत्तमेनात्र आत्रेयशब्देन श्रीब्रह्मदत्तोऽभिप्रेत इति मन्यते। तेनात्रेयो ब्रह्मदत्त इद सर्वं मायामय वदति। एव रीत्या ब्रह्मातिरिक्तस्य सर्वस्याविद्यकत्वस्वीकारेण ब्रह्मैवपरमार्थतत्त्व-स्वीकारेण च श्रीब्रह्मदत्तस्याद्वैतवादित्वम्।

अन्ये कथयन्ति यद् आत्रेय एव ब्रह्मनन्दो, यो हि छान्दोग्योपनिषदो वाक्यकाररूपेण प्रसिद्ध।

जगत्

आचार्यब्रह्मदत्तो जीववज्जगतोऽपि जन्म ब्रह्मणो मनुते। यथा तत्त्वमुक्ताकलापे ब्रह्मदत्तमतमुक्तम्—

'एक ब्रह्मैव नित्य तदितरदखिल तत्र जन्मादिभाक् ·· ·· ······।' इत्यादि।

( त० मु० क० २–१६ )

अत्र 'इतरदखिलम्' इति पदेन जगतोऽपि ग्रहणम्। सर्वार्थसिद्धिकारस्य सुबोधिनीटीकाया ब्रह्मदत्तमते जगत आविद्यकमित्युक्तम—

मोक्ष, मोक्षसाधन च

श्रीब्रह्मदत्तमते ब्रह्मणो जन्यस्य जीवस्य ब्रह्मणि लय एव मोक्ष उच्यते। अय लयोऽज्ञानापगमे सति जायते। अस्याज्ञाननाशस्योपायो मोक्षसाधन वा न केवल ज्ञान न वा केवल कर्म, किन्तूभय कर्म च ज्ञानं च। प्रथम तत्त्वमस्यादिभिरौपनिषदमहावाक्यैर्ब्रह्मण परोक्षज्ञान प्राप्य 'अहं ब्रह्मास्मि' इत्याकारकभावनया स्वस्मिन् चिरकालपर्यन्त ब्रह्माभ्यासः कार्य। एव दृढतराभ्यासबलेन ब्रह्मसाक्षात्काररूपज्ञाने-नाज्ञाननिवृत्ति। अतो ज्ञानाभ्याससमये कर्म न त्याज्यम्। तेनाह ब्रह्मास्मीतिज्ञानाभ्यासेन सह वैदिककर्मकरणेन ज्ञानकर्मसमुच्चय मङ्गीकुरुते। 'देवो भूत्वा देवानप्येति' इतिश्रुतेरपि तात्पर्यं ज्ञानकर्म-

समुच्चयपक्ष एव सङ्गच्छते। यतो ह्यस्मिन् पक्षे स्वस्मिन् ब्रह्म-भावनोपचयेन देवभावः साक्षात् क्रियते ततो देहपातानन्तरमुपास्य-देवत्वमवाप्यते। एतच्च ब्रह्मदत्तमतं श्रीसुरेश्वराचार्येण नैष्कर्म्य-सिद्धावुक्तम्—

'एवमुपसंहृते केचित् स्वसम्प्रदायबलावष्टम्भादाहुः—यदेतद् वेदान्तवाक्यादहं ब्रह्मेति विज्ञानं समुत्पद्यते, तन्नैव स्वोत्पत्तिमात्रेण अज्ञानं निरस्यति किं तर्हि अहन्यहनि द्राघीयसा कालेन उपासीनस्य सतः भावनोपचयात् निःशेषमज्ञानमपगच्छति 'देवो भूत्वा देवानप्येति' इति श्रुतेः।

( नै० सि० १।६७ )

श्रीज्ञानामृतविरचितविद्यासुरभिटीकानुसारमत्र 'केचित्' इति-पदेन ब्रह्मदत्तादयो गृह्यन्ते यथा पूर्वं सूचितम्। अस्या नैष्कर्म्यसिद्ध्यु-क्तेरर्थः श्रीज्ञानोत्तमविरचितचन्द्रिकाटीकायामेव स्पष्टीकृतः—

'वाक्यजन्यज्ञानोत्तरकालीनभावनोत्कर्षाद् भावनाजन्यसाक्षा-त्कारलक्षणज्ञानान्तरेणैव अज्ञानस्य निवृत्तिः, ज्ञानाभ्यासदशायां ज्ञानस्य कर्मणा समुच्चयोपपत्तिरित्येकदेशिनां मतमुत्थाप्य निरा-करोति—एवमुपसंहृत इत्यादिना।'

अस्मिन् मते यथा कर्मकाण्डभागो विधिप्रधानस्तथैव ज्ञानकाण्ड-भागोऽपि विधिप्रधानः। किन्तु कर्मकाण्डभागे कर्मविधिरत्र ज्ञानकाण्डे उपासनाविधिरिति भेदः। तेनात्र 'तत्त्वमसि' इत्यादिवाक्यानां न प्राधान्यं किन्तु 'आत्मा वा अरे' इत्यादि—विधिवाक्यानामेव प्राधान्यम्। वस्तुस्वरूपज्ञानं विना भावना न भवितुमर्हति। भावना, उपासना प्रसंख्यानञ्चैकमेव तत्त्वम्। अतो ब्रह्मस्वरूपावबोधार्थं 'तत्त्वमसि' इत्यादिवाक्यै र्ब्रह्मस्वरूपबोधानन्तरम् 'आत्मा वा अरे' इत्यादिवाक्यै र्ब्रह्मभावना क्रियते। तेन तत्त्वमस्यादिवाक्यं केवलं

ब्रह्मस्वरूपमात्रबोधकम् अज्ञाननिवृत्तिश्च भावनाजन्येन ज्ञानेनैव। अत आत्मा भावनाविधेय-शेष। एवं च कर्मकाण्ड ज्ञानकाण्डमुभयमपि साध्यविषयक न तु सिद्धविषयकम्। एतद् श्रीब्रह्मदत्तमत भगवता शङ्करेण बृहदारण्यकोपनिषद्भाष्य इत्यमभ्यधायि—

'अपरे वर्णयन्त्युपासनेनात्मविषय विशिष्ट विज्ञानान्तर भावये तेनात्मा ज्ञायतेऽविद्यानिवर्तक च तदेव नात्मविषय वेदवाक्यजनित विज्ञानमिति। एतस्मिन्नर्थे वचनान्यपि 'विज्ञाय प्रज्ञा कुर्वीत' 'द्रष्टव्य श्रोतव्यो मन्तव्यो निदिध्यासितव्य' 'सोऽन्वेष्टव्य' 'स विजिज्ञासितव्य' इत्यादीनि।'

( बृ० भा० उ० १।४।७ शा० भा० पृ० १३३-१३४ )

अथ भावनाविधिपक्षोऽन्यैराचार्यै र्नाङ्गीक्रियते। यथा भगवच्छङ्कर उपरिलिखित पक्ष खण्डयन्नाह—

'न अर्थान्तराभावात्, न च आत्मेत्येवोपासीत इत्यपूर्वविधिः, कस्मात् आत्मस्वरूपकथनानात्मप्रतिषेधवाक्यजनितविज्ञानव्यतिरेकेणार्थान्तरस्य कर्तव्यस्य मानसस्य बाह्यस्य वाभावात्। तत्र हि विधे साफल्य यत्र विधिवाक्यश्रवणमात्रजनितविज्ञानव्यतिरेकेण पुरुषप्रवृत्ति र्गम्यते। यथा दर्शपूर्णमासाभ्या स्वर्गकामो यजेत इत्यादौ।

( बृ० भा० उ० १।४।७ शा० भा० )

बृहदारण्यकभाष्यवार्तिकेऽप्येतन्निरस्तम्—

नियोगपक्षमाश्रित्य निष्यर्थामिममो यथा।
ऐकात्म्यसिद्धौ यत्नेन तथात्र प्रतिपाद्यते॥

( बृ० भा० उ० भा० वा०—स० वा० ७६१ )

अत्रानन्दगिरि र्व्याचष्टे—

'इह तु ब्रह्मदत्तादिमतेन ज्ञानाभ्यासे विधिमाशङ्क्य निरस्यते। तत्र पुनरुक्ति रित्याह—नियोगेति।

तत्त्वमुक्ताकलापे तस्य सर्वार्थसिद्धिवृत्तौ च श्रीवेङ्कटनाथेनैतत्पक्षं भृशमालोचितवान्। स कथयति—

**ध्यानाकृष्टेन साक्षात्कृतिरुपजनिता बाधते चेत्प्रपञ्चम्,**
**तत्तुल्यार्थैव शाब्दी प्रमितिरपि न किं बाधते पूर्वमेव।**
**ज्वालैक्यादौ परोक्षादपि हि निजगदु र्बाधमध्यक्षबुद्धे-**
**र्नाप्यत्रादृष्टरूपामहितविमथनीं शक्तिमङ्गीकरोषि॥**

( त०मु०क० २।४३ )

अत्र सर्वार्थसिद्धिवृत्तौ—

'अद्वैतिन केचिदाहु तत्त्वमस्याद्युपदेशलब्धब्रह्मात्मभावावबोधस्य तदेव ध्यानसाध्यादृष्टजन्यसाक्षात्कारेण विश्वभ्रमबाध इति तदनूद्य दूषयति–ध्यानेति।

**निर्दिष्टा निष्प्रपञ्चीकरणविधिरसौ गौडमीमांसकाप्तै-**
**र्दृष्टो न क्वापि निर्वहणमपि कारणाद् यत्र साध्याविशेषात्।**
**मुक्ति नैयोगिकी चेज्जगदपि न मृषा नश्वरी सापि ते स्यात्,**
**ध्वंसात्मकत्वेऽपि तस्या न च वदसि भिदां ब्रह्मणस्तच्च नित्यम्॥**

( तत्रैव २।४४ )

अत्र सर्वार्थसिद्धौ—

'अन्ये तु वर्णयन्ति नित्यशुद्धमद्वितीयं ब्रह्म गगनमिव गन्धर्वनगरवत्तया सप्रपञ्चतया प्रतीयमानं निष्प्रपञ्चीकुर्यात् इतिविधिविषयानुष्ठानजनितनियोगविशेषेण विश्वाविद्यानिवृत्तिरिति तान् प्रत्याचष्टे–निर्दिष्टेति।

ब्रह्मसूत्रशाङ्करभाष्येऽप्येतन्निरस्तम्—

'न तु निर्विशेषे ब्रह्मणि सामान्यविशेषरहिते चैतन्यमात्रात्मके प्रमोत्पत्तावभ्यासापेक्षा युक्तेति।

( ब्र० सू० ४।१।२ शा० भा० )

एतत्सूत्रस्य सम्पूर्णं शाङ्करभाष्यमवलोकनीयम्। अस्य भावनाविधेः खण्डनं बृहदारण्यकोपनिषद्भाष्यवार्तिके ७०२ (स० वा०), ८४५ (स० वा०) तथा २।८।२०२-२०९ (पृ० १०६६-१०६७) संक्षेपशारीरके १-३०७-३११ पञ्चपादिकायां पृ० २५२-२५३ द्रष्टव्यम्।

श्रीब्रह्मदत्तमते उपरिवर्णितभावनाविधिना स्वस्मिन् ब्रह्मभावनोपचयने ब्रह्मसाक्षात्कारे जातेऽपि देहपातानन्तरमेव ब्रह्मावाप्तिः। प्रारब्धकर्मारब्धदेहे सति देहे ब्रह्मावाप्तौ बाधको भवति। यथैतन्मतं बृहदारण्यकोपनिषद्भाष्ये भगवता शङ्करेणोक्तम्—

'देवो भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते।'

(बृ० आ० उ० ४।१।२)

तत्र भगवाञ्छङ्करः—

'देवो भूत्वा पुनः शरीरपातोत्तरकाले देवानप्येत्यपिगच्छति य एवं विद्वानेतदुपास्ते।'

एवमेव बृहदारण्यकभाष्यवार्तिकेऽपि—

भावनोपचयाद् देवो भूत्वा विद्वानिहैव तु।
देवानप्येति सोऽन्यादीन् शरीरत्यागतः परम्॥

(बृ० आ० उ० भा० वा० ४।१।२७)

ब्रह्मसूत्रे १।१।३१ शाङ्करभाष्येऽप्युपासनाविषये विचारः कृतो वर्तते। इदं विष्णुपुराणेऽपि—५।६।६४-६६, ७।२७।३०, ९३-९६।

भावनाजन्यप्रत्यक्षस्य समर्थनं बौद्धविदुषा धर्मकीर्तेः न्यायबिन्दुटीकायामप्युपलभ्यते। भाट्टमतेऽपि भावनापक्षः समादृतः।

प्रसंख्यानम्

श्रीब्रह्मदत्तः प्रसंख्यानमङ्गीकरोति। अन्ये वेदान्तिनो यथा 'दशमस्त्वमसि' वाक्येन साक्षात्कारो जायते तथैव 'तत्त्वमसि' इति महावाक्येन

ब्रह्मसाक्षात्कारो जायत इति मन्यन्ते । किन्तु प्रसंख्यानवादिन एव न मन्यन्ते । एतेषां मते तत्त्वमस्यादिमहावाक्येन ब्रह्मस्वरूपं विज्ञाय पुनरुपासनया ब्रह्मसाक्षात्क्रियते । अत्रोपसना भावना प्रसंख्यानमेकमेव तत्त्वम् । प्रसंख्यानशब्दार्थो नैष्कर्म्यसिद्धौ तट्टीकायां चन्द्रिकायां चैवमुपवर्णितः —

'प्रसंख्यानं नाम तत्त्वमस्यादिशब्दार्थान्वयव्यतिरेकयुक्तिविषयबुद्ध्या म्रेडनमभिधीयते, तच्चानुष्ठीयमानं प्रमितिवर्धनया परिपूर्णां प्रमितिं जनयति न पुनरैकाग्र्यवर्धनयेति ।

( नै० सि० ३।९० )

'प्रसंख्यानस्य चित्तैकाग्र्यसम्पत्त्य ।'

( नै० सि० ३।८९ च० टी० )

इत्थं तत्त्वमस्यादिमहावाक्येन केवलमुपासनाया विषयो निर्दिश्यते । तेन वेदान्तवाक्यजन्यज्ञानेन ब्रह्मसाक्षात्काररूपो मोक्षो न जायते । तस्माद् वेदान्तवाक्येन ब्रह्मस्वरूपं विज्ञाय ब्रह्मसाक्षात्करणार्थं प्रसंख्यानमुपासना चावश्यकम् । अत 'आत्मेत्युपासीत' इत्याद्युपनिषद्वाक्यानामुपासनाविधावेव तात्पर्यम् । एवं ब्रह्मसाक्षात्कार यावत्कर्म कर्तव्यमेव । श्रीब्रह्मदत्तो मनुते यत् तत्त्वमस्यादिवाक्यश्रवणेनात्मस्वरूपविषयकाखण्डाकारवृत्तिर्नोत्पद्यते । यतो हि शब्देषु तादृशी शक्तिर्नास्ति भावनाया प्रसंख्याने वा तादृशी शक्तिरस्ति यया तादृशाखण्डाकारावृत्तिरुदेति ।

आचार्यभर्तृप्रपञ्चो मण्डनमिश्रश्चापि प्रसंख्यानवादिनावास्ताम् । आचार्यभर्तृप्रपञ्चस्य साक्षात्प्रसंख्यानपक्षीयं वचनं नोपलभ्यते केवलं बृहदारण्यकोपनिषद्भाष्यवार्तिके नैष्कर्म्यसिद्धौ च तत्प्रसंख्यानखण्डनं प्राप्यते । श्रीमण्डनमिश्रस्तु ब्रह्मसिद्धौ बहुवारं प्रसङ्ख्यानपक्षमुत्थापितवान् । ब्रह्मसिद्धौ यथा—

साक्षात्प्रमिते ब्रह्मणि साक्षात्काराय प्रवृत्तेरिष्टत्वात् ।

( ब्र० सि० सि० का० ११ का० पृ० १५९ )

अथ शङ्कपाणि र्व्याचष्टे—'एवं तर्हि शब्दात् प्रमिते ब्रह्मणि तत्साक्षात्करणायोपासनाप्रवृत्तेः ।'

श्रीसुरेश्वराचार्येण श्रीभर्तृप्रपञ्चप्रसंख्यानपक्ष इत्थमालोचित —

विज्ञातस्य सतत्त्वस्य तादात्म्यप्रतिपादनम् ॥

( तत्रैव ७०७ )

भावनाज्ञानसन्तानैः प्रज्ञाकरणमुच्यते ।

( तत्रैव ७०८ )

तत्त्वमस्यादिवाक्योक्तौ शब्दमात्रावलोकनम् ॥

( वृ० आ० उ० भा० वा० ७१२, पृ० १८३७ )

तन्मनोऽथ परे तत्त्वे लब्धलक्ष्यं स्व आत्मनि ॥

( तत्रैव ७२२ )

परं तत्त्वं प्रदृश्यैवं मनस्यद्वैततां गते ।

विज्ञानं केवलं शुद्धं स्वात्मन्येवावतिष्ठते ॥

( तत्रैव वा० ७२३ )

श्रीमद्भर्तृप्रपञ्चस्य श्लोकव्याख्येयमीरिता ।

( तत्रैव वा० ७४१ )

मनेसैवेत्युपक्रम्य सा त्विदानीं विचार्यते ।

न्याय्याऽन्याय्येति वा यत्नाद् युक्तिभिः प्रविभागशः ॥

( तत्रैव ७४२ )

एवमेव श्रीसुरेश्वराचार्येण श्रीमण्डनाभिमत प्रसंख्यानपक्षोऽप्यालोचित —

तत्त्वमस्यादिवाक्योत्थविज्ञानेन यथोदितम् ।

विज्ञाय वस्त्वसंसर्गिप्रज्ञा कुर्वीत यत्नतः ॥

( वृ० भा० उ० भा० वा० ४।४।७६७ पृ० १८४२ )

**अन्ये तु पण्डितम्मन्याः सम्प्रदायानुसारतः ।**
**विज्ञायेति वचः श्रौतमिदं व्याचक्षतेऽन्यथा ॥**

( तत्रैव ७६६ )

श्रीसुरेश्वरेण नैष्कर्म्यसिद्धावपि मण्डनमिश्रस्य प्रसंख्यानपक्ष आलोचितः ।

**निराकुर्यात प्रसंख्यानं दुःखित्वं चेत् स्वनुष्ठितम् ।**
**प्रत्यक्षादिविरुद्धत्वात् कथमुत्पादयेत् प्रमाम् ॥**

( नै० सि० ३।८६ )

श्रीभर्तृप्रपञ्चश्रीमण्डनमिश्रयोः प्रमयानयोः कश्चिद् भेदो वर्तते । श्रीभर्तृप्रपञ्चो ब्रह्मणि कार्यकारणभावं सामान्यविशेषभावं च मनुते, श्रीमण्डनमिश्रश्च कार्यकारणभावमसामान्यविशेषभावं च मनुते । बृहदारण्यकोपनिषद्भाष्यवार्त्तिके ४।४।७९६ अस्यानन्दगिरिव्याख्याया चैतत्स्पष्टम् ।

श्रीशङ्कराचार्यस्तदनुयायिनश्च प्रसंख्यानं नाभिमन्यन्ते । ते तत्त्वमस्यादिमहावाक्यैरेवापरोक्षज्ञानं ब्रह्मसाक्षात्कारमविद्यानिवृत्तिं चाङ्गीकुर्वन्ति । एतेषां मत उपनिषदां तत्त्वमस्यादिमहावाक्य एव तात्पर्यम्, न तु 'आत्मेत्येवोपासीत' 'आत्मा वा अरे' इत्यादिविधिवाक्येषु ।

यथाह भगवाञ्छङ्कराचार्यः —

'वाक्यार्थविचारणाध्यवसाननिर्वृत्ता हि ब्रह्मावगतिः नानुमानादिप्रमाणान्तरनिर्वृत्ता ।

( ब्र० सू० १।१।२ शा० भा० )

यथा च श्रीसुरेश्वराचार्यः —

**सकृत्प्रवृत्त्या मृद्नाति क्रियाकारकरूपभृत् ।**
**अज्ञानमागमज्ञानं साङ्गत्यं नास्त्यतोऽनयोः ॥**

( नै० सि० ३।६७ )

यथा च पञ्चपादिकाविवरणे—

'तदेकाग्रचेतसा सहकारिणा शब्द एव औपनिषदम्' इति तद्धित-प्रत्ययसामर्थ्यादपरोक्षज्ञानमुत्पादयति।

( प० पा० वि० द्वि० व० पृ० ४५२ )

एतद्विषये विशेषज्ञानार्थं पञ्चपादिकायाम् २५२-२५३ पृ० द्रष्टव्यम्।

ब्रह्मसाक्षात्कारार्थं कर्मण उपयोगिता तु ब्रह्मदत्तादय प्रसङ्ख्यानवादिनस्तथा प्रसङ्ख्यानविरोधिन श्रीशङ्कराचार्यस्तदनुयायिनश्चोभयेऽपि मन्यन्ते। एतावानेव भेदो यदेके ब्रह्मसाक्षात्कार यावत् कर्मण आवश्यकता वदन्त्यपरे यावत्सत्त्वशुद्धि यावद्वैराग्य कर्मण आवश्यकता स्वीकुर्वन्ति। श्रीब्रह्मदत्तादयो मन्यन्ते यत् तत्त्वमस्यादिमहावाक्येन ब्रह्मस्वरूपावगत्यनन्तर भावनया, उपासनया वा ब्रह्म साक्षात्क्रियते। अतो ब्रह्मसाक्षात्कारपूर्वक्षणेऽपि भावनाकर्म विद्यते। तेन कर्म कदापि न त्याज्यम्। भगवत्पादश्रीशङ्कराचार्यादयस्तु उपासनादिकर्मणा सत्त्व-शुद्ध्यनन्तर वैराग्यावाप्त्यनन्तर वा तत्त्वमस्यादिमहावाक्यजन्यज्ञानेनोपाधिकारिभि सद्य एवाविलम्बमेव ब्रह्म साक्षात्क्रियते। अतो महा-वाक्यजज्ञानात्पूर्वक्षण एवोपासनादिकर्मणामुपयोगिता। अय भावो यदेतन्मत उपासनादिकर्म विना न सत्त्वशुद्धि, तथा सत्त्वशुद्धि विना न महावाक्यज यथार्थज्ञान न वा ब्रह्मसाक्षात्कार।

नैष्कर्म्यसिद्धौ श्रीब्रह्मदत्तस्य ज्ञानकर्मसमुच्चयपक्षो विशेषरूपेण खण्डित। तत्र त्रिविध कर्मज्ञानसमुच्चयो निरस्त प्रथम श्रीब्रह्मदत्तस्य, द्वितीय श्रीमण्डनमिश्रस्य, तृतीयो भेदाभेदवादिनामाचार्यभर्तृप्रपञ्चादीनाम्। श्रीब्रह्मदत्तस्य समुच्चयपक्षो यथा पूर्वमुल्लिखित—

'एवमुपमहृते केचित्स्वसम्प्रदायबलावष्टम्भादाहु यदिदद् वेदान्तवाक्या-दहं ब्रह्मेति विज्ञान समुत्पद्यते, तन्नैव स्वोत्पत्तिमात्रेणाज्ञान निरस्यति। किं तर्हि। अहन्यहनि द्राघीयसा कालेनोपासीनस्य सतो भावनोपचयान्नि-

शेषमज्ञानमपगच्छति 'देवो भूत्वा देवानप्येति' इति श्रुतेः। अपरे तु ब्रुवते वेदान्तवाक्यजनितमहं ब्रह्मेति विज्ञानं संसर्गात्मकत्वादात्मवस्तु यथात्म्यावगाह्येव न भवति। किं तर्हि। एतदेव गङ्गास्रोतोवत्सततमभ्यसतोऽन्यदेवावाक्यार्थात्मकं विज्ञानान्तरमुत्पद्यते। तदेवाशेषाज्ञानतिमिरोत्सारीति 'विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः' इति श्रुतेरिति। अस्य पक्षद्वयस्य निवृत्त्य इदमभिधीयते।

सकृत्प्रवृत्त्या मृद्नाति क्रियाकारकरूपभृत्।
अज्ञानमागमज्ञानं साङ्गत्यं नास्त्यतोऽनयोः॥
(नैं०सि० १।६७)

अत्र केचित् इत्यादिना प्रोक्तः समुच्चयपक्षः श्री ब्रह्मदत्तस्य तथा 'अपरे' इत्यादिना प्रोक्तः समुच्चयपक्षः श्रीमण्डनमिश्रस्य। अग्रे च—

अनुत्सारितनानात्वं ब्रह्म यस्यापि वादिनः।
तन्मतेनापि दुस्साध्यो ज्ञानकर्मसमुच्चयः॥
(नैं०सि० १।६८)

अत्र श्रीज्ञानोत्तमश्चन्द्रिकायां व्याचष्टे—

सम्प्रति द्वैताद्वैतं ब्रह्मेत्यभ्युपगमेऽपि न समुच्चय इत्याह एवं तावदिति। अनुत्सारितेति।

एतेषां समुच्चयत्रय एतावानेव भेदो यद् श्रीब्रह्मदत्तस्तत्त्वमस्यादिमहावाक्येन ब्रह्मस्वरूपावगत्यनन्तरमुपासनया ब्रह्मसाक्षात्कार इति मन्यते। श्रीमण्डनोऽपि तद्वद् उपनिषद्वाक्यानामुपासनायामेव तात्पर्यं तथा 'तत्त्वमसि' इत्यादिवाक्यं विधिवाक्याधीनमेव शाब्दज्ञानान्तरमुपासनयैव ब्रह्मसाक्षात्कार इति मन्यते। किन्तु श्रीमण्डन एव कथयति यत्सर्वं वैदिकं तथा लौकिकं वाक्यं संसर्गात्मकमेव वाक्यार्थमवगमयति ब्रह्म तु अवाक्यार्थप्रतिपत्तिविषयकम्, अतः संसृष्टात्मकवाक्यार्थबोधेन तद्रूपं ब्रह्म नावगन्तुं शक्यते तेन तत्त्वमस्यादिवाक्यं 'अहं ब्रह्म' इत्याकारकं संसर्गात्मकं ज्ञानं

पूर्वमुत्पद्यते । ततः प्रत्यगात्मविषयकम् 'अहं ब्रह्म' इत्याकारकम्, अवाक्यार्थरूपं ज्ञानं यावन्नोदेति तावत्कालपर्यन्तमुपासना, भावना, निदिध्यासनाभ्यासो वा कार्यः । उक्तभावनया तादृशे ज्ञानोदये सति कैवल्यमनुभूयते । एवं शाब्दज्ञानानन्तरं ब्रह्मसाक्षात्कारमध्ये उपासनाया आवश्यकतया ज्ञानकर्मसमुच्चयः समुपपद्यते । भेदाभेदवादिना श्रीभर्तृप्रपञ्चादीनां मते तु ज्ञानकर्मसमुच्चयः साधु सगच्छत एव । भेदाभेदयोरुभयोः सत्यत्वेन, भेदसत्यत्वेन कर्मापेक्षा, अभेदसत्यत्वेन ब्रह्मोपलब्ध्यै ज्ञानापेक्षा । एवं मुक्तमुमुक्षूणां सर्वेषां कृते मया ज्ञानकर्मणोरपेक्षया ज्ञानकर्मसमुच्चयवादः सम्यगुपपद्यते । एतेषां मते ब्रह्मापि भिन्नाभिन्नात्मकमेव । अतो ज्ञानकर्मसमुच्चयस्य सर्वाधिक उपयोगोऽस्मिन्मत एव ।

## जीवन्मुक्ति

ध्याननियोगवादी श्रीब्रह्मदत्तो जीवन्मुक्तिं न मन्यते । अस्य मते प्रारब्धकर्मणा लब्धो देहो ब्रह्मावाप्तौ बाधको भवति । देहपातानन्तरमेव ब्रह्मावाप्तिर्मोक्षो वा । एतच्च बृहदारण्यकोपनिषद्भाष्यवार्तिके नैष्कर्म्यसिद्धेश्चन्द्रिकाटीकायां च समुद्धृतम्—

भावनोपचयाद देवो भूत्वा विद्वानिहैव तु ।
देवानप्येति मोऽग्र्यादीन् शरीरत्यागतः परम् ॥
( बृ० भा० उ० भा० वा० ४।१।७७ पृ० १३५७ )

अथाध्यात्मं पुनर्यायादाश्रितो मूढतां व्रजेत् ।
स करोत्येव कर्माणि को ह्यज्ञं निवारयेत ॥
( नै० सि० १।७६ )

अत्र चन्द्रिकायामुक्तम्—

अवगतपरमार्थतत्त्वोऽपि पुनः कार्यकारणसङ्घातेऽहमभिमानवान् भवतीत्यर्थः । परिहरति आश्रित इति । एवं चेन्नासौ विदितपरमार्थतत्त्वः किं त्वज्ञ एव विपरीतदर्शनत्वात् ।

श्रीब्रह्मदत्तमते मोक्षोऽदृष्टफलम्। शाङ्करमते तु मोक्षो दृष्टफलम्। अत शाङ्करमते जिज्ञासोत्पद्यते मोक्षो न। तेन भगवता शङ्करेण ऐतरेयभाष्योपद्घात उक्त यद् जीवन्मुक्तावस्थाया कर्मसन्यास स्वत प्राप्त। सत्त्वशुद्धौ वैराग्ये च कर्मसन्यासो विधिप्राप्त। एवमेवोपासना-विधिपक्षेऽपि श्रीब्रह्मदत्तश्रीशङ्कराचार्यमते विभेद। शाङ्करमते ज्ञानाद् भिन्नोपासना। उपासनाया विधि सम्भवत्यपि ज्ञाने न सभवति। यथोक्त भगवता श्रीशङ्करेण—

ध्यान चिन्तन यद्यपि मानस तथापि पुरुषेण कर्तुमकर्तुमन्यथा वा कर्तुं शक्य पुरुषतन्त्रत्वात्। ज्ञान तु प्रमाणजन्यम्। प्रमाण च यथाभूत वस्तुविषयम्। अतो ज्ञान कर्तुमकर्तुमन्यथा वा कर्तुमशक्य केवल वस्तु-तन्त्रमेव तत्। न चोदनातन्त्रम्, नापि पुरुषतन्त्रम्। तस्मात् मानसत्वे-ऽपि ज्ञानस्य महद् वैलक्षण्यम्।

( ब्र० सू० १।१।४ शा० भा० )

श्रीब्रह्मदत्तस्तु ज्ञानोपासनयो र्भेद नाङ्गीकरोति। तेनात्मज्ञानेऽपि विधि मन्यते। अतएव आत्मा वा अरे इत्यादिविधिवाक्या नामस्मिन् मते प्राधान्य न तु 'तत्त्वमसी त्यादिवाक्यानाम्। यतो हि वस्तुस्वरूपज्ञान विना भावनोपासना वा न सभवति। अतस्तत्त्वमस्यादि-वाक्याना वस्तुस्वरूपमात्रबोधकत्वेनाप्राधान्यम् उपासनाविधेश्च प्राधान्यम्। तेनात्मा उपासनाविधे शेषोऽस्ति। अस्मिन् मते पूर्वोत्तरमीमासयोरेतावानेव भेदो यत्पूर्वमीमासा कर्मविधि, उत्तरमीमासा भावनाविधि।

### ध्याननियोगवादी

अथ श्रीब्रह्मदत्तो ध्याननियोगवादी न तु नियोगवादी। नियोगवादी स उच्यते यस्तत्त्वपदार्थसशोधनद्वारा ब्रह्मात्मबोध मनुते यथा भगवाञ्छ-ङ्कराचार्यस्तदनुयायिनश्च। यथा—

*नियोगपक्षमाश्रित्य विध्यर्थासम्भवो यथा ।*
*ऐकात्म्यसिद्धौ यत्नेन तथात्र प्रतिपद्यते ॥*

( बृ० आ० उ० भा० वा० ७९७ स० वा० पृ० २१६ )

*अत्रानन्दगिरि व्याचष्टे*—

'इह तु ब्रह्मदत्तादिमतेन ज्ञानाभ्यासे विधिमाशङ्‌क्य निरस्यते तन्न पुनरुक्तिरित्याह–'नियोगेति' । यस्तु तत्त्वमस्यादिवाक्यद्वारा ब्रह्मस्वरूपमवगत्य भावनया निदिध्यासनेन वा ब्रह्म साक्षात्कुरुते स ध्याननियोगवादी कथ्यते । श्रीभाष्ये श्रीशङ्‌करानुयायिनो जरन्नियोगवादिन उक्ता । श्रुतप्रकाशिकायां च 'जरन्नियोगवादिन' इत्यस्य व्याख्याने शाङ्‌करा एवाभिप्रेता ।[८] श्रीभाष्य इदमप्युक्त यद् ध्याननियोगवादिनो जीवन्मुक्ति नाभिप्रयन्ति ।[९] श्रीशङ्‌करमते यथा सत्त्वशुद्ध्या वैराग्येण वा ज्ञानमुत्पद्यते ब्रह्मदत्तमते तु सत्त्वशुद्धया वैराग्येण वा भावना जायते ।

**श्रीब्रह्मदत्ताचार्यस्य समासत इमे सिद्धान्ताः**

१—ब्रह्मणो जीवो जायते ब्रह्मणि च लीयते ।

२—उपनिषद्वाक्येषु–'आत्मा वा अरे' इत्यादिवाक्यानां प्राधान्यं न तु तत्त्वमस्यादीनां वाक्यानां प्राधान्यम् ।

३—भावनाया प्राधान्यं न नियोगस्य ।

४—जीवो वस्तुतो न ब्रह्मणो दूरे यतः स ब्रह्मैव भवितुं वाञ्छति ।

५—कर्मणा भावनासिद्धी, सिद्धभावनया जीवब्रह्मणोरैक्यम्, तदा ब्रह्मण पृथग् जीवस्य सत्तैव न भवति ।

६—*ब्रह्मदत्तस्य जीवो विज्ञानवादिनामिव प्रतिभाति ।*

७—श्री ब्रह्मदत्तस्य जीवश्चार्वाकादीनां जीव इव नश्वर ।

८–श्रीभाष्य पृ० ३३, २५१ तथा २५५ निर्णयसागर प्रेस बम्बई प्रा० ।
९–श्रीभाष्ये पृ० २५७-२६० ।

८—श्रीब्रह्मदत्तस्य जीवः पौराणिकानां जीव इव, यथा पौराणिकानां जीवः प्रलयकाले शरीरेण सह प्रलयं याति तथैव श्रीब्रह्मदत्तजीवो ब्रह्मणि लीयते ।

९—वेदान्तिनां विशेषतः शाङ्करसम्प्रदाये यथा मोक्षे जीवस्य पृथक् सत्ता समाप्यते तथैवास्मिन्नपि मते मोक्षावस्थायां जीवस्य पृथक् सत्ता नावतिष्ठते ।

१०–श्रीब्रह्मदत्तो नैयायिकवद् असत्कार्यवादी प्रतीयते ।

११–अयं ध्याननियोगवादी ।

१२–अयं जीवन्मुक्तिं न मन्यते ।

१३–एतन्मते 'देवो भूत्वा देवानप्येति' इति श्रुत्यनुसारं देहपातानन्तरमेव ब्रह्मावाप्तिः ।

१४–अयं श्रीभर्तृप्रपञ्चमण्डनमिश्राभिप्रेतज्ञानकर्मसमुच्चयादन्यविधं ज्ञान-कर्मसमुच्चयं मनुते ।

१५–अयं प्रसंख्यानवादी ।

### जीवब्रह्मणोरभेद

आचार्यब्रह्मदत्तमते जीवब्रह्मणो भेदोऽभेदो वेति स्पष्टं न प्रतीयते, किन्तु 'अहं ब्रह्मास्मि' इति भावनादार्ढ्येन मोक्षो भवतीतिकथनेन मोक्षार्थमभेदबुद्धिरावश्यकीति प्रतीयते । अभेदवादिभिरन्यैरप्याचार्यैः मोक्षार्थं जीव-ब्रह्मणोरभेदबुद्धिरावश्यकीति प्रादर्शि । अतोऽस्य मते यदि जीवब्रह्मणो र्भेदस्तर्हि तयोरैक्यभावनया ब्रह्मणि लयो जायेतेति मन्यते । यदि जीव-ब्रह्मणोरंशांशिभावोऽथवा अभेदस्तर्ह्यभेदभावनया भेदनिवृत्तिः भेदनिवृत्त्या अभेदस्फुरणं ब्रह्मसाक्षात्कारो मुक्तिर्वा । अतएव च आत्मनि विज्ञाते सर्वं-विज्ञातं भवतीतिप्रतिज्ञासिद्धिरस्यमतेऽपि जायते ।

एवमयमाचार्यब्रह्मदत्तो ब्रह्मैव केवलं नित्यं ब्रह्मातिरिक्तं सर्वमनित्यं मनुते । अयं जीवस्य जगतश्च जन्म मन्यते । मोक्षावस्थायां च ब्रह्मणि जीवस्य लयं मन्यते । एवम्भूतोऽपि मायावादित्वेनास्तं ब्रह्मणि लय इति

स्वीकारेण मोक्षावस्थाया जीवब्रह्मणोरैक्यस्वीकाराच्चायमद्वैतवादीति कथ्यते। मोक्षसाधनविषयेऽयं ज्ञानकर्मसमुच्चवादमङ्गीकरोति। अस्य मतेऽज्ञाननिवृत्तिर्वेदान्तमहावाक्यजन्यज्ञानेन न भवति, किन्तु वेदान्तवाक्यश्रवणेन 'अहं ब्रह्मास्मि' इत्याकारकं ज्ञानमुत्पद्यते। एवंविधज्ञानानन्तरं तदाकारभावना क्रियते। भावना, उपासना प्रसंख्यानमेकमेव तत्त्वम्। भावनोत्कर्षेणापरोक्षं ज्ञानं जायते। तदा पूर्णतया अज्ञानं नश्यति। 'देवो भूत्वा देवानप्येति' इतिश्रुतेरप्यत्रैव तात्पर्यम्। अहं ब्रह्मास्मीत्युक्तभावनोपचयेन ब्रह्मभावस्य साक्षात्कारस्तथा देहपातानन्तरं ब्रह्मभावापत्तिः अतो ज्ञानाभ्याससमये कर्मणा सह ज्ञानस्य समुच्चयं सगच्छते। ब्रह्मदत्तमते यथा कर्मकाण्डे विधिप्राधान्यं तथैव ज्ञानेऽपि विधिप्राधान्यम् किन्त्वियान् भेदो यत् कर्मकाण्डे कर्मविधि, ज्ञाने चोपासना विधि। उपासना भावना प्रसंख्यानं च नामान्तरमिति पूर्वमुक्तमेव। अस्य मतं 'आत्मेत्येवोपासीत' इत्युपासनाविधावेव उपनिषद्वाक्यानां तात्पर्यन्नतु 'तत्त्वमसि' इत्यादिमहावाक्यजज्ञाने। तत्त्वमस्यादिवाक्यं केवलमुपासनाया विषयं निर्दिशति। मुक्तये प्रसंख्यानस्यावश्यकता।

श्रीब्रह्मदत्तश्रीशङ्कराचार्ययोरियान् भेदो यद् ब्रह्मदत्तो वेदान्तमहावाक्यजन्यज्ञानानन्तरं ब्रह्मसाक्षात्कारार्थं ध्यानमुपासनां वावश्यकं मन्यते। भगवांश्छङ्करस्तु उत्तमाधिकारिणा कृते महावाक्यजन्यज्ञानानन्तरमविलम्बमेव ब्रह्मसाक्षात्कारं मन्यते। अज्ञाननिवृत्यर्थं कर्मण आवश्यकता तूभावपि मन्वाते, किन्तु ब्रह्मदत्तो वेदान्तमहावाक्यजज्ञानानन्तरमपि कर्मण आवश्यकतां ब्रवीति, श्रीशङ्करस्तु तत्त्वमस्यादिमहावाक्यजज्ञानपूर्वक्षणपर्यन्तमेव कर्मण आवश्यकतां स्वीकरोति। एवं ब्रह्मदत्तमते औपनिषदज्ञानानन्तरं मुक्त्यवस्थामध्ये वैदिककर्मणामनुष्ठानमावश्यकम्।

श्रीब्रह्मदत्तसमान एव श्रीमण्डनस्यापि समुच्चयवादः। किन्तु एतवान् भेदो यद् वाक्यजं सर्वं ज्ञानं संसर्गात्मकं भवति। अतोऽहं ब्रह्मास्मीति-

दान्तवाक्यज ज्ञान ससर्गात्मकमेव । अत एतत्ससर्गात्मकज्ञानानन्तरम् असंसर्गात्मकज्ञानार्थं भावनोपासना वा आवश्यकी । अत 'तत्त्वमसि' इतिमहावाक्यजाहब्रह्मास्मीतिससर्गात्मकज्ञानानन्तर यावत्काल प्रत्यगात्मविषयकम् 'अह ब्रह्म', इत्याकारकम्, असंसर्गात्मकम्, असंसृष्टात्मकम्, अवाक्यार्थरूप ज्ञान नाविर्भवत् तावत्काल निदिध्यासनाभ्यास कार्यं । महावाक्येन ससर्गात्मकमेव ज्ञान जायते, अतोऽवाक्यार्थप्रतिपत्तयेऽखण्डाकारज्ञानप्रतिपत्तये च महावाक्यजज्ञानब्रह्मसाक्षात्कारयोर्मध्ये ध्यानस्यावश्यकता । अत प्रसख्यानपक्षवाद्य कथ्यते । श्रीमण्डनमते 'विज्ञाय प्रज्ञा कुर्वीत' इति श्रुते सङ्गतिरित्थ जायते यत् ससृष्टरूपब्रह्मज्ञानानन्तर प्रज्ञा अर्थात् साक्षात्कारात्मकस्य असंसर्गात्मकस्य ज्ञानस्याभ्यास कार्यं । अय जीवन्मुक्ति नाभिमनुते । अस्य मते मोक्षोऽदृष्टफल श्रीशङ्करमते तु मोक्षो दृष्टफलम् ।

इत्य श्रीब्रह्मदत्तस्याद्वैतसिद्धान्त सर्वाद्वैतवेदान्तिसिद्धान्तेभ्यो विलक्षण एव ।

— ❀ —

श्रीहरिः

# दशमोऽध्यायः

## आचार्यसुन्दरपाण्ड्य

आचार्यसुन्दरपाण्ड्यो भगवत्शङ्कराचार्यात् प्राचीनतमो वेदान्त्यासीत्। अस्य स्थितिकालः कैश्चन ६५० ई० मन्यते।[1] अयं पाण्ड्यराजकुजवर्द्धन, अथवा कुलपाण्ड्य इति नामभ्यामपि प्रसिद्ध आसीत्। अस्योपाधि 'अरिकेशरि' इत्यासीत्। प्रसिद्ध शैवाचार्य तिरुज्ञानसम्बन्धरोऽस्य समसामयिकोऽभवत्। अस्य शैवाचार्यतिरुज्ञानसम्बन्धरप्रभावेणाचार्यसुन्दरपाण्ड्या जैनधर्मं परित्यज्य शैवधर्ममङ्गीकृतवान्। अयं स्वीयोपासनामहिम्ना प्रसिद्धेषु निषष्टिशैवाचार्येषु प्रमुखस्थानमलभत। इदमपि केषाञ्चन मतं यन्महाराजनेडूमारणस्यापरं महाराजनायनरस्यैवापरं नाम सुन्दरपाण्ड्य इत्यासीत्। इयमपि प्रसिद्धिर्यदयं चोलराजकुमार्या सह परिणयमकरोत्।[2]

---

१ द्र० म० म० श्रीगोपीनाथकविराजमहोदयानां—'शंकर स पूर्व के आचार्य' इति शीर्षको लेखः, "कल्याण" पत्रिकाया १९९३ वै० स० वेदान्ताङ्के ६३८ पृष्ठे प्रकाशितः।

२ आचार्यसुन्दरपाण्ड्यस्य स्थितिकालविषय इतिवृत्तार्थं चेमे लेखा द्रष्टव्याः—

(क) म० म० श्री गो० ना० क० महोदयानाम्—"वेदान्तदर्शन की भूमिका" पृ० १७ १८, 'सुन्दरपाण्ड्य' इति शीर्षको लेखः।

(ख) म० म० श्रीकुप्पूस्वामिशास्त्रिणाम्—"सम प्रोब्लेम्स् आफ आईडेन्टिटी इन दी कल्चरल हिस्ट्री आफ एनसियण्ट इण्डिया" इति शीर्षको लेख, जर्नल आफ ओरियण्टल रिसर्च मद्रास (१९२७ ई०) पत्रिकाया प्रथमखण्डे पृ० १ १५ प्रकाशितः।

(ग) एषा श्री कु० स्वा० शा० महाभागानामपरो लेखः वाधायन एण्ड द्रविडाचार्य टू प्राइड वेदान्तिन्स प्रेस्पोज्ड बाई रामानुज—प्रासीडिंग आफ थर्ड ओरियण्टल कान्फ्रेंस मद्रास पृ० ४६५ ४६८ इत्यत्र प्रकाशितः।

अस्य वेदान्तविषयको ग्रन्थोऽधुना नोपलभ्यते, केवल वेदान्तविषयकाणि श्लोकवार्त्तिकानि कतिपयानि पूर्वमीमांसाग्रन्थे उत्तरमीमांसाग्रन्थे च प्राप्यन्ते। अनेनेदमनुमीयते यदयमुभयोर्मीमांसयोराचार्य आसीत्। वेदान्तविषयकाणां प्राप्तवार्त्तिकाणां विषये विदुषामिदमनुमानं यदिमानि वार्त्तिकाणि किञ्चित्प्राचीनं वेदान्तसूत्रभाष्यम् अथवा काचिद् वेदान्तवृत्तिं वाधृत्य विरचितानि। तद् भाष्यं कस्येति न निर्णीतम्, सा च वृत्तिं बौधायनस्योपवर्षस्य वेत्यपि न निर्णीतम्।[3]

ब्रह्मसूत्रशाङ्करभाष्ये तन्त्रवार्त्तिके सूतसंहितायास्तात्पर्यटीकायां तत्तद्व्याख्यानेषु च सुन्दरपाण्ड्याचार्यस्य वार्त्तिकानि तदीयवेदान्तसिद्धान्ताश्चोपलभ्यन्ते।

ब्रह्मसूत्रशाङ्करभाष्ये यथा—**अपि चाहुः**—

**गौणमिथ्यात्मनोऽसत्त्वे पुत्रदेहादिबाधनात्।**
**सद् ब्रह्मात्माहमित्येवं बोधे कार्यं कथं भवेत्॥१॥**
**अन्वेष्टव्यात्मविज्ञानात् प्राक्प्रमातृत्वमात्मनः।**
**अन्विष्टः स्यात्प्रमातैव पाप्मदोषादिवर्जितः॥२॥**
**देहात्मप्रत्ययो यद्वत्प्रमाणत्वेन कल्पितः।**
**लौकिकं तद्वदेवेदं प्रमाणं त्वात्मनिश्चयात्॥३॥**

( ब्र० सू० १।१।४ शा० भा० )

इमानि त्रीण्यपि वार्तिकानि श्रीसुन्दरपाण्ड्यस्य सन्ति। यद्यप्यत्र भामत्यां रत्नप्रभायां न्यायनिर्णये च क्रमशः—'ब्रह्मविदां गाथा' 'ब्रह्मविदां गाथा' 'ब्रह्मविद्भिः' इतिपदैः वार्तिककारस्य परिचयो लेभि। किन्तु पञ्चपादिकायाः प्रबोधपरिशोधिनीटीकायां श्रीनृसिंहस्वरूपस्य शिष्येण

३ अस्मिन्नेवाध्याये २सङ्ख्याङ्कितटिप्पणीनिबद्धौ श्रीकुप्पूस्वामिशास्त्रिलेखौ द्रष्टव्यौ।

श्रीमदात्मस्वरूपेण नामग्राहपूर्वकं श्रीसुन्दरपाण्ड्यस्यैवेमानि वार्त्तिकानीति प्रतिपादितम् । उपरिलिखितम्—'अपि चाहुः' इतिशाङ्करभाष्यप्रतीकमादाय पञ्चपादिकायामिदमुक्तम्—[४]

'अपि चाहुरिति प्रसिद्धमेतत् ब्रह्मविदामिति पूर्वोक्तं न्यायं सक्षेपतः श्लोकैः सगृह्णाति ।

( पञ्चपादिकाया पृ० ३७३ )

अत्र प्रबोधपरिशोधिन्यामुक्तम्—

'श्लोकत्रयं सुन्दरपाण्ड्यप्रणीतं प्रमाणयतीत्याह प्रसिद्धमिति ।

( प० पा०–प्र० प० पृ० ३७३ )

एतेषां वार्त्तिकानां भाष्यग्रन्थेन व्याख्याग्रन्थेन चाचार्यसुन्दरपाण्ड्यस्य वेदान्तसिद्धान्ता इत्यमगवन्तु शक्यन्ते । यथा वार्त्तिकोद्धरणात्पूर्वं शाङ्करभाष्ये—

"तस्मादहं ब्रह्मास्मीत्येतदवसाना एव सर्वे विधयः सर्वाणि चेतराणि प्रमाणानि । नह्यहेयानुपादेयाद्वैतात्मावगतौ निर्विषयकाण्यप्रमातृकाणि च प्रमाणानि भवितुमर्हन्तीति। अपि चाहुः—गौणमिथ्यात्मनः ।'

( ब्र० सू० १।१।४ शा० भा० )

अनेन ब्रह्मज्ञानात्पूर्वमेव प्रमाणानामपेक्षा, अद्वैततत्त्वज्ञाने तु न विषयविषयिभावो न वा प्रमेयप्रमातृत्वभाव, सर्वोऽपि लोकव्यवहारोऽद्वैतब्रह्मतत्त्वावगतेः पूर्वमेव प्रतीयते । अतो ब्रह्मातिरिक्तं सर्वं मिथ्येत्यवगम्यते ।

अत्र भामत्यामिदं स्पष्टमुक्तम्—

"न केवलं सिद्धरूपत्वाद् ब्रह्मात्मैक्यस्य धर्मादन्यत्वम् अपि तु तद्विरोधादपीत्युपसंहारव्याजेनाह-तस्मादहं ब्रह्मास्मीति । इतिकरणेन ज्ञानं परामृशति । विधेयो हि धर्मः प्रमाणम् । तं च साध्यसाधनेतिकर्तव्यताभेदाधिष्ठाना धर्मोत्पादिनश्च तदधिष्ठाना न ब्रह्मात्मैक्ये सति प्रभवन्ति,

४. ओरियण्टल गवर्नमेण्ट मैनुस्क्रिप्ट लाईब्रेरी, मद्रास, १९५८ ई० प्रकाशिताया पञ्चपादिकायाम् ।

विरोधादित्यर्थः । न केवलं धर्मप्रमाणस्य शास्त्रस्यैव गतिः, अपि तु सर्वेषां प्रमाणानामित्याह-सर्वाणि चेतराणि प्रमाणानीति । कुतः, नहीति । अद्वैते हि विषयविषयिभावो नास्ति । न च कर्तृत्वं कार्याभावात् । न च करणत्वम्, अत एव । तदिदमुक्तम्—अप्रमातृकाणि च । इति चकारेण । अत्रैव ब्रह्मविदां गाथामुदाहरन्ति-अपि चाहुरिति । पुत्रदारादिष्वात्माभिमानो गौणः । यथा स्वदुःखेन दुःखी यथा स्वसुखेन सुखी तथा पुत्रादिगतेनापीति सोऽयं गुणः । न त्वेकत्वाभिमानः, भेदस्यानुभवसिद्धत्वात् । तस्माद् गौर्वाहीक इतिवद् गौणः, देहेन्द्रियादिषु त्वभेदानुभवान्न गौण आत्माभिमानः, किन्तु शुचौ रजतज्ञानवान् मिथ्या, तदेव द्विविधोऽप्यमात्माभिमानो लोकयात्रां वहति । तदसत्त्वे तु न लोकयात्रा, नापि ब्रह्मात्मैकत्वानुभवः, तदुपायस्य श्रवणमननादेरभावात् । तदिदमाह पुत्रदेहादिबाधनात् । गौणात्मनोऽसत्त्वे पुत्रकलत्रादिबाधनम् । ममकाराभाव इति यावत् । मिथ्यात्मनोऽसत्त्वे देहेन्द्रियादिबाधनं श्रवणादिबाधनं च । ततश्च न केवलं लोकयात्रासमुच्छेदः सद् ब्रह्माहमित्येवबोधशीलं यत्कार्यम् । अद्वैतसाक्षात्कार इति यावत् । तदपि कथं भवेत् । कुतस्तदसंभव इत्यत आह-अन्वेष्टव्यमात्मविज्ञानात् प्राक्प्रमातृत्वमात्मनः । उपलक्षणं चैतत् । प्रमाप्रमेयप्रमाणविभाग इत्यपि द्रष्टव्यम् । एतदुक्तं भवति एष हि विभागोऽद्वैतसाक्षात्कारकारणं ततो नियमेन प्राग्भावात् । तेन तदभावे कार्यं नोत्पद्यत इति । न च प्रमातुरात्मनोऽन्वेष्टव्य आत्मान्य इत्याह-अन्विष्टः स्यात्प्रमातैव पाप्मदोषादिवर्जितः । उक्तं ग्रीवास्थग्रैवेयकनिदर्शनम् । स्यादेतत् । अप्रमाणात्कथं पारमार्थिकाद्वैतानुभवोत्पत्तिरित्यत आह-देहात्मप्रत्ययो यद्वत् प्रमाणत्वेन कल्पितः । लौकिकं तद्वदेवेदं प्रमाणं तु । अस्यावधिमाह-आत्मनिश्चयात् । आ ब्रह्मस्वरूपसाक्षात्कारादित्यर्थः । एतदुक्तं भवति पारमार्थिकप्रपञ्चवादिभिरपि देहादिष्वात्माभिमानो मिथ्येति वक्तव्यम्, प्रमाणबाधितत्वात् । तस्य च समस्तप्रमाणकारणत्वं भाविकलोकयात्रावाहित्वं चाभ्युपेयम् । सेयमस्माकमप्यद्वैतसाक्षात्कारे विधा भविष्यति ।

न चायमद्वैतसाक्षात्कारोऽप्यन्तःकरणवृत्तिभेद एवान्ततः परमार्थः। यस्तु साक्षात्कारो भाविकः नासौ कार्यं, तस्य ब्रह्मस्वरूपत्वात्। अविद्या तु यद्यविद्यामुच्छिन्द्यादञ्जनमेवेद्धा न तत्र काचिदनुपपत्तिः। तथा च श्रुतिः विद्यां चाविद्यां च यस्तद्वेदोभय सह। अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते। इति।

( ब्र० सू० १।१।४ शा० भा० भामत्याम् )

अत्र रत्नप्रभायामुक्तम्—

'ब्रह्म न कार्यमेव, तद्बोधात्प्रागेव सर्वव्यवहारः इत्यत्र ब्रह्मविदां गाथामुदाहरति- अपि चेति। सदबाधितं ब्रह्म पूर्णमात्मा विषयाभावात् इति सर्वसाक्ष्यहमित्येव बोधे जाते सति पुत्रदेहादेः सत्ताबाधनात् मायामात्रत्वनिश्चयात् पुत्रदारादिभिरहमिति स्वीयत्वमुखभावत्वगुणयोगाद् गौणात्माभिमानस्य नरोऽहं कर्ता मूढ इति मिथ्याभिमानस्य च सर्वव्यवहारहेतोरसत्त्वे कार्यं विधिनिषेधादिव्यवहारः कथं भवेत्, हेत्वभावान्न कथंचिद् भवेदित्यर्थः। नन्वहं ब्रह्मेति बोधो बाधितः, अहमर्थस्य प्रमातुः ब्रह्मत्वायोगादित्याशङ्क्य प्रमातृत्वस्याज्ञानविलसितान्तःकरणतादात्म्यकृतत्वान्न बाधः इत्याह- अन्वेष्टव्येति।' य आत्मापहतपाप्मा विजरो विमृत्युः विशोकः सोऽन्वेष्टव्यः इतिश्रुतेः ज्ञातव्यपरमात्मविज्ञानात्प्रागेवाज्ञानाच्चिद्धातोरात्मनः प्रमातृत्वं प्रमातैव ज्ञातः सन् पाप्मरागद्वेषमरणविवर्जितः परमात्मा स्यादित्यर्थः। प्रमातृत्वस्य कल्पितत्वे तदाश्रितानां प्रमाणानां प्रामाण्यं कथमित्यत आह-देहेति। यथा देहात्मत्वप्रत्ययः कल्पितो भ्रमोऽपि व्यवहाराङ्गतया मानत्वेनेष्यते वैदिकैः, तद्वल्लौकिकमध्यक्षादिकमात्मबोधावधि व्यवहारकाले बाधाभावात् व्यावहारिकं प्रामाण्यमिष्यताम्। वेदान्तानां तु कालत्रयाबाध्यबोधित्वात् तत्त्वावेदकं प्रामाण्यमिति तु शब्दार्थः। आत्मनिश्चयात् आ आत्मनिश्चयाद् इत्याङ्० मर्यादायाम्। प्रमातृत्वस्य कल्पितत्वेऽपि विषयाबाधात् प्रामाण्यमिति भावः।'

( ब्र० सू० १।१।४ शा० भा० र० प्र० )

अत्र न्यायनिर्णये श्रीसुन्दरपाण्ड्यमतमित्थमाह—

'न केवलमस्माभिरयमर्थोऽभ्युपगत किन्त्वन्यैरपि ब्रह्मविद्भिरित्याह- अपि चेति । सत्पारमार्थिकमबाधित ब्रह्माहमित्येव बोधे जाते पुनर्देहादे रात्ताबाधनान्मायामात्रत्वावगमादयमहमेवेति पुत्रादावहमभिमानस्य गौणा- त्मनो मनुष्योऽहमिति देहादावहमभिमानस्य च मिथ्यात्मनोऽसत्त्वे कार्य कथ भवेत् । तन्निमित्ताभावाद् विधिविधेयादिव्यवहारो न कथचिदित्यर्थ । यद्यात्मा सद् ब्रह्मैव कस्तर्हि प्रमाता । यद्ययमेव कथ तर्हि ब्रह्मतास्येत्या- शङ्क्याह अन्वेष्टव्येति । 'य आत्मापहतपाप्मा' इत्यादिश्रुतिप्रसिद्ध 'आत्मान्वेष्टव्य ' 'सोऽन्वेष्टव्य ' इति श्रुते । तद् विज्ञानात्पूर्वमात्मनो मातृत्वम्, प्रमातैवान्विष्ट सन्निर्दोष परमात्मा स्यात् । अतोऽन्वय- व्यतिरेकाभ्यामात्मनो मातृत्वमाविद्यकमित्यर्थ । तस्याविद्यकत्वे वधमध्यक्षादीना श्रुतेश्च मानता, कारणदोषादित्याशङ्क्याह- देहेति । यथा देहातिरिक्तात्मवादे कल्पितापि देहात्मत्वधी र्व्यवहाराङ्ग- तया मानमिष्यते तथा तत्त्वसाक्षात्कारपर्यन्त व्यवहाराङ्गत्वाद् व्यवहारे बाधाभावाच्चाध्यक्षाद्यतत्त्वावेदकमपि व्यावहारिक मानम् । श्रुतेस्तु वर्ण- दैर्घ्यादिवदात्मधीहेतोस्तात्त्विक्येव मानतेत्यर्थ ।

( ब्र० सू० १।१।४ शा० भा० न्या० नि० )

भट्टश्रीकुमारिलविरचिते तन्त्रवार्त्तिकेऽप्याचार्यसुन्दरपाण्ड्यस्य पञ्च वार्त्तिकान्युपलभ्यन्ते—

निःश्रेण्यारोहणप्राप्यं प्राप्तिमात्रोपपादि च ।
एकमेव फल प्राप्तमुभावारोहतो यदा ॥ १ ॥
एकसोपानवर्त्त्येको भूमिष्ठाश्चापरस्तयोः ।
उभयोश्च जवस्तुल्यः प्रतिबन्धश्च नान्तरा ॥ २ ॥
विरोधिनस्तदेको हि तत्फलं प्राप्नुयात्तयोः ।
प्रथमेन गृहीतेऽस्मिन् पश्चिमोऽवतरेन्मुदा ॥ ३ ॥

तेन यद्यपि सामर्थ्यं प्रत्येकं सिद्धमन्यदा ।
तथापि युगपद्भावे जघन्यस्य निराक्रिया ॥ ४ ॥
अन्यथैव हि शून्येषु दुर्बलैरपि चर्यते ।
अन्यथा बलवद्ग्रस्तैः सर्वशक्तिक्षये सति ॥ ५ ॥

(त० वा० ३।३।१४ पृ० ८५३ चौखम्बा स० सी० काशी १९०३ ई० प्रका० )

अत्र भट्टश्रीसोमेश्वरेण न्यायसुधाटीकायामुक्तम्—

एतदेव द्रढयितु वृद्धाना श्लोकपञ्चक पठति ।

( त० वा० ३।३।१४ सू० न्या० सु० पृ० १२२८ चौ० स० सी० बनारस १९०१ ई० प्र० )

एवमत्र श्रीसोमेश्वरेण वृद्धानामिमे श्लोका इत्युक्त्या समादर एव प्रकटित किन्तु श्रीमदमलानन्देन ब्रह्मसूत्रशाङ्करभाष्यभामतीव्याख्यानभूतायां स्वीयकल्पतरुटीकाया नामग्राह सुन्दरपाण्ड्यस्येमानि वार्त्तिकानीत्युक्तम्—

आह चात्र निदर्शनमाचार्यसुन्दरपाण्ड्य —

निः श्रेण्यारोहणप्राप्यम् ········इत्यादि ।

( ब्र० सू० ३।३।२५ भा० भा० कल्पतरौ पृ० ७९५ )

अत्र कल्पतरौ केवल त्रीण्येवाद्यानि वार्त्तिकान्युल्लिखितानि यथा—

(१) निः श्रेण्यारोहणप्राप्यम्········ ।
(२) एकसोपानवर्त्त्यैक ·· ········ ·· ।
(३) विरोधिन ········· ····· । इति ।

तन्त्रवार्त्तिकेऽपरत्रापि स्थलद्वयेऽन्यानि वार्त्तिकान्युद्धृतानि, तत्रापि च न्यायसुधायां वृद्धवचनमिति कृत्वा कश्चिदाचार्यं समादृत । सम्भाव्यते सोऽप्याचार्यसुन्दरपाण्ड्य एव भवेत् । यथा—

आह च—

त्र्यंशवेदप्रमाणत्वादुद्भिदादि ततोऽधिकम् ।
धर्मायानुपयुक्तं सदानर्थक्यं प्रपद्यते ॥ १ ॥
सर्वस्य त्रिभागत्वाद् वेदस्योक्तेन हेतुना ।
उद्भिदाद्यप्रमाणत्वमतिरेकान्न सिद्ध्यति ॥ २ ॥

( त० वा० १।४।१ सू० पृ० २८०-२८१ )

अत्र न्यायसुधायाम्—

'किन्तु नामधेयत्वे सतीत्येतमर्थं दर्शयितुं वृद्धवाक्यमुदाहरति आह चेति ।'

( त० वा० १।४।१ सू० न्या० सु० पृ० ३९३ )

पुन —

आह च—

साध्यसाधनसम्बन्धः सर्वदा भावनाश्रयः ।
तेन तस्य न सिद्धिः स्याद् भावना प्रत्ययादृते ॥

( त० वा० २।१।१ सू० पृ० ३५७ )

अत्र न्यायसुधाटीकायाम्—

''एवमेव सिद्धान्त वृद्धवचनेन द्रढयति ।'

( त० वा० २।१।१ सू० पृ० ५८९ )

सूतसंहिताया माधवमन्त्रिनिर्मिताया सुन्दरपाण्ड्यस्यैकं वार्तिकमुदलेखि । यथा—

तथा सुन्दरपाण्ड्यवार्त्तिकमपि—

देहात्मप्रत्ययो यद्वत्प्रमाणत्वेन संभवः ।
लौकिकं तद्वदेवेदं प्रमाणं त्वात्मनिश्चयात् ॥

( सू० स० ३ मुक्तिखण्डे अ० ४ श्लो० १२ १३ ता० टी० )

अत्र केवलमियानेव भेदो यद् ब्रह्मसूत्रशाङ्करभाष्ये वार्तिकस्य द्वितीये चरणे *'प्रमाणत्वेन कल्पित'* इति पाठः, सूतसंहितातात्पर्यटीकायां तु 'प्रमाणत्वेन सम्भव' इति पाठः।

इत्थञ्चास्य मते—*'गौणमिथ्यात्मनोऽसत्त्वे प्रमाणं त्वात्मनिश्चयात्'* इत्युक्तवार्तिकत्रयस्य शाङ्करभाष्यभामतीरत्नप्रभान्यायनिर्णयसूतसंहिता-तात्पर्यटीकानुसारं यावत्कालम् 'अहं ब्रह्मास्मि' इत्याकारकं ब्रह्मज्ञानं नोदियात् तावत्कालं सर्वे विषयाः प्रमाणानि च सार्थकानि। आत्मा नापि हेयो नाप्युपादेयः। अयमात्मा अद्वैतः। अत्रात्मवोधे प्रमाणं नापेक्ष्यते। यतो हि तदानीं *नैव प्रमाता नापि विषया भासन्ते।*

अनेन जीवब्रह्मणोरैक्यप्रतिपादनेनात्मावबोधकाले प्रमातृप्रमाण-प्रमेयाणामवभासाभावेनास्य सिद्धान्तो निर्विशेषब्रह्माद्वैतवाद इति निश्चीयते। अस्य सिद्धान्ते नित्यः शुद्धो बुद्धः केवलात्मैव परमार्थ-सद्वस्त्विति।

श्रीहरि

# एकादशोऽध्यायः

## श्रीगौडपादाचार्यः

भगवत्पादश्रीशङ्कराचार्यसिद्धान्ते आचार्यश्रीगौडपादसिद्धान्तस्य महान् प्रभाव सल्लक्ष्यते। अथ श्रीगौडपादाचार्य आचार्यश्रीशङ्करस्य परमगुरुरासीत्। आचार्यशङ्करेण श्रीगौडपादनिर्मित माण्डूक्यकारिकाया स्वीय-भाष्यान्ते परमगुरुत्वेन स नमस्कृत —

**यस्त पूज्याभिपूज्य परमगुरुममु पादपातैर्नतोऽस्मि।**

(मा० का० शा० भा० अन्ते)

ब्रह्मसूत्रभाष्ये च महतादरेणास्य नाम गृहीतम्।[1] नैष्कर्म्यसिद्धौ श्रीसुरेश्वराचार्येणापि अस्य विषये भक्ति प्रदर्शिता।[2] अन्यैश्चापि[3] प्रमाणत्वेनास्य मत समादृतम्। अस्य गौडपादाचार्यस्य शिष्य श्रीगोविन्द-

---

१ (क) वेदान्तार्थसम्प्रदायविद्भिराचार्यैः। (ब्र० सू० शा० भाष्ये २।१।९)
(ख) 'सम्प्रदायविदो वदन्ति (तत्रैव १।४।१४)
अत्र श्रीरामानन्देन रत्नप्रभायाम् आनन्दगिरिणा च न्यायनिर्णय 'वृद्धसम्मति इत्याहृतु।

२ 'एव गौडै द्राविडै न पूज्यैरयमर्थ प्रभाषित।' (नै० सि० ४।४४)
अत्र ज्ञानोत्तम —गौड गौडपादाचार्यैरस्मदाराध्यै द्राविडै भगवत्पूज्यपादाचार्यै।

३ (क) बृहदारण्यकोपनिषद्भाष्यवार्त्तिके—४।४।८८६ पृ० १८६६, १।४।३८९ पृ० ५१०, २।१।३८६ पृ० ९५१।
(ख) नैष्कर्म्यसिद्धिटीकाया चन्द्रिकाया श्रीज्ञानोत्तम —प्रमाणत्वेन गौडपादीय वाक्यमुदाहरति। (नै० सि० ४।४१ च०)
(ग) पञ्चदश्यामाह—'आचार्यसम्मति' (प० द० १-११, १५

पादाचार्यस्तथा श्रीगोविन्दपादाचार्यस्य शिष्य भगवत्पादश्रीशङ्कराचार्य आसीत् । श्रीशङ्करसम्प्रदायगुरुवन्दनपरम्परायामित्थं गुरुनामावलि —

नारायणं पद्मभवं वशिष्ठं शक्तिं च तत्पुत्रपराशरं च,
व्यासं शुकं गौडपदं महान्तं गोविन्दयोगीन्द्रमथास्य शिष्यम् ।
श्रीशङ्कराचार्यमथास्य पद्मपादं च हस्तामलकं च शिष्यम् ।
तत्तोटकं वार्त्तिककारमन्यानस्मद्गुरुं सन्ततमानतोऽस्मि ॥

एतदुक्तपरम्परायां व्यासात्तथा शुकादनन्तरं श्रीगौडपादाचार्यस्य नामायातम् । व्यासः शुकश्च द्वापरान्ते सम्भूतौ श्रीगौडपादश्च कलियुगे । एवं गुरुशिष्ययोः काले महदन्तरमवलोक्य केचिदेवं समादधति यच्चिरजीवी श्रीशुकाचार्यो⁴ दिव्यदेहं धारयित्वा कलियुगे तपस्यन्तं श्रीगौडपादमुपदिदेश । अपरं च मतमित्यमस्ति यद् श्रीगौडपादाचार्यो द्वापरयुगान्तेऽभवत् । बदरिकाश्रमे भगवन्तं नारायणं समाराध्य⁵ तस्माद् वरं लब्ध्वा कलियुगनरान् नावलोकयितुकाम गिरिगुहामाविवेश ।

( मा० का० ४ अ० १ वा० शा० मा० व्या० )

यथावसरं भगवान् श्रीशङ्करः श्रीगौडपादं द्रष्टुकामो बहिरागमनाय ययाचे । श्रीगौडपादः पटपत्रेषु स्वलोहितेन माण्डूक्यकारिका लिखित्वा

४ श्रीशुको महायोग्यासीदित्युक्तं योगवासिष्ठे—

जगाम शिखरं मेरोः समाध्यर्थमनिन्दितम् ।
तत्र वर्षसहस्राणि निर्विकल्पसमाधिना ॥
दश स्थित्वा शशामासावात्मन्यस्नेहदीपवत् ।

( यो० वा० ११।१।४३, ८४ )

५ आनन्दगिरिः गौडपादकारिकायाः शाङ्करभाष्यव्याख्यानं लिखितवान् यद्—आचार्यो हि पुरा बदरिकाश्रमे नरनारायणाधिष्ठिते नारायणं भगवन्तमभिप्रेत्य तपो महदतप्यत । ततो भगवानतिप्रसन्नस्तस्मै विद्यां प्रादादिति प्रसिद्धं परमगुरुत्वं परमस्वारस्यादि । २

गुफान्तरत एव श्रीशङ्करराय प्रददौ[६] । भगवता शङ्करेण श्वेताश्वतरोपनिषद्भाष्ये उक्त यच्छ्रीगौडपादाचार्य श्रीशुकाचार्यस्य शिष्य आसीत्[७] । श्रीशुकसम्प्रदायपरम्पराविषये प्राध्यापक श्री एच० बी० महोदयेनानुसहितम्[८] ।

एतद्विषये म० म० श्री गोपीनाथशर्मकविराजमहोदयेन ब्रह्मसूत्रभूमिकाया लिखित यद् जम्मूस्थश्रीरघुनाथमन्दिरग्रन्थालयस्थिते श्रीविद्यार्णवे ग्रन्थे ( कश्मीरत प्रकाशिते ) श्रीगौडपादस्य गुरुपरम्परेत्थ निबद्धास्ति कपिल, अत्रि, वसिष्ठ सनक ( ? ) ( ५ ) सनन्दन, भृगु, सनत्सुजात, वामदेव, नारद ( १० ) गौतम, शनक, शक्ति, मार्कण्डेय, कौशक, ( १५ ) पराशर, शुक, अङ्गिरा, कण्व, जाबालि, ( २० ) भारद्वाज, वेदव्यास, ईशान, रमण, कपर्दी, ( २५ ) भूधर, सुभट, जलज, भूतेश, परम, ( ३० ) विजय, मरण, ( भरत ) पद्मेश, सुभग, विशुद्ध ( ३५ ) समर, कैवल्य, गुणेश्वर, सपाय, विबुध ( ४० ) योग, विज्ञान, अनङ्ग, विभ्रम, दामोदर, ( ४५ ) चिदाभास, चिन्मय, कलाधर, विश्वेश्वर, मन्दार, ( ५० ) त्रिदश, सागर, मृड, हर्ष सिंह, ( ५५ ) गौड, वीर, अघोर, ध्रुव, दिवाकर, ( ६० ) चक्रधर, प्रणवेश, चतुर्भुज, आनन्दभैरव, धीर ( ६५ ) गौडपाद, एवमन्यान्ये च आचार्यकपिलादारभ्य श्रीशङ्करपर्यन्तम् एकसप्तति सख्या गुरूणा परिगणिता । श्रीगौडपादाद् श्रीशङ्कराचार्यमध्ये सप्तगुरव सन्ति ।

---

६　श्रीविधुशेखरभट्टाचार्येण आगमशास्त्रस्यावतरणिकायाम् ( स० ) पृ० ४३ एतद्विवरणे लिखित यद् नारायणकृताया मा० उ० टीकायामवद् दृश्यत । तत्र च हुल्त्सविरचिते तृतीयप्रकरणे पृ० १३२ इत्यत्रापि अवलोकनार्थं सूचितम् ।

७　शुकशिष्यो गौडपादाचार्य ( श्वेता उ० )

८.　द०—'शुकसम्प्रदायस्य सर्वेक्षणम् इति नामको लेख (मराठी-भाषायाम्) ले० प्रा० एच० बी० भिडे, भारत इतिहास सशोधनमण्डलस्य त्रैमासिक-पत्रिका ( क्वार्टर्ली ) भाग ३३ स० १ २, १९५३ ० ।

गौडादिशङ्करान्ताश्च सप्तसंख्या समीरिताः ।
एकसप्ततिसंख्याश्च गुरवः शिवरूपिणः ॥

( श्रीविद्यार्णवे प्रथमश्वास ११९ )

तच्छिष्याणां क्रमं ज्ञात्वा स्वगुरूक्तविधानतः ।
स्मरणात् सिद्धिमाप्नोति साधकस्तु न संशयः ॥

( श्री वि० प्र० श्वा० १२० )

अस्या परम्परायां शक्तिपराशरयो मध्ये व्यवधानं जातं यदानयो र्मध्ये पितापुत्रभाव सम्बन्धः प्रसिद्धः । एवमेव श्रीशुकादनन्तरं श्रीव्यासस्य पुत्रः श्रीशुकः प्रसिद्धः ।

अत्रेदमपि विदुषां मतं यदयं श्रीविद्यार्णवो ग्रन्थस्तन्त्रशास्त्रस्य तेनोपरिलिखितपरम्परायामागता श्रीशुक श्रीगौडपाद श्रीशङ्करदेव तान्त्रिकसाम्प्रदायिका गुरवो भवेयु र्नतु वेदान्तसम्प्रदायस्य ।

अस्य गौडपादस्य विषयेऽपरा अपि प्रसिद्धयः सन्ति । उच्यते यत् केनापि यवनेन अयार्च्येन सहास्य सम्बन्ध आसीत् । अयं सम्बन्धः अपोल्लानियस भारतभ्रमणग्रन्थादवगम्यते[१] ।

अस्य कालविषये ऐतिहासिकानां महान् विवादो वर्तते । ईसापूर्वाष्टम-

---

१ द्र० (क) श्रीसदाशिवब्रह्मेन्द्रकृतः जगद्गुरुरत्नमालास्तवः, अस्य आत्मबोधेन्द्र सरस्वतीकृतटीका-वेदान्तपञ्चप्रकरणी । प्र०श्रीविद्यायन्त्रालय कुम्भकोणम् ।

(ख) तिआनामिवासिन अपाल्लोनियसो भारतभ्रमणम् आसमोदवाच्चार प्रियोविरचितम् । प्र०जर्नल आफ दी रायल एसियाटिक सोसायटी, ग्रे०ब्रि० १८६० पृ० ७ ।

(ग) श्रीहरियन्नो लेख प्र०इण्डियन हिस्टोरिकल क्वाटर्ली १९२६ पृ० ४१५–४१६ ।

(घ) म०म० श्रीगोपीनाथकविराजविरचिता ब्रह्मसूत्रभूमिका पृ० १९२३ प्र० अच्युतग्रन्थमाला, वाराणसी ।

शतकादारभ्य[१०] ईशोत्तरसप्तमशतकपर्यन्तमस्य कालो दोलायमानोऽस्ति। श्रीप्रज्ञानानन्दसरस्वतीमहोदयेन स्वीये वेदान्तदर्शनेर इतिहासग्रन्थेऽस्य काल ईशात पूर्वं प्रथमशतकमिति साधयितु महान् यत्न कृत। श्रीविधुशेखरभट्टाचार्येण आगमशास्त्रस्य स्वकीयाया वृत्तौ अवतरणिकाया पृ० ४६-४७ बौद्धविदुषा भावविवेकशान्तिरक्षितकमलशीलाना ग्रन्थेभ्यो वाक्यानि उद्धृत्य श्रीगौडपादकारिकाभि सह तुलना कुर्वता ईशोत्तरसप्तमशतकमवधारितम्। तत्रापि सन्तोषमननुभवता दुष्करोऽस्य कालनिर्णय इत्यन्ते लिखितम्। किन्तु ईशोत्तरमष्टम शतकमस्य काल इतिनिर्णये आधुनिकाना बहूना विदुषा सम्मति[११]।

एवमेव यथास्य कालनिर्णये विवादस्तथैवास्य ग्रन्थविषयेऽपि विवाद। अस्य कृतित्वेनेमे ग्रन्था उदाह्रियन्ते—

(१) माण्डूक्योपनिषत्कारिका (आगमशास्त्रम्)

(२) साङ्ख्यकारिकाभाष्यम्।

(३) नृसिंहोत्तरतापन्युपनिषद्व्याख्या।[१२]

(४) श्रीदुर्गासप्तशतीटीका।[१३]

(५) सुभगोदय।[१४]

(६) श्रीविद्यारत्नसूत्रम्।

---

१० द्र०—मठाम्नाय (शाङ्कर) तथा दी वेदान्त फिलास्फी डिस्क्राईब्ड बाई भव्य इन हिज मध्यकहृदय, ले० डॉ० वी० वी० गोखले, इण्डो ईरानियन जर्नल वाल्यूम २ लॅ० ३, पृ० १६५-१८० १९५८ ई० प्रका०।

११ म०म० श्री गो०ना०क० महोदयलिखित अ०मू०भू०पृ० २६, श्रीबिल्वलकर-विरचितवेदान्तफिलास्फी भाग —१ पृ० १९२ १९३ श्रीदासगुप्तस्य हिस्ट्री आफ इण्डियन फिलास्फी भाग —१ पृ० ४२३ ४२९, श्रीराधाकृष्णन महोदयस्य इण्डियन फिलास्फी भा० २ पृ० २६३ २६५।

१२ वाराणस्या मालतीशारदासदनग्रन्थालयेऽयमस्तीति श्री वि० शे० भट्टाचार्येण लिखितम्—आ० शा० अव० पृ० ५५।

१३ यथाह तन्त्राचार्य श्रीभास्करराय—यदपि वा तत्पूर्वं गौडपादाचार्यै सप्तमिद निश्शयचित्प्रतिपादकशास्त्रपरत्वेन व्याख्यातम्।'

१४ अस्य शाङ्करभाष्यमुपलभ्यते।

एषु माण्डूक्योपनिषत्कारिकाग्रन्थ श्रीगौडपादाचार्यस्य प्रसिद्धा कृति । अत्र नास्ति कस्यचिदपि वैमत्यम् । अन्येषु सन्देहो वर्तते । इदमपि कथ्यते यद् श्रीगौडपादनामवन्तौ द्वौ विद्वांसावभूताम् । तत्रैको वेदान्ती अपरस्तान्त्रिकोऽस्ति यस्य नाम श्रीप्रगल्भाचार्यकृते श्रीविद्यार्णवग्रन्थे गुरुपरम्परायामायाति । तन्त्रसम्प्रदायस्य श्रीविद्यार्णवग्रन्थस्य गुरुपरम्पराऽस्मिन्नेवाध्याये पूर्वं लिखिता ।

एवमेव केचनास्य व्यक्तित्वविषयेऽपि सन्देहमुद्भावयन्ति । तेषु सर्वप्रथम जर्मनदेशीयो लेखको वलसरमहोदय । अनेन स्वीये दर अल्टेर वेदान्त ग्रन्थे[15] नैष्कर्म्यसिद्धिग्रन्थोक्त 'गौडै र्द्राविडै '[16] इति श्लोकार्धमुद्धृत्य इद साधयितु प्रयतित यत् पुरा वेदान्ते एको गौडसम्प्रदायोऽपरो द्राविडसम्प्रदाय आसीत् । गौडसम्प्रदायो गौडदेशवासिना द्राविडसम्प्रदायो द्राविडदेशवासिनामासीत् । यथाद्यत्वे गौडब्रह्मानन्दीटीका अद्वैतसिद्धे प्राप्यते यथा च चैतन्यमहाप्रभो सम्प्रदायस्य सिद्धान्तो गौडीयवेदान्त इति कथ्यते ।

अस्य सम्बन्धेऽयमपि महान् विवादास्पदो विषयो यदय वेदान्ती, उत बौद्ध, अथवा प्रच्छन्नबौद्ध । *श्रीगौडपादाचार्यस्य प्रसिद्धे माण्डूक्यकारिका* ग्रन्थे बौद्धदर्शनसमानानि वाक्यानि, शब्दा सिद्धान्ताश्चोपलभ्यन्ते । मान्याधुस्यास्य बौद्धत्वे आशङ्कोदेति । जाकोबी[17]—श्रीराधाकृष्णन्[18]—श्रीदासगुप्त[19]—श्री एस० के० बिल्वल्कर[20]—श्रीविधुशेखरभट्टाचार्य[21]—श्री–

१५ दर आल्टर वेदान्त पृ० ३, हिडेल वर्ग १९१० ई० ।

१६ 'एव गौडै र्द्राविडै न पूज्यैरयमर्थ प्रमापित ।' ( नै० सि० ४४४ )

१७ जाकोबी जर्नल आफ दी अमेरिकन आरियण्टल सोसाइटी भाग ३३ पृ० ५२ पादटिप्पणी ।

१८ इण्डियन फिलास्फी—भाग २ पृ० २६३–२६५ ( १९५६ ई० )

१९ हिस्ट्री आफ इण्डियन फिलास्फी—भाग १ पृ० ४२३–४२९ ।

२० श्री गोपालमल्लिकलेक्चरस् आन वेदान्तफिलास्फी—दिसम्बर १९२५ ई० पूना—भा० १ पृ० १७७–२०८ ।
( वेदान्तफिलास्फी भा० १ पृ० १७७–२०८ )

२१ आगमशास्त्रस्यावतरणिकायाम् ( संस्कृतभाषामय्याम् ) पृ० ९१–९६ ।

एन० वी० पुरोहित[२२]—श्रीचन्द्रधरशर्म[२३]—डा० टी० एम० पी० महादेवन[२४]—श्री टी० आर० वी० मूर्ति[२५]—श्री रघुनाथदामोदरकरमकर-महोदया[२६] एतद्विषये बहुशो विचारितवन्तः।

अस्य माण्डूक्योपनिषत्कारिका आगमशास्त्रमपि कथ्यते। अस्य आगमशास्त्रस्य वृत्तिं महामहोपाध्यायश्रीविधुशेखरभट्टाचार्येण कृता प्रकाशिता च। अत्र श्रीभट्टाचार्येण वैदुष्यपूर्णा महत्यवतरणिका विरचिता। अस्यामवतरणिकायां महताश्रमेणेद साधयितुं प्रयतितं यत्—

( १ ) इमा कारिका न माण्डूक्योपनिषदो व्याख्यानभूता अपि तूपनिषद्-भाग एव कारिकाणा व्याख्यानभूत। यत उपनिषद्भागस्य बहव कठिनशब्दा कारिकासु अस्पृष्टा न व्याख्याता।

( २ ) आगमशास्त्रस्य चत्वारि प्रकरणानि नैकेनाचार्येण निर्मितानि अपि तु विभिन्नाचार्यकृतानि, असम्बद्धानि च अत्रैकत्र सगृहीतानि।

( ३ ) यथा अस्य चतुर्थं प्रकरणम् अलातशान्तिनामकम्, एतद् ग्रन्थान्त-रांशो भवितुमर्हति। यतो हि अत्र मङ्गलाचरणमस्ति। ग्रन्थादौ प्रथमे प्रकरणे मङ्गलसत्त्वादन्तिमेऽस्मिन् प्रकरणे मङ्गलस्य कावश्यकता। अतोऽपि ग्रन्थान्तरस्यायमंशो येन तद्ग्रन्थान्तरस्येदं मङ्गलाचरणम्। अय ग्रन्थान्तरंश एवात्र चतुर्थप्रकरणत्वेन सगृहीत.।

( ४ ) अस्य भाष्यकर्ता श्रीशङ्कराचार्यो ब्रह्मसूत्रादिभाष्यकरादभिन्नो न, किन्तु भिन्नोऽपर कश्चित्। यतो हि भाष्यादौ मङ्गलपद्ये छन्दोदोष अन्त्ये नमस्कारश्लोके च्युतसंस्कृतिदोषश्च। एवमेव

२२ आल इण्डिया ओरियण्टल कान्फ्रेंस, मैसूर, सितम्बर, १९३५ ई० पृ० ३५२।

२३ बौद्धदर्शन और वेदान्त पृ० १४०-१४७।

२४ गौडपाद पृ० २२०।

२५. दी सेन्ट्रल फिलास्फी आफ बुद्धिज्म पृ० ११३।

२६ गौडपादकारिका—भूमिकायाम् ' ( सम्पादक श्री र० दा० करमकर. )

कतिपयकारिकाभाष्येऽपि दोषाः सन्ति । ( संस्कृतावतरणिकायाम् पृ० २ टिप्पण्याम् ) ।

( ५ ) विज्ञानवादस्य, शून्यवादस्य च ( बौद्धदर्शनस्य ) न केवल समानाकाराः शब्दा अपितु समानाः कतिपयसिद्धान्ताश्चात्रोपनिबद्धाः । अतो बौद्धदर्शनस्यैवायं कोऽपि ग्रन्थः ।

( ६ ) श्री मध्वाचार्यः प्रथम प्रकरणं श्रुतिं मनुते । अतो न गौडपादाचार्यकृतिः । एवं बहुविधं विचार्य श्रीभट्टाचार्येणास्य वृत्तिर्विरचिता । यत्र कारिकाणां व्याख्या बौद्धदर्शनानुसारिणी कृता । बौद्धदर्शनस्य ग्रन्थान्तरेभ्यो वाक्यान्युद्धृत्योद्धृत्य कारिकानिबद्धसिद्धान्तो बौद्धदर्शनानुगुण इति साधितम् ।

एतद्विषये बहुभिः विद्वद्भिः बहुधा समाहितम् ।[२७]

( १ ) प्रथमस्येदं समाधानं यदियं कारिका न भाष्यम् । अतः कारिकासु न सर्वशब्दानां स्पर्शो व्याख्यानं वावश्यकम् ।

( २ ) भगवता श्रीशङ्कराचार्येण स्वीये भाष्ये चतुर्णां प्रकरणानां सम्बन्धः साधु प्रदर्शितः । न तत्रास्ति असम्बद्धता अनेकाचार्यकृतित्वे प्रमाणं नोपलभ्यते च ।

( ३ ) प्रकरणद्वये मङ्गलाचरणेन ग्रन्थान्तरस्याशङ्का नोचिता । ग्रन्थादौ, ग्रन्थमध्ये, ग्रन्थान्ते च मङ्गलाचरणस्यावश्यं कर्तव्यता महर्षिपतञ्जलिना महाभाष्ये उक्ता, दृश्यते च पाणिनीयाष्टाध्याय्याम्, प्रशस्तपादभाष्यस्य श्रीश्रीधरकृताया न्यायकन्दल्या मध्येप्रकरणं च मङ्गलं प्राप्यते । प्रसिद्धः काव्यव्याख्याकारः श्रीमल्लिनाथः प्रतिसर्गं मङ्गलमाचरति । प्रज्ञाकरमते बोधिचर्यावतारे केवलमादौ तथान्ते एव मङ्गलाचरणम् न । तेन एकाचार्यकृतित्वे सन्देहः क्रियते ।

---

२७ (क) द्र० श्रीसच्चिदानन्देन्द्रसरस्वतिन —माण्डूक्यरहस्यविवृति, प्र० अध्यात्मप्रकाशनकार्यालयः, होलेनरसीपुर, मैसूर १९५८ ई० ।
(ख) गौडपादकारिका—( भूमिका ) स० श्रीरघुनाथदामोदरकरमरकर, प्र० भ० ओ० रि० इ० पूना १९५३ ई० )

(४) अस्य भाष्यकर्ता आद्यशङ्कराचार्य एव। भाष्यादौ मङ्गलपद्ये न छन्दोदोष। तत्र छन्दोनाम गाथा। श्री भट्टाचार्येण छन्दोभ्रमेण दोष उद्भावित। गाथाच्छन्दोदृष्ट्या साधु एव पद्यम्।

तत्र ग्रन्थान्ते नमस्कारात्मके पद्ये 'नमस्ये' इत्युक्तम्। अत्र परस्मैपदस्वमेव साधु इति कृत्वा च्युतसंस्कारदोषो भट्टाचार्येण प्रदर्शित। किन्तु क्यङ्प्रत्यये कृते ङित्त्वादात्मनेपद भवितुमर्हति।[२८]

(५) बौद्धदर्शनस्यैव समानशब्दाननावलम्ब्य तथा समान् सिद्धान्तान् दृष्ट्वा बौद्धदर्शनस्यैवेद ग्रन्थान्तरमिति नाशङ्कनीयम्। तदानी बौद्ध दर्शन प्रसिद्धि गतमासीत्। अतो बौद्धदर्शनस्य प्रथिता पारिभाषिकशब्दा यदि श्रीगौडपादाचार्येण स्वग्रन्थे गृहीतास्तर्हि नेद शङ्काकारणम्। दर्शनशास्त्रस्य शब्दा यदि दर्शनशास्त्रे गृहीतास्तदा गुण एव। ये शब्दा बौद्धाचार्याणा कथ्यन्ते, न ते शब्दा बौद्धाचार्याणाम्। बौद्धाचार्यैरपि उपनिषदो वाल्मीकीयरामायणतो महाभारतादिभ्यो गृहीता इत्यग्रेऽस्मिन्नेवाध्याये प्रदर्शयिष्यते। श्रीगौडपादाचार्यश्च विभिन्नानि दार्शनिकमतान्युल्लिख्यान्ते लिखन्ति-नैतद्बुद्धेन भाषितम्। (मा० का० ४-९९)। मोक्षस्य कृते 'ब्रह्मचर्यपदम्' (मा० का० ४ ८५) प्रयुक्तम्। अत कथ श्रीगौडपादाचार्य प्रच्छन्नबौद्धो भवितुमर्हति। किन्तु बौद्धा प्रच्छन्नवैदिका भवितुमर्हन्तीति श्रीचन्द्रधरशर्मणा स्वीये ग्रन्थे साधूपपादितम्।[२९]

(६) श्रीमध्वाचार्य कारिका श्रुतित्वेन मनुते, मनुता नाम। तेन किम्। नासौ, अद्वैतसम्प्रदायानुगामी। अद्वैतसम्प्रदायानुगामिन, भगवत्पादशङ्कर, सुरेश्वराचार्य, विद्यारण्यमुनि, ज्ञानोत्तम गोविन्दानन्द आनन्दगिरिश्च कारिका श्रीगौडपादाचार्यस्य रचनामामनन्ति।[३०]

२८ प० पूज्यपादश्रीरघुनाथशर्मभि वाराणसेयस०विश्वविद्यालयस्य सरस्वती सुषमापत्रिकाया ८ वर्षे २, ३, ४ अङ्केषु एतत्समाहितमन्यदपि बहु विचारितम्।

२९ बौद्धदर्शन और वेदान्त ग्रन्थे—अद्वैतवेदान्त प्रकरणे पृ० १४३।

३० अस्याध्यायस्यादौ प्रथमपृष्ठे एतेषामुद्धरणानि लिखितानि।

बौद्धदर्शनग्रन्थानां तथा माण्डूक्योपनिषत्कारिकाणामनेके शब्दाः समानाः सन्ति। एतदाधारेणापि इदमाशङ्क्यते यद् बौद्धदर्शनस्यैव रूपान्तरभूतोऽयं ग्रन्थः। यथा—

| | |
|---|---|
| १—द्विपदां वरम् | मा० का० ४-१ |
| २—चतुष्कोटिः | ४-८४ |
| ३—अग्रयानम् | ४।९० |
| ४—अस्पर्शयोगः | ३।३९, ४।२ |
| ५—अलातचक्रम् | अलातशान्तिः चतुर्थप्रक० नाम |
| ६—अध्वन् | ४।९० |
| ७—अभिलापः | ४।२७ |
| ८—अभिसंवृतिः | ३।३७ |
| ९—अलब्धावरणम् | ४।९८ |
| १०—आदिबुद्धः | ४।९२ |
| ११—आदिशान्तः | ४।९३ |
| १२—शान्तिः | ४।९२ |
| १३—तापिन् | ४।९२ |
| १४—देशितम् | ४।२, ४, ४५ |
| १५—धर्मः | ४-१, ६, ८, १०, २१, ३३, ३९, ४६, ५३, ५४, ५८, ५९, ६०, ८१, ८२, ९१, ९२, ९३, ९६, ९८, ९९ |
| १६—नायकः | ४।९८ |
| १७—निर्मितकः | ४।७० |
| १८—परतन्त्रम् | ४।२४, ७३, ७४ |
| १९—परमार्थ | ४।७३, ७४ |
| २०—परिदीपकः | ४।२१ |
| २१—परिदीपिनः | ४।१९ |

यथालातपरिस्पन्दादग्निचक्रं प्रदृश्यते ।

( यो० वा०[31] ५।७८।१ )

अलातचक्रप्रतिमाः सर्परज्जुभ्रमोपमाः ।

( तत्रैव ५।८२।२ )

'द्विपदां वरम्' इति विशेषणपदं महाभारते भगवतः श्रीनारायणस्य कृते प्रयुक्तो वर्तते । अतः उक्तं द्विपदां वरम् इति विशेषणं माण्डूक्योपनिषत्कारिकाग्रन्थस्य चतुर्थप्रकरणस्यादौ नारायणस्य कृते श्रीशुकाचार्यस्य वा कृते प्रयोक्तुं शक्यत एव ।

चतुष्कोटिक —अयं शब्दो भगवतो बुद्धात्पूर्ववर्तिनेन सञ्जयवलात्तिपुत्रेण प्रयुक्तः । अग्रयानम्–महायानाचार्यैरयं शब्दः प्रयुक्तः, किन्तु एवंविधशब्दानां प्रयोगपरम्परा तु अतीव पुरातनी वर्तते । छान्दोग्योपनिषदादौ श्रीमद्भगवद्गीतायां च देवयानपितृयाणधूमयानशब्दानां प्रयोगो बाहुल्येनोपलभ्यते । अस्मिन् विषये पुनरग्रे विवेचयिष्यते ।

अतः शब्दसादृश्येन कस्यापि मतं याथातथ्येन निर्णेतुं न शक्यते । यदि शब्दसाम्येन बौद्धानुयायी श्रीगौडपादाचार्यस्तर्हि कथं न बौद्धाचार्या अनयैव युक्त्या वैदिकदर्शनानुयायिनः ।

अजातवादवैतथ्यवादयोः सिद्धान्तयोरपि साम्येनायं ग्रन्थः बौद्धमतानुसारीति आशङ्क्यते । किन्तु अजातवादो वैतथ्यवादश्च न केवलमाचार्यनागार्जुनप्रतिभाप्रसूतौ । ततोऽतिपूर्ववर्तनकालेनैव प्रचलितौ शुद्धवैदिकवादौ इमौ । यौ हि आचार्यनागार्जुनप्रतिभाविशेषेण केवलं चमत्कृतिं प्रापितावित्यग्रेऽस्मिन्नेवाध्याये विवेचयिष्यते ।

वस्तुतस्तु श्रीगौडपादाचार्यस्तदानीन्तनानां प्रचलितदार्शनिकसिद्धान्तानां वर्णनपूर्वकमुपनिषत्प्रतिपादितदार्शनिकसिद्धान्तानां प्रतिष्ठा-

३१ श्री बी० लाल आत्रेयमहोदयेन दी प्रोबैबिल डेट आफ कम्पोजिशन आफ योगवसिष्ठ नामके स्वमहानिबन्धे यो० वा० कालो निर्णीतः, तेन यो० वा० अतीव प्राचीनता साधिता ।

पनार्थं प्रयतितवान् । अत एव तदानीन्तनानां प्रसिद्धदार्शनिकानां द्वाविंश-संख्याकानां मतान्युद्धृतवान् तथा बृहदारण्यकच्छान्दोग्येशावास्याद्यु-पनिषदां श्रीमद्भगवद्गीतायाश्च केवलं सिद्धान्ता एव न अपि तु समाना-क्षराणि च परिगृहीतानि ।

तदानीन्तनानामाचार्याणामित्थमुल्लेखः —

( १ ) अन्ये ( १।७, ९ ) ( २ ) अपरे ( २-२९ ) ( ३ ) आश्रमविदः ( २-२७ ) ( ४ ) कालचिन्तकाः ( १-८ ) ( ५ ) कालविदः ( २-२४ ) ( ६ ) गुणविदः ( २-२० ) ( ७ ) चित्तविदः ( २-२५ ) ( ८ ) दिग्विदः ( २-२४ ) ( ९ ) पादविदः ( २-२१ ) ( १० ) प्राणविदः ( २-२० ) ( ११ ) बुद्धिविदः ( २-२५ ) ( १२ ) भुवनविदः ( २-२४ ) ( १३ ) भूतविदः ( २-२० ) ( १४ ) भोक्तृविदः ( २-२२ ) ( १५ ) भोज्यविदः ( २-२२ ) ( १६ ) मनोविदः ( २-२१ ) ( १७ ) मूर्तविदः ( २-२३ ) ( १८ ) लयविदः ( २-२८ ) ( १९ ) लोकविदः ( २-२१ ) ( २० ) सूक्ष्मविदः ( २-२३ ) ( २१ ) सृष्टिविदः ( २-२८ ) ( २२ ) स्थितिविदः ( २-२८ ) ।

यथा बृहदारण्यकाद्युपनिषदां श्रीमद्भगवद्गीतायाश्च सिद्धान्तानां वाक्यानां च कारिकासु ग्रहणम्—

बृहदारण्यकोपनिषद्

| मा०का० | बृ०आ०उ० |
|---|---|
| १—अपूर्वोऽनन्तरोऽबाह्यः इत्यादि १-२६ | अनन्तरोऽबाह्य ४, ५-१३ |
| २—अभावश्च रथादीनां श्रूयते न्याय-पूर्वकम् २-३ | स यत्र प्रस्वपिति, ४, ३-९ न तत्र रथा न रथयोगाः, ४, ३, १० |
| ३—स्वप्नजागरितस्थाने, २-५ | तस्य वा एतस्य पुरुषस्य द्वे एव स्थाने ४, ३, ९ |
| ४—जडवल्लोकमाचरेत् २-३६ | तस्माद् ब्राह्मण ..... बाल्येन तिष्ठासेत्, ३, ५-१ |
| ५—द्वयो द्वंयोर्मधुज्ञाने परं ब्रह्म प्रति-ष्ठितम् ३-१२ | मधुज्ञानम् २, ५ |

बौद्धदर्शनग्रन्थानां तथा माण्डूक्योपनिषत्कारिकाणामनेके शब्दा: समाना: सन्ति। एतदाधारेणापि इदमाशङ्क्यते यद् बौद्धदर्शनस्यैव रूपान्तरभूतोऽयं ग्रन्थ:। यथा—

| | |
|---|---|
| १—द्विपदां वरम् | मा० का० ४-१ |
| २—चतुष्कोटि: | ४-८४ |
| ३—अग्रयानम् | ४।९० |
| ४—अस्पर्शयोग: | ३।३९, ४।२ |
| ५—अलातचक्रम् | अलातशान्ति: चतुर्थप्रक० नाम |
| ६—अध्वन् | ४।९० |
| ७—अभिलाप: | ४।२७ |
| ८—अभिसंवृति: | ३।३७ |
| ९—अलब्धावरणम् | ४।९८ |
| १०—आदिबुद्ध: | ४।९२ |
| ११—आदिशान्त: | ४।९३ |
| १२—शान्ति: | ४।९२ |
| १३—तापिन् | ४।९२ |
| १४—देशितम् | ४।२, ४, ४५ |
| १५—धर्म: | ४-१, ६, ८, १०, २१, ३३, ३९, ४६, ५३, ५४, ५८, ५९, ६०, ८१, ८२, ९१, ९२, ९३, ९६, ९८, ९९ |
| १६—नायक: | ४।९८ |
| १७—निर्मितक: | ४।७० |
| १८—परतन्त्रम् | ४।२४, ७३, ७४ |
| १९—परमार्थ: | ४।७३, ७४ |
| २०—परिदीपक: | ४।२१ |
| २१—परिदीप्ति: | ४।१९ |

| | |
|---|---|
| २२–प्राच्यः | ४।९० |
| २३–प्रकृतिनिर्मलम् | ४।९८ |
| २४–प्रज्ञप्तिः | ४।२४,२५ |
| २५–उपशमः | २।३५ |
| २६–बुद्धः | ४।१९, ४२, ८०, ८८, ९८, ९९ |
| २७–मायाहस्तिन् | ४।४४ |
| २८–लोकोत्तरः | ४।८८ |
| २९–लौकिकः | ४।८७ |
| ३०–विशारद | ४।९३-१०० |
| ३१–वैशारद्यम् | ४।९४ |
| ३२–संवृतः | ४।३३ |
| ३३–संवृत्ति | ४।५७,५८, ७४ |
| ३४–संक्लेशः | ४।२४ |
| ३५–सुनिर्वृत्त | ४।९३ |

यद्यपि इमे शब्दा बौद्धदर्शनेषु परिगृहीताः, किन्तु बौद्धदार्शनिकगृहीतत्वेन शब्दा अपि बौद्धा जाता इति वक्तुं न शक्यते। वस्तुतस्तु एषु शब्देषु केचन एवंविधा अपि शब्दाः सन्ति ये भगवतो बुद्धात् पूर्वतनेषु इतिहासपुराणदर्शनग्रन्थेषूपलभ्यन्ते। यथा—अस्पर्शयोगशब्द चतु शतके, किन्तु अतः पूर्वं श्रीमद्भगवद्गीतायामप्युपलभ्यते—

मात्रास्पर्शास्तु कौन्तेय २–१४

एवमेव अलातचक्रम्—

अलातचक्रप्रतिमा दृष्टा गोष्पदवत् कृता।

( वाल्मीकिरामायणे कि० का० ४६।१३ )

अलातचक्रवत् सैन्यं तदा बभ्राम तावकम्।

( महाभारते कर्णपर्वणि ८६।४२ )

| | |
|---|---|
| ६—जीवात्मनोरनन्यत्वमभेदेन ३, १३ | इद सर्व यदयमात्मा २ ४ ६ |
| ७—नानात्व निन्द्यते, ३ १३ | नेह नानास्ति किञ्चन ४, ४ १९ |
| ८—मृल्लोहविस्फुलिङ्गाद्यैः सृष्टि र्या ३ १५, | यथा अग्ने क्षुद्रा विस्फुलिङ्गा २, १ २० |
| ९—इन्द्रो मायाभिरित्यपि ३ २४ | इन्द्रो मायाभि पुरुरूप ईयते २ ५ १९ |
| १०—एष एव नेति नेतीति व्याख्यातम् ३, २६ | एष एव नेति नेतीति ३ ९ २६। ४, २४, २२ |
| | अथात आदेशो नेति नेति ३, ९ २६ |
| ११—सर्वेव निर्भय ब्रह्म ३, ३५ | अभय वै जनक प्राप्तोऽसि इति होवाच याज्ञवल्क्य ४ २ ४ |
| प्रणवो ब्रह्म निर्भयम्, १-२५ | स वा एष महानज आत्माभय वै ब्रह्म ४ ४ २५ |
| अजात जायते यस्मादजाति प्रकृतिस्तत ४ २९ | जात एव न जायते । ३ ९ २५ |
| चित्त निर्विषय नित्यमसङ्ग तेन कीर्तितम् ४ ७२ | असङ्गो न हि सज्यते ३ ९ २६ ४ २ ४। |
| | असङ्गो ह्यय पुरुष ४ ३ १५ |
| विद्यते न हि नानात्व तेषा क्वचन किञ्चन। ४ ९१ | नेह नानास्ति किञ्चन ४—४—१९ |

छान्दोग्योपनिषद्

| मा० का० | छा० उ० |
|---|---|
| १—प्राण इति प्राणविद २ २० | प्राणो वाव सर्वम् ४ ३–३ |
| २—पादा इति पादविद २ २१ | चतुष्कल पादो ब्रह्मण ४ ५ २ |
| ३—मोऽमिति तद्विद २ २२ | अथ हीद सर्वं स्थितम् १ ३ ६ |
| ४—नाकाशस्य घटाकाश ३ ७ | वाचारम्भण विकार ६ १ ४ |
| ५—जीवात्मनोरनन्यत्वम् ३ १३ | ऐतदात्म्यमिदम् ६ ८ ७ |
| ६—मृल्लोह वस्फुलिङ्गाद्यै ३ १५ | यथा सोम्यैकेन मृत्पिण्डेन ६, १ ४ |

| | |
|---|---|
| ७—भूततोऽभूततो वापि सृज्यमाने समाश्रुति, ३-२३ | सदेव सौम्येदमग्र आसीत् ६, २-१ |
| ८—निगृहीतस्य मनस, ३ ३४ | यत्रैतत्पुरुष स्वपिति, ६, ८ १ |
| ९—सकृद् विभात सर्वज्ञ नोपचार कथञ्चन । ३ ३६ | सकृद्विभातो ह्येवैष ब्रह्मलोक ।८, ४ २ |

ईशावास्योपनिषद

| मा० का० | ई० उ० |
|---|---|
| १—सम्भूतेरपवादाच्च सभव प्रतिपिध्यते । ३ २५ | अन्ध तम प्रविशन्ति यऽसम्भूतिमुपासते। १२ |

तैत्तिरीयोपनिषद

| मा० का० | तै० उ० |
|---|---|
| १—तदेव निर्भय ब्रह्म । ३ ३५ | अदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभय प्रतिष्ठा विन्दते । २ ७ |
| २—युञ्जीत प्रणवे चेत । १-२५ | ओमिति ब्रह्म ब्रह्मैवोपाप्नोति । १ ८ |
| ३—प्रणवो ब्रह्म निर्भयम् । १ २५ | आनन्द ब्रह्मणो विद्वान् न बिभेति कदाचन । २ ४ |

कठोपनिषद

| मा० का० | क० उ० |
|---|---|
| १—प्रणव ह्येश्वर विद्यात् सर्वस्य हृदि सस्थितम् १ २८ | अङ०गुष्ठमात्र पुरुषोऽन्तरात्मा सदा जनाना हृदये सनिविष्ट २, १ १२ |
| २—नेह नानेति चाम्नायात् ३ २४ | नेह नानास्ति किञ्चन २, १ ११।४ १९ |

मुण्डकोपनिषद

| मा०का० | मु०उ० |
|---|---|
| सव जनयति प्राणश्चेतोऽशून् पुरुप पृथक् । १।६ | यथा सुदीप्तात् पावकात् तथाक्षरा द्विविधा सोम्य प्रजायन्त, २ १ १ |
| परापरमयापरे, २ २७ | भिद्यन हृदयग्रन्थि २, २ ८ |

| | |
|---|---|
| जीवात्मनोरनन्यत्वम् ३-१३ | ब्रह्मैवेद सर्वम् २, २-११ |

## प्रश्नोपनिषद:

| मा०का० | प्र०उ० |
|---|---|
| अपूर्वोऽनन्तरोऽबाह्योऽनपरः प्रणवोऽव्ययः १-२६ | एतद्वै सत्यकाम परं चापरं च ब्रह्म यदो-ङ्कार ५-२ |
| परापरमथापरे २-२७ | एतद्वै सत्यकाम, ५-२ |
| नेह नानेति चाम्नायात् ३-२४ | प्रजापतिश्चरति गर्भे, ३, १-७ |

## श्वेताश्वतरोपनिषद

| मा०का० | श्वे०उ० |
|---|---|
| कालात्प्रसूति भूताना मन्यन्ते कालचिन्तक, १-८ | काल. स्वभावो नियति र्यदृच्छा भूतानि योनिः पुरुष इति चिन्त्यम् । १-२ |

## कौषतक्युपनिषत्

| मा का. | कौ. उ. |
|---|---|
| विद्यते नहि नानात्वम्—४-९१ | नेह नानास्ति किञ्चन। ३-८ |
| वैतथ्यं तेन वै प्राप्तं स्वप्न आहु' प्रकाशितम्, २-३ | यादृगर्भ जगद्रूपम् ३,१९ |

## नृसिंहपूर्वतापनीयोपनिषद

| मा० का० | नृ० पू० ता० उ० |
|---|---|
| निस्तुति निर्नमस्कारो नि स्वधाकार एव च । २-३७ | निर्द्वन्द्वो निर्नमस्कारो नि स्वधाकार एव च १४७-१५३ |

## श्रीमद्भगवद्गीतायाः

| मा० का० | श्री० भ० गीता |
|---|---|
| १—आनन्दभुक्तया प्राज्ञ, १-३ | ये हि संस्पर्शजा भोगा, ४-२२ |
| स भुञ्जानो न लिप्यते, १-५ | सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते, ५-७ |
| | लिप्यते न स पापेन, ५ १० |

| | |
|---|---|
| चेतोऽशून् पुरुष पृथक्, १-६ | ममैवांशो जीवलोके जीवभूत सनातन, १५ ७ |
| विश्वस्यात्त्वविवक्षायामादिसामान्यमुत्कटम्, १-१९ | अक्षराणामकारोऽस्मि, १० ३३ |
| अकारो नयते विश्वम् १ २३ | यो यच्छ्रद्ध स एव स, १७ ३ |
| युञ्जीत प्रणवे चेत प्रणवो ब्रह्म निर्भयम् । १-२५ | ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविध स्मृत, १७ २३, २४ |
| प्रणव हीश्वर विद्यात्सर्वस्य हृदि सस्थितम्, १-२८ | ईश्वर सर्वभूताना हृद्देशेऽर्जुन तिष्ठति, १८ ६१ |
| भूतानीति तद्विद, २ २० | भूतानि यान्ति भूतेज्या, ९-२५ |
| गुणा इति गुणविदस्तत्त्वानीति च तत्त्वविद्, | |
| देवा इति च तद्विद, २ २१ | यान्ति देवव्रता देवान्, ९-२५ |
| यज्ञा इति तद्विद, २ २२ | यज्ञशिष्टामृतभुज ४ ३१ तथा ४-२३,२४ |
| भोक्तेति च भोक्तृविद २-२२ | अह हि सर्वयज्ञाना भोक्ता च प्रभुरेव च ९-२४ |
| | उपद्रष्टानुमन्ता च, १३-२२ |
| मूर्त इति मूर्तविद २-२३ | प्रकृति स्वामधिष्ठाय सभवामि युगे युगे ४, ८ |
| काल इति कालविद २-२४ | कालोऽस्मि लोकक्षयकृत्प्रवृद्ध, ११-३२ |
| | मृत्यु सर्वहरश्चाहम्, १० ३४ |
| य भाव दर्शयेद् यस्य त भाव स तु पश्यति, २ ३५ | यो यच्छ्रद्ध स एव स १७ ३ |
| वीतरागभयक्रोधै २ ३५ | वीतरागभयक्रोध २ ५६ |
| | वीतरागभयक्रोधा ४-१० |
| जीवात्मनोरनन्यत्वम् ३ १३ | वासुदेव सर्वमिति ८ १९ |
| आश्रमास्त्रिविधा हीनमध्यमोत्कृष्ट-दृष्टय ३-१६ | ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसा ·· अधो गच्छन्ति तामसा १४-१८ तथा १७-२ |

| | |
|---|---|
| न भवत्यमृत मर्त्यम् ३-२१ | जातस्य हि ध्रुवो मृत्यु २-२७ |
| प्रकृतेरन्यथाभावो न कथंचिद् भविष्यति ३ २१ | मिथ्यैव व्यवसायस्ते प्रकृतिस्त्वा नियोक्ष्यति, १८ ५९ |
| निगृहीतस्य मनसो निर्विकल्पस्य धीमत ३ ३४ | शनैं शनैरुपरमेद् बुद्धया धृतिगृहीतया ६ २५ |
| आत्मसस्थ तदाज्ञानम् ३ ३८ | आत्मसस्थ मन कृत्वा, ६ २५ |
| अस्पर्शयोग, ३ ३९ | मात्रास्पर्शास्तु कौन्तेय २ १४ |
| | त विद्याद् दु खसयोगवियोगम् ६ २३ |
| मनसो निग्रहस्तद्वद् भवेदपरिखेदत ३ ४१ | सनिश्चयेन योक्तव्यो योगोऽनिर्विण्ण चेतसा ६ २३ |
| उपायेन निगृह्णीयाद् विक्षिप्त काम भोगयो, ३ ४२ | अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते । ६ ३५ ३६ |
| लये सबोधयेच्चित्त विक्षिप्त शमयेत्पुन सकषाय विजानीयात्समप्राप्त न चालयेत् ३ ४४ | सकल्पप्रभवान् कामास्त्यक्त्वा सर्वानशेषत । मनसैवेन्द्रियग्राम विनियम्य समन्तत । ६ २४, २८ |
| यदा न लीयते चित्त न च विक्षिप्यते पुन । अनिङ्गनमनाभास निष्पन्न ब्रह्म तत्तदा । ३-४६ | यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता ६ १९ |
| स्वस्थ शान्त सनिर्वाणमकथ्य सुख मुत्तमम् । ३ ४७ | योऽन्त सुखोऽन्तरारामस्तथान्तर्ज्योति रेव य । स योगी ब्रह्मनिर्वाण ब्रह्म भूतोऽधिगच्छति । ५ २४ २६ |
| जरामरणनिर्मुक्तास्तदच्यवन्ते । ४ १० | य य वापि स्मरन् भावम् ८ ६ |
| निवृत्तस्याप्रवृत्तस्य निश्चला हि तदा स्थिति, ४ ८० | श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला । २ ५३ |
| अजमनिद्रमस्वप्न प्रभात भवति स्वयम् । ४ ८१ | न तद् भासयते सूर्य १५ ६ |
| प्राप्य सर्वज्ञता कृत्स्नाम् ४ ८५ | यस्त्वात्मरतिरेव स्यात् । ३ १७, १८ |

विप्राणां विनयो ह्येष शमः ४-८६　　　योगारूढस्य तस्यैव शमः ६-३
ज्ञानं ज्ञेयं च विज्ञेयम् ४-८८　　　ज्ञानं ज्ञेयं परिज्ञाता १८-१८
सर्वज्ञता हि सर्वत्र भवतीह महाधियः,　　　यो मामेवमसंमूढः १५-१९
४-८९

एवमुपनिषत्सु श्रीमद्भगवद्गीतायां च गौडपादकारिकायाः समानवाक्यानि समानसिद्धान्ताश्चोपलभ्यन्ते ।

यथा च बौद्धदर्शनग्रन्थोक्तानां सिद्धान्तानां वाक्यानां च कारिकासु ग्रहणम् ।

लङ्कावतारसूत्रस्य

| मा० का० | ल० अ० सू० |
|---|---|
| स्वप्नमायासरूपेति, १-७ | मायोपमाः सर्वधर्माः, १३<br>मायास्वप्नोपमं दृश्यं विज्ञप्त्या न विकल्पयेत्, ११<br>मायोपमं समाधिं च १६<br>स्वप्नविभ्रममायाख्यम् ६६ |
| चित्तस्पन्दितमेवेदं ग्राह्यग्राहकवद्द्वयम् । ४-७२ | ग्राह्यग्राहकभावेन शाश्वतोच्छेदवर्जितम् । ३-६५<br>ग्राह्यग्राहकभावेन चित्तं नगति देहिनाम् । १०-८५ |
| स्वप्नमाये यथादृष्टे गन्धर्वनगरं यथा । २-३२ | गन्धर्वनगरस्वप्नमायानिर्माणसदृशाः १०-१४४<br>मायास्वप्ननिभा भावना गन्धर्वनगरोपमा । १०-८७५<br>एवमेव १०-२७९।१०-२९१ |
| न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः । ४-३३<br>प्रपञ्चं पशमोऽद्वयः । २-३५ | अनिरुद्धा अनुत्पन्नाश्च भगवता सर्वधर्मा देशन्ते । (पृ० १९१) तथा २-१।१०-१<br>सर्वप्रपञ्चोपशमाद् भ्रान्तो नाभिप्रवर्तते । १०-१३० पृ०२९५ |

| | |
|---|---|
| यदा न लीयते चित्त न च विक्षिप्यते पुन । अनिङ्गनमनाभास निष्पन्न ब्रह्म तत्तदा । ३ ४६ | चित्तमात्र निराभास विहारा बुद्धभूमि च १० १०५ पृ० २७८ |
| | चित्तमात्रमतिक्रम्य निराभासमतिक्रमेत । निराभासस्थितो योगी महायान न पश्यति । १० १५७, पृ० २९९ तथा १० ११० पृ० २७६ । १० ९४ पृ० २७७ । ३ २५, २६ |
| प्रपञ्चोपशमाऽद्वय । २ ३५ | सर्वप्रपञ्चोपशमाद् भ्रान्तो नाभिप्रवर्तते । १ १० पृ० २०५ |
| जाग्रच्चित्तेक्षणीयास्ते न विद्यन्ते ततः पृथक् । | स्वचित्ताभिनिवेशेन चित्त वै सम्प्रवर्तते । |
| तथा तद्दृश्यमेवेद जाग्रतश्चित्तमिष्यते । ४ ६६ | बहिर्धा नास्ति वै दृश्यमतो वै चित्तमात्रकम् ॥ १० १०१ |
| चित्त निर्विषय नित्यमसङ्ग तेन कीर्तितम् । ४-७२ | असङ्गलक्षण ज्ञान विषयवैचित्र्यसङ्गलक्षण विज्ञानम् ॥ |
| | असङ्गस्वभावलक्षण ज्ञानम् अप्राप्तिलक्षण ज्ञानम् । पृ० १५७ |
| कोट्यश्चतस्र एतास्तु ग्रहै र्यासा सदावृत । ४ ८४ | चतुष्कोटिकया युक्त्या न ते मन्यते कोविदा । २ २० |
| अवस्तु सोपलम्भ च शुद्ध लौकिकमिष्यते । ४ ८७ | तत्र लौकिक ज्ञानम्—लोकोत्तर ज्ञानम्—तत्र लोकातीत ज्ञानम् । पृ० १५६ |
| अवस्त्वनुपलम्भ च लोकोत्तरमितिस्मृतम् । | |
| सर्वधर्मान्यथा ज्ञान नैतद्बुद्धेन भाषितम् । ४ ९९ | यस्या च रात्र्या विगमो यस्या च परिनिर्वृति । एतस्मिन्नन्तरे नास्ति मया किञ्चित् प्रकाशितम् । पृ० १४४ |
| | न म यान महायान न घोषा न च अक्षरा पृ० १३७ |
| | या रात्रिम् अवचन बुद्धवचनम् पृ० १४२ १४३ |
| | तत्त्व ह्यक्षरवर्जितम् पृ० ४८ |
| | निरक्षरत्वाद् धर्मस्य । पृ० १९४ |

आर्यदेवस्य चतुश्शतकस्य

| मा० का० | च० श० |
|---|---|
| अभूत नैव जायते ४-४ | नाभूतो नाम जायते, १५ २३ पृ०२५९ |
| अजाद्वै जायते यस्तु दृष्टान्तस्तस्य नास्ति वै।<br>जाताच्च जायमानस्य न व्यवस्था प्रसज्यते। ४ १३ | जातो यदा तदा नास्ति जायमानस्य सम्भव ।<br>जात उत्पद्यते कस्माज्जायमानो यदा तदा ॥<br>( १५-२० पृ० २५७ ) |
| सतो हि मायया जन्म युज्यते न तु तत्त्वत ।<br>तत्त्वतो जायते यस्य जात तस्य हि जायते ॥ ३-२७ | सम्भव क्रियते यस्य प्राक् सोऽस्तीति न युज्यते ।<br>सतो यदि भवेज्जन्म जातस्यापि भवेद् भव ॥ ११ १० पृ० ११४ |
| न निरोधो न चोत्पत्ति नं बन्धो न च साधक । ३ ३२ | कस्यचित्केनचित् सार्द्धं बन्धो नाम न विद्यते । |
| संवृत्या जायते सर्वं शाश्वत तेन नास्ति वै । ४ ५७ | यस्मात्प्रवर्तते भावस्तेनोच्छेदो न जायते ।<br>१० २५ पृ० १०० |
| यथा मायामयाद् बीजाज्जायते तन्मयोऽङ्०कुर । ४ ५९ | यथा हि कृतकाद् बीजाज्जायते कृतकोङ्०कुर । १० २४ पृ० ९८ |

मैत्रेयनाथस्य महायानसूत्रालङ्०कारस्य

| म का | म सू |
|---|---|
| लय संबोधयेच्चित्त विक्षिप्त शमयेत्पुन । सकषाय विजानीयाच्छमप्राप्त न चालयेत् । ३-४४ | लीन चित्तस्य गृह्णीयादुद्धत शमयेत्पुन ।<br>शमप्राप्तमुपेक्षेत तस्मिन्नालम्बते पुन ॥<br>१४ ६ |
| अवस्तु सोपलम्भ च शुद्ध लौकिक मिष्यते । ४ ८७ | परतन्त्रस्वभावो हि शुद्धलौकिकगोचर ।<br>म सू टीका पृ १९ |

यशोमित्रस्याभिधर्मकोशव्याख्याया

| | |
|---|---|
| जाताच्च जायमानस्य न व्यवस्था प्रसज्यते । ४ १३ | उत्पन्नस्य पुनरुत्पत्तौ कल्प्यमानायामनवस्थाप्रसङ्०ग । म सू पृ १४<br>टिप्पणी —३ |

नागार्जुनस्य मध्यमककारिकायाः

| म. का. | म. का. |
|---|---|
| स्वतो वा परतो वापि न किञ्चिद् वस्तु जायते । ४-२२ | न स्वतो जायते भावः परतो नैव जायते । २१-१३ |
| न निरोधो न चोत्पत्ति र्न बद्धो न च साधकः । ४-३३ | न बध्यन्ते न मुच्यन्त उदयव्ययधर्मिणः । १९-५ तथा १-३।१-७ |
| प्रकृतेरन्यथाभावो न कथञ्चिद् भविष्यति ४-७, ४-२९ | प्रकृतेरन्यथाभावो न हि जातूपपद्यते । १५-८ तथा १३-४।१५-९।१४-७ |
| स्वप्नमाये यथा दृष्टे गन्धर्वनगरं यथा । २-३२ | गन्धर्वनगराकारा मरीचिस्वप्नसन्निभा । १७-३३ |
| प्रपञ्चोपशमोऽद्वयः । २-३५ | सर्वोपलम्भोपशमः प्रपञ्चोपशमः शिवः २५-२४ |
| भूतं न जायते किञ्चिदभूतं नैव जायते । ४-४ | न स्वतो नापि परतो न द्वाभ्यां नाप्यहेतुतः । उत्पन्ना जातु विद्यन्ते भावाः क्वचन केचन ॥ १-१ एवमेव-२१-१३, २३-२२, १-६ |
| जरामरणनिर्मुक्ता सर्वे धर्माः स्वभावतः । ४-१० | निर्जरामरणाजाति भवेज्जायेत चामृतः । ११-३ |
| हेतोरादिः फलं येषामादि र्हेतुः फलस्य च । ४-१५ | एकत्वे फलहेत्वोः स्यादैक्यं जनकजन्ययोः । २०-२० |
| संभवे हेतुफलयोरेषितव्यः क्रमस्त्वया युगपत् सम्भवे यस्मादसम्बन्धो विषाणवत् । ४-१६ | तस्मान्नापपद्यन्ते पूर्वापरसहक्रमाः ११-५, २०-७ |
| यस्य हेतोः फलात् सिद्धिः फलसिद्धिश्च हेतुतः । | यदीन्धनमपेक्ष्याग्निरपेक्ष्याग्निं यदीन्धनम् । |
| कतरत्पूर्वमुत्पन्नं यस्य सिद्धिरपेक्षया । ४-१८ | कतरत्पूर्वनिष्पन्नं यस्य सिद्धिरपेक्षया ॥ १०-८ । |

| | |
|---|---|
| स्वतोवापरतोवापिन किञ्चिद्वस्तु जायते । | न स्वतो जायते भाव परता नैव जायते । |
| सदसत्सदसद्वा पि न किञ्चिद्वस्तु जायते ॥ | न स्वत परतश्चैव जायते जायते कुत ॥ |
| ४ २२ | २ १३।२३ २०।१ १।१ ७। |
| अनादेरन्तवत्त्व च ससारस्य न सेत्स्यति । | पूर्वा प्रज्ञायते कोटिर्नेत्युवाच महामुनि । |
| अनन्तता चादिमतो मोक्षस्य न भविष्यति ॥ | ससारोऽनवराग्रो हि नास्त्यादि र्नापि |
| ४ ३० | पश्चिमम् ॥ ११ १ तथा ११ ८ |
| आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा ॥ ४ ३१ | नैवाग्र नावर यस्य मध्य तस्य कुतो भवेत् । ११ २ |
| नास्त्यसद्धेतुकमसन् सदसद्धेतुक तथा । सच्च सद्धेतुक नास्ति सद्धेतुकमसत्कुत ॥ | नाभावाज्जायते भावो भावो भावान्न जायते । |
| ४ ४० | नाभावाज्जायतेभावोऽभावो भावान्न जायते॥ २१ २२ |
| सवृत्या जायते सर्वं शाश्वत तेन नास्ति वै । | प्रतीत्य यद् यद् भवति नहि तावत् तदेव तत् । |
| स्वभावेन ह्यज सर्वमुच्छेदस्तेन नास्ति वै । ४ ५७ | न चान्यदपि तत्तस्मान्नोच्छिन्न नापि शाश्वतम् । १८ १० |
| सर्वधर्मास्तथा ज्ञान नैतद् बुद्धेन भाषितम् ॥ ४ ९९ | न क्वचित्कस्यचित्कश्च धर्मो बुद्धेन देशितः । २५ २४ |

चन्द्रकीर्ति मध्यमकवृत्ति

| मा का | म वृ |
|---|---|
| निर्विकल्पो ह्यय दृष्ट प्रपञ्चोपशमोऽद्वय । २ ३५ | प्रपञ्चोपशम —प्रपञ्चोपरम पृ ११ |
| | सर्वप्रपञ्चोपशमशिवलक्षण निर्वाण शास्त्रस्य प्रयोजनमिति । पृ ४ |
| अतो वक्ष्याम्यकार्पण्यमजातिसमता गतम् । यथा न जायते किञ्चिज्जायमान समन्तत ॥ ३ २ | सर्वधर्माणामन्ताजातिसमतया । पृ ३७८ |

| | |
|---|---|
| हेतोरादि. फलं येषामादि र्हेतुः फलस्य च । तथा जन्म भवेत्तेषा पुत्राज्जन्म पितुर्यथा ॥ ४-१५ | पिता चेत्र विना पुत्रात्कुत. पुत्रस्य संभव. पुत्राभावे पिता नास्ति तथा सत्त्व तयोर्द्वयो. ९-११४ |
| आदिशान्ता ह्यनुत्पन्नाः प्रकृत्यैव सुनिर्वृताः ४-९३ | तयोर्द्वयो. । १-११४ आदिशान्ता ह्यनुत्पन्नाः प्रकृत्यैव च निर्वृताः । ९-१०४ । |
| नैतद् बुद्धेन भाषितम् । ४-९९ | अनक्षरस्य धर्मस्य श्रुतिः का देशना च का । बो च. अ. प. पृ. ३६५ |

आर्यरत्नकूटस्य

| मा. का. | आ. र. कू. |
|---|---|
| न निरोधो न चोत्पत्ति र्न बद्धो न च साधक· । २-३२ | यो नोत्पन्नो न परिनिर्वास्यति । ( म. वृ ४९ पृ. ) |
| भूतं न जायते किञ्चिदभूत नैव जायते । ४-४ | अत रात्वा· प्रकृत्या परिनिर्वृता ॥ ९-१० |

महायानसूत्रालङ्कारस्य

| | |
|---|---|
| न निरोधो न चोत्पत्ति र्न बन्धो न च साधक. । २-३२ | न सन्न चासन्न तथा न चान्यथा । न जायते व्येति न चावहीयते । न वर्धते नापि विशुध्यते पुन विशुध्यते तत्परमार्थलक्षणम् । ६-२ पृ २२ |
| आदिशान्ता ह्यनुत्पन्ना. प्रकृत्यैव सुनिर्वृताः । ४-९३ | अनुत्पन्नानिरुद्धादिशान्तप्रकृतिनिर्वृता ११-५१ |

विग्रहव्यावर्तिन्याः

| | |
|---|---|
| हेतोरादि फलं येषामादि र्हेतु फलस्य च । तथा जन्म भवेत्तेषा पुत्राज्जन्म पितुर्यथा । ४-१५ | पिता चेदुत्पाद्य. पुत्रो यदि तेन चैव पुत्रेण । उत्पाद्य स यदि पिता वद तत्रोत्पादयति कः कम् । ५० |

इमान्युपनिषद्वाक्यानि, गीतावाक्यानि, बौद्धदर्शनग्रन्थवाक्यानि च भगवता श्रीशङ्करेण स्वीये भा० का० भाष्ये श्रीसच्चिदानन्देन्द्रसरस्वतीस्वामिना भा० र० विवृतौ, श्रीरघुनाथदामोदरकरमरकरेण स्व सम्पादित गौ० पा० का० भूमिकायां श्रीविधुशेखरभट्टाचार्येण च आगमशास्त्रस्यावतरणिकायां तथा तस्य स्वीयाभिनववृत्तौ चोपन्यस्तानि ।

## माण्डूक्यकारिकाग्रन्थस्याभिधेय.

इदं पूर्वमुक्तं यद् श्रीगौडपादाचार्यस्य निर्विवादो मुख्यतमो ग्रन्थो माण्डूक्यकारिकास्ति, अस्यैवापरं नाम आगमशास्त्रमपि । अस्मिन्नागमशास्त्रे चत्वारि प्रकरणानि-१—आगमप्रकरणम् २—वैतथ्यप्रकरणम् ३—अद्वैतप्रकरणम् ४—अलातशान्तिप्रकरणं च ।

प्रथमं प्रकरणम्—आगमाख्यम् । अत्र जाग्रदाद्यवस्थात्रयचिन्तनं ब्रह्मचिन्तनं तत्प्राप्त्युपायप्रणवचिन्तनं च । अत एवास्यागमप्रकरणं नाम । मुख्यमुपेयोपायचिन्तनम् । उपेय आत्मा, उपायः प्रणवोपासनम् । अत्रैकोनत्रिंशत् कारिकाः सन्ति । तत्राष्टादशसु उपेय आत्मा चिन्तितः, अवशिष्टास्वेकादशसु उपाय प्रणवोपासनं चिन्तितम् । अयमात्मा शरीरे स्थितस्त्रिविधामवस्थामनुभवति जाग्रत्स्वप्नसुषुप्त्याख्याम् । जाग्रदवस्थापन्नोऽयं शारीर (उपचारात्) आत्मा विश्व इत्युच्यते, स्वप्नावस्थापन्नः स तैजस (तेजोमय) उच्यते, सुषुप्तिमापन्नः प्राज्ञ इत्युच्यते । प्रथमः शारीर आत्मा चक्षुषि (उपलक्षणमिदं यस्य कस्यापि पुरोवर्तिनश्चक्षुषि दृश्यमानत्वात्) द्वितीयस्तैजसो मनसि, तृतीयश्च प्राज्ञो हृदयाकाशे वर्तते । प्रथमो विश्वो बाह्यविषयाननुभवति, अतो बहिष्प्रज्ञ, द्वितीयस्तैजसोऽन्तः स्थितान् विषयाननुभवति, अतोऽन्तःप्रज्ञ, तृतीयः प्राज्ञः सुषुप्तौ न किञ्चनानुभवति, अतो घनप्रज्ञ उच्यते । एते क्रमशः स्थूलसूक्ष्मानन्दान् विषयत्वेन भुञ्जतेऽतः स्थूलभुक्, प्रविविक्तभुक्,आनन्दभुगिति कथ्यन्ते । अवस्थात्रयातीतोऽयमात्मा तुरीय इत्युच्यते । कस्यापि विशेषस्याभावात् किञ्चिन्नाम न विद्यते । इदं तुरीयमेव

आत्मनो मुख्य स्वाभाविक स्वरूपम् । एतदेव मायाविनिर्मुक्तमद्वैत शिव तुरीय रूपम् । तुरीयावस्था वर्णयन् आचार्य आह—

**अनादिमायया सुप्तो यदा जीवः प्रबुध्यते ।**
**अजमनिद्रमस्वप्नमद्वैतं बुध्यते तदा ॥**

( मा का १-१६ )

अस्मिन् प्रथमे प्रकरणे ससारस्य सृष्टिरपि चिन्तिता । अत्रोक्त यत्सर्वमिद कल्पित मायामात्रम् । यथा हि—

**प्रभवः सर्वभूताना सतामिति विनिश्चयः ।**
**सर्वं जनयति प्राणश्चेतोऽशून् पुरुषः पृथक् ॥**

( मा का १-६ )

अत्रापरेऽपि सृष्टिवादा निर्दिष्टा ।

अन्यथा सर्वेऽपि विचारा बहिष्प्रज्ञादिजागरितस्थानादिप्रणवोपासनादयो उपनिषदाधारमूला । तत्र तत्र कारिकाणा भाष्ये वृत्तौ व्याख्याने च भाष्यादिकर्तृभिस्ते ते उपनिषदशा उद्धृता । तथापि बृहदारण्यकोपनिषदो बाहुल्यम् ।

द्वितीयप्रकरण वैतथ्यनामकम् । प्रथमप्रकरणस्यान्तिमकारिकायाम् "द्वैतस्योपशम शिव" ( मा० १-२९ ) इत्युक्तम् । अत पूर्वम्—"ज्ञाते द्वैत न विद्यते" ( मा० १-१८ ) इत्युक्तम् । एवमेव—"मायामात्रमिद द्वैतम्' ( मा० १-१७ ) इत्युक्त्वा द्वैतस्य मिथ्यात्व प्रतिपादितम् । "एकमेवाद्वितीयम् । "नेह नानास्ति किञ्चन' ( बृ० आ० उ० ४-४-१९ ) इत्यादिश्रुतिभिस्तु प्रपञ्चस्य मिथ्यात्व सिद्धमेव किन्तु युक्तिभिरपि प्रपञ्चस्य मिथ्यात्व साधयितुकाम आचार्य इद वैतथ्यप्रकरणमारब्धवान् । तच्च वैतथ्यम् अष्टात्रिंशत्कारिकाभिरस्मिन् प्रकरणे प्रसाधितवान् । अत्र चोक्त तेन विश्वमिद स्वप्नमिव मायामिव गन्धर्वनगरमिव । यथा—

स्वप्नमाये यथा दृष्टे गन्धर्वनगर यथा ।
तथा विश्वमिद दृष्ट वेदान्तेषु विचक्षणैः ॥

( मा० का० २ ३२ )

तत्र शुद्ध आत्मनि पूर्व जीव कल्प्यते तत सर्वे बाह्या आभ्यन्तराश्च कल्प्यन्ते यथा रज्ज्वाधारे सर्पकल्पना । यथा—

जीव कल्पयते पूर्वं ततो भावान पृथग्विधान् ।
बाह्यानाध्यात्मिकाश्चैव यथाविद्यस्तथास्मृति ॥

( मा० का० २ १६ )

अस्या भाष्ये भगवान् शङ्कर आह— योऽसौ स्वय कल्पितो जीव सर्वकल्पनायामधिकृत । अर्थात् सर्वकल्पनामूल जीवकल्पनेति । स्वप्न दृष्टान्तेन जागरितेऽपि भावाना वैतथ्य प्रतिपादितम् । यथा स्वप्ने कश्चिद् दूर देश गत्वापि प्रबुद्ध सन् स्वशय्यायामेव स्वमुपलभते तथैव जागरिते दृश्यमाना अपि भावा वितथा एव । एवमेव स्वप्नजागरितयो प्रतीयमाना भेदोऽपि मिथ्यैव । वस्तुत स्वप्नजागरितयोरभेद एव । यथोक्तम्—

स्वप्नजागरिते स्थाने ह्येकमाहु र्मनीषिण ।
भेदाना समत्वेन प्रसिद्धेनैव हेतुना ॥

( मा० का० २ ५ )

आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा ।
वितथै सदृशा सन्तोऽवितथा इव लक्षिता ॥

( मा० का० २ ६ )

कल्पयत्यात्मनात्मानमात्मा देव स्वमायया ।
स एव बुध्यते भेदानिति वेदान्तनिश्चय ॥

( मा० का० २ १२ )

न निरोधो न चोत्पत्ति र्न बद्धो न च साधकः ।
न मुमुक्षु र्न वै मुक्त इत्येषा परमार्थता ॥

( मा० का० २-३२ )

पुनरिद वैतथ्यप्रकरण विभिन्नसृष्टिवादिना मतान्युद्धृत्याद्वैतमाहात्म्यमद्वैतावस्थापन्नमाहात्म्य च वर्णयित्वा समाप्तिमगात् ।

तृतीय प्रकरणम्-अद्वैतनामकम् । द्वितीये वैतथ्यप्रकरणे स्वप्नमायागन्धर्वनगरादिदृष्टान्तैस्तथा यदादौ नास्ति तदन्तेऽपि नास्तीत्यादितर्कैश्च वैतथ्य समर्थ्य षट्‌त्रिंशतमकारिकया—"अद्वैत समनुप्राप्य·· " इत्यादि कया अद्वैतप्राप्तिरुपदिष्टा तथात्माद्वैतमेव परमार्थ तत्त्वमिति निश्चितम् । अतस्तत्परमार्थाद्वैततत्त्वप्रतिपिपादयिषया श्रुतिभि सिद्धेऽप्यद्वैते तर्केण साधयितुकाम आचार्यस्तृतीयमद्वैताख्य प्रकरणमारब्धवान् ।

"सोऽकामयत बहु स्या प्रजायेय" ( तै० उ० २-६ ) तदैक्षत बहु स्या प्रजायेय ( छा० उ० ६।२-३ ) इत्यादिश्रुतिभि श्जातिर्भेदबुद्धिश्च प्रतिपादिता । उपासनासिद्ध्यर्थमुपास्योपासकभेदबुद्धिरप्यावश्यकी । अद्वैतसिद्ध्यर्थमेवा जातिश्रुद्धि भेदबुद्धिश्चा गङ्करणीया । अत आदावेव प्रथम जाति खण्डिता—

उपासनाश्रितो धर्मो जाते ब्रह्मणि वर्तते ।
प्रागुत्पत्तेरजं सर्वं तेनासौ कृपणः स्मृत ॥

( मा० का० ३-१ )

अतो वक्ष्याम्यकार्पण्यमजातिसमतां गतम् ।
यथा न जायते किञ्चिज्जायमानं समन्ततः ।

( मा० का०३-२ )

अत्राजातवादस्तर्केणैव गाधितो यद् यज्जायते तदजातमेव, जात तु

जायते न हि। तथा यदजातं तदमृतं नित्यमजातत्वात्, तत्स्थ जातं मर्त्यमनित्यं च भविष्यति।

अजातस्यैव भावस्य जातिमिच्छन्ति वादिनः।
अजातो ह्यमृतो भावो मर्त्यतां कथमेष्यति॥
(मा० का० ३.२०)

न भवत्यमृतं मर्त्यं न मर्त्यममृतं तथा।
प्रकृतेरन्यथाभावो न कदाचिद् भविष्यति॥
(मा० का० ३-२१)

अतः सृष्टिवादः "तदैक्षत बहु स्यां प्रजायेय" (छा० ६।२।३) इत्यादिश्रुत्युक्ता सृष्टिश्च मायिकी न तात्त्विकी।

असतो मायया जन्म तत्त्वतो नैव जायते।
वन्ध्यापुत्रो न तत्त्वेन मायया वापि जायते॥
(मा० का० ३.२८)

यथा स्वप्ने द्वयाभासं स्पन्दते मायया मनः।
तथा जाग्रद्द्वयाभासं स्पन्दते मायया मनः॥
(मा० का० ३-२९)

अतो द्वैतं मायिकं मनोदृश्यमानमेव परमार्थं त्वद्वैतमेव।

मनोदृश्यमिदं द्वैतं यत्किञ्चित्सचराचरम्।
मनसो ह्यमनीभावे द्वैतं नैवोपलभ्यते॥
(मा० का० ३.३१)

अन्ते च मनसो निग्रहप्रकारमुक्त्वा—

न कश्चिज्जायते जीवः सम्भवोऽस्य न विद्यते।
एतत्तदुत्तमं सत्यं यत्र किञ्चिन्न जायते॥
(मा० का० ३-४८)

इति कारिकया अद्वैतप्रकरणमुपसंहृतम् ।

चतुर्थं प्रकरणम् अलातशान्तिनामकम् । अद्वैताख्यतृतीयप्रकरणस्यान्तिमया कारिकया—एतदुत्तमं सत्यं यत्र किञ्चिन्न जायते । ( मा० का० ३-४८ ) इत्यनयाऽद्वैतस्योत्तमत्वं प्रतिपादितम् । अस्यैवाद्वैतदर्शनस्य सम्यग्दर्शनत्वं प्रतिपादयितुमुक्तमप्यजातिवादं पुनः विशदयितुं तथा मुख्यतोऽद्वैतन्यायेन ( व्यतिरेकव्याप्त्या ) अद्वैतं द्रढयितुं चतुर्थमलातशान्त्याख्यं प्रकरणमारब्धवान् । अलातशान्तिरित्यस्यालातशान्तिदृष्टान्तोपलक्षितं प्रकरणमित्यर्थः । अलातं नाम भ्रमदङ्गारः, यथा भ्रमन्नङ्गारः एकस्मिन्नेव काले चतसृषु दिक्षु स्थित इव लक्ष्यते । वस्तुतः एकोऽङ्गारः एकस्मिन् काले चतसृषु दिक्षु स्थातुं न शक्नोति । किन्तु परिभ्रमणेन दृष्टिदोषेण च चतुर्दिक्षु परिभ्रमन् सन्लक्ष्यते । तथैवेदं चराचरमद्वैतमपि द्वैतमिव, अजातमपि जातमिव लक्ष्यते । एवमलातस्य अलातोपलक्षितस्य भ्रमस्य शान्तिरलातशान्तिः कथ्यते । अयं फलितार्थो यद् द्वैतवादो जातिवादश्च भ्रमस्तस्य शान्तिरद्वैते परिनिष्ठिता । अतोऽलातशान्तिप्रकरणे पूर्वप्रकरणोक्तमद्वैतं विशदीकृतम् । अत एव भागवता शङ्करेण भाष्ये उक्तं यद् श्रुत्या युक्त्या च प्रसाधितमप्यद्वैतमवीतन्यायेनाप्यस्मिन् प्रकरणे साध्यते ।

अलातस्य दृष्टान्तो यथा—

ऋजुवक्रादिकाभासमलातं स्पन्दितं यथा ।
ग्रहणग्राहकाभासं विज्ञानं स्पन्दितं तथा ॥

( मा० का० ४-४७ )

अस्पन्दमानमालातमनाभासमजं यथा ।
अस्पन्दमानं विज्ञानमनाभासमजं तथा ॥

( मा० का० ४-४८ )

अलाते स्पन्दमाने वै नाभासा अन्यतो भुव. ।
न ततोऽन्यत्र विज्ञानान्नालातं प्रविशन्ति ते ।।
( म० का० ४-४९ )

न निर्गता अलातास्ते द्रव्यत्वाभावयोगत ।
विज्ञानेऽपि तथैव स्युराभासस्याविशेषतः ।।
( म० का० ४ ५० )

विज्ञाने स्पन्दमाने वै नाभासा अन्यतो भुवः ।
न ततोऽन्यत्र निष्पन्दान्न विज्ञान विशन्ति ते ।।
( म० का० ४ ५१ )

1 अस्मिन् प्रकरणे आदित एव मुख्यतया जातिवाद खण्डितोऽजातिवादश्च समर्थित । यथा हि

अजातस्यैव धर्मस्य जातिमिच्छन्ति वादिन ।
अजातो ह्यमृतो धर्मो मर्त्यता कथमेष्यति ।।
( म० का० ४ ६ )

अत्र धर्मशब्द पदार्थवाचक ।

न भवत्यमृत मर्त्यं न मर्त्यममृतं भवेत् ।
प्रकृतेरन्यथाभावो न कथञ्चिद् भविष्यति ।।
( म० का० ४ ७ )

अत्र मर्त्यशब्दोऽनित्यार्थकस्तथैवामृतशब्दो नित्यार्थक । अजातसाधने "प्रकृतेरन्यथाभावो न कथञ्चिद् भविष्यति ।" इति हेतुरसकृदुपन्यस्त । यथा-

अजातं जायते यस्मादजाति· प्रकृतिस्ततः ।
प्रकृतेरन्यथाभावो न कथञ्चिद् भविष्यति ।।
( मा० का० ४ २९ )

तृतीयेऽपि प्रकरणेऽप्युक्तः —

न भवत्यमृतं मर्त्यं न मर्त्यममृतं तथा ।
प्रकृतेरन्यथाभावो न कदाचिद् भविष्यति ॥

( मा० का० ३-२१ )

अनेय युक्तिर्यद् यत्प्रागेव जातं तत् कथं पुनर्जायते । यच्चाजातं तत्तु अजातत्वादेव नित्यं तत्कथं जायेत । एवञ्चोभयथापि अजातिवाद सिद्ध ।

अद्वैतसाधनेऽजातिसाधने च तृतीयचतुर्थप्रकरणयोर्मिथो बहु सादृश्यमुपलभ्यते । एतत्सादृश्यं समानैर्हेतुभिः समानैः शब्दैश्च । द्रष्टव्या इमाः कारिका —

अतो वक्ष्याम्यकार्पण्यमजातिसमतां गतम् ।
यथा न जायते किञ्चिज्जायमानं समन्ततः ।

( मा० का० ३।२ )

वैशारद्यं तु वै नास्ति भेदे विचरतां सदा ।
भेदनिम्नाः पृथग्वादास्तस्मात्ते कृपणाः स्मृताः

( मा० का० ४।९४ )

अस्पर्शयोगो वै नाम दुर्दर्शः सर्वयोगिभिः ।

(मा० का० ३।३९)

अस्पर्शयोगो वै नाम सर्वसत्त्वसुखो हितः ।

( मा० का० ४-२ )

अजातस्यैव भावस्य जातिमिच्छन्ति वादिनः ।
अजातो ह्यमृतो भावो मर्त्यतां कथमेष्यति ॥

( मा० का० ३-२० )

अजातस्यैव धर्मस्य जातिमिच्छन्ति वादिन ।
अजातो ह्यमृतो धर्मो मर्त्यतां कथमेष्यति ॥

तृतीयप्रकरणस्य २१, २२, ४८ कारिकाश्चतुर्थप्रकरणस्य ७, ८, ७१ कारिकाश्च पूर्णतः समानाः सन्ति ।

यद्यपीदं प्रकरणं विशेषतस्तृतीयप्रकरणोक्ताद्वैतवादस्य व्यतिरेकव्याप्त्या विशदीकरणाय प्रवृत्तं किन्तु ग्रन्थस्योपसंहारभूतत्वेन प्रथमे प्रकरणे विचारितस्य जाग्रत्स्वप्नाद्यवस्थाचतुष्टयस्य द्वितीये प्रकरणे विचारितस्य वैतथ्यस्य तृतीये प्रकरणे विचारितस्याजातिवादस्याद्वैतस्य च मध्ये मध्ये सङ्केतः पुष्टिश्च वर्तते । एतदर्थं चतुर्थः प्रकरणस्येमाः कारिका द्रष्टव्याः । ४-५, ६, ३६, ३७, ३९, ६४ ।

एवं चतुष्कोटिविनिर्मुक्तमजममेयं भगवन्तं दृष्ट्वा सुधीः परमं पदं ब्राह्मण्यं प्राप्नोति । यथाह—

कोटयश्चतस्र एतास्तु ग्रहैं यासां सदावृतः ।
भगवानाभिरस्पृष्टो येन दृष्टः स सर्वदृक् ॥
( मा० का० ४-८४ )

प्राप्य सर्वज्ञतां कृत्स्नां ब्राह्मण्यं पदमद्वयम् ।
अनापन्नादिमध्यान्तं किमतः परमीहते ॥
( मा० का० ४-८५ )

अन्ते च अद्वैतस्य माहात्म्यमुपवर्ण्य प्रकरणं समाप्तिमगात् । यथा—"बुद्ध्वा पदमनानात्वम्" इति । ( मा० का० )

इदं पूर्वमुक्तं यच्चतुर्थं प्रकरणं ये द्वैतिनो ये च वेदबाह्या दार्शनिका अद्वैतस्य प्रतिपक्षिभूतास्तेषां परस्परविरोधादजाद्वैतवादसमर्थनाय प्रवृत्तम् । तेन पूर्वं द्वितीयतृतीययोः प्रकरणयोः साधितमपि वैतथ्यमजातिमद्वैतं च पुनः प्रतिपक्षिभूतानां द्वैतिना वैनाशिकानामेव युक्तिभिस्तदादृतैश्शब्दैः सिद्धान्तैश्चाजातिरद्वैतञ्च प्रसाधिते । अत एवात्र विज्ञानवादिसंमतयुक्तिभिर्बाह्यार्थजन्मनिराकरणं कृत्वा तद्युक्तिभिरेव चित्तजाति-

रपि निरस्यते तथा चित्ततद्दृश्ययो रुभयोरपि सममेवाजातिवस्त्वनतिरिक्तत्व प्रसाधयति। अन्ते च प्रथमप्रकरणप्रोक्ता श्रौतीमवस्थानयप्रक्रिया पुनरपि प्रदर्श्य ज्ञातृज्ञानज्ञेयविभागरहितमद्वितीयचैतन्य परमार्थ तत्त्वमात्मैवेति सिद्धान्तितम्। अत्र प्रथमप्रकरणोक्तजाग्रत्स्वप्नसुषुप्त्यवस्थात्रयपरीक्षासिद्ध आत्मैव धर्मधातुरिति प्रतिपादितम्। आत्मनो धर्मधातुप्रतिपादनेन शून्यतैव धर्मधातुरिति वैनाशिकसिद्धान्त आक्षिप्त। यथा—

अजमनिद्रमस्वप्नं प्रभातं भवति स्वयम्।
सकृद् विभातो ह्येवैष धर्मो धातुः स्वभावतः।

( मा० का० ४-८१ )

यद्यपि धर्मशब्दो वाह्यपदार्थेष्वात्मन्यपि प्रयुक्तो वर्तते आचार्यमते, किन्तु अत्र धर्मशब्दो विशेषतो जीवपर एवाचार्यसम्मत। यतो हि तृतीये प्रकरणे आरम्भे एव उपासनाश्रितो धर्म ( ३-१ ) इत्युपक्रम्य "न कश्चिज्जायते जीव" ( ३-४८ ) इत्यनेन तृतीय प्रकरणमुपसंहृतम्। एवमेवास्य चतुर्थप्रकरणस्यापि "सर्वे धर्मा प्रकृत्या अकाशवज्ज्ञेया, ( ४-९१ ) आदिबुद्धा. प्रकृत्यैव सर्वे धर्मा सुनिश्चिता। ( ४-९२ ) आदिशान्ता ह्यनुत्पन्ना—सर्वेधर्मा ( ४-९३ ) अलब्धावरणा सर्वे धर्मा प्रकृतिनिर्मला। ( ४-९८ ) प्रकरणान्ते च "क्रमते न हि बुद्धस्य ज्ञान धर्मेषु तायिन। सर्वे धर्मास्तथा ज्ञान नैतद् बुद्धेन भाषितम्। ( ४-९९ ) इत्युक्त्वा बुद्धेन आत्मवादो न प्रकाशित इति स्पष्टयन् नैरात्म्यवाद च निरस्यन् गौडपादाचार्यस्याय ग्रन्थ समाप्तिमेति।

### श्रीगौडपादसिद्धान्तः

श्रीगौडपादाचार्योऽद्वैतवेदान्तस्य सम्प्रदायानुसारी सर्वमान्य आचार्य आसीत्। अद्वैतवेदान्तस्य मूर्धन्य आचार्य भगवाँच्छङ्करोऽपि

य "वेदान्तसम्प्रदायविद्भिराचार्यैः"[32] "तथा च सम्प्रदायविदो वदन्ति"[33] इत्याद्यादरसूचकैर्वाक्यैः समपूजयत् । अद्वैतसम्प्रदायस्यापरो मूर्धन्यो विद्वान् श्रीसुरेश्वराचार्यो हि "एवं गौडैर्द्राविडैर्नः पूज्यैरयमर्थः प्रकाशितः"[34] इति वाक्येन यस्य पूज्यत्वं प्रथितवान् । माण्डूक्यकारिकाया पदे पदेऽद्वैतं प्रति वेदान्तं प्रति चाचार्यस्य श्रद्धा प्रत्यक्षीभवति । आचार्येण प्रत्येकं प्रकरणेषु तत्तद्विषयं प्रतिपाद्यान्तेऽद्वैत उपसंहारः क्रियते । यथा प्रथममागमप्रकरणम् "द्वैतस्योपशम. शिव." इत्यन्तिमकारिकावचनेन उपसह्रियते । एवमेव वैतथ्यप्रकरणम् "अद्वैत समनुप्राप्य" "तत्त्वादप्रच्युतो भवेत्" इतिवचनेन, तृतीयमद्वैतप्रकरणम् "न किञ्चिज्जायते जीवः सम्भवोऽस्य न विद्यते। एतत्तदुत्तम सत्यं यत्र किञ्चिन्न जायते ।" इति सर्वोत्पत्तिनिषेधेन भङ्ग्यन्तरेणाद्वैतवचनेन, चतुर्थमलातशान्तिप्रकरणम् "बुद्ध्वा पदमनानात्वम्" इत्यन्तिमकारिकावचनेन चोपसह्रियते । मध्ये मध्ये च वेदान्तमहत्त्व प्रतिष्ठाप्यते—

'इति वेदान्तनिश्चयः

( मा० का० २-१२ )

वेदान्तेषु विचक्षणैः

( मा० का० २-३१ )

वेदपारगैः

वेदपारगैः ( मा० का० २-३५ )

त्रिषु धामसु यत्तुल्यं समान्यं वेत्ति निश्चितः ।
स पूज्य सर्वभूतानां वन्द्यश्चैव महामुनिः ॥

( मा० का० १-२२ )

---

३२. द्र०ब्र०सू०शा०भा० १।४।१४, २।१।९ ।

३३ द्र०भगवता शङ्करेण सम्प्रदायं साम्प्रदायिकं प्रति च महानादर. प्रकटितः । द्र०—श्रीमद्भगवद्गीतायाः १८-५० श्लोकशाङ्करभाष्यम् । सायणेन ऋग्वेदभाष्यभूमिकायां साम्प्रदायिकस्य लक्षणमित्थं लिखितम्—अनध्यायवर्जनादिनियमपुरःसरं गुरुसम्प्रदायादध्ययनं यत् तत् साम्प्रदायिकम् ।

३४. नैष्कर्म्यसिद्धौ ४-४४ श्लोकस्य ज्ञानोत्तमटीकायाम् ।

( ओम् इत्यस्यार्थनिरूपण इय कारिकोपन्यस्ता )

**प्रणवो ह्यपरं ब्रह्म प्रणवश्च परः स्मृतः ।**

( मा० का० १-२६ )

एतदनन्तरम् ओंकारो विदितो येन स मुनिर्नेतरो जनः ।

( मा० का० १-२९ )

**एतैरेषोऽपृथग्भावैः पृथगेवेति लक्षितः ।**

**एवं यो वेद तत्त्वेन कल्पयेत् सोऽविशङ्‌कितः ।**

( मा० का० २-३० )

( अत्र 'एष'-आत्मा । )

"व्याख्याताास्तैत्तिरीयके ।" ( मा० का० ३-११ )

द्वयोर्द्वयोर्मधुज्ञाने परं ब्रह्म प्रकाशितम् ।"

( मा० का० ३-१२ )

अत्र मधुज्ञानम्—बृहदारण्यकोपनिषदो मधुविद्याप्रकरणम् ।

नेह नानेति चाम्नायादिन्द्रो मायाभिरित्यपि ।

( मा० का० ३-२४ )

( अत्र "नेह नानास्ति किञ्चन" ( बृ० आ० उ० ४-४-९ तथा क० उ० ४-११ )

आम्नायात्—श्रुतेः ।

इन्द्रो मायाभिः पुरुरूप ईयते । ( ऋ० स० ६-४७, १८ तथा बृ० आ० उ० २-५-१९ । )

"ग्रहेण भगवानसौ ।"

( मा० का० ४।८२ )

'ब्राह्मण्यं पदमद्वयम् ।'

( मा० का० ४-८५ )

एभिरुद्धरणैरयमाचार्योऽद्वैतस्यवेदान्तस्यैव महान् पक्षपाती सल्लक्ष्यते ।

ब्रह्म

श्रीगौडपादाचार्येण प्रणवमेव ब्रह्मेत्युक्त्वा तदनन्तरं प्रणवमेव परं ब्रह्म अपरमपि ब्रह्मेत्युक्तम्—

'प्रणवो ब्रह्म निर्भयम् ।'

( मा० का० १-२५ )

प्रणवो ह्यपरं ब्रह्म प्रणवश्च परः स्मृतः ।

( मा० का० १-२६ )

अत्रेदं विचारणीयं यदाचार्यमते प्रणवः परमर्थात् कारणं ब्रह्म, अथवा अपरम् अर्थात् कार्यं ब्रह्मेति । अस्यामाशङ्कायामाचार्येण स्वयमेव समाहितं यत्प्रणवो न कार्यब्रह्मणः ( परस्य ) न वा कारणब्रह्मणः ( अपरस्य ) वाचकः किन्तु प्रणवः ( आत्मनः ) लक्षकः । अत्र हेतुरुक्तः उत्तरार्द्धकारिकया—

अपूर्वोऽनन्तरोऽबाह्योऽनपरः प्रणवोऽव्ययः ।

( मा० का० १-२६ )

एतदेव च बृहदारण्यकोपनिषद्यप्युक्तम्—

'तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म ।'

बृ० आ० उ० २।५।१९ )

अयं भावो न पूर्वं कारणं विद्यतेऽस्येत्यपूर्वं, अन्तरं किमपि न विद्यत इत्यनन्तरं, बाह्यमन्यन्नविद्यत इत्यबाह्यं अपरं कार्यमस्य न विद्यत इत्यनपरं । अर्थात् कार्यकारणविभागवर्जितः अयमात्मा ( ब्रह्म ) प्रणवशब्दलक्ष्यः ।

ब्रह्म ( आत्मा ) लक्ष्यमेव भवति न वाच्यम् इति बृहदारण्यकभाष्यवार्तिकेऽप्युक्तम्—

कार्यकारणगे तत्त्वे नाम लब्धास्पद यतः ।
रूपाभिधेयसम्बन्धमरूपाक्षरमव्ययम् ।
( बृ० भ्रा० उ० मा० वा० २।४।२५३ )

लक्षयेन्नाञ्जसा वक्ति परं ब्रह्म कथंचन ।
शब्दप्रवृत्तिहेतूना साक्षाद् ब्रह्मण्यसम्भवात् ॥
( तत्रैव २५४ )

अस्य मते जाग्रदाद्यवस्थात्रयातीत यतुरीय तदेव ब्रह्म स एवात्मा ।

एव चाभिधानाभिधेयविलक्षणमप्यात्मतत्त्वमभिधानप्राधान्येन प्रणव (ॐ) अभिधेयप्राधान्येन च ब्रह्मेति व्यवह्रियते । इदं प्रणववाच्य ब्रह्म प्रत्यगात्माभिन्नमपि सत् स्थानत्रयभेदेन वैश्वानरादिभेदभाग् भवति । वैश्वानरादिभिश्चतुर्भिरयमात्मा परमार्थं प्रतिपद्यते । तेनाय चतुष्पादुच्यते तत्र प्रथमो जागरितसाक्षी वैश्वानर स्थावरजङ्गमसकलप्राणिजात व्याप्य स्थित बहिष्प्रज्ञ स्थूलभुगपि कथ्यते । द्वितीय स्वप्नसाक्षी तैजसो हिरण्यगर्भोऽन्त प्रज्ञ सूक्ष्मभुक् कथ्यते । तृतीय सुषुप्तिसाक्षी स्वाप्न जागरितप्रपञ्चाग्रहणाद् धनप्रज्ञ एकीभूत आनन्दभुक् च कथ्यते । अत्र सुषुप्तौ अविद्या बीजरूपेण वर्तते । स एवात्मा विशुद्धचतन्यमात्रस्वरूप जागरिताद्यवस्थात्रयासस्पृष्टोऽमात्रो निरुपाधिकस्तुरीय उच्यते । अस्मिन् न लय, न विक्षेप, नाग्रहणम्, नान्यथाग्रहणम्, अत्र नाविद्यायोग । विश्वतैजसौ कारणकार्यरूपौ । प्राज्ञ केवल कारणरूप । तुरीयोऽमात्रो न कारण न वा कार्यम् अयमजोऽद्वैत ।

एवमेव प्रणवोऽपि (ॐ) अ उ म् मात्राभि त्रिपात् तथा मात्रातीतोऽमात्रस्तुरीयरूप । अत्र वाच्यवाचकाभेदेन ब्रह्मप्रणवयोरैक्यमुपयोपायभावश्च वर्णित । उपाय प्रणव उपेय आत्मा ( ब्रह्म ) इति दर्शितम् ।

अथ ब्रह्मशब्दो माण्डूक्यकारिकाया सप्तवार प्रयुक्त —
१–२५, २६।३ १, १२, ३३, ३५, ३६ ।

प्रणवस्य माहात्म्यमेवमेव छान्दोग्येऽपि शाङ्करभाष्य उक्तम्। आनन्दगिरिरप्येतत्तुल्यमेव प्रणवमाहात्म्य तत्र व्याख्यातम्।[३५]

एतदर्थं छान्दोग्योपनिषद इमान्यपि स्थलानि द्रष्टव्यानि—

१-१-१।१-१-४, ५, ६। १-१-८।१-५-१ २-२३-३ इत्यादि।

एतत्तुल्यमेव प्रणवमाहात्म्यमेतास्वप्युपनिषत्सु—

क० उ० १।२।१५, १६, १७, प्र० उ० १।२, ३, ४, ५, ६, ७, मु० उ० २।६ तै० उ० ८।१ मैत्रा० उ० ४।३,४,५ अथर्वशीर्षोपनिषदि १।३।

जीव.

आचार्यो जीवस्वरूप महाकाशघटाकाशदृष्टान्तेन स्पष्टीकृतवान्। यथा महाकाश एव घटाकाशरूपेण प्रतीयते तथैव ब्रह्मापि (आत्मा) जीवरूपेण प्रतीयते यथा च घटाकाशो महाकाशस्य नांश, न परिणामो न वा महाकाशाद्भिन्नस्तथैव जीवोऽपि ब्रह्मणो नाश, न परिणामो न वा भिन्न।[३६]

घटाकाशप्रतीतौ यथा घट कारण तथैव जीवप्रतीतौ देहेन्द्रियसघात कारणम्।[३७] यथा च घटाकाशस्य न जन्म केवल प्रतीतिमात्र तथैव जीवस्य न जन्म केवल प्रतीतिमात्रम्। घटे विलीने घटाकाशो महाकाशे

३५ प्रणवश्च तत्सत्य पर ब्रह्म तत्प्रतीकत्वात्। एतद्ध्येवाक्षर ब्रह्म एतद्ध्येवाक्षर परमित्याद्याम्नानात् काठकेऽप्युक्त तस्यैवातोऽमृतत्वम्। ( छा० उ० शाभा० २।२३।१ ) अत्रानन्दगिरि -ननु ब्रह्मतत्त्वमेवातोऽमृतत्व भवति न प्रणवमेवात स्तत्कथमिति तस्य स्तुतिरित्याशङ्क्याह प्रणवश्चेति।

३६ रूपकार्यसमाख्याश्च भिद्यन्ते तत्र तत्र वै। आकाशस्य न भेदोऽस्ति तद्वज्जीवेषु निर्णय ॥ ( मा०का०६ )
नाकाशस्य घटाकाशो विकारावयवौ यथा।
नैवात्मन सदा जीवो विकारावयवौ तथा ॥ ( मा०का०३।७ )

३७ आत्मा ह्याकाशवज्जीवैर्घटाकाशैरिवोदितः।
घटादिवच्च सघातैर्जातावेतन्निदर्शनम् ॥ ( मा०का०३।३ )

विलीयते तथैव जीवोऽपि ब्रह्मणि विलीयते।[38] आकाशे यथा रजोधूमादिभिरेकस्मिन् घटाकाशे सस्पृष्टेऽपि न सर्वे घटाकाशा सस्पृश्यन्ते तथैव एकस्मिन् जीवे सुखादिसस्पृष्टेऽपि न सर्वे जीवा सुखादिभि सस्पृश्यन्ते[39]।

ब्रह्मणो जीवभावमापन्नत्वे अनादिमाया, अविद्या वासना वा कारणम्[40]। प्रथम ब्रह्म स्वमायया जीवभावापन्न भवति तत आन्तरान् वाह्यारच भावान् कल्पयति[41]। स्वय स्वजमेव।

यथा घटस्यानयनेऽपगमे चाकाशो न विकृतिमेति तथैवात्मापि मरणादिविकारैर्न विक्रियते। देहेऽन्नमयादिपञ्चकोशा सन्ति तेषु य पर स एव जीव —

**रसादयो हि ये कोशा व्याख्यातास्तैत्तिरीयके।**
**तेषामात्मा परो जीवः स यथा सम्प्रकाशितः॥**

( मा० का० ३ ११ )

---

३८ घटादिषु प्रलीनेषु घटाकाशादयो यथा।
आकाशे सम्प्रलीयन्ते तद्वज्जीवा इहात्मनि॥ ( मा०का०३।४ )
जीवस्य घटाकाशोपमा ब्रह्मबिन्दूपनिषद्य प—
घटसंभृतमाकाशं लीयमाने घटे यथा।
घटो लीयेत नाकाश तद्वज्जीवो घटोपम॥
( ब्र०बि०उ०१३ )

३९ यथैकस्मिन् घटाकाशे रजोधूमादिभिर्युते।
न सर्वे सम्प्रयुज्यन्ते तद्वज्जीवा सुखादिभि॥ (मा०का०३।५)

४० अनादिमायया सुप्तो यदा जीव प्रबुध्यते। (मा०का०१-१६)
मायैषा तस्य देवस्य यया सम्मोहित स्वयम्॥ (मा०का०२-१९)

४१. कल्पयत्यात्मनात्मानमात्मा देव स्वमायया (मा०का०२-१२)
विकरोत्यपरान् भावानन्तश्चित्ते व्यवस्थितान्।
नियतांश्च बहिश्चित्त एव कल्पयते प्रभु॥ (मा०का०२-१३)
जीव कल्पयते पूर्वं ततो भावान् पृथग्विधान्।
बाह्यानाध्यात्मिकांश्चैव यथाविद्यस्तथा स्मृत॥ (मा०का०२-१६)
न कश्चिज्जायते जीव सम्भवोऽस्य न विद्यते। (मा०का०३-६)

प्रत्यगात्मनोर्न भेद । द्वयोरभेदमित्थमाह—

**जीवात्मनोरनन्यत्वमभेदेन प्रशस्यते ।**
**नानात्वं निन्द्यते यच्च तदेवं समञ्जसम् ॥**

( मा० का० ३ १३ )

माया ( अविद्या )

पूर्वमुक्त यन्मायया एवात्माजीवमापन्न सन् आन्तरान् बाह्यांश्च भावान् कल्पयति ( मा० का० १-१६, २-१२, १३, १६, १९ )। इय माया अविद्यापरपर्याया । अनादिमायया इत्यस्यार्थो भगवता शङ्कराचार्येणेत्थं कृत – 'उभयलक्षणेन तत्त्वाप्रतिबोधरूपेण बीजात्मनाऽन्यथाग्रहणलक्षणेन चानादिकालप्रवृत्तेन मायालक्षणेन स्वप्नेन ।"

( मा० का० शा० १-१६ )

एवमेवाग्रेऽपि— 'अविद्यालक्षणाऽनादिर्माया निद्रा ।' ( मा० का० ३-३६ शा० भा० ) एव च मायाया कार्यम्–अन्यथाग्रहणात्मकम् । यथा प्रथमे प्रकरणे वैश्वानरतैजसरूपद्वयोपन्यासेनोपपादितम् । तेन मायाकार्येणान्यथाग्रहणेन ब्रह्मापि जीवभावेनोपपन्न, तदेव चान्तरो बाह्यश्च पदार्थ । अत एवाच्यते—

**कल्पयत्यात्मनात्मानमात्मा देव स्वमायया ।**
**स एव बुध्यते भेदानिति वेदान्तनिश्चयः ॥**

( मा० का० २ १२ )

एवमिय मायैव ससारस्य हेतु । अस्या मोहनशक्तिरतीव बलवती यया परमात्मापि मोहित इव भवति ।

**मायैषा तस्य देवस्य यया संमोहित‌ स्वयम् ।**

( मा० का० २।१९ )

अत्र भाष्यकारो भगवान् शङ्कर आह—

"इयमपि देवस्य माया यथाय स्वयमपि मोहित इव मोहितो भवति।"

अत्रानन्दगिरि—"अतो मोहद्वाराऽऽत्मन्येव मायाविगति।" इत्युक्त्वा मायाया अधिष्ठानमात्मेत्युक्तवान्।

एस्य च नामरूपात्मक जगदात्मनो मायेति व्यपदिश्यते। सेय माया-ऽऽध्यात्मिकदृष्ट्याऽग्रहणमिति बाह्यदृष्ट्या च मायाबीजमिति कथ्यते। यदेव अध्यात्मदृष्ट्या "कार्यकारणवद्धौ तौ" (मा० का० १-११) "स्वप्ननिद्रायुतावाद्यौ" (मा० का० १-१४) इति च तदेव बाह्यदृष्ट्या—"कल्पयत्यात्मनाऽऽत्मानमात्मा देव स्वमायया।" (मा० का० २-१२) इति।

अत्रेद विचारणीय यदेवंभूताया मायाया आश्रय क ब्रह्म उत जीव। यतो हि—आचार्येण "अनादिमायया सुप्तो यदा जीव प्रबुध्यते"। (मा० का० १।१६) इत्यनया मायाश्रय ब्रह्मोच्यते। अत्रेद समाधान यदुभयो कारिकयोरात्मजीवपदयोर्विशेषार्थो न विवक्षित। स्वप्नजागरित-स्थानद्वयमाक्षिणमेकमेवेत्यभिप्रेत्येमे उभे कारिके आरब्धे इति।[४२]

विवर्ताऽध्यासश्च

श्रीगौडपादाचार्य सर्व विश्वमात्मकल्पित मन्यते न च वास्तविक किमपि।[४३] अनेन स्वाप्निक वस्तु जागरितावस्थाया च दृश्यमान वस्तु सर्व समान स्वीक्रियते।[४४] यथा स्वप्ने दृष्ट वस्तु जागरितावस्थायामसत् प्रतीयते तथैव जागरितावस्थायामपि दृश्यमान वस्तु पारमार्थिकदृष्ट्या असत्

४२ अत्रोक्तो विशेषस्तु श्रीसच्चिदानन्देन्द्रसरस्वतीकृतमाण्डूक्यरहस्यविवृतौ द्रष्टव्य पृ० १६९ १७३।

४३ जीव कल्पयते पूर्वं ततो भावान् पृथग्विधान्।
बाह्यानाध्यात्मिकाश्चैव यथाविद्यस्तथास्मृति। (मा०का०२-१६)

४४ स्वप्नजागरितस्थाने ह्येकमाहुर्मनीषिण। (मा०का०२ ५)

प्रतीयते ।[४५] सर्वं जगत् विज्ञानात्मनो विभोराभासरूप कल्पनारूप वा ।[४६] तेन जगतोऽतात्त्विकोऽन्यथाभाव । अतो विवर्तवाद आचार्याभिमत ।

यद्यपि माण्डूक्यकारिकाग्रन्थेऽध्यासशब्दो न कुत्रापि प्रयुक्त. । किन्त्वाचार्योऽध्यासमभिप्रैति । सम्पूर्णे ग्रन्थे जगन्मायिकमाविद्यकमिति साधितम्—"यथाविद्यस्तथास्मृति ।" ( मा० का० २-१६ ) "सतो हि मायया जन्म ।" ( मा० का० ३-२७ ) इत्यादिभि ।[४७] अध्यासोऽविद्येति प्रथितमेव-अध्यास पण्डिता अविद्येति मन्यन्ते । ( ब्र० सू० शा० भा० उपोद्घाते ) ।

आभासवादः कल्पनावादश्च

आचार्यनये आभासवाद कल्पनावादश्चाङ्गीकृत । एकमेवाद्वय सत् परमार्थम्, अन्यत् सर्वमाभासरूप कल्पनारूप वा—

जात्याभासं चलाभासं वस्त्वाभासं तथैव च ।
अजाचलमवस्तुत्वं विज्ञानं शान्तमद्वयम् ।।
( मा० का० ४-४५ )

अजमपि जायत इव, अचलमपि चलमिव, अवस्त्वपि वस्त्विव भासते ।

कल्पयत्यात्मनात्मानमात्मा देवः स्वमायया ।
स एव एव बुध्यते देवानिति वेदान्तनिश्चयः ।।
( मा० का० २-१२ )

---

४५ वैतथ्य सर्वभावाना स्वप्न आहुर्मनीषिण (मा०का०२-१)
एवमेव द्र०मा०का०२ ९,१०,११ ।

४६ जात्याभास चलाभास वस्त्वाभास तथैव च ।
अजाचलमवस्तुत्व विज्ञानं शान्तमद्वयम् ।। (मा०का०४ ४५)
निवृत्ते सर्वदु खानामीशान प्रभुरव्यय ।
अद्वैत सर्वभावाना देवस्तुर्यो विभु स्मृत ।। (मा०का०१-१०)
अर्थात् सर्वभावेष्वयमेक एव विभू राजते । (मा०का०२-१२)

४७ मा०का० २-३१,३ २७ ।

अनेन सर्वमपि जगद् आभासम्प कल्पनामात्र वा ।

## ससार

ससारो मायया कल्पित । सर्वे भावा कल्पिता । यावदज्ञान ससार । ससारस्य भानमविद्यया जायते । एतद् वैतथ्यप्रकरणेनाद्वैतप्रकरणेन च साधितम् । अलातशान्तिप्रकरणेनेद सिद्धान्तित यद् यथालातस्य शान्तौ चक्रभान्तिर्निवर्तते तथैवाविद्याया शान्ताया सति च विद्योदये जगत समस्त द्वैत विलीयते । अलातचक्रवत् जगदिद सदसदनिर्वचनीयं मिथ्या । अस्मिन् मते न जगतो वास्तविकी सत्ता । तेन परमार्थज्ञानेन ससारस्य निवृत्तिरुक्ता । चतुर्ष्वपि प्रकरणेषु ससारस्यानित्यत्वमेव प्रसाधितम् ।

## अजातवादः

आचार्येणाजातवादपक्ष श्रुत्या युक्त्या च समर्थित ।
आचार्यस्येद कथन यज्जातिपरापि श्रुति , अजातिपरापि च श्रुतिरुपलभ्येते, तथा जातिपरायामपि सतरजातिरसतश्च जातिरित्युभयमपि श्रुतिष्वुपलभ्यते । तत्र युक्त्यैनामा श्रुतीना सामञ्जस्य कार्यम्[४८] । जातिपरा श्रुतिर्यथा—

तस्माद् विराडजायत तस्मात्तस्माज्जाता अजावय इत्यादि ( ऋ० वे० १०।९०।५, ६, १० )

तथा—एतस्माज्जायते प्राणो मन सर्वेन्द्रियाणि च इत्यादि ( मु० उ० २।१।३।९ ) अजातिपरा श्रुति र्यथा—

स बाह्याभ्यन्तरो ह्यज ( मा० का० ३-२३ शा०भाष्ये उद्धृता ) यस्य त्वस्य *सर्वमात्मैवाभूत्* । *नेह नानास्ति किञ्चन ( बृ० आ० उ० ४।४।* १९ ) ( क० उ० ४।११ ) सतो जायते यथा—

सदेव सौम्येदमग्र आसीत्—इत्यादि ( छा० उ० ६।२।१ ) ।

असतो जायते यथा—

---

४८—नाराव निश्चय यत्र सदेव हि समञ्जसम् । ( मा० का० ३-१६ )

असद्वा इदमग्र आसीत् ततो वै सदजायत इत्यादि (तै० उ० २।७।१) उत्त उक्तम्—

अजातस्यैव भावस्य जातिमिच्छन्ति वादिनः ।
अजातोऽमृतो भावो मर्त्यतां कथमेष्यति ॥

( मा० का० ३-२० )

भूततोऽभूततो वापि सृज्यमाने समा श्रुतिः ।
निश्चितं युक्तियुक्तं च यत्तद् भवति नेतरत् ।

( मा०का०३-२३ )

अनेन युक्तियुक्तं यद् भवति तदेव निश्चितम् । अत्र युक्तियुक्तं किमिति समाधयितुमाचार्येणोक्तम्—

नेह नानेति चाम्नायादिन्द्रो मायाभिरित्यपि ।
अजायमानो बहुधा मायया जायते तु सः ।

( मा. का. ३-२४ )

अनेनेदं साधितं यद् वस्तुत इदं सर्वमजमेव किन्तु जातमिव भासते । तत्र जातवद्भासने मायाकारणम् । अतो वस्तुनोऽजातमेव सर्वं मायावशाज्जातमिति कथ्यते । अतो न सतो जन्म न वा असतो जन्म—

सतो हि मायया जन्म युज्यते न तु तत्त्वतः ।
तत्त्वतो जायते यस्य जातं तस्य हि जायते ॥

( मा. का. ३-२७ )

असतो मायया जन्म तत्त्वतो नैव युज्यते ।
बन्ध्यापुत्रो न तत्त्वेन मायया वापि जायते ॥

( मा० का० ३-२८ )

एवमेवेयमप्येका युक्तिः यदि अजातं तत्कथं जायेत, यदि जातं तत्कथं पुनर्जायेत—

अजाद्वै जायते यस्य दृष्टान्तस्तस्य नास्ति वै ।
जाताच्च जायमानस्य न व्यवस्था प्रसज्यते ।।
( मा० का० ४-१३ )

तृतीये चतुर्थे च प्रकरणे श्रुत्या युक्त्या च बहुशोऽयमजातवादः स्पष्टीकृतः । विशेषतः इमाः कारिका द्रष्टव्याः —

३–२, १९, २०, २१, २२, २३, २४, २५, २७, २८, ४८,
४-३, ४, ६, ७, ११, १३, १४, १५, १६, १७, १८ ।

इत्थं न जातस्य जन्म न वा अजातस्य जन्म किन्तु सर्वमपि सर्वथा अजातमेव ।

इदमत्र औपनिषदाजातवादे वैशिष्ट्यं यद् अजातमपि मायया जातमिव लक्ष्यते । अनया रीत्या श्रुत्युक्ताः जातिः, अजातिः, सतो जातिः, असतश्च जातिः इमे सर्वेऽपि पक्षाः सामञ्जस्यं नीताः, व्यावहारिकजातिवादोऽपि परिरक्षितः । मायाकृतो द्वैतवादो जातिवादश्चाचार्येण सर्वेषु प्रकरणेषु समर्थितः —

मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ।
( मा० का० १-१७ )

कल्पयत्यात्मनात्मानमात्मा देवः स्वमायया ।।
( मा० का० २-१२ )

अजायमानो मायया बहुधा जायते तु सः
( मा० का० ३-२४ )

असतो मायया जन्म ..

वन्ध्यापुत्रो न तत्त्वेन मायया वापि जायते ।

( मा० का० ३-२८ )

जन्म मायोपमं तेषां सा च माया न विद्यते ।

( मा० का० ४-५८ )

यथा स्वप्ने द्वयाभासं चित्तं चलितमायया ।

( मा० का० ४-६१ )

वेदान्ते एकं नित्यमजातं ब्रह्म विद्यते, तत्रैव मायया जातिः प्रतीयते। नित्येऽधिष्ठानरूपे ब्रह्मणि सकलप्रपञ्चस्य जातिर्भ्रमरूपैवेति। अयमौपनिषदोऽजातवादः। अस्माजातमपि जातमिव लक्ष्यते। यथाह-आचार्यसुरेश्वरः —

"तस्मादजायमानैव जायमानेव लक्ष्यते ।"

( बृ० आ० उ० भा० वा० ३।४।१७५ पृ० १-२३ )

सौगतनये तु श्रीनागार्जुनाचार्योक्तरीत्या न सत्, नासत् न सदसत्, नापि सदसदभावात्मकं (अनुभय) इति चतुष्कोटिविनिर्मुक्तप्रतिपादनमुखेन सर्वविधजातिदृष्टिनिवारणपूर्वकं भावाभावात्मकस्य सर्वस्यापि जन्माभावः प्रतिपादितः। अस्मिन् मते प्रपञ्चस्याज एव स्वभावः किन्तु सोऽपि न किञ्चित्। शून्यतैव परमार्थः किन्तु शून्यतादृष्टिरप्यपवारिता[४६]। तेन स्मिन् सौगतमतेऽजातं किमपि वस्तु न। वेदान्तिमतेऽजातं वस्तु ब्रह्मैव,

४६—एवं यथा शून्यतायामपि मा भूदभिनिवेश इति केनेदानीं स तथा तस्यां भावाभिनिवेशा निषिध्यतामित्यतो महामेघसूत्रेऽपि दापमर्ष्यिः तस्मात् परचित्तिकर्महावैद्यैस्तथागतैः प्रतिस्थाना एव न ।

( मध्यमकशा० श्रीचन्द्रकीर्तिवृत्तौ—पृ० ८८ )

तत्र जात कल्पितम्। तेन वेदान्तिमतेऽजातिवाद पारमार्थिक, जाति-वादश्च कल्पित।

अजातवादस्तु उभावपि वेदान्तिमाहायानिकौ मन्येते किन्त्वेतावानेव भेदो यद् वेदान्ती अधिष्ठानदृष्ट्या जगतोऽजातित्वमङ्गीकरोति, माहायानिकस्तु अधिष्ठानजगतोरुभयोरसत्यत्वेन नि स्वभावत्वात् निखिलस्याप्यजातित्वमङ्गीकरोति।

वस्तुतस्तु नागार्जुनो नाजातवादी किन्तु वितण्डावादी, सोऽजात-वादमपि खण्डयति। सौगतनये निरधिष्ठानको भ्रम कथमुदेति, चतुष्कोटिनिषेधकश्च क इति सर्व विचारार्हम्।

मोक्ष

अस्मिन् मते द्वैतमेव प्रपञ्च, प्रपञ्च एव ससार, प्रपञ्चाभाव एव मोक्ष। यथोक्तम्—

"प्रपञ्चोपशमः शिवः।"

( मा० का० १-२९ )

गौडपादकारिकाया आदौ प्रथमे प्रकरण आरम्भत एव जागरित-स्वप्नसुषुप्तिव्याख्यानमुखेन सर्वस्यैव दृश्यमानस्य, स्वाप्निकस्य वस्तुन इव मिथ्यात्वमुक्तम्। तत्र जाग्रत्स्वप्नयो साम्य प्रतिपादितम्—

स्वप्नजागरितस्थाने ह्येकमाहु र्मनीषिणः।
भेदाना हि समत्वेन प्रसिद्धेनैव हेतुना॥

( मा० का० २-५ )

स्वप्नमाये यथा दृष्टे गन्धर्वनगरं यथा।
तथा विश्वमिदं दृष्टं वेदान्तेषु विचक्षणैः॥

( मा० का० २-३१ )

इत्य द्वैतभूतस्य प्रपञ्चस्य ससारस्य मिथ्यात्वस्य नाशोऽद्वैतम् । अद्वैतमेव मोक्ष मोक्षस्यैव च शिवत्वेन व्यपदेश —

निर्विकल्पो ह्यय दृष्टः प्रपञ्चोपशमोऽद्वयः ।

( मा० का० २-३५ )

भावैरसद्भिरेवायमद्वयेन च कल्पित ।
भावा अप्यद्वयेनैव तस्मादद्वयता शिवा ॥

( मा० का० २ ३३ )

जागरितस्वप्नयो मिथ्याग्रहण भवति, सुषुप्तौ मिथ्याग्रहण न भवति किन्तु मिथ्याग्रहणबीज तिष्ठति । अतो यत्तुरीयम् ( तुरीयावस्थापनम् ) तदेव अद्वैतम्, परमार्थतत्त्वम्, आत्मा, मोक्षश्च ।

अन्यथा गृह्णत स्वप्नो निद्रातत्त्वमजानतः ।
विपर्यासे तयो क्षीणे तुरीयं पदमश्नुते ।

( मा० का० १ १५ )

इदमेव च माण्डूक्योपनिषदि—अदृष्टमव्यवहार्यमग्राह्यमलक्षणम- चिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसार प्रपञ्चोपशम शान्त शिवमद्वैत चतुर्थं मयन्ते स आत्मा स विज्ञेय । ( मा० उ० मन्त्र ७ )

मोक्षसाधनम्

अद्वैतज्ञान मोक्षसाधनम् । अद्वैतज्ञान च 'तत्त्वमसि इत्यादिवाक्य जन्यप्रबोधेन भवति । यथा—

अनादिमायया सुप्तो यदा जीव प्रबुध्यते ।
अजमनिद्रमस्वप्नमद्वैत बुध्यते तदा ॥

( मा० का० १ १६ )

अद्वैतम्, आत्मा, प्रणवश्चैकमेव एतेषा ज्ञानेन मोक्ष इति प्रथमे प्रकरणे साधूपपादितम्—

प्रणवो ब्रह्म निर्भयम् ।

(मा० का० १-२५)

प्रणवो ह्यपरं ब्रह्म प्रणवश्च पर स्मृतः

प्रणव ह्रीश्वरं विद्यात्सर्वस्य हृदि संस्थितम् ।

( मा० का० १-२६ )

सर्वव्यापिनमोंकारं मत्वा धीरो न शोचति ।

( मा० का० १-२८ )

अमात्रोऽनन्तमात्रश्च द्वैतस्योपशमः शिव. ।

ओङ्कारो विदितो येन स मुनि र्नेतरो जन ।

( मा० का० १-२९ )

अयमर्थो यथा माण्डूक्योपनिषदि—

अमात्रश्चतुर्थोऽव्यवहार्य प्रपञ्चोपशम शिवोऽद्वैत

एवमोंकार आत्मैव संविशत्यात्मनाऽऽत्मानं य एवं वेद ।

( मा० उ० म० १२)

मोक्षसाधनभूतस्याद्वैतज्ञानस्य प्रसाधनार्थ वैतथ्यप्रकरणमद्वैतप्रकरण-मलातशान्तिप्रकणञ्चारब्धानि । एपु त्रिपु द्वैतभूतस्य प्रपञ्चस्य वैतथ्यम्–मिथ्यात्वम्–अलातवत्प्रसाध्य अद्वैत परमार्थतत्त्व निर्णीतम् । अद्वैतरूपपर-मार्थतत्त्वज्ञानेनात्मज्ञान मोक्षो जायते । यथा—

तत्त्वमाध्यात्मिकं दृष्ट्वा तत्त्वं दृष्ट्वा तु बाह्यत ।

तत्त्वीभूतस्तदारामस्तत्त्वादप्रच्युतो भवेत् ।

( मा० का० २-३८ )

बुद्ध्वा पदमनानात्वम्············ ।

( मा० का० ४-१०० )

## गौडपादीयकारिका विज्ञानवादश्च

वेदविदः भारतीयैश्च विद्वद्भिः पुसिन[५०]—जाकाबी मैक्समूलर—राधाकृष्णन्-दासगुप्तादिभि रिदमुद्भावितं यद् गौडपादीयमाण्डूक्यकारिका बौद्धविज्ञानवादेन प्रभाविता। उक्तकारिकासु विज्ञानवादाभासान् सिद्धान्तान् शब्दांश्च दृष्ट्वैवमाशङ्क्यते यद् गौडपादाचार्यः कश्चिद् वेदान्तविद्वान् बौद्धदर्शनेन प्रभावितः सन् बौद्धसिद्धान्तानेव श्रुत्या युक्त्या च वेदान्तसिद्धान्तत्वेनास्तकारिकासु संस्थापितवान्। एतेषु सर्वप्रथमं श्रीविधुशेखरभट्टाचार्यो महद्भिरुपाधिरलंकृतस्य माण्डूक्यकारिकाग्रन्थस्य (आगमशास्त्रस्य) अभिनवां वृत्तिमरचयत्। यत्र कारिकार्थनिरूपणे प्रामाणिकैः बौद्धदार्शनिकैरुद्धरणैः कारिकाणामर्थः बौद्धदर्शनपरः निर्णीतवान्। सिद्धान्तितवांश्चायं ग्रन्थो विज्ञानवादपरः।

अत्र श्रीमद्भट्टाचार्येण बह्व्यः शङ्का उद्भाविता। तदर्थमागमशास्त्रस्य तद्विरचितावतरणिका द्रष्टव्या। तासु काश्चन शङ्का अस्मिन्नेवाध्याये आदौ समाहिता। अत्र केवलमिदमेव परीक्ष्यते यद् भट्टाचार्यसमर्थिते कारिकागतविज्ञानवादे कियती तथ्यता।

श्रीमद्भट्टाचार्येण कारिकासु विज्ञानवादसमर्थनायेमा युक्तय आश्रिताः प्रथमा—इदमागमशास्त्रं प्रकरणचतुष्ट्यात्मको नैको ग्रन्थः। किन्तु विभिन्नविद्वन्निर्मिता द्वौ त्रयश्चत्वारो वा ग्रन्था एकत्र केनापि ग्रथिताः। नमा

५० पुसिन ( Pou sin ) महोदयस्य जे० ए० आर० एस० एल० १२ इत्यत्र प्रकाशित लेखे पृ० १३४ १४०।

५१—द्र० ( क ) दासगुप्तमहोदयलखो-सेकण्ड ओरियण्टल कान्फ्रेस कलकत्ता पृ० ४३९ ४६१ तथा इण्डियन हिस्टोरिकल क्वाटर्ली भाग १ पृ० ११४ १२५ तथा २९५ ३०२।

( ख ) अष्टम आल इण्डिया ओरियण्टल कान्फ्रेस मैसूर १९३३ ई० ३५२ ३८२ पृ० प्रकाशित दी गौडपादकारिकाज एण्ड बुद्धिज्म इति लेखे ले० श्री ए० वी० पुरोहितमहाशयनानेकेषां मतान्युद्धतानि।

कारिका माण्डूक्योपनिषदो व्याख्यानभूता. किन्तु कारिकाणाव्याख्यानभूतोपनिषद्, यतो ह्यत्र शब्दार्थवैषम्यम्, उपक्रमोपसंहारवैषम्य च, केचन प्राचीनाचार्या गद्यपद्योभयभाग श्रुतिमामनन्वते, केचन केवल गद्यभाग श्रुति मन्यन्ते ।

द्वितीया- द्वितीयतृतीयप्रकरणयो वैतथ्याद्वैतयो पृथक पृथक् कल्पनाया कावश्यकता-वैतथ्यसिद्धौ अद्वैतसिद्धि , अद्वैतसिद्धौ च वैतथ्यसिद्धि ।

तृतीया-अलातशान्तिनामक चतुर्थ प्रकरण तु स्पष्टमेव भिन्नो ग्रन्थ । यतो हि अत्रादौ मङ्गलाचरणम्, मङ्गलाचरणे च "द्विपदा वरिष्ठम्" इति विशेषण च भगवतो बुद्धस्यैव कृते प्रसिद्धमस्ति तथात्र चतुर्थ प्रकरणे बौद्धदर्शनसिद्धान्ता विशेषतो विज्ञानवादसिद्धान्ता एव प्रतिपादिता ।

चतुर्थी युक्ति —शब्दसाम्य सिद्धान्तसाम्य च ।

इत्थमय नैको ग्रन्थ. किन्तु विभिन्नाचार्यनिर्मिताश्चत्वारो ग्रन्था एकत्र ग्रथिता', प्रकरणचतुष्टये च विशेषतश्चतुर्थेऽलातशान्तिप्रकरणे शब्दतोऽर्थतश्च विज्ञानवादसिद्धान्ता सन्निहिता । एव श्रीमद्भट्टाचार्यस्याशङ्काकारणानीमानि समासेनात्र निर्दिष्टानि ।

प्रथमयुक्तिसम्बन्धे इदमत्यल्पमेव वक्तव्य यद् माण्डूक्यकारिकाया अभिधेय इति प्रकरणे चतुर्णामागमवैतथ्याद्वैतालातशान्तिप्रकरणाना मिथ सम्बन्धो दर्शित । इमा कारिका सन्ति कारिका च न भाष्य, न वा व्याख्यान भवति तेन यदि कोऽपि उपनिषच्छब्दस्यार्थ कारिकाया न स्पृष्टस्तेन कापि विचिकित्सा न कार्या भाष्ये व्याख्याने वा प्रत्येक पदानामर्थस्पष्टीकरणमावश्यक न तु कारिकायाम् । रामानुजाचार्यो मध्वाचार्यः कूरनारायणश्च द्वैतवादिनो गद्य पद्यञ्चोभयमुपनिषदिति मन्यन्ते किन्तु नैकोऽपि कश्चिदद्वैतवादी विद्वान् पद्यमुपनिषत्त्वेनानुमन्यते ।

द्वितीयतृतीयप्रकरणयोरावश्यकतेत्थमस्ति यद् इमानि चत्वार्यपि प्रकरणानि परस्परसम्बद्धानि । सहसा त्वेव प्रतीयते यत्प्रथमप्रकरणेन उपायो-

पेययो प्रणवात्मनो विवेचनेन आत्मतत्त्वप्रतिपत्त्या वैतथ्याद्वैतसिद्धौ शेषाणां वैतथ्याद्वैतालातशान्तीनां कावश्यकता । किन्त्ववधानेन विचारणायामिदमायाति यत्पूर्वपूर्वप्रकरणस्य वैद्यायोत्तरोत्तरप्रकरणस्य महत्त्वावश्यकतास्ति । यतो हि न केवलं वाक्योपदेशेनात्मतत्त्वं साक्षात् कर्तुं शक्यते । उपदेशानन्तरं तर्केण दृष्टान्तेन च स उपदेशो द्रढयितव्यः । यथा "आत्मा वा अरे श्रोतव्यो मन्तव्यो निदिध्यासितव्य" इत्यत्र श्रवणानन्तरमुपपत्तिभिर्मननं विधीयते तथैवात्र प्रथमेन प्रकरणेनोपदिष्टे आत्मतत्त्वे, आत्मैव सर्वमिति साधयितुं विश्वस्य वैतथ्यं साधनीयम्, वैतथ्यपुष्ट्यर्थम् अद्वैतसाधनमावश्यकम्, वैतथ्याद्वैतयोः सिद्धौ आलातवत् मनसः स्पन्दनस्य शान्तिर्भवतीतिहेतोरलातशान्तिप्रकरणेन ज्ञातृज्ञेयज्ञानानामभिन्नत्वप्रतिपादनं कृत्वा वेदान्तसर्वस्वं ब्रह्माद्वैतं प्रसाधितम् । इत्थञ्चागमवैतथ्याद्वैतालातशान्तिनामकानां चतुर्णामपि परस्परसम्बद्धत्वमेकाभिधेयत्वमेककर्तृत्वं च सुतरामायातम् । अतो न विभिन्नै राचार्यैरिमानि परस्परतो विभिन्नानि प्रकरणानि निर्मितानि ।

उपरितनरीत्या तृतीयाया युक्तेरपि समाधानं जातम् । चतुर्थप्रकरणस्यादौ मङ्गलाचरणविषये "द्विपदां वरिष्ठम्" इति विशेषणप्रयोगे किञ्चिद् विशिष्योच्यते । ग्रन्थादौ ग्रन्थमध्ये ग्रन्थान्ते च मङ्गलस्याचरणीयतयात्र ग्रन्थमध्ये मङ्गलाचरणेन न कापि शङ्कोद्भावनीया । ग्रन्थमध्ये प्राचीनाचार्यैः मङ्गलमाचरितम् । यथा प्रशस्तपादभाष्ये श्रीधरकृतायां न्यायकन्दल्याम्, पाणिनेरष्टाध्याय्याम्, प्रज्ञाकरमतेर्बोधिचर्यावतारे मल्लिनाथेन च कालिदासादिकाव्यव्याख्याने प्रतिसर्गं मध्ये मध्ये मङ्गलमाचरितम् । एतच्च श्री वि० शे० भट्टाचार्येणापि स्वावतरणिकायामङ्गीकृतम् ।

चतुर्थी युक्तिः शब्दसाम्यं च । तत्र वेदान्तबौद्धदर्शनयोः समानशब्दा येऽस्मिन् ग्रन्थे आगतास्ते पूर्वं सगृहीताः । अत्र विशेषरूपेण ये समाने

शब्दैः सिद्धान्तैश्चास्मिन् ग्रन्थे बौद्धदर्शनसिद्धान्ताः सम्भाव्यन्ते ते शब्दाः सिद्धान्ताश्चात्र यथाग्रन्थं विचार्यन्ते ।

१—अलातशान्तिप्रकरणारम्भे मङ्गलमाचरितं तत्र "द्विपदां वरम्" विशेषणं प्रयुक्तम् । यथा

ज्ञेयाभिन्नेन सम्बुद्धस्तं वन्दे द्विपदां वरम् ।

(मा०का०४-१)

अत्र श्रीभट्टाचार्यस्येदं कथनं यद् "द्विपदां वरम्" इति विशेषणं भगवतो बुद्धस्य कृते बौद्धग्रन्थेषु अनेकस्थले प्रयुज्यते । तेन ग्रन्थस्थलमपि निर्दिष्टम् । यथा—अभिधानप्पदीपिकायाम्—१

सुत्तनिपाते—८३,९९५,९९९ महाव्युत्पत्तौ–२-२६७

शिक्षासमुच्चये पृ० ८, ५७ ।

तेनोक्तम्—"यद्यपि नारायणपरमिदं विशेषणं महाभारतादौ उपलभ्यते तथापि श्रीभगवत्पादशङ्करोक्तमीश्वरनारायणपरं नोपलभ्यते किन्तु नारायणावतारभूतनरपरमिति" [५२]

इदमत्र वक्तव्यं यद्यपीदं विशेषणं बुद्धपरमपि भवितुमर्हति किन्तु बुद्धपरमेवेति न निश्चेतव्यम्, यतो हि महाभारते ब्राह्मणाय धृतराष्ट्राय, नैषधाय, नारदाय, नारायणाय चेदं प्रयुक्तम् । यथा धृतराष्ट्रस्य कृते—

चतुष्पदां गौः प्रवरा लोहानां काञ्चनं वरम् ।
शब्दानां प्रवरो मन्त्रो ब्राह्मणो द्विपदां वरः ॥

( म भा०शान्ति.राजध ११।११ )

छन्दांसि नाम द्विपदां वरिष्ठ, स्वच्छन्दयोगेन भवन्ति तत्र ।
छन्दोविदस्तेन च तानधीत्य गता न वेदस्य च वेद्यमार्याः ॥

( तत्रैव उद्योग प० ४३।५१ )

५२ द्र० श्री वि०शे०म० सम्पादिते आगमशास्त्रे पृ० ८४ टिप्पण्याम् ।

सपत्नवृद्धिं यत्तात मन्यसे वृद्धिमात्मनः ।
अभिष्टौषि च यक्षत्तुः समीपे द्विपदा वर ।।

( तत्रैव आदि० प० १९९।२९ )

( अत्र ' द्विपदां वर " इत्यपि क्वचित्पाठः )

*अत्रोभयत्र द्विपदा वरिष्ठेति द्विपदा वरेति च विशेषणद्वयं धृतराष्ट्राय प्रयुक्तम् । नैषधस्य राज्ञो नलस्य कृते यथा—*

विवाहं कारयामास दमयन्त्या नलस्य च ।
उष्य तत्र यथाकामं नैषधो द्विपदा वर ।।

( तत्रैव वनप० ५७।४१ )

नारदस्य नारायणस्य च कृते—

स एवमुक्तो द्विपदा वरिष्ठो नारायणेनोत्तमपूरुषेण ।
जगाद वाक्यं द्विपदां वरिष्ठं नारायणं लोकहिताधिवासम् ।।

तत्रैव शा० प० ३३५।१ )

किन्त्वस्यां कारिकायामिदं विशेषणं नारायणस्यैव कृते भवितुमर्हति । यथा भगवाञ्छङ्कर स्वभाष्ये आह—

यो नारायणाख्यस्तं वन्दे द्विपदां वरं द्विपदोपलक्षितानां पुरुषाणां वरं प्रधानं पुरुषोत्तममित्यभिप्रायः । अत्रानन्दगिरिराह आचार्यो हि बदरिकाश्रमे नरनारायणाधिष्ठिते नारायणं भगवन्तमभिप्रेत्य तपो महदतप्यत । ततो भगवाननिप्रसन्नस्तस्मै विद्यां प्रादादिति प्रसिद्धं परमगुरुत्वं परमेश्वरस्येति भावः । नरनारायणकथेत्थं महाभारते—

कृते युगे महाराज पुरा स्वायम्भुवेऽन्तरे
नरो नारायणश्चैव हरिः कृष्णः स्वयम्भुवः ।

( तत्रैव शा० प० मो० ध० प० ३३४।९ )

तेषां नारायणनरौ तपस्तेपतुरव्ययौ ।
बदर्याश्रममासाद्य शकटे कनकामये ॥

( तत्रैव-१० )

महाभारते भगवतो नारायणस्य कृते स्पष्टमेवेद विशेषण प्रयुक्त यथा पूर्वमुल्लिखितम्—

स एवमुक्तो द्विपदा वरिष्ठो नारायणेनोत्तमपुरुषेण ।
जगाद वाक्यं द्विपदा वरिष्ठं नारायणं लोकहिताधिवासम् ॥

( तत्रैव शा० प० ३३५ १ )

अतो "द्विपदा वरम्" इति विशेषणेन भगवान् बुद्ध एव ग्रहीतु न शक्यते।[53] ध्रुवम्—ब्रह्मणो विशेषण ध्रुवमिति पदमुक्तम्। यथा—"वाग्ण ते क्य ध्रुवम्" ( मा० का० ४ १२ )। एवमन्यत्रापि।

श्रीभट्टाचार्येण ध्रुवनित्यशब्दयोरर्थ विचार्य लिखित यत्—

'प्राचीनामूपनिषत्स्वात्मा ब्रह्म वा नित्यत्वेन न तु ध्रुवत्वेनोच्यते।"

( आ० शा० अव० पृ० ९२ ९३ )

ध्रुवनित्यशब्दौ त्रिशिकाभाष्ये पर्यायत्वेनोक्तौ—ध्रुवो नित्यत्वात् अक्षयतया सुखो नित्यत्वादेव यदनित्यं तद् दु खम्। अय च नित्य इत्यस्मात् सुख।" ( त्रि० भा० पृ० ४४ ) चतुर्थप्रकरणस्य ११-१२ कारिकयोवृत्ताबप्येतद् विषये विचारितम्।

किन्त्विद न तथ्यम्। बृहदारण्यकोपनिषदि आत्मनो विशेषणत्वेन "ध्रुव" इति पदमुपात्तम्। यथा—

विरज पर आकाशाद्ज आत्मा महान् ध्रुव ।

( बृ० आ० उ० ४ ४-२० )

---

५३ द्र० श्रीरघुनाथदामोदरकरमरकरमहोदयस्य लेख —'द्विपदा वरम्, भण्डारकर ओरियण्टल रिसर्च इस्टीच्यूट—भा० ३२ पृ० १६६-१७३ इत्यत्र प्रकाशित ।

अतो धर्मिणि विशेषणेन विशेष्य विज्ञानमेवास्ति न ब्रह्मेति वक्तु न युज्यते ।

## अद्वयम्-अद्वैतम्

श्रीभट्टाचार्येण अद्वयशब्दोऽद्वैतशब्दश्च भिन्नार्थकाविति मनुते । तत्र तेऽद्वयशब्दो द्वयाभावपर एकत्वार्थक, अद्वैतशब्दश्चाभेदार्थक । यथा स्वसम्पादिते आगमशास्त्रे पृ० १०१ १०२ स्ववृत्तौ स्वीयटिप्पण्यां च लिखितम् ।

वस्तुतस्तु इमावुभौ शब्दौ समानार्थकौ । यथा १ १ १४ श्लोके अमरकोशे भानुजीदीक्षित —'अद्वयमद्वैत वदन्त्यवश्यम्' इति तत्रैव क्षीरस्वामी च 'अद्वय विज्ञानाद्वैत वदत्यवश्यम्' इत्याहतु ।

माण्डूक्यकारिकाभाष्येऽपि श्रीशङ्कराचार्येणैकत्रैवैकस्मिन्नेवार्थेऽद्वय मद्वैत च पदमुक्तम् ।

परमार्थतत्त्वमद्वयमतन्न बुद्धेन भाषितम् । ———परमार्थतत्त्वमद्वैत वेदान्तेष्वेव विज्ञेयम् ।

( मा० का० ४ ९९ )

एवमेव छान्दोग्योपनिषदापि भाष्ये श्रीशङ्कर आह—परमार्थसद् अद्वय ब्रह्म,

( छा० उ० भा० ९ १ १ )

चन्द्रकीर्तिरपि अद्वैताद्वयशब्दयो समानार्थकत्वमाह—

"तस्मादद्वयवादिना मध्यमकाना कुतो मिथ्यादर्शनम ।"

( म० वृ० पृ० ३३१ )

"न वय नास्तिका । अस्तित्वनास्तित्वद्वयनिरासेन तु वय निर्वाण पुरगामिनमद्वैतपथ विद्योतयाम ।"

( म०वृ० पृ० ३३१ )

अत

"विवदन्तो द्वया ह्येवमजातिं ख्यापयन्ति ते ।"

( मा० का० ४-४ )

इत्यत्र—"विवदन्तोऽद्वया" इति पाठभेदं कृत्वा, अद्वया इत्यनेन बौद्धान् सगृह्य बौद्धानामेवाजातिवाद इति समर्थनं न युक्तम् । प्राय सर्वेषु माण्डूक्यकारिकासंस्करणेषु "द्वया" इत्येव पाठ । श्रीभट्टाचार्येणैव "अद्वया" इति पाठभेद कृत ।

अलातशान्ति

चतुर्थप्रकरणस्यालातशान्तिरितिनाम । अस्यार्थ पूर्वं निर्दिष्ट । अयं शब्दो बौद्धग्रन्थेषु नोपलभ्यते इति श्रीभट्टाचार्य स्वयमेव गौ० पा० का० ४-१०० वृत्त्यन्ते निर्दिष्टवान् । किन्तु अलातशब्दस्य बौद्धग्रन्थेषु भूयान् प्रयोग उपलभ्यते । यथा—

अलातचक्रनिर्माणस्वप्नमायाम्बुचन्द्रकैः ।

( आर्यदेवस्य चतु शतके १३ २। पृ० १९७ )

अत्र भ्रान्तेरुपमायामलातशब्द प्रयुक्त ।

एवमेव वैदिकवाङ्मयेऽपि अलातशब्दस्य भूयान् प्रयोग समुपलभ्यते । यथा

अलातचक्रमिव स्फुरन्तमादित्यवर्णम् . ।

( मैत्रायणब्राह्मणोपनिषदि ६ २४ )

अलातचक्रप्रतिमा दृष्टा गोष्पदवत्कृता ।

( वा०रा० कि० का० ४६ १३ )

अलातचक्रवत्सैन्यं तदा बभ्राम तावकम् ।

( म० भा० कर्णप० ८६-४२ )

अग्रयाणम्

अय शब्दो माण्डूक्यकारिकायामेकवारमेवायात । यथा—

हेयज्ञेयाप्यपाक्यानि विज्ञेयान्यग्रयाणतः ।
तेषामन्यत्र विज्ञेयादुपलम्भस्त्रिषु स्मृत. ॥

मा० का० ४ ९०

श्रीभट्टाचार्यमहोदयेनास्या कारिकायामागतस्य "अग्रयाणत " इतिपदस्य स्थाने "अग्रयानत ' इति पाठभेद कृत । स्ववृत्तौ स्वावतरणिकाया च 'अग्रयानत " इति पदस्य "महायानत " इत्यर्थ महायानसूत्रालङ्कारादिबौद्धदर्शनग्रन्थोद्धरणं ससाधित । महायानसूत्रालङ्कारदृष्ट्यैव च कारिकोक्तहेयज्ञेयाप्यपाक्याना चतुर्णा पदानामर्थोपि बौद्धदर्शनानुकूल समर्थित । यथा—हेय —परत न्त्रस्वभाव , विज्ञेय —परिकल्पितस्वभाव , आप्यम्—परिनिष्पन्नस्वभाव , पाक्यम्—सत्त्वपरिपाक चर्या [५४] । विज्ञेयात्—पूर्वोक्तज्ञेयात्, अन्यत्र त्रिषु हेयाप्यपाक्येषु, उपलम्भ उपलब्धि ।

शाङ्करभाष्ये तु एतेषा पदानामिमेऽर्था —अग्रयाणत —प्रथमत , हेयानि जागरितस्वप्नसुषुप्तानि, ज्ञेयम्-परमार्थतत्त्वम्, आप्यानि—पाण्डित्य बाल्यमौनानि साधनानि, पाक्यानि—रागद्वेषादय ।

श्रीरघुनाथदामोदरकरमरकरमहोदयेन गौ० पा० कारिकाग्रन्थस्य स्वीयेङ्गलिशटिप्पण्यामेतेषा शब्दानामेवमर्था निर्दिष्टा —अग्रयाणत = पूर्वमीमासात ( उत्तरमीमासावेदान्तस्तदपेक्षयाग्रिम = यान पूर्वमीमासा ) हेयम् = निषेधवाक्यप्रतिपाद्यम्, ज्ञेयम् = विधिवाक्यप्रतिपाद्यम् आप्यम् = प्राप्यम् = स्वर्गादिलोक , पाक्यम् = यज्ञार्थपचनीयद्रव्यादि [५५] । एतत्सदृश एवार्थो ब्रह्मसूत्रे १-१ ४ शाङ्करभाष्येऽप्युक्त ।

---

५४ विशेषज्ञानाय द्र० आगमशास्त्रस्य श्रीमद्भट्टाचार्यस्य वृत्ति , पृ० १८७ १८८ ।
५५ द्र० श्री र० दा० क० महोदयस्य गौ० पा० का० पृ० १४० १४२ ।

इत्थ श्रीभट्टाचार्यमते ज्ञेयात् परिकल्पितात् ( अस्मिन् मते ज्ञेयात् = अर्थात् विज्ञेयात्, श्रीभट्टाचार्येण तथोक्तम्—"छन्दोऽनुरोधात् त्वत्र न व्युपसर्गप्रयोग ।" ) त्रिपु हेयाप्यपाक्येपु उपलम्भ उपलब्धिरर्थात् स्वप्ने परिकल्पित्त ( ज्ञेयम् ) किञ्चिद् वस्तुतो नोपलभ्यते हेयाप्यपाक्यानि तूपलभ्यन्ते एतेषामस्वाप्निकत्वादिति भाव ।

श्रीशङ्करमतेऽस्य भावो यद् विज्ञेयात्=परमार्थसत्वाद् ब्रह्मणोऽन्यत्र त्रिपु हेयाप्यपाक्येपु उपलम्भ =अविद्याकल्पनामात्रम् ।

श्रीकरमरकररीत्याय भावो यत्पूर्वमीमासया निपिध्यविधेयस्वर्गादिलोकयज्ञीयहविरादीनि ज्ञेयानि । इमानि सर्वाणि पूर्वमीमासाज्ञेयानि ( विज्ञेयात् परब्रह्मणोऽन्यत्र ) अविद्याकल्पितानीति ।

अत्र श्रीभट्टाचार्यमते महती क्लिष्टकल्पना—"अग्रयाणत" इत्यत्र पाठभेद, विज्ञेयाद् इत्यत्र व्युपसर्गस्यानर्थक्यम्, पाक्यशब्दस्य सत्त्वपरिपाकचर्यार्थेऽभिप्रायकल्पनम्, तथा अव्यवहितपूर्वकारिकासन्दर्भविरोध । अत पूर्वतनकारिकाद्वये लौकिक शुद्धलौकिक लोकोत्तर च पदार्थत्रय विवेचितम्—

सवस्तु सोपलम्भं च द्वय लौकिकमिष्यते ।
अवस्तु सोपलम्भ च शुद्धं लौकिकमिष्यते ॥

मा० का० ४ ८७

अवस्त्वनुपलम्भं च लोकोत्तरमिति स्मृतम् ।
ज्ञानं ज्ञेय च विज्ञेयं सदा बुद्धै प्रकीर्तितम् ॥

( मा० का० ४ ८८ )

अत्र यल्लोकोत्तर तदेव विज्ञेयपदेनाभिप्रेतम् । तेन हेयज्ञेयेत्यादिकारिकायाम् ( मा० का० ४।९० ) विज्ञेयपदस्य सार्थक्य भवति । श्रीभट्टाचार्योक्त व्युपसर्गस्य नानार्थक्यम् । एवमेव 'अवस्तु—इत्यादि ४-८८

कारिकायामपि विज्ञेयपदस्य सार्थकता भवत्यन्यथा श्रीभट्टाचार्यरीत्या तत्रापि विज्ञेयपदस्य नास्त्यावश्यकता । अतोऽग्रयाणपदं न महायानपरम् ।

अस्पर्शयोगः

अथ शब्दो माण्डूक्यकारिकायां वारद्वयमागतः —

**अस्पर्शयोगो वै नाम दुर्दशः सर्वयोगिभिः ।**
**योगिनो बिभ्यति ह्यस्मादभये भयदर्शिनः ॥**

( मा० का० ३-३९ )

**अस्पर्शयोगो वै नाम सर्वसत्त्वसुखो हितः ।**
**अविवादोऽविरुद्धश्च देशितस्तं नमाम्यहम् ॥**

( मा० का० ४ २ )

अस्य शाङ्करभाष्ये आनन्दगिरिव्याख्यायाञ्चायमर्थः —

"यद्यपीदमित्थं परमार्थतत्त्वम् । अस्पर्शयोगो नामायं सर्वसम्बन्धाख्य-स्पर्शवर्जितत्वादस्पर्शयोगो नाम वै स्मर्यते ।"

( मा० का० शा० भा० ३-३९ )

"तत्र वर्णाश्रमादिधर्मेण पापादिमलेन च स्पर्शो न भवत्यस्मादित्यद्वैतानुभवोऽस्पर्शः । स एव योगो जीवस्य ब्रह्मभावेन योजनात् ।

( मा० का० ३-३९ आ० गि० व्या० )

"स्पर्शः सम्बन्धो न विद्यते यस्य योगस्य केनचित् कदाचिदपि सोऽस्पर्शयोगः ब्रह्मस्वभाव एव ।"

( मा० का० शा० भा० ४-२ )

अत्र श्रीभट्टाचार्य उक्तवान् यदयं शब्दः प्रसिद्धासूपनिषत्सु न विद्यते ।[५६] किन्तु स्वयमपि बौद्धदर्शनेष्विमं शब्दं दर्शयितुं नापारयत् ।

५६ "अथ कोऽयमस्पर्शयोगः । केन वाऽयं देशितः । कुत्र वा । तत्र तावन्नैष शब्दः प्रसिद्धासूपनिषत्सु ।"

( आगमशास्त्रे पृ० ९२ )

किञ्चित्सदृशो अस्पर्शसविदस्पर्शविहारशब्दो प्रादर्शयत्। बौद्धागमस्य प्रसिद्धनवध्यानेषु संज्ञावेदितनिरोधनामकध्यानेनेममस्पर्शयोगं व्याख्यातवान् । बौद्धगान ओदोहेति ग्रन्थे येन केनापि प्रकारेण पाठसंशोधनं कृत्वा अस्पर्शयोगशब्दं न्यदर्शयत् । एतद्ग्रन्थाधारमात्रेणैव भगवान् बुद्धोऽस्पर्शयोगमुपदिष्टवानित्यपि साधितवान् ।

इद विचारणीय यद् ययाऽयम् अस्पर्शयोगशब्दः सौगतदर्शनग्रन्थेषु आनुपूर्वी नोपलभ्यते किन्त्वाशिकस्तथैवोपनिषत्सु श्रीमद्भगवद्गीतायां चाशिकरूपेणोपलभ्यत एव । यथा–अस्पर्शयोगस्यैव नामान्तरमुन्मनीभावः स च ब्रह्मबिन्दूपनिषदि—

ॐ मनो हि द्विविधं प्रोक्तं शुद्धं चाशुद्धमेव च ।
अशुद्धं कामसंकल्पं शुद्धं कामविवर्जितम् ॥१॥
मन एव मनुष्याणां कारणं बन्धमोक्षयोः ।
बन्धाय विषयासक्तं मुक्त्यै निर्विषयं स्मृतम् ॥२॥
निरस्तविषयासङ्गं सन्निरुद्धं मनो हृदि ।
यदा यात्युन्मनीभावं तदा तत्परमं पदम् ॥४॥
नैव चिन्त्यं न चाचिन्त्यमचिन्त्यं चिन्त्यमेव च ।
पक्षपातविनिर्मुक्तं ब्रह्म सम्पद्यते तदा ॥६॥
न निरोधो न चोत्पत्तिर्न बन्धो न च शासनम् ।
न मुमुक्षा न मुक्तिश्च इत्येषा परमार्थता ॥१०॥

अयमुन्मनीभाव एव अमनीभावशब्देन मैत्रायण्युपनिषद्यपि—

चित्तमेव हि संसारस्तत्प्रयत्नेन शोधयेत् ।
यच्चित्तस्तन्मयो भवति गुह्यमेतत्सनातनम् ॥४-३॥

लयविक्षेपरहितं मनः कृत्वा सुनिश्चलम् ।
यदा यात्यमनीभावं तदा तत्परमं पदम् ॥४-७॥
तावदेव निरोद्धव्यं हृदि यावत्क्षयं गतम् ।
एतज्ज्ञानं च मोक्षं च शेषास्तु ग्रन्थविस्तराः ॥४-८॥

अयमेव भावः—अस्पर्शसंस्पर्शशब्दाभ्यां श्रीमद्भगवद्गीतायाम्—

मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः । (२-१४)
ये हि संस्पर्शजा भोगा दुःखयोनय एव ते । (५-२२)

शाङ्करभाष्यमेवोपनिषदनुकूलमपि प्रतीयते । शाङ्करभाष्यानुसारम् अस्पर्शयोगः अर्थात् सर्वविधसम्बन्धाभावोऽद्वैतानुभवयोगो ब्रह्मस्वभावः । अयमर्थं उपनिषत्सूपलभ्यत एव । यथा—

"अशब्दमस्पर्शमरूपमव्ययम् ।"

( कठोपनिषदि-१-३-१५ )

"अकायमव्रणमस्नाविरम् ।"

( ई० उ० ८ )

"अस्थूलमनण्वह्रस्वमदीर्घम् ।"

( बृ० आ उ० ३-८-८ )

उक्तकारिकायाम् अस्याम्—अभये इति पदमुपात्तम् । ( ३।३९ )

अस्यार्थोऽपि शाङ्करभाष्य एव सङ्गच्छते । शाङ्करमतेऽस्पर्शयोगो ब्रह्मस्वभावः । उपनिषदपि ब्रह्म-अभयं प्रतिपादयति—

"अदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते ।"

( तै० उ० २-७ )

अतो न "अस्पर्शयोग" शब्द सौगतदर्शनसूचक ।

## विशारदम्--वैशारद्यम्

चतुर्थे प्रकरणे कारिकाद्वये विशारद तथा वैशारद्यम् इति पद प्रयुक्तम् । यथा—

**अजं साम्यं विशारदम् ( ४-९३ )** तथा

**वैशारद्यं तु वै नास्ति—( ४-९४ )**

उभयस्थले श्रीशङ्कराचार्य विशारदमित्यस्य विशुद्धिरित्यर्थं कृतवान् ।

श्रीभट्टाचार्यस्तु—"निर्भयता हि वैशारद्यम्" इत्यभिधर्मकोशव्याख्यावचनम् ( अ० ध० को० व्या० पृ० ६४६ ) उद्धृत्य विशारदशब्दार्थो निर्भय इत्युक्तवान् तथा मा० का० ३-३५ एव ४-७८ इत्यत्रोक्तनिर्भयाभयपदे अपि विशारदपर्यायवाचिनीति निर्णीतवान् । अग्रे च बहुविवेचनपूर्वक सौगतप्रसिद्ध चतुर्विध वैशारद्यमपि विवेचितवान्–१–सर्वधर्माभिसम्बोधि वैशारद्यम्, २–सर्वास्रवक्षयज्ञानवैशारद्यम्, ३–आन्तरायिकधर्मानन्यथात्वनिश्चितव्याकरणवैशारद्यम्, ४–नैर्याणिकप्रतिपद्यथात्ववैशारद्य च । अन्वेषापराण्यपि चत्वारि वैशारद्यानि प्रदर्शितवान् ।

इत्थमत्र शङ्करमते विशारदम्–विशुद्धमात्मतत्त्वमित्यर्थ , श्रीभट्टाचार्यमते विशारदम्–निर्भयमित्यर्थः । एव श्रीभट्टाचार्योऽत्र सौगतसिद्धान्त प्रदर्शयितुमकामयत ।

किन्तु ४ ९४ कारिकाया उत्तरार्द्धभागेन वैशारद्यमित्यनेन ग्रन्थकर्तु कोऽभिप्राय इति साधु लक्ष्यते । ग्रन्थकर्ता कृपणशब्दस्य विपरीतार्थं विशारदशब्देनाभिप्रैति । यथा कारिका—

**वैशारद्यं तु वै नास्ति भेदे विचरतां सदा ।**
**भेदनिम्नाः पृथग्वादास्तस्मात्ते कृपणाः स्मृताः ॥**

( मा० का० ४-९४ )

भेदरहितमज साम्यमिति ज्ञान वैशारद्यम्। एतद्विपरीत ज्ञान कार्पण्यम्। अत एव श्रीमद्भगवद्गीतायां 'कार्पण्यदोषोपहतस्वभाव' — (२-७) इत्युक्तम्। अत्र कार्पण्यमित्यस्यार्थ — 'अनात्मविदप्राप्तपरम पुरुषार्थतया कृपणो भवति—'यो वा एतदक्षर गार्ग्यविदित्वाऽस्माल्लोकात् प्रैति स कृपण' इति श्रुत " इति श्रीमदानन्दगिरिभि श्रीमधुसूदन-सरस्वतीभिश्च कृत ।

अतो विशारद वैशारद्यं वा पद न सौगतसिद्धान्तसूचकमिति।

गन्धर्वनगरम्

स्वप्नमाये यथा दृष्टे गन्धर्वनगर यथा।
तथा विश्वमिदं दृष्ट वेदान्तेषु विचक्षणैः ॥

( मा० का० २ ३१ )

अत्र वृत्तौ श्रीभट्टाचार्येणोक्तम्—' गन्धर्वनगरोपमा दुर्लभा प्राग् बौद्धेभ्य ।' किन्तु कठोपनिषदि वाल्मीकीयरामायण, पातञ्जल महाभाष्ये योगवासिष्ठे च स्वप्ननगरोपमा दृश्यते—

यथादर्शे तथात्मनि यथा स्वप्ने तथा पितृलोके।
यथाप्सु परीव दृश्यते तथा गन्धर्वलोके छायातपयोरिव ॥

( कठोप० २।६।५ )

प्रासादमालावितता स्तम्भै काञ्चनसन्निभै ।
शातकुम्भनिभैर्जालैर्गन्धर्वनगरोपमाम् ॥

( वा० रा० मु० का० २ स० ११ श्लो० )

असत्तु मृगतृष्णावत्—गन्धर्वनगर यथा।

( पात० म० भा० ४।१।३ वा० )

यस्त्वकारणको भाति न स्वभावो विजृम्भते ।
सर्वरूपेण संकल्पगन्धर्वनगरादिवत् ॥

( यो० वा० ६।५४।१६ )

क्षान्तिः

आदिबुद्धाः प्रकृत्यैव सर्वे धर्माः सुनिश्चिता ।
यस्यैवं भवति क्षान्ति सोऽमृतत्वाय कल्पते ॥

( मा० का० ४-९२ )

अत्र क्षान्तिशब्दस्य "बोधकर्तव्यतानिरपेक्षता" इत्यर्थ शाङ्करभाष्ये कृत । श्रीभट्टाचार्येणानेन सौगतवचनं क्षान्तिरित्यस्य रुचिरित्यर्थ साधित । अत्र रुच्यर्थसाधने महान् प्रयासोऽस्ति । किन्तूभाभ्यामप्यर्थाभ्या सिद्धान्ते न मनागपि भेद ।

प्रपञ्चः

वीतरागभयक्रोधैः मुनिभि र्वेदपारगैः ।
निर्विकल्पो ह्यय दृष्टः प्रपञ्चोपशमोऽद्वय ॥

( मा० का० २-३५ )

अत्र श्रीभट्टाचार्येणोक्तम्—"प्रपञ्चोपशमशब्दो बौद्धपूर्ववर्तिषु ग्रन्थेष्वतिमात्र दुर्लभ । दृश्यते त्वर्वाचीनासूपनिषत्सु ग्रन्थेषु वा । अत्रैवच टिप्पण्यामिदमप्युक्त यदेतासूपनिषत्सूपलभ्यते कि त्वेतासामुपनिषदा प्राचीनत्वे सन्देह । यथा—नृ० ता०पू० उ०–४-१, नृ० ता०उ० उ० १, मा० उ० ७। किन्त्वेतासामुपनिषदा बौद्धाचार्येभ्योऽर्वाचीनत्वे प्रमाण नास्ति । अत श्रीभट्टाचार्योक्तिर्विचारणीया ।

अग्रे च प्रपञ्चशब्दस्यैवमर्थो निर्दिष्ट —

'समासेनेद दृश्य जगदेव वा प्रपञ्च्यत इति कृत्वा प्रपञ्च । बौद्धनये त्वस्य व्युत्पत्तिलभ्योऽर्थो वाच् । प्रपञ्च्यतेऽनेन प्रपञ्चयतीति वा प्रपञ्च । ततश्च यत् किमपि वाचा प्रकाश्यते स प्रपञ्च ।

चन्द्रकीर्तिवचनेन चायमर्थः समर्थितः।

किन्तु नायमर्थो बौद्धानामेव। उपनिषद्यप्ययमेवार्थ उक्तः—

वाचारम्भणं विकारो नामधेयम्, मृत्तिकेत्येव सत्यम्।

( छा० उ० ६।१।४ )

अर्थात् सर्वत्र परमार्थतत्त्वमेकमेव, भेदस्तु केवलं व्यावहृत एव।

प्रचारः, उपचारः, समाधिः

एतेषां शब्दानां बौद्धदर्शनानुकूलमर्थं निर्धार्य श्रीभट्टाचार्यस्तृतीये प्रकरणे बौद्धदर्शनं समर्थयति, तद् विचारणीयम्।

माण्डूक्यकारिकायास्तृतीये अद्वैतनामके प्रकरणेऽस्तेऽद्वैततत्त्वसाधनायोक्तं यद् द्वैतज्ञानस्य कारणं मनस्तथा मनसो निरोधे द्वैतभावापगमे सति अद्वैतं ब्रह्मावतिष्ठते।

मनोदृश्यमिदं द्वैतं यत्किञ्चित्सचराचरम्।
मनसो ह्यमनीभावे द्वैतं नैवोपलभ्यते॥

( मा० का० ३-३१ ) इत्यारभ्य

यदा न लीयते चित्तं न च विक्षिप्यते पुनः।
अनिङ्गमनाभासं निष्पन्नं ब्रह्म तत्तदा॥

( मा० का० ३-४६ ) इत्यन्तं यावत्

मनसो निग्रहोपायो निग्रहे काठिन्यं निग्रहफलञ्चोपपादितम्। निग्रहोपायो यथा—

आत्मसत्यानुबोधेन न संकल्पयते यदा।
अमनस्तां तदा याति ग्राह्याभावे तदग्रहम्॥

( मा० का० ३-३२ )

निग्रहे काठिन्यं यथा—

उत्सेक उदधेर्यद्वत्कुशाग्रेणैकबिन्दुना ।
मनसो निग्रहस्तद्वद् भवेदपरिखेदतः ॥

( मा० का० ३ ४१ )

तथा—

नास्वादयेत्सुखं तत्र निसङ्ग प्रज्ञया भवेत् ।
निश्चलं निश्चरच्चित्तमेकीकुर्यात्प्रयत्नत ॥

( मा० का० ३-४५ )

फल तु—

निष्पन्न ब्रह्म तत्तदा ।

( मा० का० ३-४६ ) उक्तमेव ।

अत्र मध्ये सौगतसम्मता अनेके शब्दा सन्ति । येषामनुरोधेन सौगतानुकूलमर्थं श्रीभट्टाचार्यं कश्चित्समाधिरेव ब्रह्मेति मन्यते—

"लीयते हि सुषुप्ते तद्" ( ३-३५ ) इत्यारभ्य 'सकृद्विभात सर्वज्ञम्' ( ३-३६ ) इत्यन्तेन ग्रन्थेन व्याख्यात ब्रह्म नाम स्फुटमेव कश्चित्समाधिरेव नान्यत् किञ्चित् ।"

( आ० शा० वृत्तौ पृ० ७१ )

तत्र विशेषत इमे शब्दा —प्रचार ( ३-३४ ) उपचार ( ३ ३६ ) समाधि ( ३-३७ ) आत्मसस्थम् ( ३-३८ ) अस्पर्शयोग ( ३-३९ ) ।

अत्र श्रीभट्टाचार्यमत एतेषामयमर्थ —

प्रचार —"अमनस्ताख्य प्रचार विहारो गतिर्भूमिरवस्थेतिभाव ।

( आ० शा० पृ० ६९ )

उपचार —"तन्नामक समाधि । समाधि द्विविध —उपचारसमाधि अपर्णासमाधिश्च । अत्राद्य ।"

( आ० शा० पृ० ७१ )

समाधिः—सौगतशास्त्रे ( म० व्यु० ५८० ) त्वचलो नाम कश्चिद् विलक्षण एव समाधिः ।" ( आ० शा० पृ० ७३ )

असत्संयोगः—अयं शब्दोऽस्मिन्नेव प्रकरणे पूर्वं विवेचितः ।

एतेषां शब्दानां भगवत्पादशङ्करसम्मतोऽयमर्थः—

प्रचारः—"प्रचरणम्, सुषुप्तस्यास्य मनसो यथा प्रचरणं ततोऽन्यदेव प्रचरणं बोधहुताशनविप्लुष्टाविद्यानर्थप्रवृत्तिबीजस्य मनस इति भावः।"

उपचारः—"उपचरणम्, यथान्येषामात्मस्वरूपव्यतिरेकेण समाधानाद्युपचारः । नित्यशुद्धबुद्धमुक्तस्वभावत्वाद् ब्रह्मणः कथञ्चन न कथञ्चिदपि कर्तव्यसम्भवोऽविद्यानाशे इतिभावः ।"

अत परं ताः कारिका उल्लिख्यन्ते । तत्र विचार्यता कोऽर्थः प्रकरणसम्मतः, श्रीभट्टाचार्योक्तः सौगतसम्मतोऽथवोपनिषत्सम्मतः श्रीभगवत्पादोक्तः ।

निगृहीतस्य मनसो निर्विकल्पस्य धीमतः ।
प्रचारः सतु विज्ञेयः सुषुप्तेरन्यो न तत्समः ॥
(मा० का० ३-३४)

अत्र आत्मसत्यानुबोधेन ( ३-३२ ) निगृहीतस्य मनसस्तथा सुषुप्तावस्थस्य मनसो भेदं प्रतिपिपादयिषति कारिकाकृत्तर्हि कथममनस्तारूपो विहारो गतिरित्याद्यर्थः सङ्गच्छते ।

एतदनन्तरं सुषुप्तस्यात्मबोधेन निगृहीतस्य च मनसः प्रचार—(प्रचरण) भेदे हेतुमनया कारिकयोपन्यस्य—

लीयते हि सुषुप्ते तन्निगृहीतं न लीयते ।
तदेव निर्भयं ब्रह्म ज्ञानलोकं समन्ततः ॥
( मा० का० ३-३५ )

ततोऽत्रोक्तं निर्दिशति—

**अजमनिद्रमस्वप्नमनामकमरूपकम् ।**
**सकृद् विभातं सर्वज्ञं नोपचार कथञ्चन ॥**

( मा० का० ३-३६ )

एवंविधे निरुपाधिके ब्रह्मणि विदुष कथञ्चिदपि कर्तव्यशेष (उपचार समाधानादि ) नास्ति । अविद्यादशायामेव सर्वेषा व्यवहाराणा सत्वात् । अय भावार्थ शाङ्करभाष्ये, आनन्दगिरिव्याख्याया च स्पष्ट ।

एवंविधे प्रकरणे श्रीभट्टाचार्यसम्मतस्य उपचारनामकयोगस्यात्र सगतिर्न युज्यते । अपर चात्र यद्युपचारनामको योग एवात्र ग्रन्थकर्तु विवक्षितो भवेत्तदा "नोपचार कथञ्चन" इत्यस्य स्थाने "नोपचारो हि कश्चन" इत्येव पाठ समीचीन स्यात् । अत्र तन्मतेन कथञ्चनेति पद नोपयुज्यते ।

अपर च तन्मतेन "अत्र कथञ्चन उपचारस्तन्नामक समाधिर्न भवति" इत्येव भावस्तर्हि अय प्रश्नो जागर्ति यत् किन्नामक समाधिरनोपयुज्येत । केवलमुपचारनामकसमाधिनिषेधे किं तात्पर्यम् । प्राप्तौ सत्या निषेध, उपचारसमाधिरत्र प्राप्त एव न हि तर्हि कथ तन्निषेध । एतद् न कारिकाकृता न वा श्रीभट्टाचार्येण समाहितम् । श्रीभट्टाचार्येणात्र उपचारसमाधिरपर्णासमाधिश्च विस्तरेण विवेचितस्तस्योपयोगो न दर्शित । अत श्रीभट्टाचार्योक्त उपचारशब्दार्थो नात्र साधुरिति प्रतीयते ।

एतदेव ब्रह्म परमात्मरूपेण पुल्लिङ्गनिर्देशन पुन प्रस्तूयते सर्वाभिलापविगत सर्वचिन्तासमुत्थित ।

**सुप्रशान्तः सकृज्ज्योतिः समाधिरचलोऽभय ।**

( मा० का० ३ ३७ )

अत्र समाधिपदेन परमात्मा गृहीत । तत्रैव च भगवत्पादसम्मते समाधीयते निक्षिप्यते जीवोऽस्मिन्निति व्युत्पत्त्या समाधिशब्दस्य परमात्मरूपेऽर्थे सर्वाभिलापविगत इत्यादीनि विशेषणान्यपि सगच्छन्ते । यदि

श्रीभट्टाचार्याभिमत समाधिर्नाम कश्चिद् योगस्तर्हि सर्वाभिलापविगत-विशेषणस्य न सङ्गति ।

यतो ह्यत्र श्रीभट्टाचार्येणापि समाधिशब्दस्य श्रीपतञ्जलिप्रोक्तोऽभिलाप, व्यासप्रोक्तोऽभिलापश्च स्वयमेवोद्धृत । अत समाधौ सर्वाभिलापविगतत्वविशेषण कथ सङ्गच्छेत् ।

अपरञ्चैतावता विवेचितोऽप्ययमचल समाधि कश्चिद् विचित्र एवेति स्वय श्रीभट्टाचार्योऽपि मनुते तथा तस्य विषये विशेषत किमपि वक्तु स्वय न शक्नोति । यथोक्तम्—

"सौगतशास्त्रे (म० व्यु०) त्वचलो नाम कश्चिद् विलक्षण एव समाधि । विशेष पुन मृग्य । (आ० शा० पृ० ७३)

अत एवविधस्य समाधे र्नोपयोगोऽत्रेत्येव प्रतिभाति ।

सद्भावेन

संवृत्या जायते सर्वं शाश्वतं तेन नास्ति वै ।

सद्भावेन ह्यजं सर्वमुच्छेदस्तेन नास्ति वै ।

( मा० का० ४ ५७ )

इति कारिकाया "सद्भावेन" इतिपदस्थाने "स्वभावेन" इति पद परिवर्त्य श्रीभट्टाचार्येण सौगतसिद्धान्त समर्थित । स्वयमेव च टिप्पण्यामेतदुल्लिख्यते च—

"मया परीक्षितेषु सर्वेषु सस्करणेषु हस्तलिखितेषु च पुस्तकेषु सद्भावेनेत्येव पाठो लभ्यते न पुन स्वभावेनेति । तथापि श्रेयानित्येष एव पाठो गृहीत । (आ० शा० पृ० १५२)

मन, चित्तम्, विज्ञानम्, धर्मधातु, ब्रह्म

माण्डूक्यकारिकाया यत्र यत्र मनश्चित्त विज्ञान धर्मधातुरिति पदान्यायातानि, तत्रतत्र श्रीभट्टाचार्य एतेषा ब्रह्मेत्यर्थं कृतवान् । एतदर्थ

बौद्धदर्शनवचनान्युद्धृत्य सौगतसिद्धान्तं प्रकटयितुमकामयत। किन्तु तत्र सर्वत्रैव प्रकरणविरोधः पाठभेदश्च सुतरां स्पष्टः।

माण्डूक्यकारिकायां मनश्शब्दोऽष्टवारं प्रयुक्तः। प्रथमे प्रकरणे एकवारं द्वितीयेऽप्येकवारं तृतीये षड्वारम्। यथा—

१-७।२-२५।३-२९, ३०, ३१, ३४, ४०, ४१।

एतेषु श्रीभट्टाचार्येण "मन इति मनोविदः" (२-२५) इत्यस्याः कारिकाया वृत्तौ मन इत्यस्य 'विज्ञानम्' इत्यर्थं कृतः, विज्ञानपदस्य च ब्रह्मेत्यर्थं कृतः, सोऽग्रे वाग्रे निर्दिश्यते। यथोक्तम्—

"चित्तं मनोऽथ विज्ञानमेकार्थम्" इति वसुबन्धुः (अ० को० २-३४, दी० नि० १-२१, स० नि० ९४)। एकमेव क्रियाभेदाद् बहुधोच्यते। (आ० शा० पृ० ३३) "चित्तं विकल्पो विज्ञप्तिर्मनो विज्ञानमेव च। आलयस्त्रिभवश्चेष्टा एते चित्तस्य पर्ययाः।" (लं० सू० १०-४४९ उद्धृतमेतत् आ० शा० पृ० १४६) चित्तशब्दः षोडशवारमागतः २-१३, २५।३-४४, ४५, ४६।४-२६, २७, २८, ४६, ५४, ६१, ६२, ६६, ७२, ७६, ७७। चेतशब्दः केवलं चतुर्वारमागतः—१-६, २५।२-९, १०। एवमेव "चित्तमेव तु केवलं तत्तज्जीवादिरूपेणाभासते।' ४ ६३, ६४ कारिकयोर्वृत्तौ तथा "चित्तं ब्रह्म निष्पन्नं भवति।" (३-४६ वृत्तौ) एवं द्र० ४-८०। चित्तं नित्यं सदा स्वतः इतिभावः। (४ ७२) यद् ब्रह्मेत्युच्यते तत्खलु निगृहीतं मनः (३-३६ आ० शा० पृ० ७०) विज्ञानशब्दः षड्वारमागतः—४-४५, ४७, ४८, ५०, ५१, ५२।

एतेषां वृत्तौ विज्ञानशब्दार्थो न विशेषेण प्रतिपादितः। किन्तु ३ ३३ कारिकाया वृत्तौ विज्ञानमेव श्रीगौडपादोक्तं ब्रह्मेति प्रतिपादितम्—

"सत्यं ज्ञानमनन्तं ब्रह्म" (तै० उ० २-१-१) इत्यादिष्विव यदिह ज्ञानं तदेवान्यत्र 'विज्ञानमानन्दं ब्रह्म' (बृ० आ० उ० ३-९-१३) इत्यादिष्विव विज्ञानम्। सैव च ज्ञप्तिर्विज्ञप्तिः। एतदेव चित्तं मनश्च। 'चित्तं

मनो विज्ञान विज्ञप्तिश्चेति पर्याया ।" ( वि० पृ० ३ ) "चित्त मनाऽथ विज्ञानमित्यप्यनर्यान्तरम् ।" ( म० वृ० पृ० ३०८ ) अ० को० ३४, म० नि० २, ९४ ।"

एतदनन्तर ज्ञान तथा विज्ञानमेवोपनिपदा ब्रह्मेति साधयितु मा० का० ३ ३८ इत्यत्र वृत्तौ कठच्छान्दोग्यबृहदारण्यकोपनिपदा वाक्यान्युद्धृतानि । ८ ४५ कारिकावृत्तौ च स्पष्टमुक्त यद्—*अत्र विज्ञान नाम चित्तम्,* न वेदान्तिना ब्रह्म ( आ० शा० पृ० १४५ )

धर्मशब्दः प्रयाविशयार कारिकासु प्रयुक्त —

२-२५, ३-१, ४ १, ६, ८, १०, २१, ३३, ४१, ४६, ५३, ५४, ५८, ५९, ६०, ८१, ८२, ९१, ९२, ९३, ९६, ९८, ९९ ।

एषु २-२५ तथा ३-१ इत्यनयो कारिक्यो वृत्तौ धर्मशब्दार्थो न परामृष्ट । किन्तु ४-१ इत्यत्र वैदिकवचनाना बौद्धवचनाना चोपन्यासपूर्वकम् ८६ ९२ पृष्ठेषु धर्मशब्दो, भावपर पदार्थपरो वेति निर्णीतम् । इदमप्युक्त यद् *श्रीगौडपादाचार्येणाद्वैत प्रकरणे यदर्थं भावशब्द प्रयुक्तस्तदर्थमेवालात-*शान्तौ धर्मशब्द प्रयुक्त ( आ० शा० पृ० ९१ )

आसु सर्वासु कारिकासु श्रीभट्टाचार्येण स्ववृत्तौ धर्मशब्दस्यार्थं पदार्थ इत्यमयत । भगवता शङ्करेण च सर्वासु कारिकासु धर्मशब्दार्थं आत्मेत्यमयत । अजमनिद्रम्———४-८१ कारिकाया शङ्करोचम् "आत्माख्यो धर्म " इति प्रतीकमादायानन्दगिरिणोक्तम्—"कल्पितस्य सर्वस्य धारणाद धर्म " इति ।——किञ्च धीयते निधीयते सर्वं निक्षिप्यते सुषुप्तादावस्मिन्निति धातुरात्मोच्यते——। काठकोपनिपदि च धर्मशब्देनात्मोक्त— *'अणुरेष धर्म ( का० उ० १-१ २१ )*

इत्यमत्रेद विचारणीय यद् माण्डूक्यकारिकाया मनश्चित्तचेतोविज्ञान धर्मधातुशब्दा ब्रह्मपर्यायवाचिनो न वेति ।

उपरितनविवरणेनेदमवगत यत् श्रीभट्टाचार्यमतेन चित्तशब्दो ब्रह्मार

किन्तु तस्यैव शब्देनेदमपि प्रतीयते यच्चित्तशब्दो न ब्रह्मपरोऽपि तु किञ्चिदिन्द्रियपर । यथा—

"एष आत्मा अन्तर्देहमध्ये चित्ते कांश्चिदपरान् स्वतोऽन्यान्——भावान् विकरोति नानारूपेण निर्मिमीते कल्पयतीति भाव ।——तानेव आत्मा विकरोति । यथैवोऽन्तश्चित्तेऽव्यवस्थितान् भावान् विकरोति तथा बहिर्देहाच्चित्ते——।" ( मा० का० २-१३ वृत्तौ )

अनेन आत्मा ( ब्रह्म ) चित्ते भावान् विकरोतीति वृत्तिवचनेनात्मचित्तयो पार्थक्य स्पष्टमेव । यद्यत्र कारिकानुरोधेन वृत्तिकृता आत्मचित्तयो पार्थक्यमभिहितमिति कश्चिद् वदेत्तर्हि ग्रन्थकर्तुरेतदाशयानुरोधेनैव सर्वत्र चित्तशब्दो व्याख्येयो यथा भगवता शङ्करेण सर्वत्र व्याख्यात । अत श्रीभट्टाचार्यस्य चित्तशब्दस्य विशेषत मा० का० १-६, (अत्र चेतश्शब्द ) ३-४६ । ४-७२, ८० कारिकासु या ब्रह्मपरा व्याख्या सा विचारणीया ।

यदि च श्रीभट्टाचार्यानुसार चित्तशब्दश्चेतश्शब्दश्च ब्रह्मपर आत्मपरा वा स्यात्तदा—

युञ्जीत प्रणवे चेत प्रणवो ब्रह्म निर्भयम् । ( मा० का० १-२५ )

त्यत्र का गति , प्रणव ( ब्रह्म ) चेतसोरेकत्वात् कि कुत्र युञ्जीत । एकस्मिन्नेव कथ कर्तृत्वाधिकरणत्वव्यवहार सम्भवेत ।

अतो माण्डूक्यकारिकाग्रन्थे प्रयुक्तश्चित्तशब्दश्चेतश्शब्दश्चाचार्यश्रीगौडपादानुसार न ब्रह्मपरो न आत्मपर ।

विज्ञानस्य ब्रह्मत्वे श्रीगौडपादाचार्यनये श्रीभट्टाचार्यनये च न वैमत्य न्तु विज्ञानस्य स्वरूपविचारे महान् भेद । श्रीभट्टाचार्याभिमतविज्ञानस्य वृत्तिविज्ञानालयविज्ञानादिभेद सन्ततिनित्यता च । श्रीगौडपादाचार्यमते ज्ञान सत्कूटस्थनित्य च । यथा बृहदारण्यकोपनिषदि "कतम आत्मेति ऽय विज्ञानमय ।" ( बृ० आ० उ० ४।३।७ ) माण्डूक्यकारिकाया विज्ञानरूप ब्रह्म आत्मपदेन प्रभ्वादिना च निर्दिष्टम् । यथा—

कल्पयत्यात्मनात्मानमात्मा देवः स्वमायया ।
स एव बुध्यते भेदानिति वेदान्तनिश्चय ॥
( मा० का० २-१२ )

विकरोत्यपरान् भावनान्तश्चित्ते ऽव्यवस्थितान् ।
नियतांश्च बहिश्चित्त एवं कल्पयते प्रभुः ॥
( मा० का० २-१३ )

उभयत्र चित्तादतिरिक्त आत्मा ( ब्रह्म ) कश्चित्प्रतीयते । विज्ञानार्थकचित्तशब्देन द्वितीयकारिकार्थो न सङ्गच्छते । श्रीभट्टाचार्येणाप्यत्र चित्तशब्दस्य विज्ञानार्थो नाङ्गीकृत । इदमप्यवधार्यं यद् विज्ञान विकल्पस्वरूपम् यथोक्तम्—चित्त विकल्पो विज्ञप्तिर्मनो विज्ञानमेव च । ( ल० अ० सू० १०-४४९ ) तद् विज्ञानम् ( विकल्परूपम् ) विकल्पक भवितु नार्हति । अत्र तु आत्मा ( ब्रह्म ) विकल्पक इत्युक्तम्—

उभयोरपि वैतथ्यं भेदाना स्थानयोर्यदि ।
क एतान् बुध्यते भेदान् को वा तेषा विकल्पकः ।
( मा० का० २ ११ )

अतो विकल्परूप चित्त विकल्पक न, अपि तु कश्चिदपर एव विकल्पक ।

वृत्तिकृता श्रीभट्टाचार्येणास्या कारिकाया वृत्तिरेव न व्यरचि । श्रीशङ्कराचार्य स्पष्ट विवृणोति—"स्वप्नजाग्रत्स्थानयोर्भेदाना यदि वैतथ्य क एतानन्तर्बहिश्चेत कल्पितान् बुध्यते । को वै तेषा विकल्पक । स्मृतिज्ञानयो क आलम्बनमित्यर्थ । न चेन्निरात्मवाद इष्ट ।"

अत्रानन्दगिरिराह—यदि प्रमाता कर्ता वा नेष्यते तर्हि नैरात्म्यमिष्टमेवाऽऽपद्यते । न च तदेष्टु शक्यम आत्मनिराकरणस्य दुष्करत्वान्निराकर्तुरेवात्मत्वादित्यर्थ ।

अतो माण्डूक्यकारिकाया विज्ञानपद न ब्रह्मपरमिति।

श्रीभट्टाचार्येण धर्मशब्दार्थ पदार्थोऽमन्यत, श्रीशड्०कराचार्येण तु धर्मशब्दो जीवपर आत्मपरो वामयत। पूर्वमुक्त यद् धर्मशब्द एकवार द्वितीये प्रकरण एकवार च तृतीये प्रकरण एकविंशतिवार च चतुर्थे प्रकरण आगत। एतेषु श्रीभट्टाचार्येण द्वितीयप्रकरणान्तर्गत (२-२५) धर्मशब्दो वृत्तो विमृष्ट एव न हि, आवश्यकतापि नास्ति, तृतीयप्रकरणान्तर्गतश्च (३-१) धर्मशब्दो वृत्तावेव विमृष्टो येन सुस्पष्टतया तस्याशयावगम किञ्चिद्दुष्कर एव। चतुर्थप्रकरणान्तर्गतश्च धर्मशब्द सर्वत्रैव पदार्थपरो व्याख्यात। श्रीशड्कराचार्येण तु द्वितीयप्रकरणान्तर्गतो धर्मशब्दो मीमासकरीत्या व्याख्यातोऽन्यस्थलेषु सर्वत्रैव तृतीये प्रकरणे चतुर्थे चात्मपरो व्याख्यात।

चतुर्थे प्रकरणे यत्र यत्र धर्मशब्दप्रयोगस्तत्र सर्वत्रैव द्वित्राणि स्थलानि परिहाय "धर्मो न जायते" इत्येव प्रतिपादितमस्ति। अतो जीवपरो धर्मशब्दो विज्ञानवादानुसारेण पदार्थपरो वा धर्मशब्दश्चोभावपि साधु सगच्छेत। अस्या स्थितौ केवलमेकैवेदृशी कारिका यया ग्रन्थकर्तु श्रीगौडपादाचार्यस्याशयोऽवगन्तु शक्यते। कारिका चेयम्—

> **अजमनिद्रमस्वप्न, प्रभात भवति स्वयम्।**
> **सकृद् विभातो ह्येवैष, धर्मो धातुस्वभावतः॥**
> (मा० का० ४-८१)

अत्र पूर्वकारिकाया—विषय—स हि बुद्धानाम् (४-८०) इत्यनुसार बुद्धाना विषयोऽत्र प्रतिपाद्य। स च बुद्धानाम्=विदुषा विषय श्रीशङ्करानुसार मोक्षस्तथा श्रीभट्टाचार्यनयेन स विषयश्चित्तमिति।

श्रीशड्०करमतेनायमर्थो यदेष धर्मो जीव आत्मा वा सकृद्विभात सदा भास्वर स्वय प्रकाशो वास्ति। स्वय प्रकाशत्वे हेतु—धातुस्वभावत-वस्तुस्वभावत, आत्मरूपस्य नित्यवस्तुन स्वभाव एव प्रकाश इति।

श्रीभट्टाचार्यनये धर्मशब्द पदार्थपर, सोऽत्र भाव पदार्थो वा कथ धातुस्वभावत सन्नद् विभातो भवितुमर्हेत् पदार्थ स्वय प्रकाशो न भवति। तथा पूर्वकारिकाक्रमविरोधश्चापतति। यतो ह्यत्र पूर्वकारिकानुसार बुद्धाना विषयश्चित्त विवेचनीयमत्र न खलु पदार्थ। अतो ह्यत्र एतद्दोषपरिहारार्थ श्रीभट्टाचार्येण "धर्मो धातुस्वभावत" इत्यस्य स्थाने 'धर्मधातुस्वभावत" इति पाठमद कृत।[57] पाठभेदेऽपि सामञ्जस्य मलभमानेन तेन धर्मशब्देनात्र आर्यधम सम्यग्दृष्ट्यादि गृहीत —

आर्यशब्देनानार्यधर्मा सम्यग्दृष्ट्यादय सम्यग्विमुक्तिज्ञानपर्यन्ता। तेषा हेतुरिति धातु। ( आ० शा० पृ० १७७ )

अनेनेद स्पष्ट प्रतीयते यच्चतुर्थे प्रकरणे विज्ञानवादसिद्धान्तप्रकाशने कियती क्लिष्टता।

अपरञ्च—यदि ४८१ कारिकाया "धर्म" इति न पाठ किन्तु "धर्मधातु ' इत्येव समस्तपाठस्तदाग्रिमकारिकाया सङ्गतिर्विरुध्यते।

सुखमाव्रियते नित्य दु ख विव्रियते सदा।
यस्य कस्य च धर्मस्य ग्रहेण भगवानसौ॥

( ४८२ )

यदि पूर्वकारिकायाम् (४८१) धर्मधातुरेव पाठस्तदाग्रिमकारिकायाम् (४८२) 'धमस्य ' इत्यस्याप्रासङ्गिमर्थं कर्तुं विवशा भवति बुध। एवमपि सन्तोषमलभमानेन श्रीभट्टाचार्येणाग्रिम द्वे कारिके ( ४८२ ८३ ) युग्मकमिति मत्वा द्वया परस्परमन्वयता कथञ्चिन्निर्वाह कृत।

एवमप्यय महाविद्वान् परमोदार श्रीभट्टाचार्यो निराग्रह पाठभेद कृत्वा केवल स्वमतमेव पोषयति न कमप्याक्षिपति।

अतो धमधातुरितिपाठभदो न श्लाघ्यस्तेनात्र माण्डूक्यकारिकाया सर्वत्र २ २५ कारिकामृत धमशब्द आत्मपर एव।

५७ श्रीभट्टाचाय स्वयमेवात्र टिप्पण्या पाठभेद हेत्वन्यासपूर्वक स्वीकरोति।

एव धर्मपदस्यात्मपरत्वे एव—

**धर्मा य इति जायन्ते जायन्ते तेन तत्त्वतः ।**

**जन्म मायोपमं तेषां सा च माया न विद्यते ॥**

( ४५८ )

इतिकारिकार्थोऽपि स्वरसत सगच्छते। अत्रापि श्रीभट्टाचार्य पाठ-भेद करोति—

**धर्मा य इति जायन्ते संवृत्या तेन तत्त्वतः ।**

( ४५८ )

अधस्तात्टीपण्या स्वयमेव स्वीय पाठभेदञ्चाङ्गीकरोति ।

( आ० शा० पृ० १५५ )

तेन चतुर्थप्रकरणे बाहुल्येन प्रतिपादित धर्मस्य जीवस्यात्मनो वाजत्व बोधनीय न तु पदार्थस्याजत्व विशेषतोऽत्र प्रतिपाद्यमस्ति यदर्थं श्रीभट्टाचार्यो बौद्धविज्ञानवादरीत्या साधयितु प्रायतत ।

### बुद्ध·

माण्डूक्यकारिकाग्रन्थे बुद्धशब्द केवलमलातशान्तौ चतुर्थे प्रकरण एव प्रयुक्तस्तत्रापि सप्तवारम्—

४-१९, ४२, ८०, ८८, ९२, ९९, ९९, । ( ४ ९९ कारिकाया वारद्वय बुद्धशब्द प्रयुक्त । एषु ४-९९ कारिकागतो बुद्धशब्द प्रथमा तोऽन्ये च सर्वे बहुवचनान्ता । यथा—एव हि सर्वथा बुद्धै ( ४-१९ ) जातिस्तु देशिता बुद्धै ( ४-४२ ) विषय स हि बुद्धानाम् ( ४-८० ) सदा बुद्धै प्रकीर्तितम् ( ४ ८८ ) आदिबुद्धा प्रकृत्यैव ( ४-९२ ) क्रमते नहि बुद्धस्य ( ४-९९ ) नैतद् बुद्धेन भाषितम् ( ४९९ )

श्रीभट्टाचार्येणैतेषा सर्वेषा बुद्धशब्दाना तथागत सुगतश्चेत्येव एवार्थ स्वीकृत । तदीयवृत्तौ सर्वत्रैवायमेवार्थ साधित । तेनोक्तम्—"अन

कश्चित् परीक्षको मन्यते यन्नायमेकवचनान्तस्तत्रैव सुगतवचन । अन्यत्र तु ज्ञानिवचन इति । तदेतन्न किन्चित् । नह्यत्रास्ति किमपि प्रमाणम् ।"

( आ० शा० पृ० १२० )

भगवता शङ्करेण तु क्रमश पण्डितै, अद्वैतवादिभि, परमार्थदर्शिनाम्, परमार्थदर्शिभि ब्रह्मवादिभि, नित्यबोधस्वरूपा, परमार्थदर्शिन, बुद्धेन इत्यर्थ कृत ।

इदमत्र विचारणीय यद् वस्तुतो बुद्धशब्देन कोऽर्थोऽभिप्रेतो ग्रन्थकर्तु । तत्र पूर्वापरपर्यालोचनया श्रीशङ्करप्रोक्त एवार्थो ग्रन्थकर्तुरभिप्रेत इति निर्णीयते । श्रीभट्टाचार्यानुसार परस्पर विरोधस्तयोपान्त्यकारिकार्थश्च ( ४-९९ ) न सङ्गच्छते । एकस्या कारिकायामुक्त बुद्धैरजाति परिकीर्तिता, अपरस्या कारिकायामुक्त बुद्धै र्जाति परिकीर्तिता—

"एवं हि सर्वथा बुद्धैरजाति परिदीपिता ।

( ४-१९ )

जातिस्तु देशिता बुद्धैरजातेस्त्रसता सदा ।

( ४-४२ )

अत्र समाधानाय च श्रीभट्टाचार्येण बुद्धा बहव सन्तीति प्रमाणै सुससाधित तथा महाकारुणिका बुद्धा विनेयाना शिक्षार्थ पूर्वपक्षरूपेणास्त्यक्ष जातिमप्युपदिशन्तीति निर्दिष्टम् । (द्र० पृ० १२० तथा १४१-१४४)

क्रमते नहि बुद्धस्य ज्ञानं धर्मेषु तायिनः ।
सर्वे धर्मास्तथा ज्ञानं नैतद् बुद्धेन भाषितम् ॥

( ४-९९ )

तायिनो ( सन्तानवतो निरन्तरस्याकाशकल्पस्येत्यर्थ ) बुद्धस्य ज्ञान धर्मेषु न क्रमते तथा सर्वे धर्मा ज्ञान न क्रमन्ते, ज्ञानज्ञेयज्ञातृभेदरहित परमार्थतत्त्वमद्वयमेतन्न बुद्धेन भाषितमित्यर्थ श्रीशङ्कराभिप्रेत ।

अत्र श्रीभट्टाचार्य कथयति—"सर्वे धर्मा पदार्थास्तथा तेषा धर्माणा

ज्ञानमिदं द्वयमपि बुद्धेन न भाषितमुक्तम् । किमवितथमिद बुद्धेन तत्रोक्त-मिति हन्त भोः । न केवल तदृद्वयमेव नोक्तम् । अपि तु किञ्चिदपि नोक्तम्— । अत एवाह स स्वयमेव—

यस्यां च राज्यां धिगमो यस्यां च परिनिर्वृतिः ।
एतस्मिन्नन्तरे नास्ति मया किञ्चित्परिभाषितम् ॥
( ल० सू० पृ० १४४ )"

अत्र कारिका कथयति यद् बुद्धेन केवलमेतद् (अद्वयम्) न भाषितम् । श्रीभट्टाचार्यस्तु एतत्पदार्थं स्पृष्टवानेव नहि तथा बुद्धेन बुद्धत्वप्राप्तेर-नन्तर परिनिर्वाण यावत् किमपि न भाषितमित्यर्थं साधयितुम् १९८ पृष्ठन २०२ पृ० पर्यंत प्रयतितवान् । यदि सर्ववचननिषेध एव ग्रन्थकर्तु रभिप्रायः स्यात्तदा—"बुद्धैः किञ्चिन्न भाषितम्" इत्येव पाठः श्रेयान् स्यात ।

श्रीभट्टाचार्यनयेनात "एतत्" शब्दस्य तथा 'बुद्धेन' इत्यनेकवचन-विभक्तेश्च न किमपि तात्पर्य नापि सङ्गति र्जायते । अतः शङ्कराचार्यो-क्त एव सर्वबुद्धशब्दार्थं ग्रन्थकर्तु राशय साधुरिति भाति ।

### अज

माण्डूक्यकारिकायामजशब्दो ब्रह्मणो जीवस्य पदार्थाना चाजाति-प्रतिपादनाय चतुर्विंशतिवार प्रयुक्तः ।

१-१६।३-१, १९, २६, ३३, ३६, ४३, ४७।४-११, १२, १३, ४०, ४५, ४६, ४८, ५७, ६०, ७४, ८० ८१, ९३, ९५, ९६, १०० ।

### संवृति

सवृतिशब्दश्चतुर्वार प्रयुक्त—४-५७, ७३, ७४ कारिकासु, ४७४ इत्यत्र वारद्वयम् । अत्र सवृतिशब्दस्याज्ञानमर्थ —श्रीभट्टाचार्येण—

संवृत्या जायते सर्वं शाश्वतं तेन नास्ति वै ।
सद्भावेन ह्यजं सर्वमुच्छेदस्तेन नास्ति वै ॥
( ४-५७ )

'यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात्प्रैति स कृपण ।
( बृ० आ० उ० ३।८।११ )

अतोऽद्वैततत्त्वस्य परमार्थस्य सतो वैशिष्ट्यप्रतिपादनायैवात्र कारिकया कृपणशब्दस्तथा ३-२ इतिकारिकायाम् 'अकार्पण्य' शब्दश्चोक्त । अत एव च श्रीमद्भगवद्गीतायाम् "कार्पण्यदोषोपहतस्वभाव ( २।७ ) इत्युक्तम् । गीताया उक्तश्लोकव्याख्याया श्रीमदानन्दगिरिभि श्रीमधुसूदन सरस्वतीभिश्चात्र एवार्थ —कृपण —अनात्मज्ञ इत्यङ्गीकृत ।

भगवान

कोट्यश्चतस्र एतास्तु ग्रहैर्यासा सदावृत ।
भगवानाभिरस्पृष्टो येन दृष्ट स सर्वदृक् ।।
( मा० का० ४ ८४ )

अत्रोत्तन 'भगवान्' इति पदेन धर्म —परमात्मा विशिष्यते। धर्म इति पदम् ४ ८१ कारिकायाम्—'धर्म धातुस्वभावत इतिरूपेणायातम् । अयमेव च पाठो बहुसम्मत ।

श्रीभट्टाचार्येण ४ ८१ इत्यत्र धर्मधातु स्वभावत इति पाठभेदो ऽङ्गीकृत । स धर्मधातुरेवात्र परामृष्टो भगवान् इत्यनेन विशिष्यते। तन्नये सौगतमतानुसार धर्मधातु शून्यतातथतादिपर्यायवाची ।
( द्र० आ० शा० पृ० १८१ )

किन्त्वेतद् विचारणीय यतो ह्यत्र परमात्मदृष्टि सर्वदृक्त्वेन प्रशसिता सौगतनये शून्यतादृष्टिस्तु निषिद्धापवारिता दुश्चिकित्स्या चेत्युक्तम्—

य प्रतीत्यसमुत्पाद शून्यता ता प्रचक्ष्महे ।
सा प्रज्ञप्तिरुपादाय प्रतिपत्सैव मध्यमा ।।
( म० का० २४ १८ )

अप्रतीत्यसमुत्पन्नो धर्मः कश्चिन्न विद्यते ।
यस्मात्तस्मादशून्यो हि धर्मं कश्चिन्न विद्यते ॥

( तत्रैव १६ )

शून्यता सर्वदृष्टीनां प्रोक्ता निःसरणं जिनैः ।
येषां तु शून्यतादृष्टिस्तानसाध्यान् बभाषिरे ॥

( म० का० १३-८ )

चन्द्रकीर्तिरपि वृत्तावेवमाह—'एवं येषां शून्यतायामपि भावाभिनिवेश, केनेदानीं स तेषां तस्या भावाभिनिवेशो निषिध्यतामित्यतो महाभैषज्येऽपि दोषसङ्क्रित्वात् परमचिकित्सकैः महावैद्यैस्तथागतैः प्रत्याता एव ते ।

( म० का० वृ० पृ० ८८ )

एवमेव "तुरीयं सर्वदृक् तथा"—१-१२ तथा 'पृथगन्यस्य दर्शनात्' '४-३६ इति कारिकयोरपि एवंभूता दृष्टिः प्रशंसिता ।

चतुष्कोटि

कोट्यश्चतस्र एतास्तु ग्रहैर्यासां सदावृत । ( मा० का० ४-८४ ) अस्यां कारिकायां चतस्रः कोट्यः उक्ताः—न सत्, न असत्, न सदसत्, न सदसदभाव । अत्र वृत्तौ श्रीभट्टाचार्येणोक्तम्—

"सन्ति वादिनां चतस्रो दृष्टयो या इह कोट्योऽस्ता इत्युच्यन्ते, अस्ति नास्त्यादिरूपा । तत्र वेदान्तिनोऽस्तीत्येवावतिष्ठन्ते—

अस्तीति ब्रुवतोऽन्यत्र कथं तदुपलभ्यते ।

( क० उ० ६ १२ )

अस्तीत्येवोपलब्धस्य तत्त्वभावः प्रसीदति ।

( क० उ० ६-१३ )

( आ० शा० वृ० पृ० १७९ )

एतेन श्रीभट्टाचार्येणेदं ससाधितं यद् वेदान्तिमते चतुष्कोटिपदार्थस्य

इतिकारिकावृत्तिटिप्पण्या चन्द्रकीर्तिवाक्येन बोधिचर्यावतारपञ्जिका-वाक्येन च संवृतिपदार्थोऽज्ञानमित्युदाहृतम्—

"समन्ताद् वरण संवृति । अज्ञान हि समन्तात्सर्वपदार्थतत्त्वावच्छादनात् संवृतिरुच्यते ( म० का० वृ० २४-८ )"

" ... संवृति । अविद्या मोहो विपर्यास इति पर्याया ।"

( बो० च० अ० प० पृ० ३५२ )

एतदनन्तर श्रीभट्टाचार्येणेदमुक्त यत्—

"शाङ्करवेदान्तिना सौगताना च व्यवहारपरमार्थसत्ये मिथ सम्मते । आर्हताना व्यवहारपरमार्थनयौ तादृशावेव । नोपनिषदि क्वापि व्यवहारपरमार्थसत्यविवेकविचारणा । वेदान्ते त्वस्मदीयाचार्यदिवेय प्रवृत्तेति प्रतिभाति एतन्मूल मृग्यम् । ( आ० शा० पृ० १५३ ) ।

अस्याम् ४।५७ कारिकायाम् 'सद्भावेन' इति स्थाने 'स्वभावेन' तथाग्रिमकारिकायाम् ४-५८ 'जायन्ते' इत्यस्य स्थाने 'भवृत्या' इतिपाठभेदो श्रीभट्टाचार्यमते वर्तते ।

अनेदमेव वक्तव्य यदविद्याकार्य मायाकार्य वा वेदमन्त्र उपनिषत्सु च बहुधोपलभ्यते । यदेव अविद्याकार्य तदेव लोकव्यवहार, अयमेव च व्यवहारसत्ता । अविद्यानिवृत्तिरेव पारमार्थिकसत्ता । यथा—जगत्सृष्टि विचार ऋग्वेदीये नासदीयसूक्ते—किमावरीव कुह कस्य ( ऋ० वे० १०।१२९।१ ) आनीदवात स्वधया तदेकम् ( तत्रैव २ ) तुच्छेनाभ्वपिहित यदासीत् ( तत्रैव ३ ) इतिमन्त्राणा सायणभाष्येऽविद्यास्वरूप तथा अविद्याकार्य परमार्थसत्यावरणमुक्तम् । तत्र 'किमावरीव' इतिभाष्ये परमार्थसत्यावरणकर्त्री अविद्या तथा 'स्वधया' इत्यत्र स्वधापदस्य स्वस्मिन् स्वस्या वा धीयत इति व्युत्पत्त्या अविद्यया सत्यमाश्रियत इति स्पष्टोक्तम् । 'तुच्छेनाभ्वपिहित यदासीत्' मन्त्रभागस्य भाष्ये शब्दत एवाविद्याकार्य सत्यावरणमुक्तम्—"तुच्छेन सदसद्विलक्षणेन भावरूपाज्ञानेन अपिहितम् ।" इति । एवमेव इन्द्रो मायाभि पुरुरूपईयते (ऋ० वे० ६।४७।१८,

बृ० आ० उ० २।५।१९ ) इति श्रुत्या चाविद्याकार्य वर्णितम् । माण्डूक्योपनिषदि च ३, ४, ५, ६, ७ मन्त्रेषु जागरितस्वप्नसुषुप्तस्थानाना बहिष्प्रशान्त प्रज्ञानघनाना क्रमेण वर्णन–कृत्वा शान्तशिवाद्वैतचतुर्थपरमार्थ - तत्त्ववर्णनेन क्रमशो व्यावहारिकप्रातिभासिकपारमार्थिकतत्त्वाना सत्तोपलक्षितैव । इत्थमेव सत्य चानृत सत्यमभवत् ( तै० उ० अनु० ६ ) वाचारम्भण विकारो नामधेयम्, मृत्तिकेत्येव सत्यम् ( छा० उ० ६।१।४ ) एकमेवाद्वितीयम् ( छा० उ० ६।२।१ ) तद्धेद तर्ह्यव्याकृतमासीत्, नामरूपाभ्यामेव व्याक्रियतासौ ( बृ० आ० उ० १।४।७ तद् द्वाभ्यामेव प्रत्यवैद् रूपेण च नाम्ना च ( श० प० ब्रा० १-१-२-३ ) आभि श्रुतिभिरपि व्यावहारिकपारमार्थिकसत्ता निर्दिष्टा ।

सौगतनयेऽपि सवृतिपदेनाज्ञानमविद्यैव वा परिगृह्यते । यथा सौगतनये व्यावहारिकपारमार्थिकसत्तामूल सवृतिस्तथैवौपनिषदनयेऽपि अविद्यैवोक्तोभयसत्तामूलम् । अविद्याविषये व्यावहारिकपारमार्थिकसत्ताविषये च प्रथमाध्याये शाङ्करसिद्धान्तनामकेऽवान्तरप्रकरणे बहु विचारितमतोऽधिक तत्रैव द्रष्टव्यम् ।

अत 'नोपनिषदि क्वापि व्यवहारपरमार्थसत्यविवेकविचारणा । वेदान्ते त्वस्मदीयाचार्यदिवेय प्रवृत्तेति प्रतिभाति । इति श्रीभट्टाचार्योक्तिर्विचारणीयैव ।

कृपण

अय शब्द ३-१ तथा ४-९४ कारिकयो प्रयुक्त । एतद्विपरीतम् "अकार्पण्य शब्द ३-२ का० प्रयुक्त ।

अत्र श्रीभट्टचार्येण—"द्वैतस्य वाचारम्भणमात्रत्वेनातात्त्विकत्वात् कृपण करुणार्हो हीनोऽत्यल्पक क्षुद्र इति भाव " इत्युक्तम् । अनेन द्वैतज्ञानस्य निकृष्टत्वेन तज्ज्ञानवान् कृपण इत्यायातम् । किन्तूपनिषदनुसारम् अक्षर ब्रह्म यो न जानाति यश्चानात्मज्ञ स कृपण —

चिन्तनं नास्ति । किन्तु नैतत्सत्यम्, यतो ह्येतादृक् चतुष्कोटि पदार्थो महोपनिषदि प्रश्नोपनिषदि चोपलभ्यते—न सत्, नासत्, न सदसत् ( महोपनिषदि पृ० ३७२ )

न सत्, नासत्, न सदसत्, भिन्नाभिन्न न चोभयम् । (परब्रह्मोपनिषदि पृ० ४५७ ) एतद् श्रीभट्टाचार्येणापि स्वयमेव ह्या श्रीमेमोरेशन ग्रन्थे इंगलिशभाषायामये निबन्धभागे स्वीये चतुष्कोटिनामके लेखे पृ० ८७-९१ स्वीकृतम् । तत्र तेनेदमप्युक्तं यदयं चतुष्कोटिसिद्धान्त आचार्यश्रीनागार्जुनोद्भावितो न किन्तु तत पूर्वतनस्य सजयवलातिपुत्तस्यास्ति । ब्रह्मजालसूत्रे ४१ अस्य वर्णनमस्ति ।

तत्रेदमपि लिखितं यद् बौद्धग्रन्थे क्वचिद् द्वे कोट्यौ क्वचिच्च तिस्रः कोट्योऽप्युपलभ्यन्ते । यथा द्वे कोट्यौ काश्यपपरिवर्ते ( पृ० ८६-९८ ) मध्यमकवृत्तौ पृ० २६९, ( कात्यायनावदानेऽपि यतो मध्यमकवृत्तावुद्धृता ) तथा म० वृ० पृ० २७६ सयुक्तनिकाये ( पालिभाषायाम् ) २-१७, समाधिराजसूत्रे पृ० ३० ( उपलभ्यत एतद् मध्यमकवृत्तावपि पृ० १३५-१७० ) ज्ञानसारसमुच्चये ( भोटभाषायामये, अस्य संस्कृतभाषायां मूलरूपं नोपलभ्यते ) मैत्रेयनाथस्य मध्यान्तविभागेऽपि ।

क्वचित्केवल तिस्र एव कोट्य उपलभ्यन्ते—मध्यमककारिकायाम्—१-७, ७-२०, चतु शतके १६-२४, २५ लङ्कावतारसूत्रे च पृ० १५६ ।

अग्रे तेन सिद्धान्तित यच्चतुष्कोटिसिद्धान्तो न बौद्धाना न तदनुयायिनां न च श्रीनागार्जुनस्य किन्तु प्राचीनस्य सजयवलातिपुत्तस्यास्ति ।

अत इदं वस्तु शक्यते यद् ऋग्वेदस्य नासदीयसूक्ते १०-१२९-१ श्वेताश्वतरोपनिषदि ४-१८ तथा श्रीमद्भगवद्गीतायाम् १३-१२ अस्ति नास्ति द्वे कोट्यौ प्राप्येते, उपरितनवर्णितरीत्या महोपनिषदि पृ० ३७२ परब्रह्मोपनिषदि च पृ० ४५७ चतस्र कोट्य उपलभ्यन्ते । तेन सजयवला-

तिपुत्तेनैतेभ्य एव चतुष्कोटि गृंहीता भवेत् ततश्च नागार्जुनप्रभृतिभिर्गृहीतेति ।[५८]

माण्डूक्यकारिकाग्रन्थ एवंविधाः प्रायस्त्रिंशद् शब्दाः प्रयुक्ताः ये बौद्धदर्शनेऽतिप्रसिद्धिमागता, येषां बौद्धग्रन्थे व्यवहृतार्थानुरोधेनैव शङ्०कोदेति, कैश्चिदुद्भाव्यते च यदयं ग्रन्थो बौद्धदर्शनानुसारीति । उक्तशङ्०कोद्भावकाश्च क्वचित्क्वचिद् यथेच्छं पाठमपि भेदयन्ति । एतदर्थं पूर्वमेवोक्तं यद् न कश्चिद् शब्दः केनापि दर्शनेनाधिकृतः क्रीतो वा। अत एकस्मिन् दर्शने प्रयुक्तः शब्दो दर्शनान्तरेऽपि प्रयोक्तुं शक्यते । ग्रन्थकर्तृकालेऽतिप्रसिद्धे बौद्धदर्शने प्रयुक्तस्य शब्दस्य ग्रहणमपि स्वाभाविकमेव । बौद्धदर्शनाचार्यैरन्यथाकृतस्योपनिषदर्शनस्य यथार्थरूपप्रदर्शनायापि माण्डूक्यकारिकायां बौद्धाचार्यानुगृहीतशब्दानां प्रयोगोऽप्यावश्यक एवासीत्। यैरेव शब्दैरन्यथाकरणं तैरेव शब्दैः याथार्थ्यप्रकाशनमतितर्कसम्मतम् ।

अतोऽयं निर्णय आवश्यको जातो यदस्मिन् ग्रन्थे कः शब्दः कस्मिन्नर्थे प्रयुक्तः, कश्चाशयो ग्रन्थकारस्य । एतदर्थमेवायं प्रयासः । प्रायः सर्वेषामेवात्र प्रयुक्तानां संशयार्हाणां शब्दानां यथाशास्त्रं पूर्वापरसन्दर्भानुसारं प्रकरणानुसारं चार्थो निर्दिष्टः । नात्र पक्षपातः, पाठभेदः कश्चिदाग्रहश्च समाश्रितः । कतिपय एवभूताश्शब्दाः परित्यक्ताः, येषामर्थे न कोपि सिद्धान्तभेदः समापतति, तथा येषां केवलं बौद्धदर्शने भूमात् व्यवहारो दर्शनान्तरेषु शास्त्रान्तरेषु चाल्पव्यवहारो दृश्यते, ये च सिद्धान्तविशेषनिर्णये न सहायका न वा बाधकाः । यथैतेषां शब्दानामनावश्यकत्वादर्थो न विवेचितः—परिदीपकः (४-२१) परिदीपिताः (४-१९) प्रपञ्च

---

५८. द्र० क—श्रीविधुशेखरभट्टाचार्यस्य "चतुष्कोटिनामको लेख, भ्रा कोमेमोरेशन इंगलिशभाषानिबन्धभागे पृ० ८७-९१ प्रका० ।

ख—आगमशास्त्रस्य वृत्तौ टिप्पण्याम् पृ० १०१ तथा १८० ।

ग—श्रीपुसीनमहोदयस्य लेखः इण्डियन हिस्टोरिकल क्वार्टर्ली भागः ४ पृ० १९४।

( १-१७ ) उपशमः ( २-३५ ) मायाहस्तिन् ( ४-४४ ) संक्लेश. ( ४-२४ ) सुनिर्वृतः ( ४-९३ ) नायकः ( ४-९८ ) निमितक. ( ४-७० ) देशितः ( ४-२, ४२ ) तायिन् ( ४-९९ ) अलब्धावरणम् ( ४-९८ ) अभिसवृतिः ( ४-७३ ) अभिलापः ( ३-३७ ) अध्वन् ( ४-२७ )।

## बौद्धदर्शने उपनिषत्प्रभावः

औपनिषद्ब्रह्माद्वैतवादे, शून्याद्वयवादे विज्ञानाद्वयवादे च परस्पर प्रभूतं सिद्धान्तसाम्यं प्रक्रियासाम्यं शब्दसाम्यं चावलोक्यते। यस्याधारेण प्राचीना अर्वाचीनाश्च भूयांसो विद्वांसो भ्रान्तमिदं मतं निर्धारयन्ति यद् शून्याद्वयवादस्य विज्ञानाद्वयवादस्य च परिष्कृतमपरं रूपमौपनिषदो निर्विशेषाद्वैतवादोऽथवा औपनिषदब्रह्माद्वयवादस्यैवापरं रूपं केवलं ब्रह्म-शब्दरहितः शून्याद्वयवादो विज्ञानाद्वयवादश्च।

तत्र प्राचीनाचार्येषु येषामियमाशङ्का यद्बौद्धदर्शनेन ब्रह्माद्वैतवाद. प्रभावितस्तेषां मतानि प्रथमाध्याये "आचार्यशङ्कर. किं प्रच्छन्नबौद्धः" इत्यस्मिन् प्रकरणेऽस्[५९] बोद्धृतानि। तत्र भास्कराचार्य[५९]—रामानुजाचार्यादयो[६०] विरोधिनस्तु "बौद्धगाथितं मायावादम्" "वेदवादच्छद्मप्रच्छन्नबौद्धनिरा-करणे" इत्यादिशब्दै[६१] स्वीयाशङ्कामुद्राजह्रुरेव। किन्तु आश्चर्यमिदं यद् विरोधिभ्यः पूर्वकालभवःश्रीशङ्कराचार्योऽपि तादृशाशङ्का प्रति जागरूक इवेति प्रतीयते।[६२] श्रीशङ्कराचार्यस्तदनुयायिनश्च पदे पदे छान्दोग्यभाष्ये ब्रह्मसूत्रभाष्ये गौडपादकारिकाभाष्ये पञ्चपादिकाविवरणादिषु च शून्या-द्वयवादाद् विज्ञानाद्वयवादाच्च स्वीयब्रह्माद्वैतवादस्य पृथक्त्व प्रसाधयन्ति—

ब्रह्मावसानोऽयं प्रतिषेधः नाभावावसानः।

( ब्र० सू० शा० भा० ३।२ २२ )

---

५९. ब्रह्मसू० शा० भा० १-४-४५

६०. ब्र० सू० श्रीभा० २-२-२७।

६१. एतेषां प्राचीनाचार्याणामाशङ्काकावाक्यानि दशसङ्ख्याकानि आचार्य-शङ्करः किं प्रच्छन्नबौद्ध. इत्यस्मिन् प्रकरणे विस्तरतो द्रष्टव्यानि।

६२. द्र० तत्रैव।

सदभावमात्रं तत्त्वं परिकल्पयन्ति बौद्धाः, न तु सत्प्रतिद्वन्द्विवस्त्वन्तरमिच्छन्ति ।

( छा० उ० शा० भा० ६-२-१ )

दुर्जनरमणीयां वाचं जल्पति सुगतविज्ञानवादसमानोऽयं वेदान्तवाद. । स शोचनीयः ।

(पञ्चपादिकाविवरणे पृ० ८४ स० श्रीरामशास्त्री, काशी १८९२ ई०)

भगवत्पूज्यपादश्रीशङ्करस्य परमगुरुश्रीगौडपादस्य कालेऽपि ब्रह्माद्वयवादविज्ञानाद्वयवादयो· परस्परं साम्यमवलोक्य पार्थक्यस्यावश्यकता प्रतीता । येन श्रीगौडपादाचार्येण स्वीयग्रन्थस्योपान्त्यकारिकायाम्–"नैतद् बुद्धेन भाषितम्" ( गौ० पा० का० ४-९९ ) इत्युक्त्या द्वयो· परमार्थतत्त्वविभेदेन बौद्धदर्शनात् स्वीयवेदान्तदर्शनस्य पार्थक्य प्रकटितम् । ब्रह्माद्वयवादविज्ञानाद्वयवादयो भूय· साम्य विलोक्यैव श्रीयामुनाचार्य एव वक्तु प्राभवत्—"अनाद्यविद्यावशाच्च समारोपितावास्तवग्राह्यग्राहकविकल्पोल्लेखिनी स्वयप्रकाशा सविदेव परमार्थसती सैव आत्मेति सौगताः प्रकटाः प्रच्छन्नाश्च ।"

( सिद्धित्रये पृ० १९ )

एवमेव बौद्धदर्शनाचार्याणा मतस्यपि ब्रह्माद्वैतबौद्धदर्शनयो साम्याशङ्काऽऽसीत् । येन लङ्कावतारसूत्रे—

"तत्कथम् अथ भगवाँस्तीर्थकरात्मवादतुल्यस्तथागतगर्भवादो न भवति ? तीर्थंकारा अपि भगवन् नित्य कर्ता निर्गुणो विभुरव्यय इत्यात्मोपदेश कुर्वन्ति ।

( ल० सू० द्वितीयपरिवर्ते १३६ पृ० ३३ )

अत्र तीर्थंकारा औपनिषदा ।

एवमेव मध्यमककारिकायामपि बुद्धैरात्मोपदिष्टो नोपदिष्टश्च । अस्या स्थितौ बुद्धा आत्मवादिन अनात्मवादिनोऽपि । यथा—

आत्मेत्यपि प्रज्ञपितमनात्मेत्यपि देशितम् ।
बुद्धैरात्मा न चानात्मा कश्चिदित्यपि देशितम् ॥
( म० का० १८६ )

नामरूपमेव शून्यता, शून्यतैव नामरूपम्—सर्वमिदमद्वयम् ।
( शतसाहस्रिकाया पृ० ५५९ )

तदेतदद्वय ब्रह्म निर्विकारं कुबुद्धिभि. ।
जात्यन्धगजदृष्ट्येव कोटिशः परिकल्प्यते ॥
( नैष्कर्म्यसिद्धौ २ २६ )

अत्र कुबुद्धिभि=बौद्धै

तेषामल्पापराधं तु दर्शनं नित्यतोक्तित. ।
( तत्त्वसङ्ग्रहे का० ३३० )

( तेषाम्=औपनिषदाद्वैतवादिनाम् । विज्ञानस्य नित्यताकथनमपराध । )

तथागत भदन्त शारद्वतीपुत्र पर्येषितुकामेनात्मा पर्येषितव्य ।
आत्मेति भदन्तशारद्वतीपुत्र बुद्धस्यैतदधिगतम् ।
( सप्तशतिकाप्रज्ञापारमितायां पृ० १२८ )

अर्वाचीना दर्शनशास्त्रस्यैतिहासिका प्राच्यप्रतीच्योभयदर्शनशास्त्रविद श्री टी० आर० वी० मूर्तिमहोदया[६३] श्रीविधुशेखरभट्टाचार्या[६४]

---

६३ (क) वेदान्तदर्शनस्य विकासे माध्यमिकदर्शनस्य प्रभावोऽस्तीति सम्भाव्यते।
(से०फि० आफ बु०पृ० १०९ स अनुवाद)

(ख) माण्डूक्यकारिकाया माध्यमिकदर्शनस्य योगाचारदर्शनस्य च प्रभावो ऽस्तीत्यत्र अखण्डनीय प्रमाण वयमुपलभामहे ।
( तत्रैव पृ०११३ स०अनुवाद)

६४ (क) इह च कश्चिदवबुध्यत कियत्खलु प्रभवति गौडपादस्य सौगती युक्तिश्चिन्ता चेति । ( आ० शा०अव० स०पृ० ८६ )

(ख) सत्यमिद गौडपादेन विज्ञानवादोऽनुगम्यत इति ।
( तत्रैव )

(ग) अत्राचार्यो मध्यककमतमनुसरन्निव प्रतीयते । स्यादेतत गौडपादेनेह बौद्धमत मात्र प्रकाशितम् । (आ०शा०अव० स०पृ०९५)

दासगुप्तमहोदयाः[६५] एस० के० बेलवल्करमहाभागाः[६६], टी० एम० पी० महादेवनमहाभागाः[६७] हरप्रसादशास्त्रिणः[६८], अन्ये चैकमत्येनेदं समर्थयन्ति यद् निर्विशेषब्रह्माद्वैतवादे माध्यमिकमतस्य योगाचारमतस्य च महान् प्रभावो वर्तते ।

एतेषां कथनस्यायमाधारो यद्—

—ब्रह्माद्वैतवादस्य शून्याद्वयवादस्य योगाचारस्य च तत्त्वं प्रायः समानमेव ।

(१) वेदान्तिनां यदेव ब्रह्म—

तदेव चतुष्कोटिविनिर्मुक्तं शून्यवादिना परमार्थतत्त्वम् ।

तादृशमेव च विज्ञानवादिना विज्ञानम्—नित्यं शुद्धं स्वप्रकाशं स्वतो सिद्धं मन्यते ।

(२) वेदान्तिमते जगद् आविद्यकम्, मायिकं वा, शून्यवादे महायाने च जगत सांवृतिकम् । संवृति —अविद्या चैकैव ।

६५. (क) इदं सम्भाव्यते यत्स स्वयं बौद्ध आसीत् ।

( हि०आफ०इ०फि०भा०१ अ०१० पृ०४२३ सं०अ० )

(ख) इदं स्पष्टं यदिमे सिद्धान्ता नागार्जुनकारिकोक्तमाध्यमिकसिद्धान्तेभ्यस्तथा लङ्कावतारोक्तविज्ञानवादसिद्धान्तेभ्य परिगृहीताः अत्र प्रमाणं नापेक्षितम् । ( तत्रैव पृ० ४२६ सं०अ० )

६६. माण्डूक्यकारिकाग्रन्थे बौद्धदर्शनस्य प्रभाव इति सविस्तरं वर्णितम्—द्र० वेदान्त फिलास्फी पृ० १६९ ।

६७ इदं सम्भाव्यते श्रीगौडपादाचार्यः स्वीय ग्रन्थं श्रीनागार्जुनस्य मूलमध्यमककारिकाग्रन्थमनुसृत्य माध्यमिकसम्प्रदाये मूलमध्यमककारिकास्थितिवद् वेदान्ते स्वग्रन्थस्थितिं प्रापयितुमलिखत् ।

(गौडपादे पृ०२२०)

६८ बौद्धानुयायिनः श्रीशङ्कराचार्यं प्रत्याक्षिपन्ति यद् श्रीशङ्कराचार्यो बौद्धदर्शनस्य शून्यवादसिद्धान्तमपहृत्य ब्रह्मवादसिद्धान्तं स्थापितवान्, शून्यस्यैवापरं नाम ब्रह्मेत्युदाजहार ।

( अद्वयवज्रसंग्रहभूमिकाया पृ० २६, ग०ओ०एस्० बडोदा प्र० )

(३) वेदान्तिमते या हि अविद्या माया वा शून्यवादे योगाचारे च सैव संवृत्यविद्यामायाशब्दैरुच्यते—

"समन्ताद् वरणं संवृतिः, अज्ञानं हि संवृतिरुच्यते।"

( मध्यमकवृत्तौ पृ० ४९२ )

तथा—जातिमरणसंसारं, ये वजन्ति पुनप्पुनं।
इत्थभावञ्ञथाभावं अविज्जा येव सा गति।६।
अविज्जा ह्य महामोहो, येनेदं संसितं चिरं।
विज्जागता च ये सत्ता, नागच्छन्ति पुनब्भवन्ति॥
( सुत्तनिपाते ३ महावग्गे ३८ द्वयतानुपस्सनासुत्त पृ० १५८ )

(४) वेदान्तिमते यदि सत्तात्रयम्—व्यावहारिकम् प्रातिभासिकं पारमार्थिकञ्च। एतत्समानमेव सत्तात्रयं शून्यवादे महायाने च परिकल्पितं परतन्त्रं परिनिष्पन्नं च।

उपायभूतं व्यवहारसत्यमुपेयभूतं परमार्थसत्यम्। ( माध्यमिकावतारे पृ० ३७२ )

व्यवहारमनाश्रित्य परमार्थो न देश्यते।
परमार्थमनागम्य निर्वाणं नाधिगम्यते। ( म० का० २४-१० )

(५) वेदान्तिमते यदि मोक्षस्वरूपम्—ब्रह्मज्ञानम्, ब्रह्मणि लयः, अविद्यानिर्वृत्तिरादि, तदेव शून्यवादे महायाने च निर्वाणस्वरूपम्—प्रपञ्चोपशमः—

ततश्च मोक्षो भ्रममात्रसंक्षयः ( म० या० सू० ६-१ )

शून्यतैव सर्वप्रपञ्चनिवृत्तिलक्षणत्वात् निर्वाणमित्युच्यते।

( मध्यमकवृत्तौ पृ० ३५१ )

(६) वेदान्तिमते यो हि मोक्षोपायः स एव हि शून्यवादिना विज्ञानवादिना च निर्वाणोपायः।

वेदान्तिमते केवलं ज्ञानमेव मोक्षसाधनम्।

नागार्जुनस्याप्येतत्समानैवोक्तिः—

**नास्तिको दुर्गतिं याति सुगतिं याति चास्तिकः ।**
**यथाभूतपरिज्ञानान्मोक्षमद्वयनिश्रितः ॥**

( रत्नावल्याम् १ ५७ )

एवञ्चैतेषामयं निष्कर्षो यद् वर्तमानब्रह्माद्वैतवादस्य परिनिष्ठित रूपं श्रीगौडपादभगवत्पादशङ्करानन्तरं जातमतस्तत्पूर्ववर्तिनां नागार्जुनादीनां वसुबन्धुप्रभृतीनां शून्यवादसिद्धान्तस्य योगाचारसिद्धान्तस्य च प्रभावः श्रीगौडपादाचार्यशङ्कराचार्यसिद्धान्ते भवितुमर्हति ।

एवं रीत्या ब्रह्माद्वैतवादे शून्यवादे विज्ञानवादे च सिद्धान्तसाम्यं प्रक्रियासाम्यं शब्दसाम्यं चावलोक्य विद्वांसो ब्रह्माद्वैतवादे शून्याद्वयवादविज्ञानाद्वयवादयोः भूयान् प्रभाव इति वदन्ति । किन्त्वेतद्विपरीतमपि विद्वांस इत्थं विचारयन्ति यद् औपनिषदाद्वैतवादस्यैव रूपान्तरमयं शून्याद्वयवादो विज्ञानवादश्च ।

अयं विचार आधुनिकतमानां विदुषां त्वस्त्येव किन्तु प्राचीनतमैरुद्धरणैरपि परिपुष्यति—

**वेदान्तेभ्यो गृहीत्वार्थान् यो महाभारतादपि ।**
**विप्राणां मिषतामेव कृतवान् कोशसंग्रहम् ॥**

( मत्तविलासप्रहसने )

मत्तविलासप्रहसनस्य प्रणेता काञ्चीमहीपतिः पल्लववंशोत्पन्नो महेन्द्रवर्मा । अस्य राज्यकालः ईशाब्दस्य षष्ठशताब्दी । अयं श्लोकः अद्वैताक्षरमालिकायाम्, पृ० ३३३ श्री पी० सुब्रह्मण्यशास्त्रिणोद्धृतः ।

एवमेव शङ्करचैतन्यभारतीभिः दर्शनसर्वस्वेऽभिहितम्[६९]—

"तदेवं निरुपितमौपनिषदाद्वैतवादसन्निहितं मतत्रयम् ॥

( द० स० पृ० १०२ )

अत्र मतत्रयम्—विज्ञानवाद, शून्यवाद, स्वातन्त्र्यवादश्च ।

६९ काशीस्थसन्यासि स० म० विद्यालयप्रकाशिते १९४८ ई० ।

एवमेव खण्डनखण्डखाद्ये ब्रह्माद्वैतवादशून्याद्वयवादयोः गमनोक्ता—
"माध्यमिकादिवाग्व्यवहाराणां स्वरूपापलापो न शक्यते।

( ख० ख० खा० पृ० २६ अच्युतप्र० काशी )

शतसाहस्रिकायां शून्यवादब्रह्माद्वैतवादयोरित्थमेकत्वमभ्यधायि—
"नामरूपमेव शून्यता, शून्यतैव नामरूपम् सर्वमद्वयम्।

(श० सा० पृ० ५५९, १६७६ एसियाटिकसासायटी कलकत्ताप्र १९०२ ई०)

इदं मनसि निधाय पञ्चदश्यामुक्तम्—

"शून्यस्य नामरूपे च तथा चेद् जीव्यतां चिरम्।

( प० २।३४ )

श्री सदानन्दयतिभिस्तु शून्यस्य तत्त्वस्वीकारे स्पष्टमेव माध्यमिकमतं वेदान्तमतम्। तेरुक्तम्—

"शून्यं नाम किञ्चित् तत्त्वमस्ति न वा। आद्ये नाममात्रे विवादः वेदान्तमतप्रवेशात्।

( अद्वैतब्रह्मसिद्धौ पृ० १०४ कलकत्ताप्र० १८९० ई० )

यामुनाचार्यस्तु कथयति यद् बौद्धाः प्रच्छन्नरूपेण प्रकटरूपेण वाऽस्मान् मन्यन्त एव—"अनाद्यविद्यावशाच्च समारोपितावास्तवग्राह्यग्राहक विकल्पोल्लेखिनी स्वयप्रकाशा संविदेव परमार्थसती सैव आत्मेति सौगताः प्रकटाः प्रच्छन्नाश्च।

( सिद्धित्रये पृ० १९ )

डॉ० टी० आर० वी० मूर्तिमहोदयेन लिखितं यद् महायानसिद्धान्तस्योदये ब्रह्मविषयकसिद्धान्तस्य प्रभावोऽस्तीति कैन मैक्समूलर-कीथ-श्चेर्वास्की प्रभृतिभिरनुमीयते[७०]। डॉ० मूर्तिमहोदयस्यैवंविधा विचारा तस्य सन्ट्रल फिलास्फी आफ बुद्धिज्म इति ग्रन्थेऽन्यत्राप्युपलभ्यन्ते।

वेदान्ते बौद्धदर्शने च कृतभूरिश्रमाः श्रीविधुशेखरभट्टाचार्या आगम

---

७० सेन्ट्रल फिलास्फी आफ बुद्धिज्म पृ० ८१ एवंविधा अपरेऽपि विचारास्तत्रैव १०९, ३११ ३२८, पृष्ठेषु द्रष्टव्याः।

शास्त्रस्य स्वावतरणिकायां स्पष्टमिदमुद्घोषयन्ति यदौपनिषदो विज्ञानवाद एव पश्चाद् बौद्धैः केवलं समेधितो ननूद्भावितः—

"तदिदमौपनिषदं विज्ञानवादबीजं तथातिसमवर्धत महता प्रयासेन सौगतसिद्धान्ते यथा पर्यणमत कालेन पश्चादागमशास्त्रेण। अन्यच्च। यदा तच्च सदृशं च बीजमुपलभ्यते विज्ञानवादस्योपनिषदि तदेदमवश्यमभ्युपगन्तव्यं न खलु विज्ञानवाद आदौ बौद्धैरेवोद्भावित इति। कामं पुनरेष तैः पश्चात्प्रवर्धित इत्यलं कथनेन।

( आ० शा० अ० पृ० ८७ )

बौद्धदर्शनस्य महाविदुषा आचार्यनरेन्द्रदेवेनेदं प्रसाधितं यद् बौद्धमतं योगमतस्यैव शाखा-विशेषोऽस्ति। तत्रेदमपि लिखितं यद् बौद्धै र्योगसिद्धान्तेभ्य एव पुनर्जन्मकर्मवादनिर्वाणसिद्धान्ताः सगृहीताः[७१]। अस्मिन्नेव लेखे श्रीपुसीनमहोदयस्याप्येतादृश एव विचार इति लिखितोऽस्ति।

सुजुकीमहोदयेन लिखितं यत् सांसारिका जनाः अविद्यान्धकारे भ्रमन्ति। तेषां कृते ज्ञानदीपस्यावश्यकतास्ति तथा भगवान् बुद्ध उपनिषद्भ्यस्तं ज्ञानदीपं मानवताया उत्तराधिकाररूपेण जनेभ्यः प्रददौ[७२]।

वस्तुतस्तथ्यमिदं यद् भगवान् बुद्ध स्वयं जीवनस्यादिकाले वैदिकदर्शनैः संस्कृत आसीत्तेन तस्योपदेशे उपनिषदादिप्रतिपादितदर्शनानां प्रभाव आसीदेव। हीनयानिभिः सर्वास्तिवादिभिस्तस्योपदेशोऽन्यथाकृत्वा व्याख्यातः। येनासन्तुष्टो महाविद्वान् अश्वघोषः स्वीये महायानश्रद्धोत्पादग्रन्थे भगवद्बुद्धसिद्धान्तानामविकृतं रूपं प्रादर्शयत्। अस्याश्वघोषस्य अपरेष्वपि सौन्दरानन्दबुद्धचरितशारिपुत्रेषु ग्रन्थेष्वपि दार्शनिकतत्त्वानां निर्देशोऽधिगम्यते। अस्य ग्रन्थेषु शून्यवादविज्ञानवादयोरुभयोरपि मूल

७१. द्रष्टव्यः—श्रीनरेन्द्रदेवमहोदयस्य "बौद्धेषु निर्वाणस्वरूपम्" इति लेखः। वाराणसेयसं० विश्वविद्यालयस्य सारस्वतीसुषमापत्रिकायाम् वर्षः ५ अ० ३ पृ० २५ प्रभृ०।

७२ सुजुकीमहोदयस्य "आउट लाईंस आफ महायान बुद्धिज्म" पृ० १२४।

प्राप्यते। यदाधारेण वसुबन्धु विज्ञानवादं प्रौढिमनयत्। अयमश्वघोषः साकेतवासी ब्राह्मणकुलोत्पन्न आसीत् यत्र वास्य उपनिषदादिकमधीतवान्। अतस्तस्य ग्रन्थे उपनिषदादिप्रभावोऽनिवार्योऽभूत्। भगवान् बुद्ध स्वयमपि कस्यचित् सत्पदार्थस्य विचारे दुराग्रहं नाकरोत्। सयुत्तनिकाय स कथयति यत्—

'विद्वांसो य पदार्थं मदिति कथयन्ति त तथैवाहमपि मन्ये, य पदार्थं विद्वांसोऽसदिति कथयन्ति तमहमपि असदित्येव मन्ये। भो भिक्षुका धमविद कदापि लोकस्य विरोध न कुर्वन्ति।'

( स० नि० ३ १३८ )

केषाचित् प्रश्नानामुत्तरे भगवान् बुद्धो मौनमाश्रितवान्। अस्य मौनस्य कारणं किमपि भवेत्। प्रष्टुरयोग्यता अथवा निरुक्तिविरहता। किन्तु हीनयानवादिनस्तस्यान्यथैव भावमबुध्यन्त। 'दीघनिकाय' ग्रन्थानुसार मौनमाश्रिता अनुत्तरिता इमे केचन प्रश्ना—

(१) किं जगत् नित्यम् अथवा अनित्यम् अथवा उभयभिन्नम्।
(२) किं जगत् अन्तवत् अथवा नान्तवत् अथवा उभयम् अथवा उभयभिन्नम्।
(३) तथागता देहत्यागानन्तर विद्यतेऽथवा न विद्यत इत्यादि।
(४) किं जीव शरीरञ्चैकमेव अथवा भिन्नम्।

( दी० नि० १९ )

एव महात्मना बुद्धस्यापदेशे कुत्रापि ब्रह्मणो जीवस्य निर्वाणस्य च साक्षात्सत्ताभावो नो निर्दिष्ट। हीनयानानुयायिनो बुद्धमत यन्मौनाश्रित तदन्यथा कृत्वा जगत्—प्रतिक्षणपरिणामिसघातरूपम् जीवो विचार सततिरूप निर्वाणो विनाशरूप इति व्याख्यातवन्त। अत एवाश्वघोषो विद्वानश्वघोषो हीनयानपथ परित्यज्य महायानपथमाश्रितवान्। तत्र स महायानश्रद्धोत्पादशास्त्रे प्रारम्भे एवेदमुक्तवान् यत्—

"बुद्धनिर्वाणानन्तर भगवतो बुद्धस्योपायकौशल्येन प्रतिपादितान् सिद्धान्तान् बोद्धु समर्था अल्पीयास एव विद्वासोऽभवन्। बहवोऽन्यथाऽबुध्यन्त। अतोऽस्य ग्रन्थस्येदमुद्देश्य यत्पृथग्जनाना हीनयानिना श्रावकाणा प्रत्येकबुद्धाना च विपरीतमतान्यपास्य तथागतस्योपदिष्टसिद्धान्ताना तात्त्विकार्थस्य प्रकाशनम्।"[७३]

अत एवाश्वघोषस्य ग्रन्थे औपनिषदा सिद्धान्ता, शब्दा, उपमाश्च प्राप्यन्ते—

आकाशसममात्मानं संक्षिप्य त्वपरो बुधः।
तदेवानन्ततः पश्यन् विशेषमधिगच्छति॥
(बुद्धचरिते स० १२-६२)

अध्यात्मकुशलेष्वन्यो निवर्त्यात्मानमात्मना।
किञ्चिन्नास्तीति संपश्यन्नाकिञ्चन्य इतिस्मृतः॥
(तत्रैव १२-६३)

ततो मुञ्जादीषिकेव शकुनि पञ्जरादिव।
क्षेत्रज्ञो निःसृतो देहान्मुक्त इत्यभिधीयते॥
(तत्रैव १२ ६४)

एतत्तत्परमं ब्रह्म निर्लिङ्गं ध्रुवमक्षरम्।
यन्मोक्ष इति तत्त्वज्ञा कथयन्ति मनीषिणः॥
(तत्रैव १२-६५)

---

७३ महायानश्रद्धोत्पादशास्त्रस्य चीनीभाषातोऽनूदिते 'अवेकनिंग आफ फेथ इन महायान' ग्रन्थे पृ० ४७, अनुवादक—टी० सुजुकी, शिकागो १९०० ई० प्रका०, अनु० टी० रिचार्ड, शघाई १९०७ पृ० १। अय ग्रन्थो मूलरूपेण सस्कृतभाषाया नोपलभ्यते। चीनीभाषायामस्यानुवाद प्राप्यत अयमश्वघोषस्य कृतिरिति केचन मन्यन्ते केचन न मन्यन्ते।

एषु चतुर्षु श्लोकेषु छान्दोग्याद्युपनिषदुक्ता आत्मन आकाशोपमा,[७४] कठोपनिषदुक्ता मुञ्जादीषिकेवेत्युपमा,[७५], जीवन्मुक्तत्वम् तथा जीवब्रह्मणोरैक्यं च प्रतिपादितानि।

एवमेव सौन्दरानन्दकाव्येऽपि—आत्मरतिरात्मक्रीड इत्युपनिषदुक्तो भावो वर्णित —

न तत्र कार्यं तूर्यैस्ते न स्त्रीभि र्न विभूषणैः ।
एकस्त्वं यत्र तत्रस्थस्तया रत्याभिरंस्यसे ॥

( सौन्दरानन्दे ११ ३५ )

आत्मतत्त्वविषये एव वर्णित —

सद्वितर्कैरकुशलैर्नात्मानं हन्तुमर्हसि ।
सुशस्त्रं रत्नविकृतं मृद्धतो गां खनन्निव ॥

( सौ० १५ ७४ )

सुजुकीमहोदय 'आउट लाइन्स आफ महायान बुद्धिज्म" ग्रन्थे अश्वघोषमतमित्थं लिखति—

---

७४ (क) सत्यसंकल्प आकाशात्मा सर्वकर्मा सर्वकाम सर्वगन्ध सर्वरस ।
( छा० उ० ३।१४।२ )

(ख) आकाशं ब्रह्मेत्युपासीत । ( छा० उ० ७।१२।२ )

(ग) स वा अयमात्मा अकाशमय ( बृ० आ० उ० ४।४।५ )

(घ) आकाशवत् सर्वगत सुसूक्ष्मम् । ( शाण्डिल्योपनिषदि २।१।३ )

(ङ) घटे लीयेत चाकाशं तद्वज्जीवा घटात्मम ( ब्र० वि० उ० १३ )

७५—अङ्गुष्ठमात्र पुरुषोऽन्तरात्मा, सदा जनानां हृदये सन्निविष्ट । तं स्वाच्छरीरात् प्रवृहेत् मुञ्जादिवेषीकां धैर्येण । तं विद्याच्छुक्रममृतं विद्याच्छुक्रममृतम् । ( कठोपनि० २।६।१७ )

अविद्या तथा तस्या कार्यं प्रपञ्चो मुख्यत्वेनाङ्गीक्रियते किन्तु *अविद्याया अधिष्ठानभूतस्य परमार्थस्य (आत्मन ) अस्वीकरण महत्यज्ञता।*

( आ० ला० आफ म० बु० पृ० १२४ )

अत्रेद स्पष्टीकरणमावश्यक यद् बौद्धदर्शने विज्ञानवादस्य शून्यवादस्य च द्वौ द्वौ भेदौ । अश्वघोषसमर्थित प्रथमो विज्ञानवादस्तथा नागार्जुनोपोद्वलित प्रथमो माध्यमिकवाद । तत्र यथा विज्ञानदस्य द्वौ भेदौ–एको विज्ञानवाद अपर स्वतन्त्रविज्ञानवाद । प्रथमस्य प्रबलसमर्थकोऽश्वघोष, महान् व्याख्याता वसुबन्धुश्च । अपरस्य स्वतन्त्रविज्ञानवादस्य प्रवर्तक आचार्यदिङ्नाग । अथ लौकिक तर्कमपास्य स्वतन्त्रैस्तर्कै स्वतन्त्रविज्ञानवाद पर्यपोषयत् । एवमेव माध्यमिकवादस्यापि द्वौ भेदौ प्रासङ्गिकमाध्यमिकसम्प्रदाय स्वतन्त्रमाध्यमिकसम्प्रदायश्च । प्रथमस्य नागार्जुनार्यदेवबुद्धपालिता प्रवर्तका समर्थकाश्च । अपरस्य स्वतन्त्रमाध्यमिकवादस्य प्रवर्तको भावविवेको भव्यो वा ।

तत्राश्वघोषसमर्थिते विज्ञानवादे विज्ञानस्य नित्यत्वमङ्गीकृतम् । तेन विज्ञानम्, तथता लङ्कावतारस्य तथागतगर्भ आलयविज्ञान वा असङ्गस्य विशुद्धात्मा, महात्मा, परमात्मा, धर्मधातु वा वसुबन्धो विज्ञप्तिमात्रता धर्मकायो वा वेदान्तिसम्मतब्रह्मतुल्यम् । यतो हि विज्ञानवादिमते इद सर्व नित्य विशुद्ध स्वप्रकाश स्वत सिद्ध विज्ञानतत्त्वरूप मन्यते । वेदान्तिमतेऽप्येवमेव ।

एवमेव शून्यवादे शून्यशब्दस्येमेऽर्था —

**तथता भूतकोटिश्चानिमित्त परमार्थता ।**
**धर्मधातुश्च पर्याया शून्यताया समासत ॥**

( मध्यान्तविभागभाष्ये १ परि० १५ का० )

अत्र शून्यमेव परमार्थतत्त्वम्।[७६] तच्च वेदान्तिसम्मत ब्रह्मतुल्यम्। शून्यमभावस्तु न, किन्तु चतुष्कोटिविनिर्मुक्त तत्त्वम्, अतो यदि किञ्चित्तत्त्व तच्चानिर्देश्य ततस्तदेव ब्रह्म भवितुमर्हति। वसुबन्धो विज्ञप्तिमात्र वेदान्तिसम्मतात्मतत्त्वतुल्यम्, अस्यालयविज्ञान वेदान्तिसम्मतेश्वरतुल्यम् अस्य मनोविज्ञान च वेदान्तिजीवतुल्यम्। तस्य विषयविज्ञप्ति वेदान्तिजगत्-तुल्या। तस्य परिणाम एव वेदान्तिना विवर्त्त।

लङ्कावतारोक्ततथागतगर्भस्यात्मतुल्यत्वादेवौपनिषदात्मतस्तथागत-गर्भं विभेदयितु तत्र प्रयत्न कृत। तत्रोक्त यत् तथागतगर्भं आलय

७६—कि लक्षण पुनस्तत् तत्त्व यस्यैता देशना अवतारायमुपदिश्यन्ते भगवन्, उक्तमेतदस्माभि —

निवृत्तमभिधातव्य निवृत्ते चित्तगोचर। इति।

यदा चैवदेवम्, तदा किमपर पृच्छयत, यद्यप्येवम्, तथापि व्यवहार-सत्यानुरोधेन लौकिकन्यायाभ्युपगमवत् तस्यापि समासतो लक्षणमुच्यतामिति। तदुच्यते—

> अपरप्रत्यय शान्त प्रपञ्चैरप्रपञ्चित म्।
> निर्विकल्पमनानार्थमतत्त्वस्य लक्षणम्॥

यदा तु तिमिरोपघातविपरीतशून्यतादर्शनाञ्जनाञ्जितबुद्धिनयना सन्त समुत्पन्नतत्त्वज्ञाना भवन्ति, तदा तत् तत्त्वमनधिगमनयायेन स्वयमधिगच्छन्तीति।

( चन्द्रकीर्तिव्याख्यासहितमध्यमकशास्त्रे १८ ६ )

अनेकार्थमनानार्थमनुच्छेदमशाश्वतम्।
एतत्तल्लोकनाथाना बुद्धाना शासनामृतम्॥ ( म० का० १८ १० )
अनिरोधमनुत्पादमनुच्छेदकशाश्वतम्।
अनेकार्थमनानार्थमनागममनिर्गमम्॥ ( म० का० १ १ )
य प्रतीत्य समुत्पाद प्रपञ्चोपशम शिवम्।
देशयामास सबुद्धस्त वन्दे वदता वरम्॥ ( म० का० १-२ )
अप्रहीणमसप्राप्त मनुच्छिन्नमशाश्वतम्।
अनिरुद्धमनुत्पन्नमेतन्निर्वाणमुच्यते॥ ( म० का० २५।३ )
द्वे सत्ये समुपाश्रित्य बुद्धाना धर्मदेशना।
लोकसंवृतिसत्य च सत्य च परमार्थत॥ म० का० २४।८ )

विज्ञान वा निर्विकल्पक निराभासप्रज्ञागोचरञ्च नैवभूत आत्मा । किन्त्वय विभेदहेतु र्हेत्वाभास एव । यतो हि आत्मापि निर्विकल्पो निराभास-प्रज्ञागोचरश्च ।

पूर्वमुक्तो विज्ञानवादस्यापरो भेद स्वतन्त्रविज्ञानवाद । यस्य प्रवर्तको दिङ्नागाचार्य । अस्मिन् वादे विज्ञान क्षणिकम् । तेनायमेव स्वतन्त्र-विज्ञानवादो भगवता शङ्करेण तदनुयायिभिश्च खण्डित । विज्ञानस्य स्वयप्रकाशत्वे वेदान्तिबौद्धौ समानौ । किन्तु विज्ञानस्य नित्यत्वे स्वतन्त्र-विज्ञानवादिनो न सम्मता । अत एव कमलशीलेन तत्त्वसङ्ग्रहे वेदान्ति-नामयमपराधो घोषित —

**तेषामल्पापराधं तु दर्शनं नित्यतोक्तितः ।**

( तत्त्व स० का० ३३० )

अपर च वेदान्तिमते नित्य आत्मा ज्ञाता भवति, क्षणिक विज्ञान च ज्ञेय भवति । स्वतन्त्रविज्ञानवादिन कथयन्ति यद् क्षणिकमेव अर्थक्रियाकारि, अत सद् भवितुमर्हति न नित्यम् । वदान्तिनस्तु क्षणिकमर्थक्रिया-यामसमर्थं निरर्थमिति मत्वा तस्य साधकाय नित्यमात्मानमामन्यन्ते ।

विज्ञानवादिना मते विज्ञानवाह्य किमपि नास्ति । अतो जगतो मिथ्यात्वम् । वेदान्तिमतेऽपि सदसदनिर्वचनीयत्वेन जगतो मिथ्यात्वम् । किन्तु स्वतन्त्रविज्ञानवादे विज्ञानस्यानित्यत्वात् बाह्यपदार्था विज्ञानबाह्या नेति कथन मनोविज्ञान भवति । वेदान्तिभिरयमेवाश खण्ड्यते । अतो वेदान्तिभि कृत खण्डन न विज्ञानवादस्य किन्तु स्वतन्त्रविज्ञानवादस्य ।

इत्थ बौद्धदर्शने योगाचारमाध्यमिकमतयोरुभयोरपि सिद्धान्ते आत्मन सत्ता त्वस्त्येव । किन्तु नाम्नि तथा तस्य स्वरूपे केवलो विवाद । यथा पूर्वमुक्तमात्मन कृते आत्मशब्द परित्यज्य तथतातथागतगर्भधर्मधातु-धर्मकायबुद्धकायतत्त्वविज्ञानविज्ञप्तिविज्ञानमात्रविज्ञप्तिमात्रचित्तमात्रबोधिप्रज्ञा-चित्तबोधिचित्तशून्यशब्दा व्यवह्रियन्ते । औपनिषद ब्रह्म आत्मा वा पर-

मार्थसत् परमतत्त्व वा वेदान्तिभिर्मन्यते । बौद्धैस्तदेव परमार्थसत् परमतत्त्व तथतेत्यादिशब्दै र्मन्यते ।

वस्तुत इद तथ्य यद् बौद्धदार्शनिकै र्येन केनापि रूपेण आत्मा व्यवहृत सव । यथा—दार्शनिक महाकविनाश्वघोषेण आत्मा व्यवहृत सौन्दरानन्दे—

क्वचिद्भुक्त्वा यत्तद्वसनमपि यत्तत्परिहितो
वसन्नात्मारामः क्वचन विजने योऽभिरमते ।।
कृतार्थं स ज्ञेय समसुखरसज्ञः कृतमतिः,
परेषा संसर्गं परिहरति य कण्टकमिव ।।

( सौ० का० १४-५० )

वसन् शून्यागारे यदि सततमेकोऽभिरमते,
यदि क्लेशोत्पादैः सह न रमते शत्रुभिरिव ।
चरन्नात्मारामो यदि च पिबति प्रीतिसलिलं ततो
भुङ्क्ते श्रेष्ठं त्रिदशपयिराज्यादपि सुखम् ।

( सौ० का० १४-५२ )

शून्यतायां विशुद्धाया नैरात्म्यान मार्गलाभतः ।
बुद्धा शुद्धात्मलाभित्वा ‚ गता आत्ममहात्मताम् ।।

( म० या० सू० ९-२३ )

बौद्धविदुषोऽभ्ङ्गस्य शुद्धात्मा, ' महात्मा परमात्मा, महायानसूत्रालङ्कारे [७७]—

७७- सिल्वानल्वी महोदय म० या० सू० रचयिता असङ्ग इति मन्यते । एच० युईमहोदयसतथा । विन्टनित्जमहादय म० या० सू० रचयिता मैत्रेयनाथ इति मन्येते ।

विहाय योऽनर्थमयात्मदृष्टिं महात्मदृष्टिं श्रयते महार्थाम्
( म० या० सू० १४-३७ )

अनेन बुद्धानामनाश्रवे धातौ परमात्मा व्यवस्थाप्यते ।

( म० या० सू० ३७-३८ )

यो हि अद्वयमात्मानं प्रजानाति स बुद्धं धर्मं च प्रजानाति । तत् कस्य हेतो आत्मभावं स भावयति सर्वधर्माणाम् । 'आत्मस्वभावनियता हि सर्वधर्माः' ( महायानसूत्रसंग्रहे निदानपरिवर्ते पृ० ११ )

शान्तक्षितस्य विशुद्धात्मा—तत्त्वसङ्ग्रहे—

साङ्ख्यमतखण्डनावसरे साङ्ख्यपुरुषविचारे शान्तरक्षित कथयति—यद् बुद्धिः, अध्यवसायः, संवित् संवेदनम्, संवित्तिः, चेतना, चैतन्यमित्यादयः सर्वे पर्यायवाचिनः । यदि साख्याचार्याः पुरुषं चैतन्यस्वरूपमात्मानमामनन्ति तदा न तैः सह विरोधो यत आत्मनश्चैतन्यस्वरूपे नास्माकं हानिः ।केवलमात्मनो नित्यत्वेऽस्माकं विरोधः । यथा—

चैतन्ये चात्मशब्दस्य निवेशेऽपि न नः क्षतिः ।
नित्यत्वं तस्य दुःसाध्यमक्षयादेः सफलत्वतः ॥
( त० स० का० ३०५ )

एतदेव हि तज्ज्ञानं यद् विशुद्धात्मदर्शनम् ।
आगन्तुकमलापेतचित्तमात्रत्ववेदनात् ॥
( त० स० का० ३५३५ )

शान्तरक्षितमते संवित्तिः, विज्ञप्तिमात्रता, परमार्थश्चैकमेव तत्त्वम्—

अनारोपितरूपा च स्वसंवित्तिरियं स्थिता ।
द्वयोपप्लवशून्या च सा सम्बुद्धैः प्रकाशिता ॥
( त० स० का० ३५३६ )

विज्ञप्तिमात्रतासिद्धि र्धीमद्भिर्विमलीकृता ।
अस्माभिस्तद्दिशा यातं परमार्थविनिश्चये ॥
( त० सं० का० २०८४ )

शान्तरक्षित आत्मसाक्षात्कारस्य माहात्म्यमुद्घोषयन् ब्रवीति—

स्वयमेवात्मनात्मानमात्मज्योतिः स पश्यति ॥
( त० स० का० ३२९० )

आचार्यधर्मकीर्तिरात्मानमित्थं निर्दिशति—

अविभागोऽपि बुद्धयात्मा विपर्यासितदर्शनैः ।
ग्राह्यग्राहकसंवित्ति भेदवानिव लक्ष्यते ॥
( प्रमाणवर्तिके ३।३५४ )

बौद्धैकदेशिभि र्वात्सीपुत्रीयैरात्मा त्वङ्गीकृतः किन्तु न वेदान्तिसमोऽपि तु अनिर्वाच्यः—

स्कन्धेभ्यः पुद्गलो नान्यस्तीर्थदृष्टिप्रसङ्गतः ।
नानन्योऽनेकताप्राप्तेः साध्वी तस्मादवाच्यता ॥
( त० सं० का० ३३७ )

इत्येवं तन्मतमनूद्य शान्तिरक्षितेन तत्वसङ्ग्रहे इत्थं निराकृतम्—

ते वाच्याः पुद्गलो नैव विद्यते पारमार्थिकः ।
तत्त्वान्यत्वाद्यवाच्यत्वान्नभः कोकनदादिवत् ॥
( त० सं० का० ३३८ )

धम्मपदे यथात्मस्वीकारः—

आत्मा हि आत्मनो, नाथः को नु नाथः परो भवेत् ।
आत्मा हि सुदान्तेन स्वर्गं प्राप्नोति पण्डितः ॥
आत्मा हि आत्मनो नाथः को नुनाथः परो भवेत् ।
आत्मा हि आत्मनः साक्षी कृतस्याकृतस्य च ॥
( धम्मपद-१६०-६१ )

आयसमाधिराजे यथात्मस्वीकार —

**कृष्णशुभ च न नश्यते कर्म, आत्मन कृत्व च वेदायितव्यम ।**
**नोपि च सक्रमकर्मफलस्य, नो च अहेतुकप्रत्यनुभोति ।।**

( समाधिराजे ३७ ३५ )

इत्थमत्र दृश्यते उपनिषदुक्तमात्मस्वरूप विशुद्धज्ञानरूपम् । तद् बौद्धैर्येन केनापि रूपेण चाङ्गीक्रियत एव । भगवान् बुद्ध स्वयमेव समात्मान प्रज्ञाशब्देन बोधिशब्देन च व्यवहरति । अश्वघोष आर्यविज्ञानशब्देन तथागतगर्भशब्देन च प्रतिपादयति । स एवात्मा महायानसूत्र प्रपञ्चशून्यम् अनभिलाप्यम् प्रत्यात्मवद्य तत्त्वमुच्यते । असङ्गो वसुबन्धुश्च विज्ञानमात्रमिति कथयति । आत्मन क्रते बौद्धदर्शने चित्त विज्ञानमिति च पद प्रायो व्यवह्रियते पर यदा कदा ब्रह्मशब्दोऽपि व्यवह्रियते । यथा अष्टसाहस्रिकाप्रज्ञापारमितायाम्—

तथापि ब्रह्माध्येषणान्महाकरुणया धर्मचक्र प्रवर्तितमिति भाव ।

( अ० सा० हरिभद्रटीकायाम् १५ परि० पृ० ४५५ मिथिला-वि० प्र० १९६० ई० )

सर्वधर्मा ब्रह्मभूता दीपानुत्पादनत —प्रज्ञापारमिता अनुगन्तव्या ।

( अ० सा० प्र० पा० २९ परि० पृ० २३५ )

आत्मपरा दर्शनत प्रज्ञापारमिता अनुगन्तव्या । ( तत्रैव )

येपि ते सुभूते ब्रह्मकायिका देवा ब्रह्मपुरोहिता ब्रह्मपार्षद्या महाब्रह्माण ——( अ० सा० प्र० पा० २७प० पृ० २२१ )

स (बुद्ध ) इम च लोक परच लोकम्—सदेवक समारक सब्रह्मकम् स्वय विज्ञाय— । ( ललितविस्तरे १ परि० पृ० २ मिथिला—वि० प्रका० १९५८ ई० )

उपित ब्रह्मचर्यम् ( ल० वि २६ परि० पृ० ३०४ )

भौमादीन् देवगणान् सचोदयती च ब्रह्मपर्य ताम् ( ल० वि० २६ परि० १७ श्लो० पृ० ३०० )

यद् ब्रह्मचर्यं परम विशुद्ध विधेयित शासनि नायकस्य।
(सद्धर्मपुण्डरीके ४ परिवर्ते ५२ श्लो० पृ० ११८ पेटर्सबर्ग प्र० १९१२ ई०)

सोऽपि धर्म देशितवानादौ कल्याण मध्ये कल्याणपर्यवसाने कल्याण स्वार्थ सुव्यञ्जन केवल परिपूर्ण परिशुद्ध पर्यवदात ब्रह्मचर्य सप्रकाशितवान्। ( स० ध० पु० १ परि० पृ० १८ )

ब्रह्मविहारास्त्वत्वार सग्रहा ये च कीर्तिता। ( स० ध० पु० ५ परि० ७८ श्लो० पृ० १४२ )

परमात्मान च खड्गमहत्महस्राभिमन्त्रित कृत्वा—स्थापयेत्। ( महायानसूत्रसग्रहे २ स० ५५ परि० पृ० ५५३ मि० वि० प्रका० १९६४ ई० )

शून्यवादे श्रीनागार्जुनप्रतिपादित यत्परमतत्त्व शून्य तद् विज्ञानमेव भवितुमर्हति। शून्यस्य सर्वाणि विशेषणानि विज्ञाने पर्यवस्यन्ति। यथा हि-

**अनिरोधमनुत्पादमनुच्छेदमशाश्वतम्।**
**अनेकार्थमनानार्थमनागमनिर्गमम्॥**

( म० का० ११ )

**अपरप्रत्यय शान्त प्रपञ्चैरप्रपञ्चितम्।**
**निर्विकल्पमनानार्थमेतत्तत्त्वस्य लक्षणम्॥**

( म० का० १८९ )

अत्राभिहितानि सर्वाणि विशेषणानि निरोधाभावोत्पादाभावादीनि विज्ञाने सङ्गच्छन्त एव। एवमेव प्रसन्नपदायामाचार्यचन्द्रकीर्तिना शून्यताया प्रतीत्यसमुत्पादस्य वा कृते यानि विशेषणा युक्तास्तानि तान्यपि विज्ञाने सगच्छन्ते। यथा—

"यथोक्तमार्यशालिस्तम्बसूत्रे आर्यमैत्रेयेण महाबोधिसत्त्वेन—य इम प्रतीत्यसमुत्पादमेव यथाभूत सम्यक् प्रज्ञया सततमसितमजीव निर्जीव यथावदविपरीतमजातमभूतमसस्कृतमप्रतिघमनावरण शिवमभयम्—।"
( मध्यमकवृत्तौ २७-३० पृ० २५८ )

औपनिषद आत्मा यथा आविद्यको न मन्यते तथैव बौद्धमते चित्त विज्ञान वा सांवृतिक न मन्यते ।

यथाचार्यनागार्जुनेनोक्तम्—

ज्ञाने नास्त्यस्तिताशान्ते पापपुण्यव्यतिक्रमः ।
दुर्गतेः सुगतेश्चास्मात् स मोक्ष सद्भिरुच्यते ।।

( रत्नावल्याम् १-४५ )

नास्तिको दुर्गतिं याति सुगतिं याति चास्तिकः ।
यथाभूतपरिज्ञानान्मोक्षमद्वयनिश्रितः ।।

( तत्रैव १-५७ )

न प्रतिज्ञा न चरितं न चित्त बोधिनिःश्रायत् ।
नास्तिकत्वेऽर्थतो येषा कथं ते नास्तिका स्मृताः ।।

( तत्रैव १-६० )

यथा वेदान्तिमतेऽज्ञानेनावृत आत्मा आविल इव भवति तथैव बौद्धमतेऽज्ञानावृत चित्तमाविल भवति । वस्तुतश्चित्तमनाविलमादिशुद्धमस्ति ।

यथाह शान्तरक्षितेन तत्त्वसग्रहे—

प्रकृत्या भास्वरे चित्ते ह्याकाराकलङ्किते ।

( त० स० ३५३८ )

यथा च चित्तविशुद्धिप्रकरणे—

आदिशुद्धमनुत्पन्नं निःस्वभावमनाविलम् ।

( चि० वि० प्र० २६ )

यथा वेदान्तिमते आत्मा स्वयप्रकाशस्तथैव बौद्धमते चित्तम् । केवलमेतावान् भेदो यत् स्वयप्रकाशेऽर्थे प्रकृतिप्रभास्वरमितिपद प्रयुक्तम्—यथा—आचार्योऽसङ्ग —

मतं च चित्तं प्रकृतिप्रभास्वरं सदा तदागन्तुकदोषदूषितम् ।

( महायानसूत्रालङ्कारे १३।१९ )

यथा च—

प्रकृतिप्रभास्वर चित्तम् ।

( लं० अ० सू० १०।७५०, ७५३, ७५४ )

यथा च वेदान्तिमतेऽविद्यया ब्रह्म जगद्रूपेण विवर्तते तथैव बौद्धनये वासनया चित्तमेव दृश्यत्वेन भासते । यथोक्त लङ्कावतारसूत्रे—

बाह्यो न विद्यते ह्यर्थो तथा बालै विकल्प्यते ।
वासनै लुंलितं चित्तमर्थाभासं प्रवर्तते ॥

( लं० अ० सू० १०।१५० )

चित्तमात्र न दृश्योऽस्ति द्विधा चित्तं प्रवर्तते ।
ग्राह्यग्राहकभावेन आत्मात्मीयं न विद्यते ।

( तत्रैव ३।२१ )

अत्रात्मस्थाने चित्त प्रकल्प्य आत्मानमात्मीय च खण्डितवान् ।

आचार्योऽसङ्गो इद तत्त्व शुद्धात्ममहात्मपरमात्मशब्दैरपि व्यवहरति[७८] आचार्यवसुबन्धुमते विज्ञप्तिमात्र स्वयप्रकाशम् ।[७९]

आचार्यस्थिरमति कथयति—यन्नित्य तदेव सुखम् । यथा—

ध्रुवो नित्यत्वात्, सुखो नित्यत्वादेव, यदनित्य तद् दुःखम्, अय च नित्य इत्यस्मात् सुख । ( त्रिंशिकाभाष्ये पृ० ४४ )

इद वचनम्—आत्मा नित्य आनन्दस्वरूप इत्यौपनिषदमतमनुरुणद्धि ।

आचार्यधर्मकीर्तिरपि परमार्थतत्त्व स्वप्रकाश विज्ञानरूप मन्यते तथा तत्र भेदप्रतिभास आरोपित —

७८ म० सू० अ० ९-२३, १४-३७ ।

७९ त्रिंशिक—का० २२

**ज्ञानस्याभेदिनो भेदप्रतिभासो ह्युपप्लवः ।**

( प्रमाणवार्तिके ३ २१२ )

आचार्यशान्तरक्षितोऽपि विज्ञानम्— विशुद्धात्मदर्शनम्" इत्यवोचत्–

**एतदेव हि तज्ज्ञान यद् विशुद्धात्मदर्शनम ।**

( त० स० का० ३५३४ )

इत्थ च बौद्धमते वेदान्तिमते चेयानेव भेदो यद् वेदान्तिन शुद्ध नित्यमात्मतत्त्व प्रतिपादयन्ति तत्रैव बौद्धा शुद्धम्, अनित्यम्, ज्ञानसन्ततिम् आत्मतत्त्व निर्धारयन्ति । अनेनैव कारण यद् भगवता बुद्धेन केनापि कारणेन उक्तस्य बोधितत्त्वस्य प्रज्ञातत्त्वस्य सज्ञा 'आत्मा' इति न कृत्वा अहकारी दोषयुक्तो जीव इति कृता । तेन सदा आत्मशब्दस्य व्यवहार अविद्यायुक्ते ससारिणि बद्धे अहङ्कारिणि जीवे कृत । उपनिषत्सु या आत्मरति प्रशस्ताऽमयत सा भगवता बुद्धेन कुत्सिता । आत्मरते कृते मज्झिमनिकाये भगवतोक्त यत् सा केवलो बालधर्म —

**केवलो परिपूरो बालधम्मो ।**

( म० नि० १।१।२ )

एवमेव दीघनिकायेऽपि भगवता आत्मरति निन्दिता । अयमेवाधार, यमवलम्ब्य सर्वे बौद्धदार्शनिका नित्य शुद्धमात्मानम् अनित्य ससारिण मज्ञानयुक्त जीवमिति मत्वा सर्वत्रैव विगर्हितवन्त । यथाचार्यनागार्जुन उपदिशति जीवस्याहङ्कारे ममत्वे च नष्टे ससारचक्र विनश्यति ।

**ममेत्यहमिति क्षीणे बहिर्धाध्यात्ममेव च ।**
**निरुध्यत उपादानं तत्क्षयाज्जन्मन क्षय ॥**

( मा० का० १८-४ )

आचार्य आर्यदेव कथयति यदात्मा परित्याज्य–यद् अभ्युपेत्यापि

हि यत्पर प्रति प्रतिपादनासामर्थ्यादुक्तदोषाच्च परित्याज्य किं तेनाभ्युपगतेन *प्रयोजनमिति त्यज्यतामात्मवाद ।*

( चतु शतके नित्यार्थप्र० ९।२४ पृ० ६७ )

विक्रियमाणत्वाच्च लोहवदेव नास्त्यात्मनो नित्यत्वमितिसिद्धम् ।

( तत्रैव आत्मप्र० १०।१२ पृ० ८३ )

इत्यहङ्कारविषयत्व परमात्मनोऽपि प्रसज्यते।

( तत्रैव १०।१४ पृ० ८५ )

चन्द्रकीर्तिमते सर्वेषा क्लेशाना दुखाना पापानामनर्थाना च मूलमात्मा । यथाह—"इदमत्र तत्त्वावतार पुन —

**सत्कायदृष्टिप्रभवानशेषान् क्लेशांश्च दोषांश्च धिया विपश्यन् ।**
**आत्मानमस्या विषयं च बुद्ध्वा, योगी करोत्यात्मनिषेधमेव ।।**

( मध्यमकावतारे ६-१२० )

इत्यादिना—प्रथमतरमात्मानमेवोपपरीक्षते ।" ( मध्यमकशास्त्रवृत्तौ आत्मपरीक्षायाम्—१ पृ० १४५ मि० वि० प्र० १९६० ई० )

शान्तिदेवमते विचार्यमाण आत्मा कदलीस्कन्धवदन्ते किमपि न परिशिष्यति—

**यथैव कदलीस्तम्भो न कश्चिद् भागश कृतः ।**
**तथाहमप्यसद्भूतो मृग्यमाणो विचारतः ।।**

( बोधिचर्यावतारे ९ ७५ )

आचार्यासङ्गमते सर्वेषा क्लेशाना कारणमात्मैव । आत्मन आत्मत्वमपि अनाद्यविद्याकारणेनैव । विचार्यमाणे आत्मा न द्रव्य न चात्मा सिद्ध्यति—

**'विहाय योऽनर्थमयात्मदृष्टि महात्मदृष्टि श्रयते महार्थाम् ।'**

इत्यादि । ( महायानसूत्रालङ्कारे १४-३७ )

एवमेव—म० सू० अ० ११-४७, १८-७७, ९२-१२० द्रष्टव्यानि ।

वसुबन्धुरपि विषयित्वेनात्मानं मिथ्या वदति—

**तथा पुद्गलनैरात्म्यप्रवेशो हि अन्यथा पुनः ।**
**देशनाधर्मनैरात्म्यप्रवेशः कल्पितात्मना ॥**

( विंशतिका का० १० )

अत्र स्ववृत्तौ—यो बालैर्धर्माणां स्वभावो ग्राह्यग्राहकादि परिकल्पितस्तेन कल्पितेनात्मना तेषां नैरात्म्यं नत्वनभिलाप्येनात्मना यो बुद्धानां विषय इति । एवं विज्ञप्तिमात्रस्यापि विज्ञप्त्यन्तरपरिकल्पितेनात्मना नैरात्म्यप्रवेशाद् विज्ञप्तिमात्रव्यवस्थापनया सर्वधर्माणां नैरात्म्यप्रवेशो भवति न तु तदस्तित्वापवादात् ।

धर्मकीर्तिमते क्लेशरागादीनां जनक आत्मैवेति ।

**( तेना ) त्माभिनिवेशो यावत्तावत्स संसारे ।**
**आत्मनि सति परसंज्ञा स्वपरविभागात् परिग्रहद्वेषौ ।**

( प्रमाणवार्तिके २ २१९ )

**अनयो संप्रतिबद्धाः सर्वे दोषा प्रजायन्ते ।**
**नियमेनात्मनि स्निह्यस्तदीये न विरज्यते ॥**

( प्र० वा० २-२२० )

प्रमाणवार्त्तिकस्य मनोरथनन्दिकृतवृत्तौ इदं वार्त्तिकम्—

**तत्रापि न विरागोऽत्र स्वस्वबुद्धे यथात्मनि ।**
**न तं विना दु.खहेतुरात्मा चेत् तेऽपि तादृशा ।।**

( प्र० वा० वृ० १ प० २२९ वा० स कायहष्टी पृ० ८९
विहार एण्ड उडिसा रि० सो० पटना १९३८ ई० प्रका०)

**य पश्यत्यात्मानं तत्रास्याहमिति शाश्वतः स्नेह ।**

( प्र० वा० २-२१७ )

स्नेहात् सुखेषु तृष्यति तृष्णादोषांस्तिरस्कुरुते ।

( प्र० वा० २ २१८ )

शान्तरक्षितस्तु तत्त्वसंग्रहे आत्मसम्बन्धे बौद्धदृष्टीनां सर्वस्वमित्थं प्रकाशयति—

अहङ्कारास्पदत्वेन चित्तमात्मेति गीयते ।
संवृत्या वस्तुवृत्त्या तु विषयोऽस्य न विद्यते ॥

( त० स० २०४ )

अस्य पञ्जिकायामिदमप्युक्तं यत्—

"चित्तमेवाङ्कारास्पदत्वादात्मेत्युपचर्यते" इति। आत्मेत्युपचर्यते व्यवह्रियत इत्यर्थः। तेन यदुक्तमुद्योतकारेण मुख्यासम्भवादुपचारो न युक्त इति तदभिप्रायापरिज्ञानादिति ग्रहीतव्यम्। एतदेव गीयत इत्यनेन स्पष्टयति।"

इदमत्र बोद्धव्यं यद् औपनिषददर्शनस्य द्वे प्रवृत्ती-खण्डनात्मिका मण्डनात्मिका च। ऋग्वेदीयं नासदीयं सूक्तं खण्डनात्मकप्रवृत्तेरुदाहरणम्। तत्र सत्त्वमसदित्येवेति प्रतिपादितम्। मण्डनात्मकप्रवृत्तेरुदाहरणं तत्त्वमसीत्यादि। एवमेव किञ्चिदेवभूतं तत्त्वं यस्य वाण्यादिभिः प्रकाशनमसम्भवं किन्तु स्वानुभूत्यैव तस्य केवलं ज्ञानम्। यस्य कृते यत्र वाचो निवर्तन्ते इत्युच्यते, बृहदारण्यकोपनिषदि च 'नेति नेति' इति शब्दैः प्रतिपाद्यते। एवंविधस्यात्र व्याख्यानमपि मौनमेव भवति। यथा मुनिर्वाष्कलिराचार्यबाध्वं प्रति आत्मानं प्रपच्छ। बाध्वो मौनं सिषेवे। पौनःपुन्येन पृष्टमनुवाच। अहं मौनेनात्तरयामि यदयात्मा शान्त इति। यथोक्तम्—

ब्रूमः खलु त्वं तु न विजानासि उपशान्तोऽयमात्मेति।

( ब्र० सू० शा० भा० ३-२-१७ )

एवं रीत्या भगवान् बुद्धोऽपि 'दीघनिकाय' प्रथानुसारं आत्मनो जगतश्च विषये कृते प्रश्ने मौनं सिषेवे। आचार्यनागार्जुनेनोक्तं यद् भगवता बुद्धेनात्मन उपदेशोऽनुपदेशो वा न कृतः—

आत्मेत्यपि प्रज्ञपितमनात्मेत्यपि देशितम् ।
बुद्धैरात्मा नचानात्मा कश्चिदित्यपि देशितम् ।।

( म० का० १८-६ )

अस्याः कारिकाया अवतरणिकाया व्याख्यायां च चन्द्रकीर्तिनोक्तं यत् कैश्चिदात्मा मन्यते कैश्चिच्च न मन्यतेऽत्त उभे मते विहाय भगवान् बुद्धो मध्यम मार्ग समाश्रयत । अतोऽग्रिमया कारिकया एतन्मत सविशेपं विशदं भवति—

सर्वं तथ्यं न वा तथ्यं तथ्यं चातथ्यमेव च ।
नैवातथ्यं नैव तथ्यमेतद् बुद्धानुशासनम् ।।

( म० का० १८-८ )

कदाचिच्च केनापि कारणेन स्वतन्त्रसम्प्रदायप्रवर्तनेच्छया वा भगवान् बुद्धोऽहङ्कारिणं संसारिणं अविद्यासंसर्गयुतं जीवमेवात्मत्वेन (ब्रह्मत्वेन) उपदिदेश । तथाभूतं चात्मानम् ( ब्रह्म ) अनित्यमपि उद्घोषितवान् । तदाधारेण हीनयानानुयामिन आत्मास्तित्वमखण्डयन् । अश्वघोष प्रथम आचार्यो येनात्मनोऽस्तित्वं स्वीचकार तथा वसुबन्धुप्रभृतयो इममात्मान विज्ञाननित्यत्वेन समर्थितवन्तः । आचार्यनागार्जुनेनापि शून्यतारूपपरमार्थतत्त्वेन आत्मशून्ययोः समानविशेपणेनात्मा समर्थित एव । पर कालान्तरे स्वच्छन्दविज्ञानवादेन स्वच्छन्दमाध्यमिकवादेन च विज्ञानस्यानित्यत्व प्रसाध्य आत्मवादविज्ञानवादशून्यवादाना मध्ये महदन्तर स्थापितम् । श्रीगौडपादाचार्ये भगवत्पादशङ्कराचार्यैस्तदनुयायिभिश्च अनित्यविज्ञानवाद एव खण्डितो न तु विज्ञानवाद इति यथा पूर्वं दर्शितम् । शून्यवादस्यापि अभावरूपमर्थं गृहीत्वा तैः शून्यवादः खण्डितो न तु परमार्थतत्त्वरूपेण । ततः पूर्वोक्तप्रकारेण भगवद्बुद्धोपदिष्टदिशा सर्वे बौद्धाचार्यैः परवर्तिभिश्चान्तपर्यन्तं सर्वदोषपूर्णोऽनित्य एवात्मा समर्थितः । एतदन्तरमविगणय्य

यदि दर्शनप्रक्रियादिदृष्ट्या विचारयामस्तदा ब्रह्मवादविज्ञानवादशून्यवादाना मध्ये महत्साम्य प्राप्नुम । अत एतेषा त्रयाणामपि मूलमुपनिषद् एवेति वक्तु पारयाम ।[८०]

एवञ्चोपनिषत्प्रतिपादितस्यात्मनो नित्यत्वे तस्य सत्ताविषये वा यो हि विवादो बौद्धैरुत्थापितस्तस्य प्रतिष्ठापनार्थमेव श्रीगौडपादाचार्य श्रीशङ्कराचार्यस्तदनुयायिनश्च महता श्रमेण प्रावर्तन्त । श्रीगौडपादाचार्यस्यैतदर्थं सर्वप्रथमो यत्नोऽतीव श्लाघ्य । तस्य श्रम समन्वयात्मकश्चरकोक्तसधायसभाषया सप्रवृत्त । तदाधारेणैव तस्य प्रशिष्य भगवत्पादशङ्करस्तदनुयायिनश्च प्रवृत्ता किन्तु नरकोक्तविगृह्यसभाषया । भगवान् गौडपादो माण्डूक्यकारिकाग्रन्थस्य श्रुत्युच्चावस्थानयव्याख्यानेनारभ्यात्मप्रसाधनपूर्वक ग्रन्थस्योपान्त्यकारिकया "नैतद् बुद्धेन भाषितम्" ( मा० का० ४ ९९ ) इत्युक्त्या भगवता बुद्धेन सर्वं भाषित किन्तु आत्मा न भाषित एतावदेव विनिवेद्य विरराम । अतो वेदान्तिनामात्मप्रतिष्ठापनार्थमेव प्रयास । भगवान् श्रीशङ्करो ब्रह्मसूत्रे कथयति—

"आत्मनश्च प्रत्याख्यातुमशक्यत्वात् । य एव निराकर्ता तस्यैवात्मत्वात् ।" ( ब्र० सू० शा० भा० १-१-४ )

वास्तविकी तथ्यताप्यत्रैव । बौद्धदार्शनिका महान्तो विद्वास प्रबलतार्किका धीधना विचित्रप्रतिभावन्तश्चाभूवन् किन्त्वनित्यविज्ञानस्य शून्यतारूपविलक्षणपरमार्थस्य सस्थापने स्वयमपि प्रकाम व्यग्रा अभूवन् । यथोक्तमार्यरत्नकूटसूत्रे—

'*चित्त हि काश्यप परिगवेष्यमाण न लभ्यते । यन्न लभ्यते तन्नोप-*

---

८०—एतस्मिन् विषये डा० चन्द्रधरशर्मणा स्वीय 'बौद्धदर्शन और वेदान्त" ग्रन्थे बहु विचारितम् ।

श्रीचैतन्यभारतीस्वामिना दर्शनसर्वस्वग्रन्थे विज्ञानाद्वैतशून्याद्वैतब्रह्माद्वैतशैवाद्वैतादिअद्वैतवादिना सामञ्जस्य महावैदुष्येन प्रसाधितम् ।

लभ्यते । यन्नोपलभ्यते तन्नैवातीतं नानागतं न प्रत्युत्पन्नं यन्नैवातीतं नानागतं न प्रत्युत्पन्नं तस्य नास्ति स्वभावः ।

( म० का० वृ० पृ० १२ )

पुनरपि तदुक्तम् आर्यरत्नपृच्छायाम्—

"आलम्बने सति चित्तमुत्पद्यते । तत् किमन्यदालम्बनमन्यच्चित्तम्, अथ तदेवालम्बनं तदेव चित्तम्, यदि तावदन्यदालम्बनमन्यच्चित्तम्, तदा द्विचित्तता भविष्यति । अथ यदेवालम्बनं तदेव चित्तम् । तत्कथं चित्तेन चित्तं समनुपश्यति । न चित्तं चित्तं समनुपश्यति । तद् यथापि नाम तयैवासिधारया सैवासिधारा न शक्यते छेत्तुम् । न तेनैवाङ्गुल्यग्रेण तदेवाङ्गुल्यग्रं शक्यते स्प्रष्टुम् । एवमेव न तेनैव चित्तेन तदेव चित्तं शक्यं द्रष्टुम् ।

( म० का० वृ० पृ० १६ )

अत्र ते समादधति यद् ग्राह्यग्राहकभावो हि नैवास्ति परमार्थतः । पुनरपि तत्र शङ्कोद्भाविता यत्—सुषुप्त्यादौ साक्षि किमस्ति चित्त चित्तव्यतिरिक्तं वा किमपि । न चालयविज्ञानमेव साक्षित्वेन स्वप्रकाश व्यवह्रियत इति वाच्यम् । क्षणिकविज्ञानसन्ततिलक्षणस्यालयविज्ञानस्य जाग्रत्स्वप्नसुषुप्त्यवस्थात्रयेऽपि सद्भावकल्पने प्रमाणाभावात् । एवं च सुप्तोत्थितस्य सुखपरामर्शस्य निराधारताप्रसङ्गः । अतः कश्चिन्नित्यः साक्ष्युपगन्तव्यः ।

एवमेव माध्यमिकमतेऽपि शून्यतैव परमार्थः शून्यता च तथताधर्मधातुप्रज्ञापारमिताद्वयज्ञानादिशब्दैर्व्यवह्रियते[८१] । सा च शून्यता विलक्षणैव । ये शून्यता सद्रूपेण जानन्ति तेषां महती भर्त्सना—

शून्यता सर्वदृष्टीनां प्रोक्ता निःसरणं जिनैः ।
येषां तु शून्यतादृष्टिस्तानसाध्यान् बभाषिरे ॥

( म० का० १३-८ )

---

८१. प्रज्ञापारमिता ज्ञानमद्वयं सा तथागतः । (अभिसमयालङ्कारे पृ० १४३) एतदेव च प्रज्ञापारमिताशून्यतातथताभूतकोटिधर्मधात्वादिशब्देन संवृतिसत्यमुपादायाभिधीयते । ( बो० च० पञ्जिकायाम्—पृ० ४२१ )

"एवं येषां शून्यतायामपि भावाभिनिवेश , येनेदानी म तेषां तस्या भावाभिनिवेशो निषिध्यतामित्यतो महाभैषज्येऽपि दोषमद्भिगम्यान् परमचिकित्सकैर्महावैद्यैस्त्यागतै प्रख्याता एव ते ।"

( म० वा० वृ० पृ० ८८ )

अत्रेद विचारणीय यद् यथा जागरितगतधर्मस्वभावविनिश्चयरूपायाः प्रज्ञापारमिताया परिनिष्पत्तिस्तथैव स्वप्नगतधर्मस्वभावविनिश्चयरूपाया प्रज्ञापारमितायाश्चापि परिनिष्पत्ति स्यात्तदानयोरुभयोर्वैलक्षण्यं किञ्चिदस्ति न वा । यद्यस्ति तर्ह्यनयो कतरा प्रज्ञापारमिता श्रेष्ठा प्रधानभूता वा । अत्र निर्णेतुमनुभव एव प्रमाणम् । अनुभवो सत्यो मृषा च । एतेषां निर्णय केन कथ वा कर्तुं शक्यते । अत कश्चिन्नित्य साक्ष्युपगन्तव्य । अत एव च *श्रीगौडपादाचार्येणोक्तम्—*

तस्मान्न जायते चित्तं चित्तदृश्यं न जायते ।
तस्य पश्यन्ति ये जातिं खे वै पश्यन्ति ते पदम् ॥

( मा० का० ४-२८ )

अयमर्थो यद् ये बौद्धाश्चित्तस्य निरालम्बने निराधार एव जातिं मन्यन्ते ते आकाशे भ्रमता पक्षिणा पदचिन्हमपि ज्ञातु शक्नुवन्ति । यथैतन्निरालम्बे आकाशे भ्रमता पक्षिणा पदचिन्हज्ञान यथा न सम्भव तथैवाकाशवन्निर्मले चित्तस्वरूपे चित्तस्य जन्मासम्भव तथा चित्तेन चित्तस्वरूपमपि द्रष्टुमशक्यम् ।

एवञ्चोपरितनविवरणेनेदस्पष्टमवगन्तु शक्यते यद् बौद्धदर्शन उपनिषत्प्रभाव प्रभूततरस्तथा बौद्धैर्विद्वद्भिर्येन केनापि कारणेनोपरितनवर्णितकारणेन वा यत् किमप्यौपनिषददर्शनबौद्धदर्शनयोर्मध्येऽन्तरमुपस्थापित तथा तत्समन्वेतु श्रीगौडपादाचार्येण कियत्प्रयतितम् ।

### बौद्धदर्शने योगदर्शनप्रभावः

एवं बौद्धदर्शने उपनिषत्प्रभावस्तु लक्ष्यत एव, अतिप्राचीनतमस्य[८२] योगदर्शनस्यापि प्रभावो लक्ष्यते। युक्तमपीदं यतो हि भगवान् बुद्धः स्वयं योग्यासीत्तच्छिष्येष्वपि योगपरम्पराधिगम्यते। इदं प्रसिद्धं यद् भगवान् बुद्धो योगबलेनैव लोकोत्तरां शक्तिमवाप्तुमकामयत। बौद्धवाङ्मये यमनियमध्यानधारणासमाध्यृद्धिसिद्धिप्रभृतीनां योगशास्त्रोदितानां वर्णनमुपलभ्यते। बौद्धा ईश्वरस्यात्मनश्चास्तित्वं नाङ्गीकुर्वन्ति किन्तु दुःखस्यात्यन्तनिवृत्तिं निर्वाणपदप्राप्तिं च कामयन्ते। इदमुभयमेव तेषामुद्देश्यम्। अस्योद्देश्यस्य च पूर्त्यै योगशास्त्रोपदिष्ट एव मार्गोऽनुसृतः। दीघनिकाये भगवता स्पष्टमुक्तं यद् भिक्षुभिर्मोक्षसिद्ध्यै प्रयतितव्यमुपगमनादिकर्म धातुपूजा तु ब्राह्मणक्षत्रियादीनां कर्म—

"युष्माभिः भिक्षुभिः मोक्षसाधने तल्लग्नैर्भवितव्यम्।"

( दीघनिकाये २-१४१ अनुवादः )

इदं कथावत्थुग्रन्थे १७-१ तथा अभिधर्मकोशेऽप्युपलभ्यते—

पुण्यनिर्वाणनिर्वेधभागीयं कुशलं त्रिधा।

( अ० घ० को० ४-१२५ )

योगप्रवर्तितं कर्म ससमुत्थापकं त्रिधा।
लिपिमुद्रे सगणनं काव्यं संख्या यथाक्रमम्॥

( तत्रैव ४-१२६ )

..............मोक्षस्त्वनुत्तरः।

( तत्रैव ४-१२७ )

---

८२ शाक्यमुनेर्भगवतो बुद्धस्याविर्भावात्पूर्वकालत एव योगदर्शनं सुप्रतिष्ठितमासीत्। द्र०—ऋग्वेदे ८।७८।१-३ २।१८।१, ( [illegible] ) कठोपनिषदि १।२।१२, १।३।१०-११, २।६।१८, श्वेताश्वतरोपनिषदि १।८-९, ३।२, ६।१३, बृ० आ० उप० ४।३।१०, महाभारते शा० प० ३१७।१०, इत्यादिस्थलेषु योगदर्शनसिद्धान्ता उपलभ्यन्ते। एतदर्थं पातञ्जलयोगदर्शनस्य भूमिकायां [illegible] [illegible], [illegible] [illegible] [illegible] [illegible], [illegible] [illegible] [illegible] बहु द्रष्टव्यम्।

अत्र भाष्ये-नहि निर्वाणाद् विशिष्टाद् विशिष्टतरमस्ति।
तच्च सर्वेभ्यो विशिष्ट कुशलनित्यत्वात्।

**प्राक्तेभ्यो मोक्षभागीय क्षिप्रं मोक्षस्त्रिभि र्भवैः।**

( तत्रैव ६-२४ )

पापाना रागीनभिभूय दैवी मानुषी च श्रियमभिभूय निर्वाणपरायणा सवर्तन्ते ( अभिधर्मकोपभाष्ये ७-३४ )

मोक्षस्य कृते उपनिषत्सु अमृतशब्दस्य प्रयोग —"अमृतत्वस्य तु नाशास्ति वित्तेनेति।" ( बृ० आ० उ० २।४।२ ) बौद्धैरपि मोक्षस्य कृतेऽमृतशब्द प्रयुक्त —भगवता बुद्धेन बुद्धत्वप्राप्त्यनन्तरमुक्तम् "अहममृत प्राप्तवानस्मि।' ( मज्झिमनिकाये १।१।७२ ) तथा महावग्गग्रन्थे १।६।१२ सजयानुयायिनौ शारिपुत्र मौद्गल्यायनश्च सघे प्रवेशसमये परस्पर प्रतिजानीत स्म यद् आवयोर्य प्रथमममृत प्राप्स्यति स ब्रह्मचारिण उपदक्ष्यति। एव च बौद्धाना परममुद्देश्य मोक्ष एवेति सिद्ध्यति।[८३] बौद्धाना मते निर्वाणमेव च सत् तत्त्वम्।[८४] एतच्च नागार्जुनेन चन्द्रकीर्तिना च स्पष्टीकृतम्—

**अनिरोधमनुत्पादमनुच्छेदमशाश्वतम्।**
**अनेकार्थमनानार्थमनागममनिर्गमम्॥**

( म० शा० ११ )

**य प्रतीत्यसमुत्पाद प्रपञ्चोपशम शिवम्।**
**देशयामास सम्बुद्धस्त वन्दे द्विपदा वरम्॥**

( म० शा० १२ )

---

८३ द्र० कायमहोदयस्य—फर्स्ट इयर्स आफ इण्डियनिज्म ग्रन्थ पृ० ३०३।

८४ द्र० पुसिनमहोदयस्य—केमिन टु निर्वाण ग्रन्थ ।

अत्र चन्द्रकीर्तिः—सर्वप्रपञ्चोपशमशिवलक्षणं निर्वाणं शास्त्रस्य प्रयोजनं निर्दिष्टमिति।

( म० वृ० पृ० ११ )

पुनः—इह हि सर्वेषां प्रपञ्चानां निमित्तानां च य उपशमोऽप्रवृत्तिस्तन्निर्वाणम्। ·······क्लेशप्रहाणेन वा प्रपञ्चोपशमो निरवशेषवासनाप्रहाणेन शिवः इदमेव च तत्त्वं निर्विकल्पकमपि कथ्यते। यथाह

"निर्विकल्पकं तत् ( तदिति तत्त्वम्, म० का० १८-९ ) विकल्पश्चित्तप्रचार.। तद्रहितत्वात्तत्त्वं निर्विकल्पम्। यथोक्तं सूत्रे। परमार्थसत्यं कतमत्। यत्र ज्ञानस्याप्रचारः। कः पुनर्वादोऽक्षराणामिति। एव निर्विकल्पम्।" ( तत्रैव )

एवमेव बोधिसत्त्वभूमावप्युक्तम्—

"स खलु पारमार्थिक. स्वभावः सर्वधर्माणां निर्विकल्पस्यैव ज्ञानस्य गोचरो वेदितव्य.।" ( बो० स० भू० पृ० ४४ )

योगदर्शनेऽपीदमेव असम्प्रज्ञातसमाधिशब्देनोच्यते—"सर्ववृत्तिनिरोधे त्वसम्प्रज्ञातः समाधि.।" ( यो० सू० १-१ व्या० भा० )

"विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्यः।" ( यो० सू० १-१८ )

अत्र व्यासभाष्ये—सर्ववृत्तिप्रत्यस्तमये संस्कारशेषो निरोधश्चित्तस्य समाधिरसम्प्रज्ञातः।

अस्यार्थः—न तत्र किञ्चित्सम्प्रज्ञायत इत्यसम्प्रज्ञात इति, असम्प्रज्ञात एव निर्विकल्पक उच्यते—

"चित्तं निरालम्बनमभावप्राप्तमिव भवतीत्येष निर्बीजः समाधिरसम्प्रज्ञातः। ( यो० सू० १-१८ व्या० भा० ) अत पर निर्बीजसमाधिलक्षणं चोक्तम्— "तस्यापि निरोधे सर्वनिरोधान्निर्बीज समाधि।"

( यो० सू० १-५१ )

अस्य व्यासभाष्ये—सह कैवल्यभागीयै. संस्कारैश्चित्त निवर्तते तस्मिन्निवृत्ते पुरुषः स्वरूपमात्रप्रतिष्ठोऽत शुद्ध केवलो मुक्त इत्युच्यत इति।

एवमेव पञ्चदश्यामप्युक्तो निर्विकल्पकसमाधिः—

मग्नस्याब्धौ यथाक्षाणि विह्वलानि तथास्य धीः ।
अखण्डैकरसं श्रुत्वा निष्प्रचारा बिभेत्यतः ॥
( प० द० २-२७ )

गौडाचार्या निर्विकल्पे समाधावन्ययोगिनाम् ।
साकारब्रह्मनिष्ठानामत्यन्तं भयमूचिरे ॥
( प० द० २-२८ )

एवञ्च निर्वाणं निर्विकल्पकसमाधिरसम्प्रज्ञातसमाधिश्चैव मेवेत्यायातम् । अथ निर्विकल्पकसमाधिरेव बौद्धागमेषु सुप्रसिद्धेषु नवसु ध्यानेष्वन्तिम ध्यानम् । तत्र चत्वारि रूपध्यानानि, चत्वार्यरूपध्यानानि, नवम च संज्ञावेदितनिरोधम् । विवृतञ्चैतद् विशुद्धिमग्गे ५५२-५५८ पृष्ठेषु । अस्मिन् संज्ञावेदितनिरोधे परम सुख जायत इति संयुक्तनिकाये ५-२२८ पृष्ठे वर्णितम् । निर्वाणस्य चैतावतैव महत्त्व यत्तत्रापि किञ्चिद् वेदन न भवति—

"किं पनेत्थ ( निर्वाण ) आवुसो सारिपुत्त सुख यदेत्थ नत्थि वेदयितन्ति । एतदेव खत्थ आवुसो सुख यदेत्थ नत्थि वेदयित ॥" ( अङ्गुत्तरनिकाये ४-४१४ ४१८ )

इत्थ योगशास्त्रोदितासम्प्रज्ञातसमाधेः बौद्धाभिमतनिर्वाणस्य चैकरूप्यम् । लङ्कावतारसूत्रेऽतिस्पष्ट निर्वाणनिर्विकल्पयोरैक्यमुक्तम्—

"मत्प्रवचने पुनर्महामते विकल्पकस्य मनोविज्ञानस्य व्यावृत्तिर्निर्वाणमिति ।" ( ल० अ० सू० पृ० १२६ )

निर्वाणसाधनमप्युभयत्र समम् । बौद्धनिर्वाणे साधनम्—क्लेशप्रहाणम्, निरवशेषवासनाप्रहण च[८५] । योगनिर्वाणेऽपि साधन वासनारहित्यमेव । यथा—

योगश्चित्तवृत्तिनिरोध । ( यो० सू० १-२ ), अभ्यासवैराग्याभ्या

८५—चन्द्रकीर्ति —म० का० वृ० पृ० ११ ।

तन्निरोधः । ( यो० सू० १-१२ ) तत्र स्थितौ यत्नोऽभ्यासः । ( यो० सू० १-१३ )[८६],

एतदनन्तरमुक्तम्—

दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम् ।

( यो० सू० १-१५ )

एतावतोभयत्र निर्वाणाय विषयनैरपेक्ष्यमावश्यकम् । योगे यो हि चित्तवृत्तिनिरोधो मोक्षार्थमुपपादितः स बौद्धदर्शनग्रन्थेऽनेकधोपलभ्यते—

**विज्ञप्तिमात्रतायां चित्तमवस्थितं भवति ।**

( त्रिंशिकायाम् पृ० ४३ )

**चित्तमात्रं निराभासं विहारो बुद्धभूमि च ।**
**एतद्धि भाषितं बुद्धैः भाषन्ति भाषयन्ति च ।**

( ल० अ० सू० १०-१०५ पृ० २७६ )

**चित्तमात्रमतिक्रम्य निराभासे स्थितं फलम् ।**
**चित्तमात्रमतिक्रम्य निराभासमतिक्रमेत् ।**

( तत्रैव १०-११० पृ० २७६ )

**निराभासस्थितो योगी महायानं न पश्यते ।**

( त० १०-१५७ पृ० २९९ )

**तदा योगी ह्यनाभासं प्रज्ञया पश्यते जगत् ।**
**निमित्तं वस्तु विज्ञप्तिर्मनोविस्पन्दितं च यत् ।**
**अतिक्रम्य तु पुत्रा निर्विकल्पाश्चरन्ति ते ।।**

( त० १०-९४ पृ० २६६ )

---

८६—तुलना कार्या—समाधिविशेषाभ्यासात् ( न्यायदर्शने—४-२-३८ तदर्थं यमनियमाभ्यामात्मसंस्कारो योगाच्चाध्यात्मविध्युपायैः । ( न्या० द० ४-२-४६ )

आलम्ब्यालम्ब्यविगतं यदा पश्यति संस्कृतम् ।
निश्चितं चित्तमात्रं हि चित्तमात्रं वदाम्यहम् ॥
( ल० ३-२५ )

माघ्रास्वभावसंस्थानप्रत्ययैर्भावविवर्जितम् ।
निष्ठाभावः परं ब्रह्म एतां मात्रां वदाम्यहम् ॥
( ल० ३-२६ )

वेदना चेतना संज्ञा च्छन्दः स्पर्शो मतिः स्मृतिः ।
मनस्कारोऽधिमोक्षश्च समाधिः सर्वचेतसि ॥
( ल० ३-२४ )

निरोधश्चित्तचैतानां विपाकस्ते बृहत्फलाः ।
( ल० ३-४१ )

सौगतनये पञ्चविधेन बलेन परमार्थोऽधिगम्यते । इमानि पञ्चबलानि श्रद्धावीर्यस्मृतिसमाधिप्रज्ञारूपाणि । यथा—

अङ्गुत्तरनिकायस्य तिकनिपाते आपायिकवग्गो इत्यत्र निर्वाणसाधकतया ब्रह्मचर्यस्य चेत सम्प्रसादस्य ( श्रद्धायाः ) च माहात्म्यमुपवर्णितम् ।

कायमुनिं वाचोमुनिं चेतोमुनिं अनासवम् ।
मुनिमोनेय्यसम्पन्नं आहु सब्बप्पहायिन ति ॥
( अ० नि० ३ नि० १२ वग्गो )

दीघनिकाये षष्ठे महालिसुत्ते निर्वाणसाक्षात्कारस्योपाया वर्णिताः । तत्र शीलसमाधिप्रज्ञा एवोपायत्वेन निर्दिष्टाः । ( दीघ० पृ० ५८ )

एवमेव स्मृतिसमाधिप्रज्ञाना परमार्थाय महत्वं दीघनिकायस्य द्वितीये सामञ्जफलसूत्रेऽपि वर्णितम् ।

एवमेव पञ्चबलविषयको विचारः—अभिधर्मसमुच्चये सत्यपरिच्छेदे ( पृ० ७४ ) अप्युपलभ्यते ।

योगशास्त्रेऽपीमान्येव बलानि—

श्रद्धावीर्यस्मृतिसमाधिपूर्वक इतरेषाम्। ( यो० सू० १-२० ) अत्र-व्यासभाष्ये-उपायप्रत्ययो योगिना भवति।

अत्र श्रीवाचस्पतिमिश्राष्टीकायामाहु—योगिना तु समाधेरुपाय-क्रममाह-श्रद्धा०। एवमेव योगशस्त्रे श्रद्धाशब्देन यो हि गृह्यते स एव सौगतनयेऽपि गृह्यते। यथा—

"श्रद्धा चेतस सम्प्रसाद।" ( यो० सू० व्यासभाष्ये १-२० )

आचार्यवसुबन्धुरपि एवमेवाह —

"इमे दश धर्मा कुशले चेतसि नित्य भवन्ति तत्र श्रद्धा चेतस प्रसाद। ( अभिधर्मकोशभाष्ये २-२५ )

श्रद्धा प्रसाद प्रीतिस्तु सौगतस्य द्विधागमात। ( तत्रैव ८–९ ) यथा योगशास्त्रे चित्तवृत्तिनिरोधोपाय समाधिस्तथैव सौगतनयेऽपि। यथा योगशास्त्रे—

तदेवार्थमात्रनिर्भास स्वरूपशून्यमिव समाधि ( यो० सू० ३-३ ) अत्र व्यासो व्याचष्टे—ध्यानमेव ध्येयाकारनिर्भास प्रत्ययात्मकेन स्वरूपेण शून्यमिव यदा भवति ध्येयस्वभावावेशात्तदा समाधिरित्युच्यते। यथा च सौगतनये—

दुविधो हि समाधि उपचारसमाधि च अप्पनासमाधि च। द्वीहा-कारे हि चित्त समाधीयति उपचारभूमिय( उपचारावस्थाय—टीका ) वा पटिलाभभूमिय ( ज्ञानस्स अधिगमावस्थाय—टीका )

( विसुद्धिमग्गो )

बुद्धघोषेणापीदमेव प्रतिपादितम्—

एकग्ग चित्त आरम्भणे अप्पेतीति अप्पणा।—उपगन्त्वा विचरण-वसेन उपविचारो।

( अट्ठसालिनी–पृ० १४२-१४३ )

अप्रत्यक्षाचार्यास्तार्थ विभावनीटीकायाम् (अ० सा० १-१७) द्रष्टव्य ।

एव समाधिद्वयम्—उपचारसमाधि, अर्पणासमाधिश्च। उपचारसमाधौ चित्त क्षण विषयमालम्बते क्षण च नालम्बते । अर्पणासमाधौ चित्त निमित्तमालम्ब्य चिर तत्र तिष्ठति। इत्यनयोरपि व्युत्पत्ति —आलम्बनमुपगम्यानेन चरतीत्युपचारसमाधि । ऐकाग्र्य चित्तमालम्बने। चित्तमनेनालम्बनेऽर्पयतीत्यर्पणासमाधि ।

अनेन प्रकारेण यागनये सौगतनये चार्थान्तिकदुखनिवृत्तये साक्षात् निर्वाणाय वा समाधे महत्त्वम्, समाधौ च चित्तस्य निर्विकल्पावस्था। तनेद यत्तु ज्ञायते यदुभयमते सविषयमेव चित्त दुखहेतु, निर्विषयमेव चित्त सुखहेतु । अत सौगताश्चित्तस्यैतावन्महत्त्व वदु । त उचु —

चित्त मनो विज्ञान विज्ञप्तिश्चेति पर्याया । ( विंशिकायाम् पृ० ३ )

चित्त मनोऽथविज्ञानमेकार्थम्। ( अभिधर्मकोषे २।३४ )

चित्त मनोऽथ विज्ञानमित्यप्यनर्थान्तरम्। ( मध्यमकवृत्तौ पृ० ३०८ )

चित विकल्पो विज्ञप्ति मनो विज्ञानमेव च।

आलयस्त्रिभवश्चेष्टा एते चित्तस्य पर्यया ।(लङ्कावतारसूत्र१०।४४९)

एवमेव सधिनिर्मोचने २।९४, ३।३८, ४।९६ दीघनिकाये च १।२१।

इद चित्त यदा च विज्ञप्तिमात्रतावस्थापन्न भवति तदा विज्ञप्तिमात्र प्रतिष्ठितमुच्यते—

**यदा त्वालम्बन ज्ञान नैवोपलभते तदा।**

**स्थित विज्ञानमात्रत्वे ग्राह्याभावे तदग्रहात् ॥**

( त्रिशिकायाम् पृ० २८ तथा विज्ञप्तिमात्रतासिद्धौ पृ० ५८४ )

'यदा त्वालम्ब्यमर्थ नोपलभते ज्ञान तदा विज्ञप्तिमात्रव्यवस्थापन भवति। विज्ञप्तेरपि ग्राह्याभावाद् ग्राहकस्याभाव । तदग्रहणान्न प्रवर्तते ज्ञानम्।" ( लङ्कावतारे पृ० १६९ )

एव च सर्वानर्थमूल चित्त मनो वा, तथा सर्वानन्दसाधनममनस्ता निर्विकल्पभाव चित्तनिरोधो वा उभयमते तुल्यम्।

एतच्चित्तकल्पित एव जीववाद जगच्च चैतसिकमिति सौगतनय । एतन्नये—

आत्मसत्त्वजीवजन्तुपुरुषपुद्गलादिशब्दा पर्यायवाचिन ।[87]

इय जीवकल्पना सौगतनये सत्कायदृष्टिशब्देनाभिधीयते ।[88] पालि-भाषाया चेय जीवकल्पना अत्तवाद कथ्यते । अत्तवाद अर्थात् आत्मवाद आत्मदृष्टिर्वा । इय जीवकल्पना सत्कायदृष्टिर्वा बौद्धनये सर्वानर्थ-मूलमित्युक्तम्—

"तथा ह्यात्मान पश्यत सस्कृतेपु स्कन्धधात्वायतनेष्वहमिति दृढ-तरमुत्पद्यते स्नेह । ततस्तद्दु खप्रतिकारेच्छया—

यः पश्यत्यात्मानं तत्रास्याहमिति शाश्वतस्नेहः ।
स्नेहात्सुखेषु तृष्यति तृष्णादोषास्तिरस्कुरुते ॥
गुणदर्शी परितृष्यन्ममेति तत्साधनान्युपादत्ते ।
तेनात्माभिनिवेशो यावत्तावत्तु संसारः ॥
आत्मनि सति परसंज्ञा स्वपरविभागात् परिग्रहद्वेषौ ।
अनयोः सम्प्रतिबद्धा सर्वे दोषाः प्रजायन्ते ॥

( बोधिचर्यावतारे पृ० ४९१-४९३ )

अनेन प्रकारेण सौगता मोक्षमोक्षसाधनचित्तजीवजगद्विषये योग-शास्त्रेण भूयसा प्रभाविता । तेन योगशास्त्रोदित चित्तमेव जीवत्वेना-त्मत्वेन चाधकल्प्य जीवस्यात्मनो वा दु खमूलत्व तिरस्क्रियता चाकुर्वन् । चेतस आहड्०कारित्वेन जीवस्यात्मनो वाहड्०कारित्वमड्०गीकुर्वन्तस्तस्य हेयत्वं प्रतिपादितवन्त । एतच्च शान्तरक्षितेन सुस्पष्टमुक्तम्—

---

८७ द्र० महाव्युत्पत्ति २०७, अभिधानप्पदीपिका ९७, शिक्षासमुच्चय — पृ० १७२, २३६ सुत्तनिपात ८०१ ।

८८, म० का० २३।५ ।

अहङ्काराश्रयत्वेन चित्तमात्मेति गीयते ।
संवृत्या वस्तुवृत्त्या तु विषयोऽस्य न विद्यते ।।

( तत्त्वसङ्ग्रहे २०४ )

योगशास्त्रे आहङ्कारित्वे यथा चित्त क्लेशदु खादीनामाश्रयस्तथैवास्माऽपि क्लेशदु खादीनामाश्रय इति सौगतविदुषा मतम्—

सत्कायदृष्टिप्रभवानशेषान् क्लेशांश्च
दोषांश्च धिया विपश्यन् ।
आत्मानमस्या विषयं च बुद्ध्वा
योगी करोत्यात्मनिषेधमेव ।।

( मध्यमकावतारे ६-१२० )

अत्र पद्ये 'योगी इतिपदोपादानेन योगदर्शनसौगतदर्शनयो सम्मित्व महाविदुषा चन्द्रकीर्तिना स्वयमेवावेदितम् ।

एतावदेव न किन्तु सौगता योगशास्त्रादेव पुनर्जन्मस्वर्गनरकपुण्यापुण्यमोक्षपरमात्यन्तिकक्षेमसिद्धान्तान् गृहीतवन्त[८९] ।

अनेनेद प्रतीयते यत्सौगताचार्या योगदर्शनेनातिमात्र प्रभाविता आसन् । तेन योगदर्शनप्रतिपादितान्येव आत्मचित्तमोक्षमोक्षोपायसम्बन्धीनि दर्शनतत्त्वानि प्रायश परिगृहीतवन्त क्वचित्क्वचिच्च सुबहु परिष्कृतवन्त । ते धीधना प्रतिभावन्तश्चासन्नेव । तेन यदि ते परिगृहीतानीमानि

८९—द्र० आचार्यनरेन्द्रदेवमहोदयस्य लेख —सारस्वतीसुषमापत्रिकायाम् (काशीस्थराजकीय स०म०वि० प्रकाशनम् २००७वै०स०) पृ०२६ बौद्धेषु निर्वाणस्वरूपम् । तत्र बौद्धानामात्मानङ्गीकारे स इदमपि सिद्धान्तयति यत् अस्मिन् वाक्छलमस्ति, बौद्धो या सन्तानि कल्पयति तस्यात्मन सर्वं सामर्थ्यं लभ्यते ।

( उक्तपत्रिकायाम् ३०पृष्ठे )

बौद्धा आत्मवादिन , धार्मिका , योगदर्शनप्रभाविताश्चेति द्रढयितु रिजडेविड–पुसीन-सेनार्टमहोदयानाम भिमतिरपि अत्रैव लेख उल्लिखिता ।

तत्त्वानि सौगतनये नवीनानीव परिलक्ष्यन्ते तदा तत्र नाश्चर्यम्। तेषां प्रतिभया परिष्कृतप्रणाल्या चमत्कृतानि तान्याश्चर्यवहानि भविष्यन्त्येव। अस्यैवायं प्रभावो यत्ते सौगता अनात्मवादिन इवौपनिषदसिद्धान्तविरोधिन इव लक्ष्यन्ते बहुभि र्विद्वद्भिस्त्वेवमेव समर्थ्यन्ते। तदत्र प्राचीनसौगताना निर्वचनप्रणाल्यपि विचित्रैवासीत्। येनैकस्यैव निर्वचनस्यापरोऽप्यर्थो ग्रहीतुं शक्यते। अतो हेतोः परपरतरवार्तिन. सौगताचार्याः स्वीयपूर्वतराचार्यवचांस्यन्यथैव व्याचख्युः, बौद्धदर्शने चानेकान् सिद्धान्तभेदान् दर्शनभेदांश्च जनयामासु। अश्वघोषासङ्गवसुवन्धुदिङ्नागार्जुनप्रभृतय अत्र साक्षिभूता एव हीनयानमहायानविज्ञानवादमाध्यमिकवादास्तथा पुनः प्रासङ्गिकास्वतन्त्रभेदेन विज्ञानवादमाध्यमिकवादयोः परस्पर भेदोऽत्र निदर्शनभूताः। नैतावत्येव भेदकथा किन्तु महाराजाशोकस्य काले बौद्धाना प्रथमसभाया य उपस्थितास्ते 'थेरा' इति पदेन व्यवहृताः। पुन द्वितीयसभायां ये कारणवशाद् थेरावादान्निष्कासिता धर्मगुरवस्ते महासंघिका अभूवन्। एव प्रकारेण भगवतो बुद्धस्य निर्वाणानन्तर शतकद्वयवर्षाभ्यन्तर एव बौद्धानामष्टादश सम्प्रदाया अजायन्त। येषामिमानि नामानि—१-थेरा २–महासंघिका, ३–गोकुलिका, ४–एकव्वोहारिक, ५–पण्णति, ६–बाहुलिक, ७–चैत्तिय, ८–सब्बत्थि, ९–धर्मगुत्तिक, १०–कस्सपीय, ११–सकत्तिक, २१–सुत्त, १३–हिमवत, १४–राजगिरीय, १५–सिद्धत्थिक, १६–पुव्वसेलिग, १७–अपरसेलिय, १८–वजिरिय।

महराजकनिष्कसमये एषु सम्प्रदायेषु केचन लुप्ताः, किन्तु पुनरपि केषाञ्चिदपरेषा सम्प्रदायाना जन्मना पुनरपि अष्टादश सम्प्रदायाः प्रावर्तन्त। इमे चतुर्षु सम्प्रदायेषु विभक्ता आसन्—

१—आर्यसर्वास्तिवाद

१—मूलसर्वास्तिवाद, २—काश्यपीयः, ३—महीशासकः, ४—धर्मगुप्तीयः, ५—बहुश्रुतीयः, ६—तामरशारीयः, ७—विभज्यवादिन्।

२—आर्यसम्मतीय.

८—कुरुकुल्लव, ९—आवन्तिक, १०—वात्सीपुत्रीय। इमे दश वैभाषिकसिद्धान्तिन आसन्।

३—आर्यमहासाङ्घिक

११—पूर्वशैल, १२—अपरशैल, १३—हैमवत, १४—लोकोत्तरवादिन्, १५—प्रज्ञप्तिवादिन्।

४—आर्यस्थविर

१६—महाविहार, १७—जेतवनीय, १८—अभयगिरिवासिन्। इमे हीनयानानुयायिन वैभाषिकसौत्रान्तिकसिद्धान्तिन आसन्।

पश्चादेषु केचन महायानानुयायिनो भूत्वा योगाचारमाध्यमिकसिद्धान्तिनोऽभूवन्। इद बौद्धाचार्याणा निर्वचनप्रणाल्या विचित्रताया फलम्। येनैकस्यैव भगवतो बुद्धस्यैकाकारस्यैवोपदेशस्य तद्भक्ता भिन्न भिन्नमर्थमन्वभूवन्। अतो नेदमाश्चर्यावह यदुपनिषत्प्रभावितस्य योगदर्शनप्रभावितस्य च भगवद्बुद्धोपदेशस्या यथाव्याख्यया कालान्तरे बुद्धोपदेशो बौद्धदर्शन चौपनिषददर्शनयोगदर्शनविरोधीव पर्यलक्ष्यत।

एतन बौद्धदर्शने उपनिषत्प्रभावेण योगदर्शनप्रभावेण चेदमायात यत्प्राचीना बौद्धाचार्या उपनिषत्सिद्धान्तेन योगदर्शनसिद्धान्तेन च भूयसान्त प्रभाविता आसन्। अतस्तेषा ग्रन्थे उपनिषत्सिद्धान्ता योगदर्शन सिद्धान्ता उपनिषद्योगदर्शनशब्दाश्च भूयास प्रविष्टा। तेन गौडपादकारिकाग्रन्थे सौगताना सिद्धान्ता अर्था शब्दाश्च न, किन्तु सौगतैरेवोपनिषद्योगदर्शनयो सिद्धान्ता अर्था शब्दाश्च परिगृहीता। कालान्तरे दर्शनशास्त्रे प्रसिद्धिमापन्नास्ते एव शब्दा श्रीगौडपादेन गृहीता, विशेषतो बौद्धमताना खण्डनाय तत्समानैरेव शब्दैस्तत्खण्डनमतिसूपयोगि स्यादिति मत्वा सौगतसमानाश्शब्दा परिगृहीता। अतो न श्रीगौडपादनिर्मित माण्डूक्यकारिकाग्रन्थ सौगतसिद्धान्तप्रभावित।

आचार्यशङ्करात् पूर्ववर्तिष्वद्वैतवेदान्ताचार्येषु श्रीगौडपाद तथा श्रीशङ्करात् किञ्चित्पूर्वकालभव श्रीशङ्करस्य समकालभव वा

श्रीमण्डनमिश्रं परिहाय न कोऽप्येतादृश आचार्यो यस्याविकलोऽद्वैतवेदान्तग्रन्थ उपलभ्येत । यद्यपि श्रीमण्डनस्य ब्रह्मसिद्धिग्रन्थः सम्पूर्णः प्राप्यते, किन्तु तत्रापि अद्वैतसिद्धान्तस्य सर्वा प्रक्रिया सक्रमा अक्रमा वा नोपलभ्यते । एवमेव श्रीभर्तृहरेः वाक्यपदीयग्रन्थः प्राप्यते, किन्तु मुख्यतः स ग्रन्थो व्याकरणप्रधानोऽस्ति व्याकरणपदार्थप्रतिपादनप्रसङ्गे मध्ये मध्येऽस्मिन् ग्रन्थेऽस्य स्वोपज्ञटीकाया च शब्दब्रह्माद्वैतसिद्धान्तलवस्तत्र तत्र संकेत्यते । शब्दब्रह्माद्वैतस्य सक्रमा अक्रमा वा सर्वा प्रक्रियात्रापि नोपलभ्यते । एषु श्रीशङ्करपूर्ववर्तिषु केवलमेक श्रीगौडपाद एवैतादृश आचार्यो यस्य माण्डूक्यकारिकाग्रन्थः सम्पूर्ण उपलभ्यते । तत्रापि चाद्वैतसिद्धान्तस्य सर्वा प्रक्रिया सक्रमा प्राप्यते । अस्य माण्डूक्यकारिकाग्रन्थस्य चतुर्षु प्रकरणेषु क्रमशः प्रथमे प्रकरणेऽद्वैतसिद्धान्तानुसारमुपायोपेयभावप्रदर्शनम्, द्वितीयतृतीयचतुर्थेषु वैतथ्याद्वैतालातशान्तिषु प्रकरणेषु आत्मातिरिक्तस्य मिथ्यात्वम्, अद्वैतस्यैव पारमार्थ्यम्, संसारस्यालातचक्रवद् भ्रममात्रत्वं च प्रतिपादितम् । अत्र जगतः कल्पितत्वम्, कल्पनाया च माया अविद्या वा कारणमित्यपि निरूपितम् । एवं चाविद्यानिरासे, अद्वैततत्त्वेऽज्ञानात्वे वा ज्ञाते शिवरूपस्याद्वैतरूपस्य प्रपञ्चोपशमरूपस्य स्वस्वरूपस्यावगतिर्मोक्षो भवतीति प्रदर्शितम् । अत्रात्मनि जागरितस्वप्नसुषुप्तिस्थानत्रयवत्त्वप्रतिपादनपुरस्सरं वैश्वानरत्वतैजसत्वप्राज्ञत्वारोपितधर्म निरूप्यात्मनो बहिष्प्रज्ञत्वान्त प्रज्ञत्वघनप्रज्ञत्वारोपितसंज्ञावत्त्वं स्थूलभुक्त्वसूक्ष्मभुक्त्वानन्दभुक्त्वारोपितधर्मवत्त्वं च प्रतिपादितम् । उक्तमेतत्सर्वं स्थानसंज्ञाधर्मादिकं कल्पितमाविद्यकमिति च । अत्राविद्याया द्वैविध्यम्—एका कारणरूपा अपरा कार्यरूपा च । कारणाविद्या नामात्मतत्त्वाग्रहण यया सुषुप्तिस्थानस्थानिधर्मा आत्मनि समारोप्यन्ते । कार्याविद्या नाम अन्यथाग्रहण यया जागरितस्वप्नस्थानस्थानिधर्मा आत्मनि समारोप्यन्ते । एषा चाविद्या नात्मनः स्वाभाविको धर्मः, किन्तु जागरितप्रधानदृष्टिजनितविपर्यासमात्रम् । अस्य विपर्यासस्य चावस्थात्रयसाक्षिदृष्ट्यवलम्बनजनितेन स्वात्मतत्त्वयाथात्म्यज्ञानेन नाशे सति निष्प्रपञ्चस्वात्ममात्रेणैवावस्थानं

मोक्ष । एवमध्यारोपापवादाभ्या निष्प्रपञ्चमद्वैततत्त्व प्रपञ्चितम् । इदमत्र वैशिष्ट्य यत्प्रथमे प्रकरणे श्रुतिद्वारा सर्वमप्यद्वैततत्त्व प्रतिपाद्य युक्त्यादिद्वारापरेषु त्रिषु प्रकरणेषु तदेव सुससाधितम् । इदमपि वैशिष्ट्य यत्प्रणवस्यैवोपायत्वमुपेयत्व तथा प्रणवस्यैव मात्रावर्णनद्वारा जागरितादि—वैश्वानरादिबहिष्प्रज्ञादिस्थूलभुगादिरूपवर्णन तथा अमात्रस्यैव प्रणवस्य तुरीयरूपत्वे सर्वात्मरूपत्वेन ब्रह्मरूपत्वेन वर्णनम् अत्र प्रणवस्य तुरीयरूपत्वे सर्वात्मरूपत्वेन ब्रह्मरूपत्वेन च वर्णनम् । प्रणवस्यैव च अकारोकारमकारमात्राभि जगत्प्रपञ्चनिरूपणम् । पादशब्देनापीमेऽकारोकारमकारमात्रा विवक्षिता । पादत्रयविलक्षणेन तुरीयात्मना मात्रात्रयविधुरस्य प्रणवस्य मुख्यमेवत्वम्, तत्र वाच्यवाचकविभागाभावात् । तदेतत् परमार्थतत्त्वममात्रप्रणवत्वेन तुरीयात्मत्वेन च व्यवह्रियमाण प्रणवशब्देन ब्रह्मात्मादिशब्देन च लक्ष्यते न तूच्यते, तस्य परमार्थतत्त्वस्य अवाङ्मनसगोचरत्वात् । अत्र प्रणवस्य मात्रावर्णनपूर्वकमारोप्यमाण जगत्तथा तत्रैव मात्रार्थज्ञानपुरःसर वैश्वानरत्वप्राप्तिपूर्वक तुरीयावगतिमोक्षश्च प्रणवप्राधान्येनैव निरूपितम् । श्रीमद्गौडपादाचार्यस्यास्मिन् ग्रन्थे इद परम वैशिष्ट्य यत्तदानीन्तनसुप्रसिद्धबौद्धदर्शनशब्दैरथवा बौद्धगृहीतौपनिषदशब्दैरौपनिषदाद्वैतसिद्धान्त प्रतिपादित, मध्ये मध्ये बौद्धदर्शनस्यापसिद्धान्ततापि प्रदर्शिता, अन्ते बौद्धनयाभिमतशून्याद्वयविज्ञानाद्वययोर्न्यूनतापि प्रतिपादिता । श्रीगौडपादाचार्य स्वकाले बौद्धदार्शनिककृतौपनिषदाद्वैतविकार न्यवारयत्, बौद्धदर्शनस्य चौपनिषदाद्वैतसिद्धान्तेन सह समाञ्जस्य च समास्थापयत् । अस्यैवाचार्यस्यैवमूत स्तुत्य प्रथम प्रयास । यत्राचार्य सधायसभापया सुहृदभावेन बौद्धदर्शनस्य न्यूनता सम्प्रबोधयन् सौगतप्रभावेण मध्ये प्राप्तविरलप्रचारस्य औपनिषदाद्वैतवादस्य पुन श्रुतिद्वारा, युक्तिद्वारा च पूर्वप्रतिष्ठा समप्रापयत् ।

एतस्मिन्नध्याये सर्वमेतन्निरूपितम् । विशेषत श्रीगौडपादाचार्यविषये गौडपादकारिकाग्रन्थविषये च पाश्चात्यै श्रीवल्सरप्रभृतिभिरुद्भा-

वितस्तदनन्तरवर्तिभि प्राच्यैर्विद्वद्भि प्राधान्येन श्रीविधुशेखरभट्टाचार्य-प्रभृतिभि सम्वर्द्धित सम्पोषितस्चाक्षेप आलोचित । श्रीवलसरसतस्य प्रधानपोषके श्रीभट्टाचार्ये सौगतदर्शनशब्दसाम्येन सौगतदर्शनसिद्धान्त-साम्येन च श्रीगौडपादाभिमताद्वैतसिद्धान्ते यो हि बौद्धदर्शनप्रभाव प्रदर्शित-स्तस्यात्राध्याये निरास कृत । येषा शब्दाना सिद्धान्ताना च विषये बौद्धदर्शनशब्दत्वेन बौद्धदर्शनसिद्धान्तत्वेन च भ्रमस्ते शब्दास्ते ते च सिद्धान्ता भगवद्बुद्धत परमपूर्वतनेषु श्रुतिमन्त्रेषूपनिषद्वाक्येषु वाल्मीकिरामायणमहाभारतादिश्लोकेषु च प्राचीनकालत एव प्रचलिता सन्तीति प्रदर्श्य सौगतैरेवेमे शब्दा सिद्धान्ताश्च श्रुत्यादिभ्यो गृहीता न तु श्रीमद्गौडपादाचार्येणेति साधितम् । अन्ते च बौद्धाभिमतो माध्यमिकवादो विज्ञानवादश्च कियतांशेनोपनिषद्भिर्योगदर्शनेन च प्रभावित इत्यपि विचारितम् ।

इत्थ च श्रीगौडपादाचार्यविषये गौडपादकारिकाग्रन्थविषये चाधुनि-कानाक्षेपान् प्रक्षाल्य गौडपादकारिकाग्रन्थस्य तत्सिद्धान्तस्य चौपनिषदत्व प्रसाधितम् । अनेन श्रीगौडपादसिद्धान्त औपनिषदाद्वैतवाद इति सिद्धम् ।

( बौद्धदर्शनस्य सर्वे ग्रन्था नोपलभ्यन्ते । ये ग्रन्था उपलब्धास्तेषा श्लोककारिकापृष्ठसख्या अवलोक्य साऽत्र सन्निवेशिता । प्रायोऽल्पीयासा ये केचन ग्रन्था नोपलब्धास्तेषा श्लोकादिसख्या श्री वि० शे० भट्टाचार्य-लेखानुरोधेनावश्यकतामनुभूय यथानुरूप तदनुसारिण्य एवात्राध्याये सन्निवेशिता ।

— ० —

* श्रीगणेशायनम *

## आचार्यमण्डनमिश्रः[1]

आचार्यमण्डनमिश्र आचार्यकुमारिलभट्टस्य प्रमुखतम शिष्य पूर्वोत्तरमीमांसायां प्रथितो विद्वानभवत् । अस्य स्थितिकालविषये ऐतिहासिकानां मतभेदो वर्तते । केचन सप्तमशताब्दयां केचनाष्टमोत्तरशताब्द्यामस्य स्थितिं मन्वते ।[2] विवादपूर्णोऽयं विषयो यदयमाचार्यो भगवत्पादश्रीशङ्०

---

१—आचार्यमण्डनमिश्रश्रीसुरेश्वराचार्ययोरभेदोऽस्माभिर्नाङ्०गीक्रियते । यदि केषाञ्चन विदुषां मते केनापि बलीयसा प्रमाणेनैतयोरभेदो मन्यते, श्रीमण्डनमिश्रो भगवत्पादशङ्०करस्य समकालिकोऽङ्गीक्रियेत तदा श्रीशङ्कराचार्यतो वयसा ज्येष्ठतया प्रस्थानभेदतया च ब्रह्माद्वैतधाराप्रदर्शनाय मण्डनाचार्यसिद्धान्तोऽत्र प्रदर्श्यते । तदयं क्षन्तव्यम् । यत् किमपि भवेत् किन्तु शाङ्०कराद्वैतसिद्धान्तादयं श्रीमण्डनमिश्रस्याद्वैतसिद्धान्त पूर्वतन इत्यत्र न केषाञ्चन वैमत्यम् । ब्रह्मसूत्रस्य ४।१।१५ शाङ्०करभाष्यस्य—स्थितप्रज्ञलक्षणनिर्देशेन"—इति प्रतीकमादाय कल्पतरुटीकायामुक्तम्—भाष्ये स्थितप्रज्ञलक्षणनिर्देशो जीवन्मुक्तिसाधक उक्त, तत्र स्थितप्रज्ञ साधको न तु साक्षात्कारवानिति मण्डनमिश्रैरुक्त दूषणमुद्धरति स्थितिप्रज्ञश्चेति ।" मण्डनमिश्रेण ब्रह्मसिद्धावुक्तम्—"स्थितप्रज्ञस्तावन्न ... सिद्ध किन्तु साधक एव" ( ब्र० सि० नि० का० १०७ का० पृ० १३०-१३१ ) ब्रह्मसूत्रशाङ्०करभाष्यस्य रत्नप्रभायामप्युक्तसूत्र एवमेव सङ्केतितम् । अत श्रीमण्डनमिश्र श्रीशङ्०करात्पूर्वतन । तेन हि भगवान् शङ्०करो मण्डनमतमुद्धृत्य दूषयति ।

२ द्र० (क) इण्डियन फिलासफी ( श्रीराधाकृष्णन् ) भाग २ पृ० ४४८ ( पञ्चमसंस्करणम )

(ख) श्री पी० वी० काणेमहोदयेन जर्नल बाम्बे ब्रांच रायल एसियाटिक सोसायटी भाग ३ ( न्यू सीरीज ) पृ० २८९-२९३ इत्यत्र श्रीशङ्कराचार्यकाल ७८८-८२० ई० साधितस्तथा श्रीमण्डनमिश्रकाल श्रीशङ्करात् पूर्वम् १०० एकशतवर्षपूर्वतन साधित ।

( ग ) ए हिस्ट्री आफ इण्डियन फिलासफी (दासगुप्त ) भाग—२ पृ० ८७ ।

( घ ) ब्रह्मसिद्धे श्री कुप्पूस्वामिशास्त्रिलिखिता भूमिका पृ० ५८, अत्र श्रीमण्डनस्थितिकाल ६१५-६९५ इति साधित ।

कराचार्यस्य समकालिकस्तथाचार्यश्रीशङ्करतिरोधानानन्तरमपि जीवित आसीत् । शङ्करदिग्विजयानुसारमाचार्यशङ्करेण सहास्य शास्त्रार्थवृत्तं प्रसिद्धम् । एतद्विषय आधुनिकैः सन्दिह्यते । प्रसिद्धिरियं यद् गृहस्थाश्रमे यो हि मण्डनमिश्र स एव सन्यासाश्रमे श्रीसुरेश्वराचार्योऽभवत् । आचार्य-मण्डनः श्रीसुरेश्वरश्चैक एव उत द्वौ भिन्नावित्यस्मिन् विषय आधुनिकैरै-तिहासिकैः श्रीकुप्पूस्वामिशास्त्रिणा च भृशमालोचितम् । अन्ते च निर्णीतं यदिमौ भिन्नौ न त्वेक.[3] । अस्मिन्नेवाध्यायेऽग्रे श्रीमण्डनमिश्रश्रीसुरेश्व-राचार्ययोरैद्वतसिद्धान्तभेद, श्रीसुरेश्वराचार्यकृतश्रीमण्डनस्योपहासस्तथाऽ ऽपैव श्रीमण्डनस्याद्वैतवादः शाङ्कराद्वैतवादात्पूर्वतन इत्यपि परिदर्श-यिष्यन्ते ।

श्रीमण्डनमिश्रनाम्ना लिखिता इमे ग्रन्थाः प्रसिद्धाः—

१—मीमांसानुक्रमणिका, २—भावनाविवेक., ३—विधिविवेक, ४—स्फोट-सिद्धिः ५—विभ्रमविवेकः, ६—ब्रह्मसिद्धिः ।

श्रीसुरेश्वराचार्यनाम्ना लिखिता ग्रन्था—

१—नैष्कर्म्यसिद्धि, २—बृहदारण्यकभाष्यवार्तिकम् ३—तैत्तिरीयोप-निषद्भाष्यवार्तिकम्, ४—श्रीशङ्कराचार्यकृतदक्षिणामूर्त्यष्टकस्तोत्रस्य व्याख्या मानसोल्लास. ।

वेदान्तप्रस्थानेऽयं भावाद्वैतस्य, सत्ताद्वैतस्य, शब्दाद्वैतस्य वा समर्थक इति मन्यते । श्रीमण्डनमिश्रः स्वतं कुत्रापि भावाद्वैतादिसंस्थापकत्वेन स्वात्मानं न प्रथितवान् किन्तु स्वग्रन्थे ब्रह्मसिद्धौ भावरूपे ब्रह्मणि सत्ता-रूपे वा ब्रह्मणि स्वपक्षपातः प्रदर्शितः । यथा हि—ब्रह्मसिद्धौ प्रथमकाण्डे

३— ( क ) द्र० ब्रह्मसिद्धिभूमिका ( श्रीकु० स्वा० शा० लिखिता ) तथा-नन्दानुभवविरचिता-न्यायरत्नावली ।

( ख ) बृहदारण्यकोपनिषद्भाष्यवार्तिके ७६६ पृ० १८५२, पूना आन-न्दाश्रममुद्रणे, तथा सक्षेप शारीरके २-१७४ श्लोके श्रीमण्डनमिश्र-श्रीसुरेश्वराचार्ययोरैक्यमुपन्यस्तम् ।

ब्रह्मणो विभिन्नानि मतान्यालोच्यान्ते ब्रह्मस्वरूपप्रतिपादनपरैका कारिका लिखिता। टीकाकर्त्रा शङ्खपाणिना च स्वव्याख्यायां लिखितं यदिदं मतमाचार्यस्य स्वकीयमिति। कारिका चेयम्—

संहृताखिलभेदोऽतः सामान्यात्मा स वर्णितः।
हेमेव पारिहार्यादिभेदसंहारसूचितम्॥

यतश्च विशेषप्रत्यस्तमयमुखेन तन्निरूपणम्, अतोऽन्यैर्ब्रह्मविद्याभियुक्तैः सामान्यरूपं ब्रह्म निरूपितम्—"स एष महानज आत्मा सत्तालक्षणः"[4] "तथा सत्तैव सर्वभेदयोनिः प्रकृतिः परा" इति।

( ब्र० सि० ब्र० का० का० ३ पृ० ३७ )

अत्र शङ्खपाणिरित्थं व्याचष्टे—एवम् आम्नायतः प्रसिद्धिम्-इत्यादिना ब्रह्मसिद्धौ प्रमाणमुक्त्वा अधुना तत्प्रमेयस्य ब्रह्मणः स्वरूपमाह संहृतेति। श्लोकार्थं विवृणोति—यत इति अन्यैर्ब्रह्मविद्भिरिति पूजार्थम्, न स्वमतं पर्युदसितुम्। संहृता उपसंहृता अखिला भेदा विशेषा यस्मिन् स संहृताखिलभेदः। सामान्यात्मा सामान्यस्वभावः, स आत्मा वर्णितः।

( शङ्खपाणिव्याख्या पृ० १०५ )

अत्र सामान्यशब्दो भावपरः सत्तापरो वा। तेनायमाचार्यो भावाद्वैतवादी सत्ताद्वैतवादी वा परवर्तिभिराचार्यैर्मन्यते।[5]

४—प्रथमशो बृहदारण्यकोपनिषद् ४।४।२४-२५ कण्डिकयोरस्ति।

५— ( क ) मण्डनमते भावाद्वैतस्वीकारेणैव तत्परिहारात्।
( ब्र० सि०-ल० च० टी० अविद्याहेतुपपत्तौ पृ० ३२६ )
( ख ) मण्डनमते भावाद्वैतस्वीकारान्नाद्वैतहानिरिति।
( ब्र० सि० गु० च० टी० अविद्याविचारे पृ० १९० )
( ग ) भावाद्वैतपक्षेऽभावस्य दृग्रूपत्वेऽपि स्वरूपेऽनध्यासात्।
( ब्र० सि० पृ० ४६७ )
( घ ) उभयथापि दोषाभावात्, भावाद्वैतस्वीकारात्।
(ब्र० सि०—र० र० टी०—अद्वैतस्य ब्रह्म तद्भिन्नत्व०उपपादने, पृ०१८)
( ङ ) भावाद्वैतमतेऽभावस्य ( ब्र० सि० न्यायामृत १ परि० दृश्यसम्बन्धे पृ० १९८ )
( च ) अथवा भावाद्वैतमते आत्मनि—( ब्र० सि० न्यायामृते ४ परि० ब्र० नि० पृ० १ )
( छ ) सत्ताद्वैते तन्निराकरणात्। न्यायरत्नावल्यां भाग २ पृ० १०३ )
अत्र यद्यपि मण्डनमिश्रस्य नाम नोल्लिखितं किन्तूपरितनविचारेण सत्ताद्वैतवादः श्रीमण्डनमिश्रस्यायात एव। यतो हि श्रीमद्भर्तृहरिणानेन च सत्ताद्वैतवादोऽङ्गीकृतः। अत एतन्मतं श्रीमण्डनमिश्रस्यापि भवितुमर्हति। सत्ताद्वैतवादः श्रीमद्भर्तृहरेर्वाक्यपदीये तृतीये काण्डे जातिसमुद्देशे ३४ कारिकायां श्रीहेलाराजेन विवृतः।

अस्य शब्दाद्वैतवादिकथनेऽयमेव हेतुर्यदयमाचार्यभर्तृहरेरक्षरब्रह्म मार्गोऽनुसृत । ब्रह्मसिद्धेरादौ नमस्कारात्मके श्लोकेऽयमक्षर ब्रह्म नमस्यति--

**आनन्दमेकममृतमज विज्ञानमक्षरम ।**
**असर्वं सर्वमभय नमस्याम प्रजापतिम ।।**

( ब० सि० ब० का० का० १ )

अत्रत्याक्षरपदस्य ब्रह्मव्याख्यानेऽनेनाचार्येण महत्यास्था प्रकटिता । यथाहि—'कथ तावच्छब्दात्मता ? 'पर चापर ब्रह्म यदोंकार इत्यादि श्रुतिभ्य ।' ' अपि च प्रकृतिरूपान्विता विकारा, वागरूपान्वित च जगत्। अतो वाचो विपरिणामो विवर्तो वावमीयते ।' अपि च सत्यर्था व्यावहारिका येपा न शब्दविवर्तादयत् तत्त्वम् ।'

( ब्र० सि० ब्र० का० का० १ अक्षरपदविचारे पृ० १७ १८ )

अत्र शङ्खपाणिरित्थ व्याचष्टे— तत्र ब्रह्मण शब्दात्मत्वे प्रत्यक्षादेर भाव वक्ष्यमाणश्रुतीना प्रतीकोपासनापरत्व च मन्वान पृच्छति—कथ मिति। सिद्धान्ती तु नेमा प्रतीकोपासनापरा श्रुतय अपि तु ब्रह्मस्वरूप परा इति मन्वान श्रुतिमेव प्रमाणत्वेनोदाहरति—पर चापरमिति। ओकार एवेद सर्वम् इत्युपराहरति। सर्वं च ब्रह्म अत ओकारो ब्रह्मे तिभाव । पूर्वमोकारस्य सर्वात्मत्वमुक्तम् अधुना तु वाकशब्दवाच्यस्य शब्दतत्त्वस्य सर्वनामरूपविकल्पविशेषास्पदस्य सर्वात्मत्वमुक्तमिति भेद । तदुक्तम्-अनादिनिधन ब्रह्म शब्दतत्त्व यदव्ययम् ।

( ब० सि० श० पा० व्या० १ का० १ का० )

इत्थ च शब्दरूपे ब्रह्मणि अस्य पक्षपात स्पष्टतया परिलक्ष्यते । शब्दब्रह्मपुष्टये शाब्दिके समर्थित स्फोटपक्षोऽप्यनेनादृत । एतदर्थ स्फोटसिद्धिनामक एव स्वतन्त्रो ग्रन्थ एव निर्मित । स्वकीये विभ्रम

६—पुरा विवर्तपरिणामशब्दौ प्राय समानार्थावास्तामिति आचार्यभर्तृहरिनामके ऽध्याये विचारितम् ।

विवेकग्रन्थेऽपि स्फोटपक्षः समादृतः।[1] एवञ्चायं शब्दाद्वैतवादीति कथ्यते। शब्दाद्वैतवादिना श्रीमर्तृहरिणा शब्दाद्वैत एव सत्ताद्वैत इति भङ्‌ग्यन्तरेण स्पष्टीकृतम्—

सत्यासत्यौ तु यौ भावौ प्रतिभावं व्यवस्थितौ।
सत्यं यत्तत्र सा जातिरसत्या व्यक्तयः स्मृताः॥

( तत्रैव ३२ का० )

"सम्बन्धिभेदात्सत्तैव भिद्यमाना गवादिषु।
जातिरित्युच्यते तस्यां सर्वे शब्दा व्यवस्थिताः॥

( वा० प० ३ का० जा० स० ३३ )

तां प्रातिपदिकार्थं च धात्वर्थं च प्रचक्षते।
सा नित्या सा महानात्मा तामाहुस्त्वतलादयः॥

( तत्रैव ३४ का० )

अत्र हेलाराजः—

"तदेव हि सत्यं यस्मिंस्तत्त्वं न विहन्यते ( म० भाष्ये पस्पशाह्निके ) इत्यन्वयिरूपं भेदप्रत्ययेष्वबाध्यमानं सत्यं जातिः इति व्यवहृतमद्वैतिभिः।"

( वा० प० जा० स० ३२ )

"इत्थं चात्राद्वयनये परमार्थसत्येकैव जातिर्महासत्ताख्या परब्रह्मस्वभावा, तस्या एव गोत्वादिजातिभेदेन विवर्तो व्यवहार इत्याह— सम्बन्धिभेदात्……।"

( वा० प० ३ का० जा० स० ३३ का० )

[1] द्र० स्फोटवादस्य मण्डनार्थं खण्डनार्थं च—
स्फोटसिद्धौ पृ० ८, बृहत्याम् पृ० १४५-१४६ तथा १६०, श्लोकवार्तिके पृ० ५१०-५४४, श्रीसुरेश्वराचार्यस्य तैत्तिरीयोपनिषद्भाष्यवार्तिके पृ० ३१-३२, ३७-४२, इष्टसिद्धौ पृ० १७४।

"सत्तारूप सर्व जगदाख्यात भवतीति सत्ताद्वैतवाद ।"

( वा० प० ३ का० जा० स० ३४ का० )

'सत्तालक्षणमात्मान महान्तम् ।"

( वा० प० २ काण्डे १५३ का० इति पुण्यराज । )

'परस्य तत्त्वस्य सर्वथा विभिन्नस्वभावस्य महासत्तात्मन ।

( वा० पा० स० स० ६१ का० हेला० )

**सत्यामाकृतिसंहारे यदन्ते न व्यवतिष्ठते ।**

**तन्नित्ये शब्दवाच्य तच्छब्दतत्त्व न भिद्यते ।।**

( वा० प० ३ द्र० स० ११ का० )

अत्र हेलाराज —

"सविच्च पश्यन्तीरूपा परावाक् शब्दब्रह्ममयीति ब्रह्मतत्त्व शब्दात् पारमार्थिकान्न भिद्यते ।

एभिरुद्धरणै शब्दाद्वैतसत्ताद्वैतयोरैक्य साधु प्रतीयते ।

अथ सत्ताद्वैतवाद एव भावाद्वैतवाद । अतएव आचार्यमण्डनमिश्रेण ब्रह्मसिद्धेश्चतुर्थे सिद्धिकाण्डे स्वीयोऽभीष्टो भावाद्वैतपक्ष एव स्पष्टीकृत —

**"सर्वप्रत्ययवेद्ये वा ब्रह्मरूपे व्यवस्थिते ।**

**प्रपञ्चस्य प्रविलय शब्देन प्रतिपाद्यते ।। ३ ।।**

**प्रविलीनप्रपञ्चेन तद्रूपेण न गोचर ।**

**मानान्तरस्येति मतमाम्नायैकनिबन्धनम् ।। ४ ।।**

अथवा न लोकेऽत्यन्तमप्रसिद्ध ब्रह्म, सर्वप्रत्ययवेद्यत्वात्, ब्रह्मणो व्यतिरेकेण प्रत्येतव्याभावात् विशेषप्रत्ययाना च सामान्यरूपानुगमात् भेदोपसहारावशिष्ट च सत्य ब्रह्म इति प्रतिपादनात्, 'वाचारम्भण विकारो नामधेय मृत्तिकेत्येव सत्यम् इति दृष्टान्तात् । कि तर्हि शब्देन प्रतिपाद्यते ? प्रपञ्चाभाव । तत्र प्रपञ्चपदार्थोऽपि सिद्ध, निषेधोऽपि सिद्धः

तयोः संसर्गात्तदभावप्रतिपत्तिः । अम्नायैकनिबन्धनत्वं तु तस्योच्यते, प्रत्यक्षादीनामविद्यासम्भिन्नत्वात्, प्रत्यस्तमितनिखिलभेदेन रूपेणाविषयीकरणाद् भेदप्रत्यस्तमयस्याम्नायावगम्यत्वादिति ।"

अनन्त्यस्य "प्रपञ्चस्य प्रविलय शब्देन प्रतिपद्यते' इत्यस्य विपक्षे श्रीसुरेश्वराचार्येण बृहदारण्यकभाष्यवार्तिके उक्तम्—

"नाभावनिष्ठोऽप्यनापि निषेध किमुताक्षरे"

एतद् श्लोकार्द्धमाश्रित्य वेदान्तकल्पलतिकायामिष्टसिद्धौ न्यायमकरन्दे संक्षेपशारीरकसुबोधिन्याचाचार्यमण्डनस्य भावाद्वैतवादो भृशमालोचित[८] ।

इत्थमाचार्यमण्डनाभिप्रेत अध्वाद्वैतवाद, सत्ताद्वैतवादो भावाद्वैतवादो वेति सिद्धम् ।

केचाञ्चन मते यदि मण्डनमिश्रो भगवत आचार्यशङ्करस्य समकालिकस्तथापि आचार्यमण्डनस्याद्वैतप्रस्थान शाङ्कराद्वैतप्रस्थानाद् भिन्नमासीत् । अत एव सर्वज्ञात्ममुनिना स्वीये संक्षेपशारीरके—"नेतव्य परिहृत्य मण्डनवचस्तद्धयन्यथा प्रस्थितम्" इत्युक्तम्[९] । अत्र मण्डनेन

८—( क ) वेदान्तकल्पलतिकायाम् ( मधुसूदनसरस्वतीविरचितायाम् ) पृ० २६-२८ ।
( ख ) इष्टसिद्धौ— पृ० ४५-४८ ।
( ग ) न्यायमकरन्दे—पृ० ३५५-३५७ ।
( घ ) संक्षेपशारीरके श्लो० ८३ सुबोधिनीटीकायाम्, पृ० २२७ ।

९—जीवमुक्तिगतो यदाह भगवान् सत्सम्प्रदायप्रभु
जीवाज्ञानवचस्तदीदृगुचितं पूर्वापरालोचनात् ।
अन्यत्रापि तथा बहुश्रुतवच पूर्वापरालोचना-
न्नेतव्य परिहृत्य मण्डनवचस्तद्धयन्यथा प्रस्थितम् ॥

( सं० शा० अ० २ श्लो० १७४ पृ० १५५ आ० सा० ग्रं० मु० )

अस्याष्टीका —सिद्धान्तदीप, सम्बन्धोक्ति, सुबोधिनी, अन्वयार्थप्रकाशिका, सारसङ्ग्रह, इमा सर्वा द्रष्टव्या, आसु सर्वासु श्रीमण्डनप्रस्थानस्याचार्यशङ्करप्रस्थानाद् भेदो लिखित । यथा सिद्धान्तदीपे "मण्डनमिश्रस्य तु प्रस्थानान्तरत्वात्तदीय वचो यथाश्रुतमेवास्तु ।" यथा च सम्बन्धोक्तौ "अयमेव न्यायो वार्त्तिकादिषु नेतव्य, परिहृत्य मण्डनवच, तस्यान्यथा प्रस्थितत्वात् ।" एवमेवान्यत्रापि ।

"अन्यथा प्रस्थितम्" इत्युक्त्या प्रस्थानभेदो लक्षितः। अस्मिन्नेव पद्ये प्रथमचरणे "सत्सम्प्रदायप्रभुः" इति विशेषणं भगवते शङ्कराचार्याय प्रदत्तम्। अनेनेदं ध्वन्यते यच्छ्रीशङ्कराचार्यप्रस्थानं सत् प्रस्थानमर्थात् परीक्षितं साधु च तथा श्रीमण्डनप्रस्थानमसाध्विति। अयमेव भावः श्रीज्ञानामृतेन नैष्कर्म्यसिद्धेः स्वीयाया टीकायां विद्यासुरभौ प्रकटितः।[१०]

भामत्यामपि आचार्यशङ्करमण्डनमिश्रयोः प्रस्थानभेदः सूचितः। यथाहि—

ब्रह्मसूत्रे अनारब्धकार्याधिकरणे—

"अनारब्धकार्ये एव तु पूर्वे तदवधेः।"

( ब्र० सू० ४ अ० १ पा० १५ सू० )

अत्र शाङ्करभाष्यम्—

"श्रुतिस्मृतिषु च स्थितप्रज्ञलक्षणनिर्देशेनैतदेव निरुच्यते।

अत्र भामती—

'स्थितप्रज्ञश्च न साधकः, तस्योत्तरोत्तरध्यानोत्कर्षेण पूर्वप्रत्ययानवस्थितत्वात्। निरतिशयस्तु स्थितप्रज्ञः।'

अत्र कल्पतरु —

भाष्ये स्थितप्रज्ञलक्षणनिर्देशो जीवन्मुक्तिसाधक उक्तः। तत्र स्थितप्रज्ञः साधको न साक्षात्कारवानिति मण्डनमिश्रैरुक्तं दूषणमुद्धरति स्थितप्रज्ञश्चेति[११]।

अत्र भामतीकल्पतरुवचनाभ्यां श्रीशङ्करमण्डनयोः मतभेदः स्पष्टं लक्ष्यते।

एवमेव ब्रह्मसिद्धिव्याख्याया शङ्खपाणिनापि अनयोः प्रस्थानभेदः सूचितः। यथा हि—

१०— नै० सि० विद्यासुरभौ पृ० ३५० ( मद्रासप्रकाशने )।
११— ब्रह्मसूत्रे (भामत्यादिटीकासहिते) नि० सा० प्रे० मुद्रिते पृ० ६५८-६५६।

ब्रह्मसिद्धौ—"ये तु मन्यन्ते-प्रवृत्तभोगानां कर्मणां प्रवृत्तवेगस्येषोरिव चक्रस्येव वा न शक्यः प्रतिबन्धः, अतो भोगेन क्षयप्रतीक्षेति । तदसत्[12] ।"

( ब्र० सि० नियोगकाण्डे, कारिका १०७—३ )

अत्र शङ्खपाणिः—

"भोगेन त्वितरे क्षपयित्वा" इति भगवत्पादीयमतमुपन्यस्यति—ये त्विति । तद्दूषयति तदिति[13] ।

आचार्यसुरेश्वरेणापि आचार्यमण्डनमिश्रस्य सम्प्रदायान्यत्वं प्रत्यपादि । यथा हि—

अन्ये तु पण्डितंमन्याः सम्प्रदायानुसारतः ।
विज्ञायेति वचः श्रौतमिदं व्याचक्षतेऽन्यथा ।।

( बृ० आ० भा वा० ४ अ० ४ ब्रा० ३६६ वा० )

अत्रानन्दगिरिराह-ब्रह्मणि कार्यकारणभावः सामान्यविशेषभावश्च वस्तुतोऽस्तीति भर्तृप्रपञ्चपक्षे प्रज्ञाकरणवाक्यव्याख्या प्रत्युक्ता संप्रत्यकार्यकारणासामान्यविशेषं प्रत्यग् ब्रह्माभ्युपगच्छतां मण्डनादीनां तद्व्याख्यामुत्थापयति—अन्ये त्विति ।

( बृ० आ० भा० वा० ३ भागे पृ० १८५२ )

अन्येऽप्येवंविधा मतभेदा अग्रे स्फुटीभविष्यन्ति ।

### भावाद्वैतम्, सत्ताद्वैतम्, शब्दाद्वैतम्

आचार्यमण्डनमते भावपदार्थ एक एव । अयमेव भावपदार्थो ब्रह्म । 'सत्' इतिपदस्य प्रतीतिविषयीभूतं यत्तद् ब्रह्मैव 'नेह नानास्ति किञ्चन' 'एकमेवाद्वितीयम्' इत्यादिश्रुत्या यस्य द्वितीयत्वाभावः प्रतिपाद्यते तत्सर्वं भावरूपस्यैव, अभावस्य न । अभावाः सहस्रशः सन्तु । अभावानां साहस्येणापि

१२—ब्र० सि० पृ० १३२ ।
१३—ब्रह्मसिद्धेः शङ्खपाणिकृतव्याख्यायाम् पृ० २६४ ।

न काचिद्धानिरस्मिन् मते गण्यते ।[१४] अत एवाय भावाद्वैतस्तथा सत्ताद्वैत इत्युच्यते ।

श्रीमधुसूदनसरस्वतीभि स्वीयायामद्वैतसिद्धौ परिच्छिन्नत्वहेतुविचारेऽय भावाद्वैतपक्ष साधु स्पष्टीकृत —'अत एव घटादिक सद्रूपे कल्पितम्, प्रत्येक तदनुविद्धत्वेन प्रतीयमानत्वात्, प्रत्येक च द्रानुविद्धजलतरङ्गचन्द्रवत्—इति ब्रह्मसिद्धिकारोक्तमपि साधु ।'[१५]

अद्वैतसिद्धेष्टीकायामपि तत्र तत्र भावाद्वैतपक्षो मण्डनमिश्रीय मतमित्युक्त्या सह स्पष्टीकृत ।[१६]

भाव एव सत्पदार्थ, सत्पदार्थ एव सत्ता, सत्ता च सामान्यम्, सामान्य च जाति, जातिरेव प्रातिपदिकार्थो धात्वर्थश्च, एतत्सर्व स्फोटात्मक शब्दतत्त्वमेव, तस्माद् शब्दाद्वैतमपीदमुच्यते । इद चाचार्यभर्तृहरिणा हेलाराजेन चेत्थ प्रत्यपादि—

**ता प्रातिपदिकार्थं च धात्वर्थं च प्रचक्षते ।**
**सा नित्या सा महानात्मा तामाहुस्त्वतलादय· ॥**

( वा० प० का० ३ जा० स० ३४ का० )

---

१४–(क) द्विविधा धर्मा —भावरूपा अभावरूपाश्चेति तत्राभावरूपा नाद्वैत विघ्नन्ति ।

( ब्र० सि० व० भा० का० १ पृ० ४ )

(ख) एव भावाद्वैतमते प्रपञ्चभावादे सत्यत्वेपि तदावश्यकम् ।

( अ० सि० ल० च० गौ० अनु० तर्कनि० पृ० ४६७ )

(ग) तात्त्विकत्वमपि ब्रह्मान्यस्याभावस्य मण्डनमते युक्तमेव

( अ० सि० गु० च० टी० पृ० १६० )

१५–अद्वैतसिद्धौ परिच्छिन्नत्वहेतुविचारे पृ० ३१८ ।

१६–(क) अ० सि० ल० च० टी० अशित्वहेतुविचारे पृ० ३२६ ।

(ख) अ० सि० गु० च० टी० पृ० ४८४ ।

(ग) अ० सि० र० र० पृ० २१ ।

अत्र हेलाराजः—"प्रातिपदिकार्थः—सत्ता............सत्तारूपं सर्वं जगत् ।" इत्युक्तवान् ।

भावाद्वैतस्य शब्दाद्वैतस्य च निष्कर्षो मण्डनमिश्रेणैवमुक्तम्—"न लोकेऽत्यन्तमप्रसिद्धं ब्रह्म, सर्वप्रत्ययवेद्यत्वात्, ब्रह्मणो व्यतिरेकेण प्रत्येतव्यस्याभावात्, विशेषप्रत्ययानां च सामान्यरूपानुगमात्, भेदोपसंहारावशिष्टं च सत्यं ब्रह्म इति प्रतिपादनात् ।"

( ब्र० सि० का० ४ का० ३-४, पृ० १५७ )

"तथा च तद्रूपोपग्राह्यं जगत् तद्विवर्त इति प्रतीमः । अपि च सन्त्यर्था व्यावहारिकाः, येषां न शब्दविवर्तादन्यत् तत्त्वम्, तत्सामान्याविरेऽपि तथावसातव्याः ।"

( ब्र० सि० का० १ का० १ पृ० १८ )

अत्र शङ्खपाणिर्व्याचष्टे—

"यद्यपि विपरिणामोऽपि पूर्वमुक्तः, तथापि विवर्त एवास्य स्वमतमिति स एवोपसंहृतः ।

अतः प्रागप्याचार्येणोक्तम्-यस्तु शब्दयोर्विशेषणविशेष्यभावोऽवगम्यते—"नीलमुत्पलम्" इति, अर्थगत एवासौ ।

( ब्र० सि० का० १ का० १ पृ० १८ )

अत्र शङ्खपाणिः—स च शब्दस्यार्थाभेदे घटते, नोपायत्वे ।

श्रीमद्भागवतेऽपि भावाद्वैतस्योल्लेखस्तथा व्याख्या कृता वर्तते । यथा हि—

भावाद्वैतं क्रियाद्वैतं द्रव्याद्वैतं तथात्मनः ।
वर्तयन् स्वानुभूत्येह त्रीन् स्वप्नान् धुनुते मुनिः ॥

( श्रीमद्भा० ७ स्क० १५ अ० ६२ श्लो० )

कार्यकारणवस्त्वैक्यमर्पणं पटतन्तुवत् ।
अवस्तुत्वाद् विकल्पस्य भावाद्वैतं तदुच्यते ॥

( तत्रैव ६३ श्लो० )

एतत्समानैव गौडपादीयमाण्डूक्यकारिकापि—

**जात्याभासं चलाभासं वस्त्वाभासं तथैव च ।**
**अजाचलावस्तुत्वं विज्ञानं शान्तमद्वयम् ।**

( मा० का० ४४५ )

अत्र भगवान्भाष्यकार श्रीशङ्कर इत्थ व्याचष्टे—

अजाति सज्जातिवदवभासते इति जात्याभासम् । तद् यथा देवदत्तो जायते इति । चलाभास चलमिवाभासते इति । यथा स एव देवदत्तो गच्छतीति । वस्त्वाभास वस्तु द्रव्य धर्मि तद्वदवभासत इति वस्त्वाभासम् । यथा स एव देवदत्तो गौरो दीर्घ इति । जायते देवदत्त स्पन्दते दीर्घो गौर इत्येवमवभासते ।

श्रीगौडब्रह्मानन्दसरस्वत्यपि सिद्धान्तबिन्दो स्वीयन्यायरत्नावलीटीकाया भावाद्वैतपक्ष सूचितवान् । यथा तेनोक्तम्—

"तत्र चानुवा द्यप्रक्रियाया पदार्थो द्विविध । दृग् दृश्य च । दृगपि चिद्रूपा उपहितानुपहितरूपेण द्विविधा । अनुपहिता मोक्षदशाया केवलैव भाति, ससारदशाया तु भासमानसर्वानुस्यूतरूपेणापि । तथा च श्रुति —

"तमेव भान्तमनुभाति सर्वम्' इति । अनुमानमपि घटादयो भानविषया आनयनादिविशेषणतया प्रवृत्तिविषयत्वादिति । घटादिसर्वभासमानपक्षकानुमितौ लाघवादेकभानव्यक्तिविषय । उपहिता तु ईश्वरजीवभेदेन द्विविधा ।

( सि० बि० मङ्गलश्लोकस्य न्यायरत्नावलीटीकायाम् )

श्रीमदप्पयदीक्षितेनापि सिद्धान्तलेशसङ्ग्रहस्य चतुर्थे परिच्छेदे भावाद्वैतो विवेचित ।

श्रीशालिकनाथमिश्रेण प्रकरणपञ्चिकायामनेकत्र श्रीमण्डनमिश्रस्य भावाद्वैतवाद, सत्ताद्वैतवाद शब्दाद्वैतवादश्चालोचित । यथा हि—

"अत्र केचिद् गवादितुल्यतया द्रव्यगुणकर्मस्वपि सत्ताजातिमङ्गी कुर्वन्ति, भवति हि सर्वेष्वेव सन् सदिति प्रत्ययानुवृत्तिरिति मवदन्त"।

( प्र० प० जातिनिर्णयनामके चतुर्थप्रकरणे पृ० ९७ )

"तत्राय पण्डितम्मन्या मन्यत—नन्विदमसमञ्जसमुच्यते सर्वत्र ह्युपाधिभेदमवगम्योपाधिशब्दानुविद्ध प्रत्ययो भवति, न पुन प्रागेव सह वा।"

( तत्रैव पृ० ९८ )

"क पुनरेष मोक्ष ? अविद्यास्तमय इति केचित्।' " तदिद श्रद्धामात्रविजृम्भितमिति प्रमाणपरतन्त्रा।

( तत्रैवाष्टमे प्रकरणे तत्त्वालोके पृ० ३३५ )

'यच्च प्रमेयविकल्पन सामान्यमेव वस्त्विति स्थापयित्वा सत्ताया महासामान्यरूपत्वात् तावन्मात्रमेव सत्त्वमिति साधितम्। तदपि गगनग्रास कल्पम्। सत्त्व न विशेषमात्र वस्तु, सर्वत्रानुवृत्तप्रतिभासप्रवदनीयस्य सामान्यस्यापह्नोतुमशक्यत्वात्। नापि सामान्यविशेषात्मकमेक वस्तु, एकस्य द्वैरूप्यविरोधात्। सामान्यविशेषौ तु परस्परसम्बद्धे द्वे वस्तुनी प्रत्यक्षमवगाहेत, तथा च कुतस्सत्ताद्वैतसिद्धि। यथा च सामान्यविशेषयो जातिव्यक्त्यारिह प्रत्ययो नास्तीति, तथा जातिनिर्णये निर्णीतम्।

( तत्रैव पृ० ३३६ )

"अत्र कश्चित्पण्डितम्मानी प्राह—काल्पनिकी सुखदु खादिव्यवस्था भविष्यति। यथैकस्मिन्नेव शरीर पादादिवेदनाव्यवस्था न व्यतिकीर्यते, तथा नानाशरीरेषु न व्यतिकरिष्यत इति। न हि पादगता वदना शिरसि न वा शिरोगता वदना पादे। न च वेदना पादादिष्वेव समवेतेति शक्यते वक्तुम्। ज्ञाता हि वेदनाभि सह सम्बध्यत। दु खविशेषरूपत्वात् तासामिति। तदिद बालजनमोहनमिति वृद्धा।

( तत्रैव पृ० ३४९ )

एषु सर्वेषु स्थलेषु क्वचिन्मूले, क्वचित् श्रीनारायणभट्टविरचितन्याय-

सिद्धिव्याख्याया क्वचिद् श्रीसुब्रह्मण्यशास्त्रिविरचिताया विषमस्थल-टिप्पण्या चेद मण्डनमिश्रमतमित्युल्लिखितम् ।

### ब्रह्म

मण्डनमिश्रास्तु ब्रह्मस्वरूपप्रतिपादने क्षणिकज्ञानात्मवादिनाम्[१७], विज्ञानगुणकात्मवादिनाम्[१८] सर्वशून्यात्मवादिनाम्,[१९] च मतमुपवर्णित तथा खण्डितम् । मध्ये च अक्षर ब्रह्मेति निरूपितम् । तत्र अक्षर' शब्दार्थं अपरिणामित्व शब्दात्मकत्व चोक्तम्[२०] । अत्रैव ब्रह्मण शब्दात्मकत्वविचारे उक्त यद्—

"वाग्रूपाधीनमेव चितश्चितित्वम् । वाक्शक्तिरेव वा चिति सर्वथा वाग्रूपाधीनो ज्ञेयबोध इति सर्वं ज्ञेय वाग्रूपान्वित गम्यत इति तद्विकार-स्तद्विवर्तो वा, मृद इव घटादय, चन्द्रमस इव जलतरङ्गगच्चन्द्रमस इति ।

( ब्र० सि० ब्र० का० का० १ पृ० १९ )

अत्रार्थे श्रुतिमप्युदाहरत्—"वागेव विश्वा भुवनानि जज्ञे वागेवेद बुभुजे वागुवाच" इत्यादौ वाच सार्वात्म्य श्रूयते अग्रे च वाक्सूक्तस्यान्यामपि श्रुति मुदाहृत्य निर्णीत यत्—

अपि च प्रकृतिरूपान्विता विकारा । वाग्रूपान्वित च जगत् । अतो वाचो विपरिणामो विवर्तो वा जगत् ।'

( ब्र०सि०ब्र०का० का०१ पृ०१७ १८ )

---

१७—"यस्यैव क्षणिकज्ञानमात्मा ·· 'अलमतिप्रसङ्गेन इति ।
( ब्र० सि० ब्र० का० का० १ पृ० १४-१५ )

१८ "केचित्तु विज्ञानगुणमविज्ञानस्वभावमात्मतत्त्वमिच्छन्ति —अलमतिप्रसङ्गेन' ( ब्र० सि० ब्र० का० का० १ पृ० १५ १६ )

१९ प्रपञ्चशून्यता तर्हि परमार्थ, सैवास्तु ब्रह्म परमार्थत्वात्—विज्ञानमानन्दम इति रूपोपदेशाच्च न सर्वाभावमात्र ब्रह्म, अपि तु सर्वस्यात्मेति ।
( ब्र०सि० ब्र०का०का०१पृ०२० )

२० अक्षरमिति शब्दात्मतामाह—इति सुष्ठूक्तम् अक्षरमिति ।
( ब्र० सि० ब्र० का० का० १ पृ० १९ १९ )

अग्रे च तेन ब्रह्मणः शब्दात्मकत्वं परिपोष्येदं जगत् शब्दस्य विवर्त इत्युक्तम्—तथा च तदम्पोपग्राह्यं जगत् तद्विवर्त इति प्रतीमः। अपि च सत्त्यर्था व्यावहारिकाः, येषां न शब्दविवर्तादन्यत् तत्त्वम्।"

( ब्र० सि० ब्र० का० का० १ पृ० १८ )

अस्य व्याख्यायां शङ्खपाणिना स्पष्टीकृतं यद् शब्दस्य जगद् विवर्त इति पक्षः आचार्यमण्डनस्य स्वकीय इति। यथा—

"यद्यपि विपरिणामोऽपि पूर्वमुक्तः, तथापि विवर्त एवास्य स्वमतमिति स एवोपसंहृतः।

( ब्र० सि० श० पा० व्या० पृ० ५१ )

पुनश्चोक्तं यद् शब्दतत्त्वादन्यत् किमपि नास्त्येव। यददो नित्यं यदिदं च दृश्यमानं व्यावहारिकं जगत्सर्वमपि शब्दतत्त्वमेव। यथा हि—

"अपि च सत्त्यर्था व्यावहारिकाः, येषां न शब्दविवर्तादन्यत् तत्त्वम्। तत्सामान्यादितरेऽपि तथावसातव्याः।

( ब्र० सि० ब्र० का० का० १ पृ० १८ )

"..........तस्मात् प्रवृत्तिनिवृत्त्यानुगुण्येन शब्दतत्त्वमेव तथा तथावभासत इति साम्प्रतम्।"

( ब्र० सि० ब्र० का० का० १ पृ० १९-२० )

इत्थं च प्रथमे नमस्कारात्मके श्लोके प्रयुक्तस्य "अक्षर" पदस्य व्याख्यानव्याजेन कालत्रयाबाधितस्य शब्दतत्त्वस्य ब्रह्मत्वं प्रतिपाद्यात्मनि अपरितुष्यन् स्पष्टतया ब्रह्मतत्त्वं प्रतिपिपादयिषुराचार्यो ब्रह्मकाण्डस्यान्तिमा तृतीया कारिका वक्तुमुपचक्रमते—

**संहृताखिलभेदोऽतः सामान्यात्मा स वर्णितः।**
**हेमेव पारिहार्यादिभेदसंहारसूचितम्।**

( ब्रह्म० सि० ब्र० का० का० ३ )

यतश्च विशेषप्रत्यस्तमयमुखेन तन्निरूपणम्, अतोऽन्ये ब्रह्मविद्याभियुक्ताः

सामान्यरूप ब्रह्म निरूपितम्—"स एव महानज आत्मा सत्तालक्षण" तथा "सदैव भेदयोनि प्रकृति परा" इति यथा सुवर्णतत्त्व कटकाङ्०-गुलीयादिविशेषोपसहारेण निरूप्यमाण सत् सामान्यमिति। ये वा "निर्विशेष न सामान्य भवेच्छशविषाणवत्" इत्यभावमाहु तान् प्रत्युच्यते—सहृताखिलभेद इति।

( ब्र० सि० ब्र० का० का० ३ पृ० ३७-३८ )

अस्य व्याख्याया शङ्०खपाणिना स्पष्ट प्रत्यपादि यदाचार्यो ब्रह्मस्वरूप-विषये स्वकीय मतमनेन श्लोकेन निरूपयति। यथा हि—

"एवम् आम्नायत प्रसिद्धिम्" इत्यादिना ब्रह्मसिद्धौ प्रमाणमुक्त्वा अधुना तत्प्रमेयस्य ब्रह्मण स्वरूपमाह। श्लोकार्थं विवृणोति यत इति। अन्यै र्ब्रह्मविद्भिरिति पूजार्थम्, न स्वमत पर्युदसितुम्। सहृता उपसहृता अखिला भेदा यस्मिन् स सहृताखिलभेद। सामान्यात्मा सामान्यस्वभाव, स आत्मा वर्णित। यथा हेमकटकादिभेदाना विशेषाणामुपसहारेण सूचित निरूपित तेषा कटकादिभेदाना सामान्य तथेत्यर्थ। पारिहार्यं कटकमुच्यते। 'स एष महान्' इत्यादिना ब्रह्मविद्याभियुक्तग्रन्थ पठति। यद्विशेषापोद्वारेण प्रतीयते, तद् विशेषवत्, यच्च विशेषवत् तत् सामान्यम्, यथा सुवर्णतत्त्वम्, आत्मतत्त्वमपि 'स एष नेति नेति' इति सर्वविशेषापोद्वारेण प्रतीयते, तस्मात् तदपि विशेषापोद्वारेण प्रतीयमानत्वात् सामान्यमिति तात्पर्यार्थ।'

( शङ्०खपाणिव्याख्या पृ० १०९ )

अनेन ब्रह्मसिद्धिग्रन्थाशेनोपरितनव्याख्यया चेद प्रतीयते यदाचार्यश्री-मण्डनमते यत्सर्वविशेषप्रत्यस्तमय निर्विशेष सत्तारूप भावमय यत् किञ्च-दनुभवगोचर तदेव ब्रह्म।

अत्रेद विचारणीय यदाचार्यप्रतिपादित ब्रह्मण शब्दात्मकत्व ब्रह्मणो भावात्मकत्व ( सत्तारूपत्वम् ) चैकमेव तत्त्वमुत भिन्नम्। आपातत श्रवणेन तु भिन्नमिव प्रतिभाति। किन्तु पतञ्जलिभर्तृहर्यादिवैयाकरण-

सिद्धान्तप्रभावितोऽयमाचार्यः शब्दस्य स्फोटरूपेण नित्यत्वमङ्गीकृत्य शब्दस्य भावात्मकया शब्दस्य सत्तात्मकतया वा भावरूपब्रह्मतोऽनतिरिक्ततामभ्युपैति। तेन पूर्वमक्षरपदव्याख्याने ब्रह्मण शब्दात्मकत्व प्रतिपाद्यान्ते भावात्मकत्व प्रत्यपादयदुभयोरनर्थान्तरत्वात्।

वैयाकरणसिद्धान्तश्रद्धालुत्वादेवाय 'स्फोटसिद्धि' नामक ग्रन्थ प्रणीतवान्। तत्रादावेव व्याकरणदर्शनम् प्रति श्रद्धा प्रदर्शयति—

दुर्विदग्धैरवक्षिप्तैर्दर्शने पददर्शिनाम्।
यथागमं यथाशास्त्रं न्यायलेशो निदर्श्यते॥

( स्फो० सि०२ श्लो० )

अत्र गोपालिकाव्याख्यायाम्—ये पद पश्यन्ति दर्शयन्ति च पाणिन्यादयस्तेषा दर्शने सिद्धान्ते।

एवमेव वैयाकरणभर्तृहर्यभिप्रेत[21] ब्रह्मण सत्तात्मकत्व स्वीचकार तथा 'स एव महानज आत्मा सत्तालक्षण'

( ब्र०सि०प्र०का०३पा०पृ०३७ )

---

२१—ता प्रातिपदिकार्थं च धात्वर्थं च प्रचक्षते।
सा नित्या सा महानात्मा तामाहुस्त्वतलादय॥

( वा० प० का० ३ जा० स० का० ३४ )

अत्र हेलाराजेनोक्तम् प्रातिपादिकार्थमात्रवाच्या सत्ता। तदुक्तम् प्रातिपदिकार्थं सत्ता। सत्तारूप सर्वं जगदाख्यात भवतीति सत्ताद्वैतवाद साङ्ख्यनयेनाप्युपबृहित।

इत्यमेव स्फोटसिद्धावपि शब्दमाहात्म्य प्रत्यपादि—

उपायत्वाच्च नियम परदर्शितदर्शिनाम्।
ज्ञानस्येव च वाचोऽपि लोके ध्रुव उपप्लव॥

( स्फो० सि० श्लो० २१ )

प्रत्यक्षज्ञाननियता व्यक्ताव्यक्तावभासिता।
मानान्तरेषु ग्रहणमथवा नैव हि ग्रह॥ ( तत्रैव २३ )
उपलब्धश्च साकल्ये क्रम प्रागेव चिन्तित।
नित्यत्वमविकल्प्या तु सत्त्वादेवास्य जातिवत॥ ( तत्रैव २४ )

अत्र गोपालिकाव्याख्यापि द्रष्टव्या।

इति पूर्वाचार्यमतमुदाजहार।

किन्तु, भगवाँञ्छड्०कराचार्य स्फोटस्य ब्रह्मरूपत्वं नाड्०गीचकार। तेन 'शब्द इति चेन्नात प्रभवात् प्रत्यक्षानुमानाभ्याम्' (ब्र० सू० १।३।२८) इति सूत्रभाष्ये जगत· शब्दप्रभवत्व निरूप्य शब्दस्वरूप विवेचित यद् शब्दो वर्णरूपोऽथवा स्फोटरूप । ततश्चोभयपक्षे दोपमुद्भाव्य स्फोट-रूपस्य शब्दस्य जगत्कारणत्व ब्रह्मत्व च निरस्तम्। यथा—

'किमात्मक पुन शब्दमभिप्रेत्य शब्दप्रभवत्वमुच्यते। स्फोटमित्याह। वर्णपक्षे हि तेषामुत्पन्नप्रध्वंसित्वान्नित्येभ्य शब्देभ्यो देवादिव्यक्तीना प्रभव इत्यनुपपन्न स्यात्। उत्पन्नध्वंसिनश्च वर्णा, प्रत्युच्चारमन्यथा चान्यथा च प्रतीयमानत्वात्।' इत्यादिरीत्या वर्णरूप शब्द इति पक्ष खण्डयित्वापि पुनरुक्तम्—

'तस्मात्स्फोट एव शब्द ·· तस्य प्रत्युच्चारण प्रत्यभिज्ञायमानत्वा-न्नित्यत्वम्। भेदलक्षणस्य वर्णविषयत्वात्। तस्मान्नित्याच्छब्दात्स्फोट-रूपादभिधायकात् क्रियाकारकफललक्षण जगदभिधेयभूत प्रभवतीति। 'वर्णा एव तु शब्द ' इति भगवानुपवर्ष ।

एव रीत्या स्फोटपक्ष सस्थाप्यातोऽग्रे स्फोटवाद खण्डित —न कल्प-याम्यह स्फोट प्रत्यक्षमेव त्वेनमवगच्छामि। ·· वृद्धव्यवहारे चेमे वर्णा क्रमाद्यनुगृहीता गृहीतार्थविशेषसम्बन्धा स त स्वव्यवहारेऽप्येकैकवर्णग्रहणा नन्तर समस्तप्रत्यवमर्शिन्या बुद्धौ तादृशा एव प्रत्यवभासमानास्त समर्थमव्यभिचारेण प्रत्याययिष्यन्तीति वर्णवादिनो लघीयसी कल्पना। स्फोटवादिनस्तु दृष्टहानिरदृष्टकल्पना च। वर्णाश्चेमे क्रमेण गृह्यमाणा स्फोट व्यञ्जयन्ति स स्फोटोऽर्थं व्यनक्तीति गरीयसी कल्पना स्यात्।

( ब्र० सू० १।३।२८ शा० भा० )

अत्र भामत्यामिद मतमाचार्यदेशीयस्येत्याह

"तदेतदाचार्यदेशीयमत स्वमतमुपपादयन्नपाकरोति ।"

स्फोटस्तैत्तिरीयोपनिषद्भाष्यवार्त्तिके, इष्टसिद्धौ, बृहत्याम्, श्लोक-वार्त्तिकेऽपि च खण्डितः[२२]। श्रीप्रभाकरमिश्रेण शब्दाद्वैतवाद उपहसितः, शब्दाद्वैतवादो विडम्बनैवेति तेनोक्तम्—'तस्माद्विडम्बनैषा—विवर्त्ततेऽर्थ-भावेनेति।

( बृहत्याम् पृ० १६० )

यद्यपीम आचार्याः शब्दाद्वैतवादं शब्दब्रह्मवादं चोपहसितवन्तः खण्डित-वन्तश्च, उपहसन्तु नाम खण्डयन्तु च, तथापि ऋगादिमन्त्रेषु ब्राह्मणेषू-पनिषत्सु च शब्दाद्वैतवादस्य शब्दब्रह्मवादस्य च सकेत उपलभ्यते, यथा प्रदर्शितं आचार्यभर्तृहरिनामकेऽस्मिन्नध्याय आदावेव।

आत्मा-जीव.

श्रीमण्डनमते परब्रह्मणो व्यतिरिक्तस्यात्मनः सत्ता नाङ्गीक्रियते, किन्तु ब्रह्मैवात्मा, आत्मन्यवभासमानो भेदो मायाकृत एव। अतएव ब्रह्मकाण्डे "विज्ञानमानन्द ब्रह्म" इत्यानन्दभेदो विज्ञानभेदो वा ब्रह्मरूपमिति शब्द-द्वयेनावगम्यते" इत्युक्त्वा "इतश्चानन्दस्वभाव आत्मा, परप्रेमास्पदत्वाद-त्वात्।" इत्युक्तम्।

( ब्र० सि० ब्र० का० का० १ पृ० ५ )

अनेन आत्मस्वरूपप्रतिपादनेन ब्रह्मात्मनोरेकरूपता स्पष्टीकृता। एत-दनन्तरं चात्मनोऽनेकत्वमिति पक्षमुद्भाव्यात्मन एकत्वमिति पक्षः सम-र्थितः। यथा हि—

"तान्प्रत्युच्यते—एकमिति। इन्द्रो मायाभि. पुरुरूप ईयते' इति व्यक्त-मेव नानारूपावगमो मायानिबन्धनो दर्शित·।"

( ब्र० सि० ब्र० का० १ का० पृ० ६ )

एतदनन्तरं चात्रैव स्थले आत्मन एकत्वानेकत्वविषये बहु विचा-रितम्। पुनरप्यग्रे उक्तम्—"ननु न जीवा· ब्रह्मणो भिद्यन्ते, एव ह्याह—

२२—द्र० अस्याध्यायस्य पादटिप्पणी सं० ५।

'अनेन जीवेनात्मनानुप्रविश्य' इति। सत्यं परमार्थतः, कल्पनया तु भिद्यन्ते।

( ब्र० सि० ब्र० का० का० १ पृ० १० )

पुनश्च—"ननु जीवा अपि ब्रह्मतत्त्वाव्यतिरेकाद् विशुद्धस्वभावाः।

( ब्र० सि० ब्र० का० १ का० पृ० ११ )

अत्र पुनः ब्रह्मजीवयोरभिन्नत्व स्पष्टयन्नाह—

'अविद्ययैव तु ब्रह्मणो जीवो विभक्त, तन्निवृत्तौ ब्रह्मस्वरूपमेव भवति, यथा घटादिभेदे सदाकाशं परिशुद्ध परमाकाशमेव भवति।'

( ब्र० सि० ब्र० का० १ का० पृ० १२ )

अत्र शङ्खपाणिर्व्याचष्टे—'यदि ब्रह्मणो जीवस्तत्त्वतो भिन्न. स्यात् तत स्यादेवम्, किन्त्वविद्यया, अतो विद्यया अविद्यानिवृत्तौ यथाब्रह्मरूपमेव भवतीत्यर्थः।

## जीवस्य नानात्वम्

आचार्यमण्डनमिश्रो जीवस्य नानात्व मनुते। तस्यायमाशयो यद् यदि जीव एकः स्यात्तदेकस्य जीवस्य सर्वजीवमुक्तिप्रसङ्ग स्यात्। अतो जीवस्य नानात्व स्वीकार्यम्। तेन एकजीवविद्यया एकजीवाविद्याया निवृत्तौ एकजीवमुक्तावपि न सर्वजीवमुक्तिप्रसङ्ग। यथोक्तम्—

'अथ ब्रह्मैव संसरति ब्रह्मैव मुच्यते, एकमुक्तौ सर्वमुक्तिप्रसङ्ग, यतो भेददर्शनेन ब्रह्मैव संसरति, अभेददर्शनेन च मुच्यते। तत्र सर्वविभागप्रत्यस्तमये युगपत् सर्वमोक्षप्रसङ्ग'। तस्मादविद्यया जीवाः संसारिण' विद्यया मुच्यन्ते। तेषां च निसर्गजाविद्याकलुषाणां विलक्षणप्रत्ययविद्योदयेनोपपद्यतेऽविद्यानिवृत्ति। न हि जीवेषु निसर्गजा विद्यास्ति। अविद्यैव हि नैसर्गिकी, तस्या आगन्तुक्या विद्यया प्रविलय।

( ब्र० सि० ब्र० का० १ का० पृ० १२ )

एवमेवापरत्रापि।

## अविद्या

अस्मिन् मते अज्ञानरूपा तत्त्वाग्रहणात्मिका वा अविद्या मन्यते । इयं च नात्यन्तमसती, नापि सती किन्त्वनिर्वचनीया मायापदवाच्या । यथोक्तम्—

'अग्रहणमविद्या, तत्त्वाग्रहणात्मिका ह्यविद्या तत्त्वग्रहणात्मिकया विद्यया निवर्त्यते ।

( ब्र० सि० ब्र० का० का० १ पृ० ९ )

' अत्यन्तासत्त्वे खपुष्पसदृशीव व्यवहाराङ्गम् तस्मादनिर्वचनीया ।'

( ब्र० सि० ब्र० का० का० १ पृ० ९ )

' तस्मान्नाविद्या सती नाप्यसतीति । अत एव चास्या निवृत्तिरदृढ-स्वभावाया मायामात्रत्वात्', ।

( ब्र० सि० ब्र० का० का० १ पृ० ९ )

अविद्याया नित्यत्व ब्रह्मस्वाभावत्व चाशङ्क्य निर्णीत यदियम विद्या न नित्या न च ब्रह्मस्वभावा । नित्यत्वेऽविद्याया अनिवर्त्यत्वा पत्ते, ब्रह्मण स्वभावत्वे ब्रह्मणोऽर्थान्तरत्वापत्ते एवञ्चास्मिन् विषये बहु विचार्य एव सिद्धान्तित यद्—

'नाविद्या ब्रह्मण स्वभाव', नार्थान्तरम्, नात्यन्तमसती, नापि सती एवमेवेयमविद्या माया मिथ्यावभास इत्युच्यते । स्वभावश्चेत् कस्य चित्, अन्योऽन्यो वा परमार्थ एवेति नाविद्या अत्यन्तासत्त्वे खपुष्पसदृशी न व्यवहाराङ्गम् तस्मादनिर्वचनीया ।'

( ब्र० सि० ब्र० का० १ का० पृ० ९ )

विभ्रमविवेकेऽप्येवमेवोक्तम् ।[२३]

२३ न सविदनुसारेण निमित्त तस्य युज्यते ।
मतोऽनिर्वचनीयत्व पर ब्रह्मविदा विदु ॥
(वि०वि० श्लो०२७पृ०३)
सदसद्भ्यामनिर्वाच्या तामविद्या प्रचक्षते ।
(वि०वि०श्लो०२९पृ०४)
नामरूपप्रपञ्चोऽयमविद्यैव च वर्ण्यते ।
(वि०वि०श्लो०३०पृ०४)

### अविद्याभेदः

इयमविद्या द्विविधा १—अग्रहणात्मिका, २—अन्यथाग्रहणात्मिका च। अत्र प्रथमा अविद्या कारण द्वितीया च कार्यरूपा। तेन रज्जुतत्त्वाग्रहणात् सर्पादिविपर्ययो जायते। प्रथमया अविद्यया सुषुप्तौ तत्त्वाग्रहण भवति, द्वितीयया चाविद्यया स्वाप्नजागरितयो विपयस्यान्यथारूपेणावभासो भवति[24]।

वाचस्पतिमिश्रेणापि आचार्यमण्डनाभिमतो विद्याभेदोऽङ्गीकृत। भामत्यामादौ मङ्गलश्लोके तेनोक्तम्—

"अनिर्वाच्याऽविद्याद्वितयसचिवस्य प्रभवतो
विवर्ता यस्यैते वियदनिलतेजोववनयः ॥"

अत्राविद्याद्वितयत्वमुक्तप्रकारकमेव। अथाह भामतीव्याख्याया कल्पतरौ परिमले च।

अय श्रीमण्डनाभिमतोऽविद्याभेद आचार्यसुरेश्वरेण नाद्रियते। तेन बृहदारण्यकभाष्यवार्तिके उक्त यद्—

द्वैविध्यं चाप्यविद्याया न युक्त्याऽवसीयते।
ऐकात्म्यमात्रवस्तुत्वादविद्यं कथ युज्यते ॥

( बृ० आ० उ० भा० वा० २।४।१९९ पृ० १०६५ )

---

२४ "तस्मादग्रहणविपर्ययग्रहणे द्वे अविद्ये कार्यकारणभावेनावस्थिते, स्वप्नजागरितयोरुभे, कारणभूताग्रहणलक्षणा सुषुप्त इत्यविद्याप्रविभाग उपपद्यते।"

(ब्र०सि०नि० का०का० १७० पृ० १४९ १५०)

अत्र शाङ्पाणिव्याचष्टे-तस्मादग्रहणविपर्ययग्रहणलक्षणे द्वे अविद्ये अभ्युपेतव्ये। ते च पूर्वा कारणम्, उत्तरा कार्यमित्येव व्यवस्थिते। तथा च रज्जुतत्त्वाग्रहणात् सर्पादिविपर्यया दृश्यते। एव सति च पूर्वा सुषुप्ते, परा च स्वप्नजागरितयोरित्येभवविद्याविभागोपपत्ति। तथा च गौडपादै दर्शितम् "कार्यकारणबद्धौ" इति। कार्यविक्षेपात्मिका प्रपञ्चाविद्या, कारणमग्रहणात्मिका अविद्या, ताभ्या बद्धावुभौ विश्वतैजसशब्दवाच्यौ जागरितस्थानस्वप्नस्थानावात्मानाविष्येते। प्राज्ञस्तु सुषुप्तस्थान आत्मा कारणेन तत्त्वाग्रहात्मिकया अविद्यया बद्ध।

(ब्र०सि०श०पा०व्या०नि०का०पृ०२८८)

अत्रानन्दगिरिः—अग्रहान्यथाग्रहाभ्यां द्विविधाविद्या ''''''।

**प्रमेयभेदभिन्नत्वं ज्ञानानामिव भेदकम् ।**
**नाविद्याया यतोऽस्तीह द्वैविध्यं तेन दुर्घटम् ॥**

( तत्रैव वा० २०० )[२५]

आचार्यमण्डनो मूलाविद्याया नानात्वं मनुते। वाचस्पतिमिश्रश्चैद-मनुसरति।[२६] आचार्यसुरेश्वरः मूलाविद्याया एकत्वमङ्गीकरोति।[२७] पद्मपादाचार्योऽपि मूलाविद्याया एकत्वमेव स्वीकरोति।[२८]

### अविद्याया विषयाश्रयौ

मण्डनमते अविद्याया विषयो ब्रह्म आश्रयश्च जीवः। यथाह—

"अत्रोच्यते—उक्तमेतज्जीवानामविद्याकलुषितत्वम्, न ब्रह्मणः, तद्धि सदा विशुद्धनित्यप्रकाशमनागन्तुककार्यम्, अन्यथा ब्रह्मभूयं गतस्यापि नाविद्या निवर्तेत, तत्रानिर्मोक्ष ।

''''''तस्मादविद्यया जीवाः संसारिणः विद्यया मुच्यन्ते। तेषां च निसर्गजाविद्याकलुषाणां विलक्षणप्रत्ययविद्योदयेनोपपद्यतेऽविद्यानिवृत्तिः।

---

२५. एतदर्थं बृ० आ० उ० भा० वा० द्वितीयाध्यायचतुर्थब्राह्मणस्य २०१-२०४ वार्तिकान्यपि आनन्दगिरिव्याख्यासहितानि द्रष्टव्यानि।

२६. (क) अनुमानाधिकरणभामत्याम्—१।४।१
(ख) वाक्यान्वयाधिकरणभामत्याम्। १।४।६।
एतद्विषये प्रथमाध्याये 'शाङ्करसिद्धान्त.' इति नामके प्रकरणे विस्तरेण निरूपितम्।

२७. द्र० इष्टसिद्धौ—अविद्याविचारे।

२८. (क) विवरणे सप्तमवर्णके पृ० ६६३ अस्य चित्सुखाचार्यप्रणीता तात्पर्य-दीपिका व्याख्या तथात्र अखण्डानन्दप्रणीत तत्त्वदीपनं व्याख्यान चावलोकनीये।
(ख) विवरणे प्रथमवर्णके पृ० ९७ तथा ६६ पृष्ठगतं विवरणं तत्रत्ये तात्पर्यदीपिका तत्त्वदीपने चावलोकनीये।

न हि जीवेषु निसर्गजा विद्यास्ति, अविद्यैव हि नैसर्गिकी, तस्या आगन्तुकया विद्यया प्रविलय ।

( ब्र० सि० ब्र० का० का० १ पृ० १२ )

श्रीवाचस्पतिमिश्रोऽपि अविद्याया विषयो ब्रह्म आश्रयश्च जीव इति श्रीमण्डनमिश्रमतमनुसरति । यथोक्तम्—

'नाविद्या ब्रह्माश्रया किन्तु जीवे सात्वनिर्वचनीया ।'

( समन्वयाधिकरणभामत्याम् १-१-४ )

एवमेवानेकत्र भामतीकृता एतत्स्फुटीकृतम् ।[२९]

श्रीपद्मपादाचार्यस्तु अविद्याया आश्रयविषयभेदपरिहारेण तत्रैक्यमुपपादितवान् । अविद्याया आश्रयो विषयश्चैक ब्रह्मेति मनुते । यथोक्तम्—

अर्थाज्जीवे ब्रह्मस्वरूपप्रकाशाच्छादिका अविद्या कल्प्यते ।

( ब्र० सू० अध्यासभाष्ये पञ्चपादिकायाम् )

अत्र श्रीप्रकाशात्मस्वामिनेत्थं विवृतम्—

'न तावदज्ञानमाश्रयविषयभेदापेक्षम् किन्तु एकस्मिन्नेव वस्तुनि आश्रयत्वमावरणत्वं चेति कृत्यद्वयं सम्पादयति । स्वाश्रयावरकप्रदेशे कृत्यद्वयसम्पादिततमोवद् अक्रियात्मकत्वादावरणत्वाच्च । नहि तमो वस्तुद्वयापेक्षमवभासते ।

( तत्रैव प० पा० विवरणे पृ० २१० )

इदं चान्यत्रापि विवरणे बहु स्फुटीकृतम्[३०] ।

२९— ( क ) अध्यासभामत्याम् ।
( ख ) सर्वत्र प्रसिद्धाधिकरणभामत्याम् १।२।१ ।
( ग ) अनुमानाधिकरणभामत्याम् १।४।१ ।
( घ ) वाक्यान्वयाधिकरणभामत्याम् १।४।६ ।

३०— ( क ) विवरणे प्रथमवर्णके पृ० ९७ । ( मद्रासप्रकाशने )
( ख ) „ „ „ २१० । ( „ „ )
( ग ) „ „ „ २१९ । ( „ „ )
एतदर्थं द्रष्टव्य प्रथमाध्याय शाङ्करसिद्धान्त नामके प्रकरणे ।

आचार्यसुरेश्वरोऽपि अविद्याया आश्रयो विषयश्चैक मनुते।

## अन्यथाख्याति

अविद्यया तत्त्वाग्रहणरूपा विभ्रमो जायते। विभ्रम ख्यातिरूपेण पञ्चधा स्मृत।[32] तेषु अन्यथाख्यातिरूपा ( विपरीतख्याति ) विभ्रम आचार्याभिमत। तेन शुक्तौ इद रजतमितिभाने शुक्तौ अन्यथारूपेण रजतत्वरूपेण भान भवति। शुक्तौ इद रजतमितिज्ञानेन शुक्तिग्रहणे प्रवृत्तौ तथा नेद रजतमितिज्ञानोदयेन शुक्तिग्रहणेऽप्रसक्तौ किं कारणमिति विचारयन्नाह—

नेद रजतम् इति प्रसक्तप्रतिषेधरूपा प्रतीतिर्नाग्रहणेऽवकल्पते, प्रसङ्गाभावात्। न ह्यग्रहण कस्यचित् प्रसञ्जकम् अभावो हि स। विपरीता तु ख्याति सनिहितस्य रजततामभूता रजतस्य वा सनिहितता मदर्शयन्ती प्रसञ्जयति। तस्मादवश्य प्रतिषेध्यप्राप्त्य विपरीतख्याति रुपासनीया। अभ्युपेता तर्हि विपरीतख्याति।[33]

( ब्र० सि० ब्र० का० पृ० १४३ )

विभ्रमविवेकेऽपीयमेव ख्याति समर्थिता। यथा—

> विभ्रमेषु विवर्तत्वमतो ब्रह्मविदा मतम।
> असतो भासनायोगाद विरोधात सविदोऽपर ॥
>
> (वि०वि०श्लो०३६पृ०४)

---

३१— ( क ) नष्कर्म्यसिद्धौ तृतीयाध्याय प्रथमश्लोकस्यावतरणे ततदुपवर्णितम्।
( ख ) द्र० बृहदारण्यकभाष्यवार्तिके ( प्रथमभागे ) वा० १७५ १८२ पृ० ५५ ५८।
( ग ) द्र० बृहदारण्यकभाष्यवार्तिके ( द्वितीयभाग ) वा० १२१५ १२२७ पृ० ६७५ ६७७।

३२ आत्मख्यातिरसत्ख्यातिरख्यातिः ख्यातिरन्यथा।
परीक्षकाणा विभ्रान्तौ विवादात्सा विविच्यते॥ ( विभ्रमविवेके १ श्लो )

३३ ब्रह्मसिद्धौ नियोगकाण्ड ११४ १७३ का रकाष्विदमुपवर्णितम्।

विवर्तोऽन्यथाप्रथारूपस्तेन अन्यथाख्यातिरूपो विभ्रमो ब्रह्मविदा मतमित्यायातम् । श्रीमण्डनमतमिदमनुसृत्य पुरा श्रीवाचस्पतिमिश्रोऽपि अन्यथाख्यातिममन्यत, पश्चादनिर्वचनीयख्यातिवादित्वेन स प्रसिद्ध । अस्यान्यथाख्यातिवादित्वस्य निराकरण श्रीमदमलानन्देन कल्पतरौ कृतम्—

स्वरूपेण मरीच्यम्भो मृषा वाचस्पतेर्मतम् ।
अन्यथाख्यातिरिष्टास्येत्यन्यथा जगृहुर्मतम् ॥

(ब्र०सू० कल्पतरौ पृ०२४नि०सा०प्रे०व०१६१७ई०)

नैयायिकमते भाट्टमतेऽपीयमेवान्यथाख्याति समादृता । आचार्यसुरेश्वरेणान्यथाख्यातिरनादृता । तेनोक्तम्—

नचेह राजता धर्मो कुतो ज्ञानं तदाकृति ।
नह्याकारमनालिङ्ग्य ज्ञानमाकारवत् क्वचित् ॥

( बृ० भा० वा० भा० वा० १।४।४५३ पृ० ५२४ )

आनन्दगिरि— ..आकारमनालम्ब्य क्वचिदपि भ्रान्तावभ्रान्तौ वा ज्ञान नोपपद्यते सर्व हि ज्ञानमाकारवद् दृश्यते तदत्रैव विशिष्ट रूप्यमज्ञानजमेष्टव्यमित्यर्थ ।[३४]

ज्ञाताज्ञातविभागोऽतः स्वत सिद्धात्ममातृक ।
संविदा ज्ञाततासिद्धिर्भितेरपि न मात्मना ॥

( तत्रैव १।४।२८५ पृ० ३८६ )

यस्त्वज्ञात समुद्दिश्य तत्प्रमित्सन्ति मानिनः ।
ज्ञातत्वकार्यतश्चातः सिद्ध तत्फलतोऽथवा ॥

( तत्रैव १।४।२८६ )

---

३४ एतदर्थं बृ० भा० भा० वार्तिकस्यैतान्यपि वार्तिकानि द्रष्टव्यानि २८४ २८८ पृ०४५४ ।

यथोऽज्ञातत्वसंसिद्धिर्ज्ञातत्वस्यापि चाञ्जसा ।
तत एव च मानत्वं संविदर्तें न तत्त्रयम् ॥
( तत्रैव १।४।२८७ )

षष्ठगोचरवन्नेदमज्ञातत्वं समीक्ष्यते ।
न च प्रत्यक्षवत् सिद्धं स्वानुभूतिसमाश्रयात् ॥
( तत्रैव १।४।२८८)

विवर्तः

आचार्यमण्डनेन विवर्तपक्षः समादृतः परिणामपक्षश्च खण्डितः । तेन ब्रह्मसिद्धेः प्रथमकारिकाया अक्षर-पद-व्याख्यावसरे उक्तम्—

'अन्ये तु—मृदादिदृष्टान्तदर्शनात् परिणामिता ब्रह्मणो मन्यन्ते, तदपाक्रियते अक्षरमिति । कुतः ? 'ध्रुवः' 'नित्यः' इति तत्र तत्र श्रुतेः । अथ मतम्—परिणामित्वेऽपि तत्त्वाविघातान्न नित्यता व्याहन्यते, यथोक्तम्—'यस्मिन् विक्रियमाणेऽपि तत्त्वं न विहन्यते तदपि नित्यम्'' इति सत्यम्, तथापि तु यद् विशुद्धमात्मरूपं तस्याभावात् सर्वात्मना परिणतावनित्यत्वं, एकदेशपरिणतौ सावयवत्वान्नित्यत्वमेवत्वं च व्याहन्येते । इत्यादि ।
( ब्र० सि० ब्र० का० पृ० १ का० १९ )

अस्य व्याख्यावसरे शङ्खपाणिना स्पष्टाक्षरैः परिणामपक्षोऽनादृतः । तेनोक्तम्—

'अतोऽपरिणामित्वमेव ब्रह्मण इति सिद्धो नः पक्ष इति सूक्तम् 'अक्षरम्' इति ।

विवर्तशब्दार्थः

यद्यप्युक्तपूर्वोद्धरणैर्विवर्तपरिणामशब्दार्थयोः पार्थक्यं बुध्यते । तथापि ब्रह्मसिद्धावनेकत्र समानान्तरप्रयुक्तौ विवर्तपरिणामशब्दौ समानार्थाविव प्रतिभातः । यथाहि—

(१) अपि च एकत्व एवाय द्रष्टृदृश्यभावोऽवकल्प्यते, द्रष्टुरेव चिदात्मनस्तथा विपरिणामाद् विवर्तनाद्वा।

( ब्र० सि० ब्र० का० का० १ पृ० ७ )

(२) वाग्रूपान्वितं च जगत् । अतो वाचो विपरिणामो विवर्तो वा जगत् ।

( तत्रैव पृ० १८ )

(३) सर्वं ज्ञेयं वाग्रूपान्वित गम्यत इति तद्विकारस्तद्विवर्तो वा।

( तत्रैव पृ० १९ )

मोक्षः

अस्मिन् मतेऽविद्ययैवात्मा ससारी भवति विद्यया च मुक्तो भवति । " मुक्तत्वं च ब्रह्मीभाव' । मुक्तो जीवाना परब्रह्मणोऽभिन्नता जायते। तेनोक्तं यत्—

**अविद्यास्तमयो मोक्षः सा संसार उदाहृता ।**

**विद्यैव चाद्वया शान्ता तदस्तमय उच्यते ॥**

( ब्र० सि० ब्र० का० ३ का० १०६ पृ० ११९ )

'ब्रह्मभूय गतस्यापि' ( ब्र० सि० ब्र० का० का० १ पृ० १२ )

"एवमेव श्रवणादिभिर्भेददर्शने प्रविलीयमाने विशेषाभावात्तद्गते च भेदे, स्वच्छे परिशुद्धे स्वरूपे जीवोऽवतिष्ठते । अविद्ययैव जीवो विभक्त ,

---

३४ (क) सर्वाविद्याप्रविलये न छेद्यमवशिष्यते ।
बन्धहेतुरविद्यात्मा विद्याया सास्तमागता ॥

( ब्र० सि० नि० का० का० १०७ पृ० १२६)

(ख) 'अविद्या ससारः, विद्यैव चाविद्यानिवृत्ति. ।

( ब्र० सि० नि० का० पृ० १२१ )

तन्निवृत्तौ ब्रह्मस्वरूपमेव भवति, यथा घटादिभेदे तदाकाश परिशुद्ध परमाकाशमेव भवति।"

( ब्र० सि० ब्र० का० का० १ पृ० १२ )

अस्य व्याख्याने शङ्खपाणिरप्याह—

'यदि ब्रह्मणो जीवस्तत्त्वतो भिन्न स्यात्तत स्यादेवम् किन्त्व विद्यया, अतो विद्याविद्यानिवृत्तौ यथाब्रह्मरूपमेव भवतीत्यर्थ ।"

( ब्र० सि० श० पा० व्या० पृ० ३७ )

(१) चैत्रेण ग्रामस्य प्राप्तिरिव जीवेनाचिरादिना ब्रह्मण प्राप्तिर्मोक्ष, (२) मधुनि कुसुमरसानामिव ब्रह्मणि जीवस्याविभागापत्तिर्मोक्ष, (३) कार्यस्य कारणभावापत्तिर्मोक्ष। (४) जीवस्य ब्रह्मरूपपरिणामो मोक्ष इत्यादिपक्षानुपस्थाप्य रागापकर्षणेन स्फटिकस्येव स्वस्वरूपाविर्भाव एव मोक्ष इति स्वपक्ष आचार्यमण्डनेन सिद्धान्तित।

( ब्र० सि० नि० का० का० १०६, पृ० ११९, १२१ )

एतदेव ब्रह्मकाण्डेऽप्युक्तम्—

'ननु विद्यारूप ब्रह्मैव न विद्या ब्रह्मणोऽन्या, तच्च नित्यमकार्यम् तत्र कथ किञ्चिदपेक्ष्येत। उच्यते यथोपधानतिरोहितरूपस्फटिकमणि-रुपधानापकर्षण स्वरूपाभिव्यक्तयेऽपेक्ष्यते तथेहापि प्रष्टव्यम्। न हि स्फटिकमणे पूर्वरूप विनष्टमुपधानसनिधे तदपगमे वान्यदुत्पन्नम्, नह्यकस्मादनेकविसभागक्षणव्यवहितस्य पूर्वसभागक्षणस्योत्पत्ति सभवति, न ह्यग्निविगमेऽङ्गारेभ्य पुन काष्ठसततिप्रवृत्ति। तस्माद् यथैवापार्य स्फटिकरूपमुपधानापकर्षणमपेक्षते तथात्मरूपमपि।

( ब्र० सि० ब्र० का० पृ० ३७ )

## जीवन्मुक्ति

आचार्यमण्डनमते ज्ञानोदये सत्यपि तत्काल एव मुक्तिर्न भवति, किन्तु आरब्धकार्यकर्मक्षयानन्तर देहपातानन्तर मुक्तिर्भवति। ब्रह्मवेदना

तन्तर देहपातावधी तस्य ब्रह्मविदोऽवस्था जीवन्मुक्तिरित्यभिधीयते । ब्रह्मज्ञाने जाते सर्वाणि कर्माणि क्षीयन्ते केवल सस्कारवशादेव शरीरस्थितिर्ब्रह्मविद इत्याचार्यमण्डन प्रारब्धकर्मण क्षयो न भवतीति भगवाञ्छङ्कर ।

आचार्यमण्डनेनोक्तम्—

'न च ब्रूम ब्रह्मवेदनानन्तर एव देहवियोग , किन्तु आरब्धकार्यकमक्षय भोगेन प्रतीक्षते इति । तत्र कस्यचित् तत्कालोऽपवर्ग , कस्यचित् क्रियाच्चित् क्षेप यथा रज्ज्वा सर्पसमारोपसमुत्थभयजन्मानो वेपथुप्रभृतयस्तत्त्वदर्शनादपावृते भये कस्यचित्तदैव निवर्तन्ते, कस्यचित् कियन्तचित् कालमनुवर्तन्ते, तत्सस्कारात्, तथा सर्वकर्मक्षयेऽपि भुज्यमानविपाकसस्कारानुवृत्तिनिबन्धना शरीरस्थिति , कुलालव्यापारविगम इव चक्रभ्रान्ति, ।"

( ब्र० सि० नि० का० का० १०७ पृ० १३०-१३१ )

एतदग्रे पुनरुक्तम्—

'सा चेयमवस्था जीवन्मुक्तिरिति गीयते ।'

( ब्र० सि० नि० का० का० १०७ पृ० १३२ )

पुनरपि—

"अतो लब्धवृत्तिकर्मसस्कारात्तद्विपाकसस्काराद्वा विदुषोऽपि शरीर स्थिति । तदुक्त तन्त्रान्तरेऽपि—' तिष्ठति सस्कारवशाच्चक्रभ्रमवद्धृत शरीर ।" ( ब्र० सि० नि० का० का० १०७ पृ० १३२ )

अतोऽस्मिन् मते ज्ञानानन्तरमारब्धकर्माणि क्षीयन्ते किन्तु तेषा सस्कारादेव देहस्थितिर्भवत्यामुक्ते ।

भगवतश्शङ्कराचार्यस्य मते तु आरब्धकर्मण क्षय एव न भवति । इद मतमुत्थाप्य श्रीमण्डनेन खण्डितम् । यथा हि—

"ये तु मन्यन्ते—प्रवृत्तभोगानां कर्मणा प्रवृत्तवेगस्येषोरिव चक्रस्येव वा न प्रतिबन्ध शक्य , अतो भोगेन क्षयप्रतीक्षेति । तदसत्, शक्यो हीषु

प्रतिबद्धं पुष्ट्यादिभिः, नाशयितुं च च्छेदादिभिः। स्वप्नादिसूचितोपस्थित विपाकवर्तमानदेहभोग्यकर्मक्षयार्थानि च नास्तिकानि कर्माणि। तस्मात् संस्कारादेव स्थितिः।

( ब्र० सि० नि० का० का० १०७ पृ० १३२-१३३ )

अत्र शङ्खपाणिराह यदिदं मतं भगवत्पादश्रीशङ्करस्य।

'भगवत्पादीयं मतमुपन्यस्यति ये त्विति। तद्दूषयति तदिति।. स्वपक्षमुपसंहरति तस्मादिति। संस्कारादेवेति—प्रारब्धकार्यस्य कर्मण क्षयप्रतीक्षा निवर्तयति।

( ब्र० सि० ब्र० पा० व्याख्या पृ० २६४ )

एतद् श्रीलक्ष्मीधरेणानूदितम्—

मण्डनमिश्रैरप्येवमर्थोऽङ्गीकृतः प्रारब्धक्रियया जीवन्मुक्त समर्थयद्भिः।

( भगवन्नामकौमुद्याम् २ परि० )

अस्मिन् विषये भगवत्पादशङ्करसम्प्रदायाना विरोधः[36]। भगवत-

३६— ( क ) वर्तमानमिदं याभ्यां शरीरं सुखदुःखदम्।
आरब्धं पुण्यपापाभ्यां भोगादेव तयोः क्षयः।
( नै० सि० प्र० १ श्लो० १२ )

( ख ) उपरितनामाचार्यमण्डनोक्तिमुपालम्भयन्नाचार्यसुरेश्वरः कथयति—
अथापरं साम्प्रदायिकं।
निवृत्तसर्पः सर्पोत्थं यथा कम्पं न मुञ्चति।
विध्वस्ताखिलमोहोऽपि मोहकार्यं तथात्मवित्।
( नै० सि० अ० ४ श्लो० ६० )।

( ग ) एतदुपरितनमण्डनमतमाक्षिपति आचार्यविमुक्तात्मा—
सर्पभ्रान्तिनिमित्तभयकम्पपलायनादय इव तत्संस्काराद् रज्जुज्ञानेऽपीति चेत् तन्न अविद्याभावे संस्काराभावात्। ( इष्टसिद्धे जीवन्मुक्तिप्रक० पृ० ७६ गाय० ओ० सी० बडौदा—१९३३ ई० प्र० )

( घ ) बृ० भा० भा० वा० भा० २ पृ० ७३५,७४१ तथा छा० उ० ६।१४।२ शा० भा०।

शङ्करस्य मते जीवन्मुक्तः सिद्ध एव स्थितप्रज्ञ उच्यते[३७]। मण्डनमिश्र-मते स्थितप्रज्ञः केवलं साधको न तु सिद्धः। तेनोक्तम्—

'ननु पूर्वस्मिन् पक्षे तत्त्वज्ञानानन्तरत्वाद् देहपातस्य स्थितप्रज्ञलक्षणा-भिधान न युज्यते—स्थितप्रज्ञस्य का भाषा" इत्यादि, द्वितीयोऽपि सर्वक्षये चिरत्वानुपपत्तेस्तत्रावधिविशेषविधानायोगादनुपपन्नः। उच्यते—स्थित-प्रज्ञस्तावन्न विगलितनिखिलाविद्यः सिद्धः किन्तु साधक एवावस्थाविशेषं प्राप्तः स्यात्। न च ब्रूमः—ब्रह्मवेदनानन्तर एव देहवियोग, किन्तु आरब्ध-कार्यकर्मक्षयं भोगेन प्रतीक्षत इति। तत्र कस्यचित् तत्कालोऽपवर्गः, कस्यचित् कियांश्चित् क्षेपः, यथा रज्ज्वां सर्पसमारोपसमुत्थभयजन्मानो वेपथुप्रभृतयस्तत्त्वदर्शनादपावृत्ते भये कस्यचित् तदैव निवर्तन्ते, कस्यचित् कियन्तचित् कालमनुवर्तन्ते तत्संस्कारात्, तथा सर्वकर्मक्षयेऽपि भुज्य-मानविपाकसंस्कारानुवृत्तिनिबन्धना शरीरस्थिति, कुलालव्यापारविगम इव चक्रभ्रान्तिः।

( ब्र० सि० नि० का० का० १०७ पृ० १३०-१३१ )

---

३७— ( क ) ब्रह्मसूत्रे ३।३।३२ तथा ४।१।१५ शा० भा०।
( ख ) श्री० भ० गी ०।।म् अ० २ श्लो० ५४-७२ शा० भा०।
( ग ) भामत्याम् पृ० ९५६। ( नि० सा० प्रे० प्र० )
( घ ) "भाष्ये स्थितप्रज्ञलक्षणनिर्देशो जीवन्मुक्तिसाधक उक्तः, तत्र स्थित-प्रज्ञः साधको न तु साक्षात्कारवानिति मण्डनमिश्रैरुक्तं दूषणमुद्धरति स्थितिप्रज्ञश्चेति।"
( तत्रैव ब्र० सू० ४।१।१५ शा० भा० भामतीकल्पतरौ पृ० ९५८-९५९ )
(ङ) प्रश्नान्तरे विवक्षितमर्थमसमाप्यैव स्थितप्रज्ञलक्षणाभिधानोपपत्तये स्थितप्रज्ञस्वरूप तावदाह—स चायमिति। पूर्वं साधकः स्थितप्रज्ञ उक्तः, अधुना सिद्ध एवेति विशेषः।
( ब्र० सि० नि० का० का० १०७ शा० पा० व्याख्यायां पृ० २६२ )
(च) "स्थितप्रज्ञश्च न साधकस्तस्योत्तरोत्तरध्यानोत्कर्षेण पूर्वावस्थयानव-स्थितत्वात्। निरतिशयस्तु स्थितप्रज्ञः। स च सिद्ध एव।"
( ब्र० सू० ४।१।१५ शा० भा० भामत्याम्। )
(छ) अत्र भाष्ये ज्ञानकर्मणोः साक्षादेककार्यत्व परमतेनोक्त्वा, साक्षात्पारम्प-र्याभ्यां मोक्षहेतुत्व स्वमतमुक्तमिति मन्तव्यम्।
( ब्र० सू० ४।१।१५ शा० भा० रत्नप्रभायाम् )

अन्यथा शङ्खपाणिव्याख्यापि द्रष्टव्या पृ० २६१-२६३।
एतदेवाभिप्रेत्य सर्वज्ञात्ममुनिना संक्षेपशारीरके उक्तम्—

जीवन्मुक्तिगतो यदाह भगवान् सत्सम्प्रदायप्रभु-
र्जीवाज्ञानवचस्तदीदृगुचितं पूर्वापरालोचनात्।
अन्यत्रापि तथा बहुश्रुतवचः पूर्वापरालोचना-
न्नेतव्यं परिहृत्य मण्डनवचस्तद्ध्यन्यथा प्रस्थितम्॥
सं० शा० १७४ श्लो० पृ० ५५५ )

मोक्षसाधनम्

आचार्यमण्डनो मुक्तये न केवलं कर्मेवाल न वा केवलं ज्ञानं किन्तु धर्मं ज्ञानञ्चोभयमेव कारणम्। कर्मणा किमप्यदृष्टं जायते, येन क्रमशो मिथ्यावभासनिवृत्तिर्भवति, ततो ज्ञानेन तत्त्वसाक्षात्कारानन्तरं मुक्तिर्जायते।

एतत्प्रसङ्गे सप्तपक्षानुद्धृत्य समाहित्य चात्र उक्तम्—

"अत्रोच्यते—निश्चितेऽपि प्रमाणात् तत्त्वे सर्वत्र मिथ्यावभासा निवर्तन्ते, हेतुविशेषादनुवर्तन्तेऽपि, यथा द्विचन्द्रदिग्विपर्यासादय आप्तवचनविनिश्चितदिक्चन्द्रतत्त्वानाम्, तथा निर्विचिकित्सादाम्नायादवगतात्मतत्त्वस्यानादिमिथ्यादर्शनाभ्यासोपचितदृढतरसंस्कारसामर्थ्यान्मिथ्यावभासानुवृत्तिः, तन्निवृत्त्यर्थेऽन्यदपेक्ष्यम्, तच्च तत्त्वदर्शनाभ्यासो लोकसिद्धः। यज्ञादयश्च शब्दप्रमाणकाः, अभ्यासो हि संस्कारं द्रढयन् पूर्वं संस्कारं प्रतिबध्य स्वकार्यं सतनोति, यज्ञादयश्च केनाप्यदृष्टेन प्रकारेण, श्रेयःपरिपन्थिकलुषनिर्वहणद्वारेणेत्यन्ये, नित्यानां कर्मणां दुरितक्षयार्थत्वात्।

( ब्र० सि० ब्र० का० का० २ पृ० ३५ )

अत्र शङ्खपाणिर्व्याचष्टे—

"तत्राभ्यासस्य उपासनापरपर्यायस्योपयोगमाह—अभ्यासो हीति। ......तदेव मिथ्यावभासनिवृत्त्यर्थं कर्मोपसनानुप्रवेशो दर्शित·।

( ब्र० सि० श० पा० व्या० पृ० ९६-९७ )

एवमत्र अभ्यास उपसनार्थकस्तयोपासना मिथ्यावभासनिवृत्त्य आवश्यकीति स्पष्टम्।

पुनश्च—

'श्रुतयस्त्वभ्यासपरिनिष्पत्यवस्थाविषया शब्दसाधनज्ञानापेक्षा वा भवन्तु तद्धेतुत्वादुत्तरस्य—इत्यलमतिविस्तरेण।"

( ब्र० सि० ब्र० का० २ पृ० ३७ )

अत्र शङ्खपाणि —

ननु शाब्दज्ञानमात्रान्न मुक्तिरित्युक्तम्, मुक्त्यनुगुणं च ज्ञानं विदिनोच्यते, तत्कथं शाब्दज्ञानमुच्यत इत्याशङ्क्याह—तद्धेतुत्वादिति। शाब्दज्ञानहेतुत्वादुत्तरस्य साक्षात्कारिज्ञानस्येत्यर्थः। यद्यपि शाब्दज्ञानं न साक्षान्मुक्तिसाधनम्, तथापि मुक्त्यात्मकसाक्षात्कारिज्ञानहेतुत्वात् पारम्पर्येण मुक्तिहेतुतया विदिनोच्यत इति भाव।

( ब्र० सि० ब्र० का० का० २ श० पा० व्या० पृ० ९९ )

एतदग्र आचार्यशङ्खपाणिराचार्यमण्डनस्य ज्ञानकर्मसमुच्चयपक्षमित्थं प्रकटयति—

"एवं कर्मसाक्षात्कारज्ञानयोरुपायोपेयलक्षणसम्बन्धप्रदर्शनेन ज्ञानकर्मणोरसम्बन्धपक्षं दूषयित्वा ऋणापकरणपक्षमिदानीं दूषयितुमनुवदति।"

( तत्रैव पृ० ९९ )

अत्रैवाचार्यमण्डनेन मुक्तौ कर्मण आवश्यकताप्रतिपादनावसरे ऋणत्रयस्यानपाकरणं विद्योदये प्रतिबन्धकमित्युक्तम्—

'प्रतिपन्नगार्हस्थ्यस्यात्मविद्ययैव कृतकृत्यता मन्वानस्य ऋणापाकरण प्रत्यनादृतस्य विहिताकरणनिमित्तस्य पाप्मनो विद्योदयप्रतिबन्धृत्वं दर्शयति—"ऋणानि त्रीण्यपाकृत्य" इति।

विनापि कर्म ज्ञानोदयसम्भव इति पूर्वपक्षमुद्भाव्य क्षिप्रं क्षिप्रतरं च ज्ञानोदयाय कर्मण आवश्यकतेति प्रतिपादनपरेणाचार्येण "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" ( ब्र० सू० ३।४।२६ ) इत्यस्य ज्ञानोदये कर्मण उपयोगितापरा व्याख्यापि कृता।

यथाहि—

समाहितचित्तस्याभ्यस्यतो ज्ञानप्रसादोत्पत्ते, न तु यज्ञादय, तैर्विनाप्यभ्यासेन तत्सम्भवात्। सत्यम्, तथा चोर्ध्वरेतसा चाश्रमिणा विनापि तैर्विशुद्धविद्योदय इष्यतें, किन्तु कालकृतो विशेष साधनविशेषाद्धि सा क्षिप्रं क्षिप्रतरं च व्यज्यते, तदभावे चिरेण चिरतरेण च। तदुक्तम्—"सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" एषोऽर्थ —"यज्ञेन दानेन' इति श्रवणात् कर्माण्यपेक्ष्यन्ते विद्यायामभ्यासलभ्यायामपि यथान्तरेणाप्यश्वं ग्रामप्राप्तौ सिद्ध्यन्त्या शीघ्रप्रायाक्लेशाय वाश्वोऽपेक्ष्यते।

( ब्र० सि० ब्र० का० का० २ पृ० ३७ )

उक्तसूत्रस्य "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" इत्यस्य शाङ्करभाष्ये विद्योदये कर्मणोऽनुपयोगिता प्रदर्शिता[३८]

एवमेव आचार्यमण्डनेन 'विद्या च' इति ईशावास्योपनिषदो मन्त्रस्य व्याख्याने, अविद्यापदेन श्रवणादिर्गृहीतो विद्यापदेन च ज्ञानं गृहीतं कर्मण उपेक्षा न कृता यथाहि—नाविद्यामन्तरेण विद्योदयोऽस्ति अविद्यया श्रवणादिलक्षणया विद्यारूपोपलक्षितममृतमश्नुते स्वरूपावस्थानम्।

( ब्र० सि० ब्र० का० का० १ पृ० १३ )

किन्तु भगवता शङ्करेणास्य भाष्ये विद्योदये कर्मण उपेक्षा कृता-यथा हि—"अविद्यया कर्मणा अग्निहोत्रादिना विद्यया देवताज्ञानेन अमृत

३८ ( क ) अश्ववदिति योग्यतादर्शनम्। यथा च योग्यतावशेनाश्वो न लाङ्गलाकर्षणे युज्यते रथचर्यायां तु युज्यते। एवमाश्रमकर्माणि विद्यया फलसिद्धौ नापेक्ष्यन्ते उत्पत्तौ चापेक्ष्यन्त।

( ब्र० सू० शा० भा० ३।४।२६ )

( ख ) ब्र० सू० ३।४।२० शा० भा० तथा ३।४।५७ शा० भा० )

देवतात्मभावम्' इत्युक्त्वा कर्मणा ब्रह्मज्ञान न भवतीति स्पष्टितम् । इत्थमेव बृहदारण्यकोपनिषद्भाष्यवार्तिकस्य उपर्युक्तशाङ्करशब्दानुसारिणी आनन्दगिरिकृतव्याख्यापि द्रष्टव्या— ( बृ० आ० उ० भा० वा० भागे २ श्लो० १७६५-१७६६ पृ० ७७९ )

आचार्यमण्डनो 'विहितत्वाच्चाश्रमकर्मापि' इति ब्रह्मसूत्रम् (३।४।३२) प्रमाणत्वेनोपस्थाप्य संन्यासाश्रमे प्रवेशाय कर्मणामपेक्षेति वर्णयति तथा ब्रह्मचर्यगृहस्थाश्रमकर्मसम्पादनपूर्वक शनैः शनैः सन्यासाश्रमे प्रवेश इति मन्यते ।

( ब्र० सि० ब्र० का० का० २ पृ० ३६ )

आचार्यसुरेश्वरो विनापि कर्माभ्यास साक्षात्सन्यासाश्रमे प्रवेश मनुते ।[३९]

अप्पयदीक्षितेन तु सिद्धान्तलेशसङ्ग्रहे उक्तं यत् कर्मणा ब्रह्मविविदिषोत्पद्यते ।[४०]

इत्थञ्चाचार्यमण्डनो मुक्तिसाधनविषये ज्ञानकर्मसमुच्चयवादमङ्गीकरोति । आचार्यशङ्कर आचार्यसुरेश्वरश्च मुक्तिसाधन केवल ज्ञानमेव मन्वाते ज्ञानकर्मसमुच्चयपक्ष च नाङ्गीकुरुतः ।[४१] आचार्यसुरेश्वरो बृहदारण्यकोपनिषद्भाष्यवर्तिके ४।४।७८६-८१० वार्तिकेषु आचार्यमण्डनाभिप्रेत ज्ञानकर्मसमुच्चयपक्ष निराकृतवान् । अत्रानन्दज्ञानव्याख्यायामेतत्स्पष्टम् ।

३९. नै०सि०वा०७०-७३ । बृ०आ०भा०वा०भागः १ पृ०१३, भा०२श्लो० २६०,भा० ३ श्लो०१०७१ पृ०१८६६, पृ०१२२८-१२३० १९२३, भा० ३श्लो०१०६-११० पृ०१२६४-१२६५, श्लो०२००-२०४ पृ०१२७४ ।बृ० उ०शा०भा० पृ०६८४-३९५ । ब्र०सू०शा०भा०३।४।२०तथा ३।४।४७ ।

४० सि०ले०स०-पृ०४०२-४०८, बनारस १९१६ई०प्रका० ।

४१ (क) ब्रह्म० सू० १।१।१-४ शा० भा० तथा भामत्याम्, एवमेव ३।४।१ तथा ३।४।५२ शा० भा० ।

(ख) नै० नि० वा० १।४६-५१ पृ० ३०-३२ ।

(ग) बृ० आ० भा० वा० भागः १, श्लो० ३२१-३२५ पृ० ९८-९९ भा० ३ श्लो० ७९८२, पृ० ११६१ बृ० भा० उ० शा० भा० ३।४।३ तथा ३।४।२६ पृ० ४१२-४१३, पृ० ६५७-६५८ तथा पृ० ६८४-६९५ ।

## प्रसंख्यानम्

श्रीमण्डनमिश्रः प्रसङ्ख्यानपक्षमङ्गीकरोति । अस्मिन् पक्षे 'तत्त्वमसि' इतिवाक्यजन्यबोधसाक्षात्कारवत्—'तत्त्वमसि' इति महावाक्येन ब्रह्मसाक्षात्कारो न स्वीक्रियते, किन्तु महावाक्येन केवलं ब्रह्म विज्ञायते ततः उपासनया ब्रह्म साक्षात्क्रियते । अत एव 'विज्ञाय प्रज्ञां कुर्वीत' (बृ० आ० उ० ४।४।२१) इत्यादिश्रुतयः संगच्छन्ते । प्रज्ञाम्—उपासनामित्यर्थः । इदमेव प्रसंख्यानमुच्यते । यथा श्रीसुरेश्वराचार्येण प्रसंख्यानार्थो निरूपितः—प्रसंख्यानं नाम तत्त्वमस्यादिशब्दार्थान्वयव्यतिरेकयुक्तिविषयबुद्ध्याम्रेडनमभिधीयते, तच्चानुष्ठीयमानं प्रमितिवर्धनया परिपूर्णां प्रमितिं जनयति न पुनरैकाग्र्यवर्धनयेति । ( नै० सि० ३।९० पृ० १६० ) तथा—आवृत्तिर्हि प्रसंख्यानं शब्दयुक्त्योरिति स्थितम् । ( बृ० आ० भा० वा०, स० बा० ८०३ पृ० २२१ । अत्रानन्दगिरिः—श्रवणमननयोरावृत्तिस्त्वया प्रसंख्यानमभ्युपेतम् । एवमेव—"प्रसंख्यानस्य चित्तैकाग्र्यरूपस्य ।" ( नै० सि० ३।८९ च० टी० ) एतत्पक्षो ब्रह्मसिद्धौ बहुषु स्थलेषु निर्दिष्टस्तथा श्रीसुरेश्वराचार्येण नैष्कर्म्यसिद्धौ बृहदारण्यकोपनिषद्भाष्यवार्तिके चानेकवारमालोचितः ।

यथा ब्रह्मसिद्धावाचार्यमण्डनस्य प्रसङ्ख्यानसमर्थनम्—

"उच्यते परोक्षरूपं शाब्दज्ञानम्, प्रत्यक्षरूपः प्रपञ्चावभासः, तेन तयोरविरोधेन प्रपञ्चावभासो नात्मासंस्पर्शी, नाकिञ्चित्करः, न बन्धः, यथा प्रमाणान्तरादवसीयमानमाधुर्येऽपि द्रव्ये प्रत्यक्षरूप इन्द्रियद्वारस्तिक्तावभासः सद्रव्यसंस्पर्शी नाभासमानतयावतिष्ठते, तथा च द्रव्यं परमार्थतिक्तमिवानवसितमाधुर्यमिव दुःखाय भवति । उपासनादिना साक्षात्कृतात्मतत्त्वस्य तु विरोधात् सन्नपि प्रपञ्चावभासो नात्मसंस्पर्शी, देवदत्त इव सिंहावभासः, 'सिंहो देवदत्तः' इति समारोपेऽवभासमानोऽपि तदसंस्पर्शी, अकिञ्चित्करः, न भयहेतुः । नित्यश्चात्मतत्त्वप्रकाशः, तत्र न पुनर्विपर्ययावकाशोऽस्ति शाब्दं तु प्रमाणाधीनं क्षणिकं ज्ञानम्, तत्र

पुनरपि विपर्ययावकाशः, दृष्ट हि प्रमाणाननुसन्धाने पुनः सर्पभ्रान्त्या रज्जोर्भयम् ।"

( ब्र० सि० नि० का० १०७ का० पृ० १३४ )

एवमेव–

"अत्रोच्यते–निश्चितेऽपि प्रमाणात् तत्त्वे सर्वत्र मिथ्यावभासा निवर्तन्ते, हेतुविशेषादनुवर्तन्तेऽपि, यथा द्विचन्द्रादिदिग्विपर्यासादय आप्तवचनविनिश्चितदिग्चन्द्रतत्त्वानाम्, तथा निर्विचिकित्सादाम्नायादवगतात्मतत्त्वस्यानादिमिथ्यादर्शनाभ्यासोपचितवलवत्संस्कारसामर्थ्यान्मिथ्यावभासानुवृत्ति तन्निवृत्तयेऽन्यदपेक्ष्यम् । तच्च तत्त्वदर्शनाभ्यासो लोकसिद्धः, यज्ञादयश्च शब्दप्रमाणकाः, अभ्यासो हि संस्कारं द्रढयन् पूर्वसंस्कारं प्रतिबध्य स्वकार्यं सतनोति, यज्ञादयश्च केनाप्यदृष्टेन प्रकारेण, श्रेयःपरिपन्थिकल्पनिर्बहणद्वारेणेत्यन्ये, नित्यानां कर्मणां दुरितक्षयार्थत्वात् ।"

( ब्र० सि० ब्र० का० २ का० पृ० ३५ )

"तस्मात् तन्निवृत्त्यै विनिश्चितब्रह्मात्मभावेनापि साधनान्यपेक्ष्याणि ।"

( तत्रैव ३५ )

तथैव—

'यदि मतम्—प्रत्यक्षादीन्यपि प्रवृत्त्यङ्गान्येव, प्रमितेर्ह्यर्थे हानोपादानादिलक्षणायाः प्रवृत्तेस्तन्मूलत्वात् । इदृश प्रवृत्त्यङ्गत्वमनाप्यस्त्यैव, शब्दात्प्रमिते ब्रह्मणि साक्षात्करणाय प्रवृत्तेरिष्टत्वात् ।

( ब्र० सि० सि० का० ११ का० पृ० १५९ )

अत्र शङ्खपाणि —

"एवं तर्हि शब्दात्प्रमिते ब्रह्मणि तत्साक्षात्करणायोपासनादिप्रवृत्तेर्वेदान्तजज्ञानस्य तदङ्गत्वे इष्यतामपुरुषार्थानां वेदान्तानां प्रामाण्यमितिभाव ।"

श्रीमण्डनेन ब्रह्मणि तिस्रः प्रतिपत्तयः प्रदर्श्य खण्डिता मध्ये अन्ते च शब्दाज्ज्ञाते ब्रह्मणि साक्षात्काराभ्यासादयः प्रतिपादिताः—

'तिस्रश्च प्रतिपत्तयो ब्रह्मणि, प्रथमा तावच्छब्दात्, अन्या शब्दात्प्रतिपद्य तत्सन्तानवती ध्यानभावनोपासनादिशब्दवाच्या, अन्या ततो ध्याननिष्पत्तिविगलितनिखिलविकल्पा साक्षात्करणरूपा।

( ब्र० सि० नि० का० आर्दा० पृ० ७८ )

इमास्तिस्रः प्रतिपत्तयः। मध्ये एतन्निरसनायोक्तम्—

'तस्माच्चोदितेऽपहतपाप्मादिरूप आत्मतत्त्वे प्रतिपन्ने तस्य साक्षाज्ज्ञानं प्रति तदनुभवोपायत्वात् स्वयमेव पुरुषस्याभिमुख्यं भवतीति व्यर्थं तद्विधानम्। यथाश्चर्यभूते कस्मिंश्चिदर्थे आगमात्प्रतिपन्ने तस्य साक्षात्करणे स्वयमेवोन्मुखत्वं भवति, तदुपायेषु त्वज्ञातेषूपायत्वज्ञापनाय विधानं युज्यते। तदेवं ज्ञाने नियोगानुपपत्तेर्नियोगे च वस्तुस्वरूपावगमे प्रामाण्यायोगाद्व्यवस्थितात्मतत्त्वप्रतिपत्तिमिच्छता शब्दान्न तस्य नियोगानुप्रवेशोऽभ्युपगन्तव्य इति।'

( ब्र० सि० नि० वा० १७६ पृ० १५३ )

अतोऽग्रे पुनः सिद्धान्तयति—

'तथा च विज्ञाय प्रज्ञां कुर्वीत' इत्यात्मतत्त्वविज्ञानाय सिद्धवत् दर्शयति। तदपि वा व्यर्थमेव प्राप्तार्थत्वात्। साक्षात्करणफलं हि तत्तदनुचिन्तनं दृष्टार्थम्, न ततोऽन्यत् फलमाकाङ्क्षते। अमृतत्वं हि न स्वरूपाविर्भावादन्यदिति प्राग्वर्णितम्। दृष्टा च ज्ञानाभ्यासस्य सम्यग्ज्ञानप्रसादहेतुता लोके। भावनाविशेषाद्धि अभूतमप्यनुभवमापद्यते, किं पुनर्भूतम्। इत्यादि।

शब्दात्परोक्षतयावगतस्याद्वयात्मन साक्षाद्भाव । न चानुचिन्तनस्य भोजनस्येव तृप्तिर्दृष्ट फलम्, ज्ञानाभ्यासेन प्रकर्षदर्शनात् ।'

अथ श्रीमण्डनमिश्रस्य प्रसङ्ख्यानपक्ष । भगवाञ्छङ्कराचार्य — 'तत्त्वमसि' इतिमहावाक्येन शब्दादेव ब्रह्मसाक्षात्कारमङ्गीकरोति, तदनुयायिन श्रीसुरेश्वराचार्यप्रभृतयोऽपि तमेवानुसरन्ति श्रीमण्डनमत च भृशमालोचयन्ति ।

भगवान् श्रीशङ्करस्तदनुयायिनश्च कथयन्ति यद् ब्रह्मसाक्षात्कारे केवल विद्यैव हेतु । श्रीशङ्कराचार्यस्य यथेमे शब्दा —

'विद्यायाश्च स्वातन्त्र्यात् । स्वतन्त्रा हि ब्रह्मविद्या सहकारिसाधनान्तरनिरपेक्षा पुरुषार्थसाधनेति च ।'

( बृ० आ० उ० शा० भा० ४।३।१ पृ० ५४५ )

एवमेव श्रीसुरेश्वराचार्योऽपि वदति —

तत्त्वमस्यादिवाक्योत्थसम्यग्धीजन्ममात्रत ।
अविद्या सहकार्येण नासीदस्ति भविष्यति ॥

( बृ० आ० उ० भा० वा० सं० वा० १८३ पृ० ५८ )

एतदर्थम्–१७५ इत्यत आरभ्य १८३ पर्यन्त वार्तिकानि द्रष्टव्यानि ।

अग्रे च—

अव्याकृताधिकारे च यदुक्त प्राक्समासत ।
ब्रह्मण्यविद्यासंसिद्ध्यै स्मर्तव्य तदिहाखिलम् ॥

( बृ० आ० उ० भा० वा० १।४।१२१५ पृ० ६७५ )

विद्याविधानाच्चाविद्या ब्रह्मण्यस्तीति गम्यताम् ।
विद्याविधान विज्ञाते पिष्टपेषणवद् यत ॥

( तत्रैव वा० १।४।१२१६ )

अत पराण्यपि १२२७ पर्यन्तानि वार्त्तिकानि द्रष्टव्यानि। एतेषु ब्रह्म-साक्षात्काराय केवल ज्ञानमेवापेक्षितमिति वर्णितम्।

एवमभिदधता श्रीसुरेश्वराचार्येण प्रसंख्यानपक्ष इत्थमालोच्यते—

**एवमैकात्म्यतात्पर्ये शास्त्रस्येष्टेऽपि युक्तिभि.।**
**केचित्कार्यमपीच्छन्ति तदर्थं तन्न युज्यते।**
*( बृ० आ० उ० भा० वा० स० वा० ७९० पृ० २१८ )*

अत्रानन्दगिरिः—प्रसङ्ख्यानवादमुपसहरति—एवमिति।......वेदान्तेषु कार्यमपि प्रसङ्ख्यानविषय केचिदिच्छन्तीति योजना तदर्थमित्यैकात्म्यानुभवार्थमित्यर्थः। प्रसंख्यानवादे दोष समाचयति—तन्नेति। तथा—

**आवृत्तिश्च प्रसंख्यानं कुर्यात्सातिशयं कथम्।**
**न ह्यावृत्तौ प्रमाणस्य प्रमेयेऽतिशयो यतः॥**
( तत्रैव ८१८ पृ० २२५ )

एवञ्च ७८५ इत्यारभ्य ८४९ सम्बन्धवार्त्तिकेषु तथा ४।४।७९६ इत्यारभ्य ८१० वार्त्तिकेषु प्रसंख्यानवादो भृशमालोचित। एषु कानिचित् सविशेष मननीयानीमानि वार्त्तिकानि—

**तत्त्वमस्यादिवाक्योत्थविज्ञानेन यथोदितम्।**
**विज्ञाय वस्त्वसंगिप्रज्ञां कुर्वीत यत्नतः॥**
( बृ० आ० उ० भा० वा० ४।४।७९७ पृ० १९५२ )

**अरब्धब्रह्मयाथात्म्यं ज्ञानं वाक्योद्भवं यतः।**
**तस्मात्प्रज्ञां प्रकुर्वीत साक्षाद् ब्रह्मैकगोचराम्॥**
**अपास्ताशेषसंसर्गं यया ब्रह्माधिगम्यते॥**
**येनेति च व्यपेक्षायां विज्ञानेनेति गम्यते॥**

तस्माद् वाक्योत्थविज्ञानसाधनाभ्यासतोऽनिशम् ।
प्रज्ञां कुर्यादसंसर्गिब्रह्मयाथात्म्यबोधिनीम् ॥
अपेताशेषसंसर्गं तयैव ब्रह्म गम्यते ।
यतोऽशेषतमोहन्त्री प्रज्ञा सैवात इष्यते ॥
( बृ० भा० उ० भा० वा० ८०३—८०८ पृ० १८५३ )

श्रीसुरेश्वराचार्येण प्रसङ्ख्यानवादस्वीकाराद्धेतोरयं श्रीमण्डनमिश्र उपहासपात्रतां नीतः। यथा पण्डितम्मन्यशब्देन—

अन्ये तु पण्डितम्मन्याः सम्प्रदायानुसारतः ।
विज्ञायेति वचः श्रौतमिदं व्याचक्षतेऽन्यथा ।
( तत्रैव ४।४।७९६ पृ० १८५२ )

अत्रानन्दगिरि —

सम्प्रत्यकार्यकारणासामान्यविशेषं प्रत्यग्ब्रह्मेत्युपगच्छतां मण्डनादीनां तद्व्याख्यानमुत्थापयति— अन्ये त्विति ।

यथा महामीमांसकशब्देन—

इति व्याचक्षते केचिद् विज्ञायेति वच स्फुटम् ।
महामीमांसका धीरा अत्र प्रतिविधीयते ॥
( तत्रैव ४।४। ८९१ पृ० १८६६ )

यथा गम्भीरन्यायवेदिशब्देन—

इत्येवमादिवाक्यानि गम्भीरन्यायवेदिनः ।
केचिद् व्याचक्षते यत्नादत्र प्रतिविधीयते ॥
( तत्रैव ४।४।८१० पृ० १८५३ )

यथा वेदार्थनिश्चितशब्देन—

असन्तोषादतोऽन्येऽत्र भूरिदोषप्रदर्शिनः ।
व्याख्यानादन्यथा चक्रुर्व्याख्यां वेदार्थनिश्चिताः ॥
( तत्रैव ४।४।८७६ पृ० १८६४ )

श्रीमधुसूदनसरस्वत्यप्येन वेदान्तकल्पलतिकायां परिहसितवान्—
'केचित् तार्किकेभ्यो बिभ्यत ।' ( वे० क० ल० पृ० ६८ )

नैष्कर्म्यसिद्धौ श्रीसुरेश्वराचार्य स्पष्टमेव तत्त्वमसीतिमहावाक्येन ब्रह्मसाक्षात्कारमभिप्रैति—

नवसंख्याहृतज्ञानो दशमो विभ्रमाद् यथा ।
न वेत्ति दशमोऽस्मीति वीक्षमाणोऽपि तान्नव ॥
( नै० सि० अ० ३ का० ६४ )

अविद्याद्वयोऽप्येवं तत्त्वमस्यादिना विना ।
वेत्ति नैकलमात्मानं नात्वेष्यं चात्र कारणम् ॥
सेयं भ्रान्तिर्निरालम्बा सर्वन्यायविरोधिनी ।
सहते न विचारं सा तमो यद्वद् दिवाकरम् ॥
बुभुत्सोच्छेदिनी चास्य सदसीत्यादिना दृढम् ।
प्रतीचि प्रतिपत्तिः स्यान्नासौ मानान्तराद् भवेत् ॥
जिज्ञासोर्दशमं यद्वन्नवातिक्रम्य ताम्यत ।
त्वमेव दशमोऽसीति कुर्यादेवं प्रमावच ॥
दशमोऽसीतिवाक्योत्था न धीरस्य विहन्यते ।
आदिमध्यावसानेषु न नवस्वस्य संशय ॥
एवं तत्त्वमसीत्यस्माद् द्वैतनुत्प्रत्यगात्मनि ।
सम्यग्ज्ञाततत्त्वमर्थस्य जायेतैव प्रभा दृढा ॥

प्रत्यक्तास्य स्वतोरूपं निष्क्रियाकारकाफलम् ।
अद्वितीयं तदिद्धा धीः प्रत्यगात्मन्येव लक्ष्यते ॥
विपश्चितोऽप्यतस्तस्यामात्मभावं वितन्यते ।
दवीयस्स्विन्द्रियार्थेषु क्षीयते ह्युत्तरोत्तरम् ॥
( नै० सि० अ० ३ का० ६५—७२ )

एतत्समानाक्षरमेव बृहदारण्यकभाष्यवार्तिकेऽप्यनेनाचार्येणोक्तम्—

नवसंख्याहृतज्ञानो दशमो विभ्रमाद् यथा ।
न वेत्ति दशमोऽस्मीति वीक्षमाणोऽपि तान्नव ॥
( बृ० भा० उ० भा० वा० सं० वा० २२१ पृ० ६५ )

अवविद्धद्वयोऽप्येवं तत्त्वमित्यादिना विना ।
वेत्ति नैकलमात्मानं प्रत्यङ्मोहाप्रबोधतः ॥
बुभुत्सोच्छेदिनैवास्य सदसीत्यादिना दृढा ।
प्रतीचि प्रतिपत्तिः स्यात्प्रत्यगज्ञानबाधया ॥
( तत्रैव २२२—२२३ )

एवंविधो विचारोऽत्र सम्बन्धवार्तिके २०६ वार्तिकत आरभ्य २१६ वार्तिकपर्यन्त द्रष्टव्य ।

श्रीसुरेश्वर प्रसंख्यानपक्ष दार्ढ्येन निराकरोति—

निराकुर्यात्प्रसंख्यानं दुःखित्वं चेत्स्वनुष्ठितम् ।
प्रत्यक्षादिविरुद्धत्वात्कथमुत्पादयेत्प्रमाम् ॥
( नै० सि० ३।८९ पृ० १६० )

इत आरभ्य ९३ वा० पर्यन्त प्रसंख्यानपक्ष सम्यगालोचितः ।

एवमेव—

"तस्मात्तदनुवृत्तौ द्वैतानर्थाभाव । तदपनोदश्च तत्पदपदार्थाभिज्ञस्य । अतो वाक्यव्याख्यानायाध्याय आरभ्यते । अत्र यथोक्तेन प्रकारेण तत्त्वमस्यादिवाक्यापनिविष्टपदपदार्थयो कृतान्वयव्यतिरेक ।

यदा ना तत्त्वमस्यादेर्ब्रह्मास्मीत्यवगच्छति ।
प्रध्वस्ताहं ममो नैति तदा गोर्मनसो सृतिम् ॥

( नै० सि० ३।१ )

इत्यमेव प्रसङ्ख्यानखण्डन नै० सि० ३।१२३ १२५ कारिकासु तथा प्रथमाध्याय ६७ कारिकायामपि द्रष्टव्यम् ।

श्रीवाचस्पतिमिश्र प्रसङ्ख्यानपक्षमेवाङ्गीकरोति । श्रीमदमलानन्दोऽपि तमेवानुसरति । यथाह—

अपि संराधने सूत्राच्छास्त्रार्थप्रमजा प्रमा ।
शास्त्रदृष्टिर्मता ता तु वेत्ति वाचस्पति परम् ॥

( ब्र० सू० शा० भा० कल्पतरौ पृ० २१८ नि० सा०, बम्बई प्र० १९१७ ई० )

ब्रह्मसूत्रकारो बादरायणाचार्योऽपि प्रसङ्ख्यानमनुमोदते । यथा तस्य सूत्रम्—

अपि च संराधने प्रत्यक्षानुमानाभ्याम् ।

( ब्र० सू० ३।२।२४ )

संराधनम्-आराधनमेव ।

एवमाचार्यमण्डनाङ्गीकृतप्रसङ्ख्यानपक्षो भगवत्पादश्रीशङ्करश्रीसुरेश्वराचार्याभ्यां निराक्रियत तथा बादरायणवाचस्पत्यमलानन्दै समाद्रियत ।

इत्थमयमाचार्यमण्डनोऽद्वैतभेदेषु सत्ताद्वैतवाद भावाद्वैतवाद वाङ्गीकरोति । ब्रह्मण सच्चिदानन्दस्वरूपम् । तत्तल्लक्षणघटकीभूते सत्पदार्थे सत्ताद्वैतवादिना विशेष पक्षपात । सत्ताद्वैतवादिन सद्ब्रह्म-अक्षर ब्रह्म मन्यन्ते, अक्षरपदेन च प्रणव शब्दतत्त्व च गृह्णन्ति । एवमेव सदेव गता, सतैव च जाति प्रातिपदिकार्थो धात्वर्थश्च । ( वा० प० ३ या जा०

स० ३४ का० ) एतत्सर्वं शब्दतत्त्वमेव। अत एतन्मते शब्द एव ब्रह्म। आचार्यभर्तृहरिरप्येवमेव मन्यते। तेनाचार्यभर्तृहर्यभिप्रेतशब्दब्रह्माद्वैत-सिद्धान्तपथमनुसृत्याचार्यमण्डनमिश्रेण ब्रह्मसिद्धिर्निरमायीति विद्वत्प्रवाद। इयान् भेदो यद् भगवता श्रीभर्तृहरिणा श्रुतिसम्मत शब्दब्रह्मवादो वाक्यपदीये बीजरूपेण ससूचित, सोऽत्र ब्रह्मसिद्धौ, स्फोटसिद्धौ, विभ्रमविवेके चानेन दार्शनिकप्रक्रियारूपेण व्यवस्थापित। आचार्यशङ्कराभिमत-निर्विशेषब्रह्माद्वैतवादप्रस्थानादस्य शब्दाद्वैतवादप्रस्थाने भूयान् भेद। एतन्मते सत्ता शब्दो वा ब्रह्म, जीवस्तु नाना, अज्ञानात्मिकाया अविद्याया भेदद्वयम् अग्रहणात्मिका अन्यथाग्रहणात्मिका च, अविद्याया आश्रयो विषयश्चैकमेव ब्रह्म, अविद्यया अन्यथाख्यातिर्जायते, मोक्षस्तु स्वस्वरूपाविर्भाव एव, किन्तु ज्ञानात्सर्वकर्मक्षयेऽपि भुज्यमानविपाकसस्कारानुवृत्त्या शरीरस्थितावपि जीवन्मुक्ति, मोक्षसाधन न केवल ज्ञान न वा केवल कर्म किन्तु ज्ञानकर्मसमुच्चय, तत्त्वमस्यादिमहावाक्येन केवल ब्रह्म विज्ञायते तत उपासनया ब्रह्म साक्षात्कियतेऽत एवम्भूत प्रसख्यानपक्षोऽप्यङ्गी-क्रियते। आचार्यमण्डनमिश्रस्य शब्दाद्वैतवादस्य सत्ताद्वैतवादस्य वा सामान्यत इम एव सिद्धान्ता यथापूर्वं विवेचिता।

— o —

श्रीहरि

# त्रयोदशोऽध्यायः

## उपसंहारः

गतेषु द्वादशाध्यायेषु श्रीमच्छङ्कराचार्यस्य स्थितिकालवेदान्तसिद्धान्तानां स्वरूपं तथा श्रीमच्छङ्कराचार्यात्पूर्ववर्तिनां षोडशवेदान्ताचार्याणामद्वैतवेदान्तसिद्धान्तस्वरूपमुपन्यस्तम्। एतेषु श्रीशङ्करात्पूर्ववर्तिषु षोडशसु वेदान्ताचार्येषु सप्तापि वेदान्तिनः—आश्मरथ्यौडुलोमिकार्ष्णाजिनिकाशकृत्स्नजैमिनिबादरायणाः, षट् च शाङ्करभाष्यतट्टीकादीषूपलभ्यमाना उपवर्षब्रह्मनन्दिद्रविडभर्तृप्रपञ्चब्रह्मदत्तसुन्दरपाण्ड्याः, शेषास्त्रयो भर्तृहरिगौडपादमण्डनमिश्रास्तु प्रसिद्धा एव। इमे सर्वेऽपि प्राचीना अद्वैतवेदान्तिनः। इमे षोडशापि जीवब्रह्मणोरैक्यम्, अविद्यया संसारं, ज्ञानेन मुक्तिं मन्यन्ते। किन्त्वेतेषां सर्वेषामेव मते मञ्चित्कश्चिदवान्तरो भेदो वर्तते। एतेषु केषाञ्चन मते उपनिषदां सर्वेषां वाक्यानां समन्वयो न घटते। एतेषां केचन सिद्धान्ता युक्तियुक्ता न प्रतीयन्ते। एतेषां काश्चन प्रक्रिया श्रुतिसम्मतास्तर्कसम्मताश्च न भवन्ति। भगवाञ्छङ्करः एतान् दोषानपावृत्य प्रदर्शितरीत्या परमप्राचीनकालतः परम्पराप्राप्ताद्वैतसिद्धान्तं केवलं परिष्कृतवान्। भगवत्पादशङ्कराचार्यो न नूतनामविद्यामाविष्कृतवान्, न वा ब्रह्मणो निर्गुणत्वं निराकारत्वं कुतोऽप्यानीतवान्, न च जीवब्रह्मणोरैक्यं कुतश्चिदुद्धावितवान्। यतस्तेषु आश्मरथ्य, औडुलोमि, भर्तृप्रपञ्च, ब्रह्मदत्तश्च जीवब्रह्मणोर्भेदाभेदं मन्यन्ते। एते कथयन्ति यत् संसारदशायां जीवस्य ब्रह्मणो भेदं, मुक्तावस्थायां जीवब्रह्मणोरभेदं, एतेषु औडुलोमिमते मुक्तावस्थायां भाव्यभेदेन संसारदशायामपि अभेदं, किन्तु मेदसहिष्णुरभेद ।

भगवाँञ्छङ्कर इमं भेदाभेदं खण्डयति यदेकेन विज्ञानेन सर्वं विज्ञातं भवतीतिप्रतिज्ञासिद्ध्यर्थं भेदो निराकरणीयः। श्रीशङ्करो युक्तिमपि दर्शयति यद् यदि जीवब्रह्मणोर्भेदः पारमार्थिकः स्यात्तर्हि अभेदः कथमपि न सेत्स्यति। एवं स तत्तत्सूत्रभाष्यादिषु प्रबलैः प्रमाणैर्भेदाभेदं खण्डयित्वा अद्वैतवादिमतेऽभेदपक्ष एव ज्यायानिति प्रतिपादितवान्। एवमेवैतेष्वद्वैतवादिषु श्रीभर्तृप्रपञ्चो ब्रह्मणो विकारं मन्यते तथा श्रीब्रह्मदत्तो ब्रह्मणो जीवस्य जन्म स्वीकरोति। इमौ श्रीभर्तृप्रपञ्चब्रह्मदत्तावद्वैतवादिनौ जीवनित्यब्रह्मणोश्चाभेदवादिनौ, पुनरनयोर्मते कथं जीवस्य विकारजन्मनी भवितुमर्हतः। अतः श्रीशङ्करो जीवस्य विकारजन्मनी निराकरोति। श्रीभर्तृहरिमण्डनमिश्रश्च शब्दाद्वैतम्–शब्द एवाद्वितीयं ब्रह्म स्वीकुरुतः, शब्दश्च स्फोटरूपः। बह्वीनां श्रुतीनां शब्दब्रह्माद्वैतवादे समन्वयाभावात् श्रीशङ्करः शब्दाद्वैतवादमालोचितवान्। किन्त्वनयोरविद्यापक्षं ज्ञानान्मोक्षपक्षं च श्रीशङ्करः समादृतवान्।

श्रीभर्तृप्रपञ्चब्रह्मदत्तमण्डनमिश्राः अविद्यया जीवब्रह्मणोर्भेदं मन्यन्ते, अर्थाज्जीवब्रह्मणोर्न पारमार्थिको भेदः, पारमार्थिकस्त्वभेद एव, अनयोर्जीवब्रह्मणोर्भेदोऽविद्यया केवलं प्रतीयते। इमे च मोक्षसाधनं ज्ञानं कर्म चोभयम प्यङ्गीकुर्वन्ति। इमे ज्ञानकर्मसमुच्चयवादिनः। भगवाँञ्छङ्कर एतेषामद्वैतिनामिमं पक्षं परिष्करोति। स कथयति ये हि अद्वैतवादिनो येषां मते केवलेनाज्ञानेन भेदबुद्धिरुत्पन्ना, सा भेदबुद्धिः केवलेन ज्ञानेनैव निराकरणीया, तत्र कर्मणः कावश्यकता। एतदर्थं 'दशमस्त्वमसि' इति, व्याधकुलसवर्द्धित—राजकुमाराख्यायिकां च दृष्टान्तेनोपस्थापयति। अतोऽद्वैतवादिनामविद्याजन्यभेदवादिना मते ज्ञानकर्मसमुच्चयपक्षो न साधुरित्युपदिशति। ये तु द्वैतवादिनो विशिष्टाद्वैतवादिनो वा तेषां मते ज्ञानकर्मसमुच्चयपक्षः संघटते।

श्रीभर्तृप्रपञ्चोऽद्वैतवादी। मोक्षावस्थायां जीवब्रह्मणोस्तादात्म्यं मनुते। किन्त्वय मोक्षे क्रममङ्गीकरोति यथा प्रथमम्—आत्मनः कर्मेन्द्रि-

यादिमयत्वम्, तत सूत्रमयत्वम्, ततो विज्ञानमयत्वम् ततो विज्ञेयमयत्वम्, ततस्तत्त्वमयत्वम् इति। अत्राचार्यशङ्कर एवमभिप्रैति—यद् यद्यज्ञानेनैव ससारोऽज्ञानेनैव जीवस्य ब्रह्मण पार्थक्य च तदा ज्ञान उत्पन्ने सति क्रम ववावतिष्ठेत। यथा रज्जावहेर्भ्रम इति स्थले रज्जुज्ञाने जातेऽहेर्भ्रमो झटित्येव विनश्यति। तत्र क्रमो नापेक्ष्यते। तथैव ब्रह्मज्ञाने जाते मुक्त्यर्थं क्रमो नापेक्ष्यते। ब्रह्मज्ञानात्पूर्वं साधनावस्थाया क्रमा अपेक्ष्यन्ता नाम न तु ज्ञानोत्तरमपि।

श्रीभर्तृहरिर्ब्रह्मणोऽद्वैतत्वमपि मन्यते तथा तस्य स्वातन्त्र्यशक्ति मविद्यामपि स्वीकरोति। यद्यप्यस्मिन् मते शक्तिशक्तिमतोरभेदान्नाद्वैत हानिस्तथापि श्रीशङ्करोऽविद्या मत्यत्वेन नाङ्गीकरोति किन्तु अनिर्वचनीयत्वेनैवाविद्यास्वीकारेऽपि जगदवभासो जायत एव ब्रह्मणश्चा- द्वैतता स्वत सिद्धा तिष्ठति।

इमे सर्वे षोडशाप्यद्वैतवादिना विवर्त मन्यन्त किन्तु श्रीब्रह्मनन्दि द्रविडभर्तृप्रपञ्चभर्तृहरिगौडपादमण्डनमिश्रवाक्येषु स्पष्टतो विवर्तो लभ्यते ऽन्यत्राक्षेपाल्लभ्यते स ।

ज्ञानकर्मसमुच्चयवादिन श्रीभर्तृप्रपञ्चब्रह्मदत्तादयो जीवन्मुक्ति नाभि मन्यन्ते, एतेषा मते देहपातानन्तरमेव मोक्ष। प्रारब्धकर्मवशात्प्राप्तो देहो मुक्तौ बाधको भवति। वस्तुतस्तु अज्ञानादेव ससार अज्ञानादेव देहाद्यभिमान। ततो ज्ञानोदये जाते सद्योमुक्ति जीवो भजते स एव च जीवन्मुक्त इत्यभिधीयते, प्रारब्धकर्मवशाद्देहपात कदाचिदपि भवतु।

काशकृत्स्न, बादरि, द्रविड भर्तृहरि, गौडपाद मण्डनश्चेमे सर्वे आचार्या ब्रह्मणो निर्गुणत्व निर्विशेषत्वञ्चाभिहितवन्त।

इत्थमेतेषामद्वैतवेदान्तिना मते मुख्या सर्वे सिद्धान्ता समानरूपा एव-यथा अद्वैत, विवर्त, परब्रह्मणो निर्गुणत्वम्, जीवब्रह्मणोरैक्यम्, मुक्तौ तादात्म्यभाव, अविद्या च। केवल यत्र तत्र कस्मिंश्चिदंशे कश्चिन्

कश्चिद् भेद । यथा मुक्तौ क्रम जीवन्मुक्ते स्वीकारोऽस्वीकारश्च, जीवस्य नित्यत्व जीवस्य जन्म च, मोक्षसाधन केवल ज्ञानम्, ज्ञान कर्म चोभयम्, अविद्या शक्तिरूपा अनिर्वचनीया च ।

एव प्रकारेण श्रीमच्छड्०कराचार्यात् पूर्ववर्तिनामेतेषा षोडशाचार्याणाम-द्वैतवादस्वरूपमत्र प्रदर्शितम् । अनेन श्रीशड्०कराभिप्रेतनिर्विशेषब्रह्मा-द्वैतावसिद्धान्तेन सहैतत्षोडशाचार्याभिमताद्वैतसिद्धान्ताना य कश्चिदश विहाय महत्साम्यम् । केवल तेषु तेष्वशेषु न साम्यम्, ये येऽशा श्रुति-विरुद्धा युक्तिविरुद्धास्तथा श्रुतिसम्मततर्कविरुद्धाश्च । अनेन श्रीशड्०क-राचार्यो निर्विशेषब्रह्माद्वैतस्यौपनिषदाद्वैतवाद इति नाम सार्थितवान् ।

पूर्वमुपोद्घाते यथा लिखित मदन प्रबन्धे श्रीमच्छड्०कराचार्यात्पूर्व-वर्तिनामद्वैतवेदान्ताचार्याणामद्वैतवादस्वरूप निरूप्यते किन्तु श्रीशड्०कर-शब्दोपादानेनाचार्यशड्०करसिद्धान्तनिकटवर्तिनामद्वैतब्रह्मवादिनामाश्मरथ्य-प्रभृतीनामेवाद्वैतवादस्वरूप निरूपणीयमिति हेतोर्यद्यपि विज्ञानाद्वय-वाद शून्याद्वयवादश्च श्रीमच्छड्०कारात्पूर्ववर्तिनौ तथापीमौ न ब्रह्माद्वैत निकटवर्तिनाविति प्राधान्येन विज्ञानाद्वयशून्याद्वयवादयो स्वरूपमत्र न प्रादर्शि । प्रसड्०गत श्रीगौडपादाद्वैतस्वरूपनिरूपणे विज्ञानाद्वयशून्याद्वय वादयोरपि प्रमुखाना सिद्धान्ताना स्वरूप नातिविस्तृतरूपेण निरूपित-मेव । अनेनैषा विदुषामयमाक्षेपो यद् गौडपादकारिकाग्रन्थ सौगतदर्शनस्य विज्ञानाद्वयशून्याद्वयसिद्धान्तेन प्रभावित । अत एतदाक्षेपनिराकरणाय विज्ञानाद्वयशून्याद्वयसिद्धान्तस्य प्रमुखानामशाना स्वरूपनिरूपणमावश्यक-मासीत् । येन माण्डूक्यकारिकाग्रन्थप्रोक्तसिद्धान्तैं सह विज्ञानाद्वयशून्या-द्वयसिद्धान्ताना साम्यवैषम्यविचार सुकरो भवेत् । इत्थ श्रीगौडपादाचार्य-नामक एकादशाध्याये गौडपादकारिकाग्रन्थोक्ताद्वैतवादस्य विज्ञानाद्वयशून्या-द्वयप्रभावितत्व सर्वथा निराकृतम् । एवमेव पाश्चात्यविद्वद्भिरुद्भाविताास्तदनुया यिभि भारतीयैर्विद्वद्भिश्च समर्थिता प्रचारिताश्च ये ये गौडपाद-कारि

त्याग्रन्थविषयका विज्ञानाद्वयशून्याद्वयसम्बन्धिन आक्षेपास्तेऽप्युक्त एकादशाध्याये साधु समाहिता ।

एतेन द्वादशाध्यायोक्तविविधाद्वैताचार्याणामद्वैतवादस्वरूपपरिशीलनेन श्रीशाङ्कराद्वैतवादस्य स्वरूपं सुस्पष्टं भविष्यति तथैतच्छ्रीशङ्कराचार्यात् पूर्वाचार्याणामद्वैतस्वरूपपरिशीलनालोके श्रीशाङ्कराद्वैतवादो विज्ञानाद्वयवाद-शून्याद्वयवादयोरौपनिषदं संस्करणमथवा विज्ञानाद्वयशून्याद्वयवादोदयादतीवपूर्वकालत प्रचलितो यो हि निर्विशेषब्रह्माद्वैतवाद आसीन्मध्ये मध्ये कालवशाद् शासनप्रभावाच्च नष्टो भ्रष्टस्तिरोहितश्च जात, स एव पुन श्रीशङ्कराचार्यै स्वविलक्षणप्रतिभया प्रबलैस्तर्कैरकाट्ययुक्तिभिश्चोज्जीवित, संस्थापित प्रतिष्ठापित प्रचारितश्चेति स्वरूपनिरूपणेन शाङ्कराद्वैतस्वरूपं सुस्पष्टं सम्मुखमायास्यति ।

एवमस्मिन् ग्रन्थे श्रीमच्छङ्करात्पूर्वमद्वैतवादस्वरूपं सुस्पष्टं प्रकाशितम् ।

अनेन साम्बशङ्करस्तुष्यतु ।



# परिशिष्टम्

श्रीमच्छङ्कराचार्यात् पूर्वमद्वैतवादस्वरूप कीदृशमासीदितिविचारणायामद्वैत-वेदान्तस्य सम्प्रदायपरम्पराऽवलोकनीया। यतर्वाऽऽद्य शङ्कर: य सम्प्रदायमन्वसरत् तस्य सम्प्रदायस्य परम्परेत्यमस्ति। श्रीशङ्करानुसृतसम्प्रदायो ब्रह्माद्वैतसम्प्रदाय, अस्याद्यो गुरुर्नारायण, नारायणस्य शिष्यो ब्रह्मा, ब्रह्मणः वसिष्ठ, वसिष्ठस्य तत्पुत्र शक्ति, शक्ते पराशर, पराशरस्य व्यास, व्यासस्य शुक, श्रीमत्शुकस्य गौडपादाचार्य, गौडपादस्य गोविन्दपाद, गोविन्दपादस्य शङ्कराचार्य। शाङ्करसम्प्रदाये तत्राय श्लोक प्रसिद्ध —

नारायणं पद्मभवं वसिष्ठं शक्तिं च तत्पुत्रपराशरं च,
व्यासं शुकं गौडपदं महान्तं गोविन्दयोगीन्द्रमथास्य शिष्यम्।
श्रीशङ्कराचार्यमथास्य पद्मपादं च हस्तामलकं च शिष्यम्,
तत्तोटकं वार्त्तिककारमन्यानस्मद्गुरुं सततमानतोऽस्मि॥

श्रीविद्यार्णवे (तन्त्रग्रन्थे) वर्णिता श्रीगौडपादाचार्यस्य गुरुपरम्परा इतो वैषम्यमञ्चति। तद् श्रीगौडपादाचार्यनामक एकादशेऽध्याये पूर्वं निरुपितम्।

एतेषु ब्रह्माद्वैतसम्प्रदायाचार्येषु शक्तिशुकगोविन्दपादातिरिक्तानां सर्वेषां नारायणादीनां ब्रह्माद्वैतसिद्धान्तस्य मुख्यांशमात्रमत्रोपस्थाप्यते। श्रीगोविन्दपादाचार्यस्य कोऽपि ग्रन्थस्तद्वाक्यं वा कुत्रापि वेदान्तशास्त्रेषु तट्टीकादिषु च नापलभ्यते। इयमेव कथा शक्तिशुकाचार्ययोरपि।

### १—नारायणस्याद्वैतवादः

ब्रह्माद्वैतवादस्याद्यप्रवर्तक आचार्य श्रीनारायण, तस्य वेदान्तसिद्धान्तो भागवते[१] उपलभ्यते।

अहमेवासमेवाग्रे नान्यद् यत्सदसत्परम्।
पश्चादहं यदेतच्च योऽवशिष्येत सोऽस्म्यहम्॥

(भा० स्क० २ अ० ९ श्लो० ३२)

---

१—सम्प्रति सुदृढैः प्रमाणैः श्रीमद्भागवतस्य श्रीव्यासकर्तृत्वं संसिद्धम्। एतदर्थं द्रष्टव्यो कल्याणपत्रिकाया भागवताङ्क, श्रीबलदेवोपाध्यायविरचित पुराण-विमर्शश्च।

ऋतेऽर्थं यत्प्रतीयेत न प्रतीयेत चात्मनि ।
तद्विद्यादात्मनो माया यथाभासो यथा तमः ॥ (तत्रैव श्लो० ३३)

अर्थात् सृष्टेः प्राग् ब्रह्मैवासीत् । स्थूलं सूक्ष्मं तथा कारणमपि च नासीत् । सृष्टेरनन्तरमपि ब्रह्मैवासीत् । यदेतज्जगत् तदपि ब्रह्मैव । प्रलये यदवशिष्येत तदपि ब्रह्मैव । एवञ्च ब्रह्मण्यनादिरनन्तत्वमद्वितीयत्वं च परिपूर्णं कथितम् ।

द्वितीयस्मिन् श्लोकेऽद्वैते द्वैतभानस्य प्रकारो निरदिश्यत । यथा स्वप्नजगदपि मनसा स्वस्मिन् प्रतिभासते तथा मायया ब्रह्मणि दृश्यप्रपञ्चस्य भानम् ।

अत्र एकमेव सद्वस्तु ब्रह्म, तच्चाद्वैतम् द्वैतप्रतीतिः प्रातिभासिकीति निरूपितम् ।

## २—ब्रह्मणोऽद्वैतवाद

श्रीमन्नारायणतीर्थेन ब्रह्मणाप्युपयुक्तमेवाद्वैततत्त्वं सप्रमाणं निर्दिष्टम्—

नान्यत्त्वदस्ति भगवन्नपि तन्न शुद्धम्,
मायागुणव्यतिकराद् यदुरुर्विभासि ॥
( भा० स्क० ३ अ० ९ श्लो० १ )

अर्थात् ब्रह्मणो भिन्नं किमपि तत्त्वं नास्ति । यत् किञ्चिदपि दृश्यते । तदसदस्ति । तथा सत् प्रतीतिः कथं भवतीत्यत्र प्रकारो निर्दिश्यते—मायागुणव्यतिकरादिति । अर्थात् मायाया गुणक्षोभाद् ब्रह्मसत्तयैव सविलासत् प्रतिभासते ब्रह्मसत्तयैव, ( त्वत्सत्तयैव ) सद्वत् प्रतीयते इति भावः ।

पुनरपि— तस्मादिदं जगदशेषमसत्स्वरूपम्,
स्वप्नाभमस्तधिषणं पुरुदुःखदुःखम् ।
त्वय्येव नित्यसुखबोधतनावनन्ते,
मायात उद्यदपि यत् सदिवावभाति ॥
भा० स्क० १० अ० १४ श्लोक० २२

अत्र जगतः स्वरूपं स्वप्नतुल्यमकथ्यत । तच्च मायात एवावभासते । एवमेव ब्रह्मस्तुतौ ब्रह्मणा सत् निर्विशेषाद्वैततत्त्वं निरूपितम् । एवमेव ब्रह्मतत्त्वं ब्रह्मणा दशमस्कन्धचतुर्दशाध्याये २५ २६ श्लोकयोरप्युक्तम् ।

## ३—वसिष्ठस्याद्वैतवादः

श्रीवसिष्ठो ब्रह्मणो मानस पुत्र आसीत्। तद्विरचितस्य योगवासिष्ठस्य[2] महती प्रतिष्ठा विद्यते। अथ ग्रन्थ योगवासिष्ठमहारामायणम्, महारामायणम्, आर्षरामायणम्, वसिष्ठरामायणम्, ज्ञानवासिष्ठम्, वासिष्ठञ्चेत्यादिनाम-भिरभिधीयते।

अस्मिन् ३२००० द्वात्रिंशत्सहस्रपरिमिता श्लोका आसन्। किन्त्वधुना २७६८७ संख्या परिमिता एव श्लोका उपलभ्यन्ते।

समुपलभ्यमानग्रन्थस्य लेखनकाल ईसवीयपष्ठशतक गुप्तसाम्राज्यकालो-ऽस्ति। तथापि योगवासिष्ठस्य मुमुक्षुप्रकरणेन प्रस्तावनात्मप्रथमसर्गेण चेद ज्ञातुं सुशक यद् ब्रह्मणा प्राह ज्ञान श्रीवसिष्ट श्रीरामचन्द्रायोपदिदेश। अतो योगवासिष्ठस्य परम्परा बहुप्राचीनकालत प्रचलितासीत्। यथा—

> इदमुक्तं पुरा कल्पे ब्रह्मणा परमेष्ठिना। (यो०वा०२।१०।१)
> पूर्वमुक्तं भगवता यज्ज्ञानं पद्मजन्मना,
> सर्गादौ लोकशान्त्यर्थं तदिदं कथयाम्यहम्। (यो०वा०२।३।१)

तदनन्तर वाल्मीकि स्वशिष्याय भारद्वाजाय तज्ज्ञानमुपदिदेश। यथा—

> शृणु राजन् प्रवक्ष्यामि रामायणमखण्डितम्।
> श्रुत्वावधार्य यत्नेन जीवन्मुक्तो भविष्यसि। ( १।१।५२ )
> वसिष्ठरामसंवादं मोक्षोपायकथां शुभाम्।
> ज्ञातस्वभावो राजेन्द्र वदामि श्रूयतां बुध। ( १।१।५३ )
> एतास्तु प्रथम कृत्वा पुराहमरिमर्दन।
> शिष्यायास्मि विनीताय भारद्वाजाय धीमते। ( १।१।५४ )

महर्षिवसिष्ठमते ब्रह्मणो, जीवस्य, जगत अविद्याया, मोक्षस्य च कीदृक् स्वरूपमासीदित्यत्रोपन्यस्यते।

---

२ डा०भीखनलाल आत्रेयेन स्वग्रन्थे 'योगवासिष्ठ और उसके सिद्धान्त' इति—नामके बहुप्रयासेन सुयुक्तिभि प्रमाणैश्च एतत् सर्वं सुसाधितमस्ति। द्रष्टव्यम्-यो०वा०और उसके सिद्धान्त पृ० ८-३२ तथाऽस्यैव लेखकस्य "दी प्रोब्लेम ऑफ दी डेट आफ कम्पोजिशन आफ योगवासिष्ठ" नामकोऽपि ग्रन्थो द्रष्टव्य।

## ब्रह्म, जीवः, जगच्च

इदं यत् किञ्चिद् विद्यते तत्सर्वं ब्रह्मैव, ब्रह्मणोऽतिरिक्तं किमपि नास्ति। यथा—

सिद्धान्तोऽध्यात्मशास्त्राणां सर्वापह्नव एव हि।
नाविद्यास्तीह नो माया शान्तं ब्रह्मेदमक्लमम्॥ (६।१२५।१)
सर्वं च खल्विदं ब्रह्म नित्यं चिद्घनमक्षतम्।
कल्पनान्या मनोनाम्नी विद्यते नहि काचन॥ (३।११४।१४)
परं ब्रह्मैव तत्सर्वमजरामरमव्ययम्।
सर्वमेव ममाद्यन्तमविभागमखण्डितम्॥ (३।८४।२६)
तस्मान्नैवाविचारोऽस्ति नाविद्यास्ति न बन्धनम्।
न मोक्षोऽस्ति निराबाधं शुद्धबोधमिदं जगत्। (३।२१।७२)
बुधानामस्मदादीनां न किंचिन्नाम जायते।
न च नश्यति वा किञ्चित्सर्वं शान्तमजं च सत्। ६।१४६।११)
न जायते न म्रियते किञ्चिदत्र जगत्त्रये।
न च भावविकाराणां सत्ता क्वचन विद्यते। (३।११४।१५)
न जगन्नापि जगती शान्तमेवाखिलं स्थितम्।
ब्रह्मैव कचति स्वच्छमित्थमात्मात्मनात्मनि। (३।१३।१५)
तेन जातं ततो जातमितीयं रचना गिराम्।
शास्त्रसद्व्यवहारार्थं न राम परमार्थतः। (४।४०।१७)
न दृश्यमस्ति सद्रूपं न द्रष्टा न च दर्शनम्।
न शून्यं न जडं नो चिच्छान्तमेवेदमाततम्। (३।४।७०)
जाग्रत्स्वप्नसुषुप्तादि परमार्थविदां विदाम्।
न विद्यते किञ्चिदपि यथास्थितमवस्थितम्। (६।१४६।२१)
वस्तुतस्त्वस्ति न स्वप्नो न जाग्रन्न सुषुप्तता।
न तुर्यं न ततोऽतीतं सर्वं शान्तं परं नम। (६।१६७।१८)

सर्वमात्ममयं विश्वं नास्त्यनात्ममयं क्वचित् । (५।७२।४५)
सति पुर्यष्टके तस्मिञ्जीवः स्फुरति नोपले । (५।७३।२४)
पाताले भूतले स्वर्गे तृणे प्राण्यम्बरेऽपि च ।
दृश्यते तत्परं ब्रह्म चिद्रूपं नान्यदस्ति हि । (६।२।२८)
जगच्छब्ददस्य नामार्थो ननु नास्त्येव कश्चन । (३।४।६७)
वस्तुतस्तु जगन्नास्ति सर्वं ब्रह्मैव केवलम् । (४।४०।३०)
सर्वशक्ति परं ब्रह्म सर्ववस्तुमयं ततम् ।
सर्वदा सर्वथा सर्वं सर्वैः सर्वत्र सर्वगम् । (३।१४८)
यस्मिन् सर्वं यतः सर्वं यत्सर्वं सर्वतश्च यत् ।
सर्वं सर्वतया सर्वं तत्सर्वं सर्वदा स्थितम् । (३।१८४।४६)
यतःसर्वाणि भूतानि प्रतिभान्ति स्थितानि च ।
यत्रैवोपशमं यान्ति तस्मै सत्यात्मने नमः । (१।१।१)
ज्ञाता ज्ञानं तथा ज्ञेयं द्रष्टा दर्शनदृश्यभूः ।
कर्ता हेतुः क्रिया यस्मात्तस्मै ज्ञप्त्यात्मने नमः । (१।१।२)
स्फुरन्ति सीकरा यस्मादानन्दस्याम्बरेऽवनौ ।
सर्वेषां जीवनं तस्मै ब्रह्मानन्दात्मने नमः । (१।१।३)
अवाच्यमनभिव्यक्तमतीन्द्रियमनामकम् ।
स्वरूपं नोपदेशस्य विषयो विदुषो हि तत् । (३।६२।२७)
प्रत्यक्षादिप्रमाणानां यदगम्यमचिन्हि तत् ।
स्वानुभूतिमयं ब्रह्म वादैस्तल्लभ्यते कथम् । (३।१६५।६९)

जीवस्य परब्रह्मणो भिन्नाभिन्नत्वं च

श्रीवसिष्ठमते जीवा सागरस्योर्मय इव अग्ने स्फुलिङ्गा इव च ब्रह्मणोऽभिन्ना भिन्ना अपि । यथा—

सर्वा एता समायान्ति ब्रह्मणो भूतजातयः । ३।९४।१६ ।
किञ्चित्प्रचलिता योगात् पयोराशेरिवोर्मयः । तत्रैव २० ।

स्वतेज स्पन्दिता भोगाद्दीपादिव मरीचय । तत्रैव २१ ।
स्वमरीचिवलोद्भूता ज्वलिताग्ने कणा इव । तत्रैव २२ ।
मन्दारमञ्जरीरूपाश्चन्द्रबिम्बादिवांशव । तत्रैव २३ ।
यथा विटपिनश्चित्रास्तद्रूपा विटपश्रिय । तत्रैव २४ ।
कटकाङ्गदकेयूरयुक्तय कनकादिव । तत्रैव २५ ।
निर्भरामलप्रद्योतात् पयसामिव बिन्दव । तत्रैव २६ ।
आकाशस्य घटस्यालीरन्ध्राकाशादयो यथा । तत्रैव २७ ।
सीकरावर्तलहरीबिन्दव पयसो यथा । तत्रैव २८ ।
मृगतृष्णातरङ्गिण्यो यथा भास्करतेजस । तत्रैव २९ ।
शीतरश्मेरिव ज्योत्स्ना स्वालोक इव तेजस । तत्रैव ३० ।
सर्वा एवोत्थिता राम ब्रह्मणो जीवराशय । तत्रैव ३१ ।
अप्रबुद्धजनाचारो यत्र राघव दृश्यते ।
तत्र ब्रह्मण उत्पन्ना जीवा इत्युक्तय स्थिता (३।९५।३)
*अप्रबुद्धदृशा पक्षे तत्प्रबोधाय केवलम् ।*
वाच्यवाचकसम्बन्धकृतो भेद प्रकल्प्यते । (३।१००।४)
अतो भेददृशादीनामङ्गीकृत्योपदिश्यते ।
ब्रह्मेदमेते जीवा यै वेति वाचामय क्रम । (३।९५।६)

अद्वैतभाव

*अहं चिदम्बरे भानावह चिद्भूतपञ्जरे ।*
सुरासुरेषु चिदह स्थावरेषु चरेषु च । (५।२७।१२)
अपारपर्यन्तनमो दिक्कालादिक्रियान्वितम् ।
अहमेवेति सर्वत्र य पश्यति स पश्यति । (४।२३।२५)
मयि सर्वमिद प्रोत सूत्रे मणिगणा इव ।
*चित्त तु नाहमेवेति य पश्यति स पश्यति । (४।२२।११)*
सर्वशक्तिरनन्तात्मा सर्वभावान्तरस्थित ।
अद्वितीयश्चिदन्तर्य पश्यति स पश्यति । (४।२२।२८)

यन्नाम किञ्चित् त्रैलोक्ये स एवावयवो मम ।
तरङ्गोऽब्धाविवेत्यन्तर्यः पश्यति स पश्यति । (४।२२।३३)

द्वैतं यथा नास्ति चिदात्मजीवयोस्तथैव भेदोऽस्ति न जीवचित्तयोः ।।
यथैव भेदोऽस्ति न जीवचित्तयोस्तथैव भेदोऽस्ति न देहकर्मणो । ३।६५।१२

कर्मैव देहो ननु देह एव चित्तं तदेवाहमितीह जीवः ।
स जीव एवेश्वरचित् स आत्मा सर्वः शिवस्त्वेकपदोक्तमेतत् ।। ३।६५।१२

अजातवादः

नचोत्पन्नं न च ध्वंसि यत् किलादौ न विद्यते ।
उत्पत्तिः कीदृशी तस्य नाशशब्दस्य का कथा । (३।११।१५)

यथा स्वप्नेऽवनिर्नास्ति स्वानुभूतापि कुत्रचित् ।
तथेयं दृश्यता नास्ति स्वानुभूताप्यसन्मयी । (३।१६१।२२)

न किञ्चिदपि सम्पन्नं न च जातं न दृश्यते । ( ३।१३।४० )

न मिथ्यात्वं न सत्यत्वं किमपीदमजं जगत् । (३।१६५।२३)

तत्सर्वं कारणाभावान्न जातं न च विद्यते । (३।५३।१५)

यथा सौवर्णकटके दृश्यमानमिदं स्फुटम् ।
कटकत्वं तु नैवास्ति जगत्वं न तथापरे । (३।११।८)
हेम्न्यूर्मिकारूपधरे ऽप्यूर्मिकात्वं न विद्यते ।

यथा तथा जगद्रूपे जगन्नास्ति च ब्रह्मणि ।
जगत् संविदि जातायामपि जातं न किञ्चन (३।१३।४८)

जातशब्दो हि सन्मात्रपर्यायः श्रूयतां कथम् ।
प्रादुर्भावे जनिस्तूक्त- प्रादुर्भावस्य भूर्वपुः ।।(३। १४६।१६)

सत्तार्थ एव भू प्रोक्तस्तस्मात् सञ्जातमुच्यते ।
सर्गतो जात इत्युक्ते संसर्ग इति शब्दितम् । (३।१४६।१७ )

एवं न किञ्चिदुत्पन्नं दृश्यं चिज्जगदाद्यपि ।
चिदाकाशे चिदाकत्शं केवलं स्वात्मनि स्थितम् । (३।२१।२४)

तस्माद् राम जगन्नासीन्न चास्ति न भविष्यति ।
चेतनाकाशमेवाशु कचतीत्यमिवात्मनि (४।२।८)

अविद्या

संसारबीजकणिका यैषाविद्या रघूद्वह ।
एषा ह्यविद्यमानैव सतीव स्फारता गता (३।११३।११)

दृश्यते प्रकरामासा सदर्थे नोपयुज्यते । (३।११३।१५)
अतः शून्यापि सर्वत्र दृश्यते रारसुन्दरी । (३।११३।१७)

प्रतिभासवशादेषा त्रिजगन्ति महान्ति च ।
मुहूर्तमात्रेणोत्पाद्य धत्ते ग्रासीकरोति च । (३।११३।२७)

मनोराज्यमिवाकारभासुरा सत्यवर्जिता ।
सहस्रशतशाखापि न किञ्चित्परमार्थतः । (३।११३।३३)

इयं दृश्यभरभ्रान्तिर्नन्वविद्येति चोच्यते ।
वस्तुतो विद्यते नैषा तापनद्या यथा पयः । (६।५२।५)

अविद्येतिभृता संविद् ब्रह्मणोऽत्मनि सत्तया ।
तदभ्रमेणासदप्यस्याः सद्रूपमिव लक्ष्यते ।(६।१९०।११)

नामैवेदमविद्येति भ्रममात्रमसद् विदु ।
न विद्यते या सा सत्या कीदृग्राम भवेत् किल ।(६।४६।१४)

माया

इति मायेव दुष्पारा चिच्छक्ति परिजृम्भते ।
इत्यमाद्यन्तरहिता ब्राह्मी शक्तिरनामया । (६।७०।१८)

ईदृशी राम मायेव या स्वनाशेन हर्षदा ।
न लक्ष्यते स्वभावोऽस्याः प्रेक्षमाणैव नश्यति । (४।४३।१५)

विवेकमाच्छादयति जगन्त जनयत्यलम् ।
न च विज्ञायते कैषा पश्यास्त्वर्यमिदं जगत् । (४।४१।१६)

अप्रेक्षमाणा स्फुरति प्रेक्षिता तु विनश्यति ।
मायेयमपरिज्ञायमानस्यैव वल्गति । (४।४१।१७)

जगतो मिथ्यात्वम्

जगत सदसद्रूपत्वं प्रतिपाद्यान्ते मिथ्यात्वं प्रतिपादितम् ।

यथा स्वप्नस्तथा चित्तं जगत् सदसदात्मकम् । (३।६५।५)

नातः सत्यमिदं दृश्यं न चासत्यं कदाचन । (३।४८।३३)

न तत्सत्यं न चासत्य रज्जुसर्पभ्रमो तथा । (३।४४।४१)

न सत्यं न च मिथ्यैव स्वप्नजालमिवोत्थितम् । (३।११४।२०)

एव न सन्नासदिद भ्रान्तिमात्र विभासते । (३।८४।२७)

जगत् केवल भ्रान्तिरूपमतो न वास्तव यथा—

मृगतृष्णामिवासत्य सत्यवत्प्रत्ययप्रदम् । (४।१।७)

अनुभूत मनोराज्यमिवासत्यमवास्तवम् । (४।१।१२)

शून्ये प्रचकित नानावर्णमाकारितात्मकम् ।
अपिण्डगृहमाशून्यमिन्द्रचापमिवोत्थितम् । (४।१।२३)

जगदादावनुत्पन्न यच्चेदमनुभूयते ।
तत्सविद्व्योमकचन स्वप्नस्त्रीसुरत यथा । (३।५०।२०)

मृगतृष्णा यथातपात् मनसोऽनिश्चयात्तथा ।
असन्त इव दृश्यन्ते सर्वे ब्रह्मादयोऽप्यमी । (४।४४।१७)

मिथ्याज्ञानघनाः सर्वे जगत्याचारराशय ।
यथा नौयायिनो मिथ्या स्थाणुस्पन्दमतिस्तथा । (४।४५।१८)

मनोव्यामोह एवेद रज्ज्वावहिभय यथा ।
भावनामात्रवैचित्र्याच्चिरमावर्तते जगत् । (४।४५।२६)

कारणं यस्य कार्यस्य भूमिपाल न विद्यते ।
विद्यते नेह तत्कार्यं तत्सवित्तिस्तु विभ्रमः । (६।६४।५४)
यस्त्वेकारणको भाति न स्वभावो विजृम्भते ।
सर्वरूपेण संकल्पगन्धर्वनगरादिवत् । (६।५४।१६)
यादृगेव परं ब्रह्म तादृगेव जगत्त्रयम् । (३।३।२८)
स्वरूपमजहत्त्वेव राजतेऽर्थविवर्तवत् । (६।५४।१७)

मोक्षस्वरूपम्

सकला शास्त्रसंपृक्तया यत्स्वयं चेतसः क्षयः ।
स मोक्षनाम्ना कथितस्तत्त्वज्ञैरात्मदर्शिभिः । (५।७३।३६)
जगद्भ्रमं परिज्ञाय यदवसानमासितम् ।
विरसाशेषविषयं तद्धि निर्वाणमुच्यते । (६।४२।५१)
परस्य पुंसः संकल्पमयत्वं चित्तमुच्यते ।
अचित्त्वमसंकल्पात् मोक्षस्तेनाभिजायते । (५।१३।८०)
दृश्यं विरसतां यातं यदा न स्वदते क्वचित् ।
तदा नेच्छा प्रसरति तदैव च विमुक्तता । (६।३७।३३)
अत्यन्तविस्मृतं विश्व मोक्ष इत्यभिधीयते ।
ईप्सितानीप्सिते तत्र न स्तः केचन कस्यचित् । (३।२१।११)
अज्ञानस्य महाग्रन्थेर्मिथ्या वेद्यात्मनोऽसतः ।
अहमित्यर्थरूपस्य भेदो मोक्ष इति स्मृतः । (६।२०।१७)

मोक्षस्य द्वौ भेदौ

द्विविधा मुक्तता लोके सम्भवत्यनघाकृते ।
सदेहैका विदेहान्या विभागोऽयं तयोः शृणु । (५।४२।११)
प्रथमः सदेहमोक्षो यथा—
असंसक्तमतेर्यस्य त्यागदानेषु कर्मणाम् ।
नैषणा तत्स्थिति विद्धि त्वं जीवन्मुक्ततामिह । (५।४२।१२)

द्वितीयो विदेहमोक्षो यथा—

सैव देहक्षयं राम पुनर्जननवर्जिता ।
विदेहमुक्तता प्रोक्ता तत्स्था नायान्ति दृश्यताम् । (५।४२।१३)

मोक्षसाधनम्

संसारोत्तरणे तत्र न हेतुर्वनवासिता ।
नापि स्वदेशवासित्व न कष्टतप क्रियाः । (३।१६६।३०)

न क्रियाणां परित्यागो न क्रियाया समाश्रयः ।
नाचारेषु समारम्भोविचित्रफलदायि । (३।१६६।३१)

न तीर्थेन न दानेन न स्नानेन न विद्यया ।
न ध्यानेन न योगेन न तपोभिर्नचाध्वरैः । (३।१७४।२४)

न शास्त्रान्न गुरोर्वाक्यान्न दानान्नेश्वरार्चनात् । (३।१६७।१८)
तपस्तीर्थाविना स्वर्गा प्राप्यन्ते न तु मुक्तता । (६।२।१७४।२६)

किञ्चिन्नोपकरोत्यत्र तपोदानव्रतादिकम् । (३।६।४)
न दैवं न च कर्माणि न धनानि न बान्धवा । (५।१३।८)

ततो वच्मि महाबाहो यथा ज्ञानेतरा गति ।
नास्ति संसारतरणे पाशबन्धस्य चेतस । (५।६७।२।)

ज्ञानयुक्तिप्लवेनैव ससाराब्धि सुदुस्तरम् ।
महाधिय समुत्तीर्णा निमेषेण रघूद्वह । (२।११।३६)
जगन्नाम्न्यविचाराख्या विना ज्ञान न शाम्यति । (३।८।२)
ज्ञानवानुदितानन्दो न क्वचित् परिमज्जति । (५।६३।२४)
प्रबुद्धा ब्रह्मतामेति भ्रमतीतरया जगत् । (५।१३।५६)

इत्यन्यात्र वसिष्ठमते, एक तत्तत्त्व ब्रह्म अविद्यया जगत्, जीवब्रह्मणोरैक्यम्, ( सर्वचिज्जीवब्रह्मणोर्भिन्नाभिन्नत्वमपि प्रतिपादितम् ) अजातवाद, स्वरूपावगतिर्मोक्ष, मोक्षस्य भेदद्वयम्, मोक्षसाधन केवल ज्ञानमित्यादयो ब्रह्माद्वैतसिद्धान्ता निरूपिता ।

योगवासिष्ठे कानिचिदेतादृशान्यपि वचनानि सन्ति यैर्भेदाभेदवादस्य ज्ञानकर्मसमुच्चयस्य च मण्डनं प्रतीयते । अनेनायं ग्रन्थः शाङ्करमतस्य विसंवादीव प्रतीयते । किन्तु मणिकाचोपाख्यानेन ज्ञानादेव मुक्तिरिति सिद्धान्ते-नास्य मुख्यः सिद्धान्तोऽद्वैतवाद एव, तत्रापि निर्विशेषाद्वैतवाद एव । अद्वैत-दृष्टिप्राप्तेः पूर्वकाल एव भेदाभेदादिदृष्टीनामुपयोगितेति मत्वा तास्ता दृष्टयो दर्शिताः । मणिकाचोपाख्याने स्पष्टमेव लिखितम्—

अलब्धज्ञानदृष्टीनां क्रियामात्रं परायणम् ।
यस्य नास्त्यम्बरं पट्टं कम्बलं किं त्यजत्यसौ ॥

४—वसिष्ठपुत्रस्याद्वैतवादः ( सनत्सुजातीयोऽद्वैतवादः )

नारायण पद्मभववसिष्ठशक्तिपराशरव्यासशुकगौडपादप्रभृत्यद्वैतपरम्परायां वसिष्ठस्य पुत्रः शक्तिर्निर्दिष्टः । यथापूर्वमुक्तं शक्तेरद्वैतविषयको ग्रन्थस्तस्याद्वैतविषयकं वाक्यं वा कुत्रापि नोपलभ्यते । स्कन्दपुराणान्तर्गतसूतसंहितायां यज्ञवैभवे १।३०।३५ इत्यत्राद्वैतवेदान्तपरम्परोक्ता । तत्र ईशानः प्रथम आचार्यः, ईशानाद् महाविष्णुः, महाविष्णोर्ब्रह्मा, ब्रह्मणः सनत्कुमारः, सनत्कुमाराद् व्यास इत्यमाचार्य-क्रमः प्रतिपादितः । अस्मिन् ब्रह्मपुत्रः सनत्कुमारो निर्दिष्टः । महाभारत उद्योगपर्वणि ब्रह्मपुत्रस्य सनत्सुजातस्याद्वैतविषयोपदेशः प्राप्यते । यदि विद्वद्भिर्ब्रह्मपुत्रः शक्तिः सनत्कुमारः सनत्सुजातश्चैक एवेति मन्यते तदायं सनत्सुजातीयोऽद्वैतवाद उपस्थाप्यते ।

महाभारते बहुषु स्थलेष्वद्वैतसिद्धान्ता उपलभ्यन्ते, यथा भीष्मपर्वणि श्रीमद्भग-वद्गीतायाम्, अश्वमेधपर्वणि ब्राह्मणगीतायाम्, शान्तिपर्वणि हंसगीतायाम्, पराशर-गीतायां च, मोक्षधर्मपर्वणि मङ्किगीतायाम्, बोध्यगीतायां ब्रह्मजीवजगद्-मोक्षादिविषयाः प्रतिपादिताः । एतदतिरिक्तं भृगुभारद्वाजसंवादे याज्ञवल्क्यजिदा-वसुसंवादे चाद्वैतसिद्धान्ता निर्दिष्टाः । सनत्सुजातीये महाभारते ह्यादसंवादे च जीवपरमात्मस्वरूपं परमात्मसाक्षात्कारोपाय, जीवब्रह्मणोरैक्यादिकं चाद्वैत-वेदान्तानुकूलं व्याख्यातम् । एषु श्रीमद्भगवद्गीताया, सनत्सुजातीयस्य चाचार्य-शङ्करकृतं भाष्यमपि प्राप्यते । श्रीमद्भगवद्गीताया भाष्ये यथा श्रीमद्भगवत्पादश-ङ्कराचार्यैर्निर्विशेषाद्वैतसिद्धान्ताः प्रदर्शितास्तथैवापरैरप्याचार्यैस्तत्तद्वेदान्त-सिद्धान्ता अपि प्रदर्शिताः । अत्र केवलं सनत्सुजातीयस्य केचन श्लोका उदाहरणार्थ-मुपस्थाप्यन्ते । यैरेतदवगन्तुं शक्यते यत्सनत्सुजातीयोक्ता अद्वैतसिद्धान्तास्तथा श्रीशङ्करसमर्थिताद्वैतसिद्धान्ताः कियताधिन समानाः कियतांशेनासमाना ।

अद्वैतवेदान्तसम्प्रदायानुसारं ब्रह्मा अद्वैतवेदान्तस्य द्वितीय आचार्य । ब्रह्मणश्च पुत्रः सनत्सुजातः । धृतराष्ट्रो मृत्युविषयकं प्रश्नं सनत्सुजातं प्रपच्छ । स ब्रह्मसूत्रवेदान्ततत्त्वमित्थमुपदिदेश ।

धृतराष्ट्रस्य प्रथम. प्रश्नः—

सनत्सुजात यदिदं शृणोमि, न मृत्युरस्तीति तव प्रवादम् ।
देवासुरा ह्याचरन् ब्रह्मचर्यममृत्यवे तत् कतरन्नु सत्यम् ॥

( म० भा० उ० प० अ० ४२ श्लो० २ )

प्रथमप्रश्नोत्तरानन्तरं धृतराष्ट्रस्यापर प्रश्नः—

सनत्सुजात यामिमां परां त्वम्, ब्राह्मीं वाचं वदसे विश्वरूपाम् ।
परां हि कामेन सुदुर्लभां कथाम्, प्रब्रूहि मे वाक्यमिदं कुमार ॥

( म० भा० उ० प० अ० ४४ श्लो० १ )

अस्मिन् प्रश्ने सनत्सुजात इत्थं निबोधयामास—

नैतद् ब्रह्म त्वरमाणेन लभ्यम्, यन्मां पृच्छन्नतिहृष्यतीव ।
बुद्धौ विलीने मनसि प्रचिन्त्या, विद्या हि सा ब्रह्मचर्येण लभ्या ।२।

सा प्रतिष्ठा तदमृतं लोकास्तद् ब्रह्म तद् यश ।
भूतानि जज्ञिरे तस्मात् प्रलयं यान्ति तत्र हि ॥ ३० ॥

अनामयं तन्महदुद्यतं यशो वाच विकारं कवयो वदन्ति ।
यस्मिञ्जगत् सर्वमिदं प्रतिष्ठितं ये तद् विदुरमृतास्ते भवन्ति ।३१।

पूर्णात् पूर्णान्युद्धरन्ति, पूर्णात्पूर्णानि चक्रिरे ।
हरन्ति पूर्णात्पूर्णानि पूर्णमेवावशिष्यते ।
योगिनस्त प्रपश्यन्ति भगवन्तं सनातनम् ॥

( तत्रैव अ० ४६ श्लो० १० )

अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा, लिङ्गस्य योगेन स याति नित्यम् ।
तामीशमीड्यमनुकल्पमाद्यं पश्यन्ति मूढा न विराजमानम् ॥१५॥

नाहं सदा सत्कृतः स्यां न मृत्युर्न चामृत्युरमृत मे कुत स्यात् ।
सत्यानृते सत्यसमानबन्धे, सतश्च योनिरसतश्चैक एव ॥ २२ ॥

एवं यः सर्वभूतेषु आत्मानमनुपश्यति ।
अन्यत्रान्यत्र युक्तेषु किं स शोचेत् ततः परम् ॥ २५ ॥
अहमेव स्मृतो माता पिता पुत्रोऽस्म्यहं पुनः ।
आत्माहमपि सर्वस्य यच्च नास्ति यदस्ति च ॥ २८ ॥

आत्मैव स्थानं मम जन्म चात्मा, ओतप्रोतोऽहमजरप्रतिष्ठः ।
अजश्चरो दिवारात्रमतन्द्रितो मा चिताय कविरास्ते प्रसन्नः ॥३०॥

अत्रैकमेव पूर्णं नित्यं सत् तत्त्वमात्मा, दृश्यमानमिदं सर्वं काल्पनिकमिति निरूपितम् ।

## ५—पराशरस्याद्वैतवाद

आचार्यशङ्करस्य गुरुपरम्परायामाचार्यपराशरस्य पञ्चमं स्थानमस्ति । पराशरः ब्रह्माद्वैतवादस्य प्रतिपादकं किं ग्रन्थरत्नं विरचितवान् इति स्पष्टं निश्चेतुं न पारये । पराशरनाम्ना पराशरस्मृतिः पराशरसंहिता तथा विष्णुपुराणम् इमे ग्रन्थाः प्रसिद्धाः । उपनिषद्ब्रह्मसूत्रगीतादिग्रन्थेष्वपि केचिदपरः इत्यादि शब्देन कंचन वेदान्ताचार्यं स्मरन्ति तत्र[४] महर्षिपराशरस्य नाम नायाति । महर्षिपराशरप्रोक्तं विष्णुपुराणं प्रसिद्धम् । अयं पराशरः शक्तिपुत्रः । पितृपरम्परात एवायमद्वैतनिष्ठां प्राप्तवान् । ब्रह्मणो वरदानादेव विष्णुपुराणस्य प्रवक्ताऽभवत्—

पुराणसंहिताकर्ता भवान् वत्स भविष्यति ।
( वि० पु० अं० १ अ० १ श्लो० ३० )

अनेन विष्णुपुराणे सदद्वितीयस्य ब्रह्मणो ज्ञानमयत्वम् जगत आविद्यकत्वम्, ज्ञानेन मुक्तिः, जीवब्रह्मणोरैक्यं च प्रतिपादितम् । एतद्विषये विष्णुपुराणस्य केचनांशा अत्रोपस्थाप्यन्ते—

ज्ञानस्वरूपो भगवान् यतोऽसावशेषमूर्तिर्न तु वस्तुभूतः ।
ततो हि शैलाब्धिधरादिभेदाञ्जानीहि विज्ञानविजृम्भितानि ॥
( वि० पु० अं० २ अ० १२ श्लो० ३९ )

---

४—द्र०—श्रीबलदेवोपाध्यायस्य पुराणविमर्शः । अत्र पुराणानि शङ्कराचार्यात् प्राचीनानीति साधितम् ।

यदा तु शुद्धं निजरूपि सर्वं कर्मक्षये ज्ञानमपास्तदोषम् ।
तदा हि संकल्पतरोः फलानि भवन्ति नो वस्तुषु वस्तुभेदाः ॥४०॥

वस्त्वस्ति किं कुत्रचिदादिमध्यपर्यन्तहीनं सततैकरूपम् ।
यच्चान्यथात्वं द्विज याति भूयो न तत्तथा तत्र कुतो हि तत्त्वम् ॥४१॥

मही घटत्वं घटतः कपालिका, कपालिकाचूर्णरजस्ततोऽणुः ।
जनैः स्वकर्मस्तिमितात्मनिश्चयैरालक्ष्यते ब्रूहि किमत्र वस्तु ॥४२॥

तस्मान्न विज्ञानमृतेऽस्ति किञ्चित् क्वचित्कदाचिद् द्विज वस्तुजातम्
विज्ञानमेकं निजकर्मभेदविभिन्नचित्तैर्बहुधाभ्युपेतम् ॥ ४३ ॥

ज्ञानं विशुद्धं विमलं विशोकमशेषलोभादिनिरस्तसङ्गम् ।
एकं सदैकं परमः परेशः स वासुदेवो न यतोऽन्यदस्ति ॥ ४४ ॥

ध्रुवमेकाक्षरं ब्रह्म ओमित्येव व्यवस्थितम् ।
बृहत्त्वाद् बृहणत्वाच्च तद् ब्रह्मेत्यभिधीयते ॥
( वि० पु० अ० ३ अ० ३ श्लो० २२ )

रूप परं सदिति वाचकमक्षरं यज्ज्ञानात्मने सदसते प्रणतोऽस्मि तस्मै ।
( वि पु० अ० ४ अ० १८ श्लो० ५७ )

यत्तदव्यक्तमजरमचिन्त्यमजमव्ययम् ।
अनिर्देश्यमरूपं च पाणिपादाद्यसंयुतम् ॥
( वि० पु० अ० ६ अ० ५ श्लो० ६६ )

विभुं सर्वगतं नित्यं भूतयोनिरकारणम् ।
व्याप्यव्याप्तं यतः सर्वं यद्वै पश्यन्ति सूरयः ॥ ६७ ॥

तद् ब्रह्म तत्परं धाम तद् ध्येयं मोक्षकाङ्क्षिभिः ।
श्रुतिवाक्योदितं सूक्ष्मं तद्विष्णोः परमं पदम् ॥ ६८ ॥

विषयेभ्यः समाहृत्य विज्ञानात्मा मनो मुनिः ।
चिन्तयेन्मुक्तये तेन ब्रह्मभूतं महेश्वरम् ॥
( वि० पु० अ० ६ अ० ७ श्लो० २९ )

आत्मभावं नयत्येनं तद्ब्रह्मध्यायिनं मुनिम् ।
विकार्यमात्मनश्शक्त्या लोहमाकर्षको यथा ॥ ३० ॥

विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते ।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥ ९६ ॥
अहं ममेत्यविद्येयं व्यवहारस्तथानयोः ।
परमार्थस्त्वसंलापो गोचरे वचसां न यः ॥ १०० ॥

यस्मिन् ब्रह्मणि सर्वशक्तिनिलये मानानि नो मानिनाम् ।
निष्ठायै प्रभवन्ति हन्ति कलुषं श्रोत्रं स यातो हरिः ॥
( वि पु अ ६ अ ८ श्लो ६८ )

नाहोरात्रिर्न नभो न भूमिर्नासीत्तमो ज्योतिरभूच्च नान्यत् ।
श्रोत्रादिबुद्ध्यानुपलभ्यमेकं प्राधानिकं ब्रह्मपुमांस्तदासीत् ॥
( वि० पु० अ० १ अ० २ श्लो० २३ )

ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः ।
तमेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम् ॥ ६ ॥

जडभरतरूपाया जडभरतोक्त्या समस्तमपि दृश्यं ब्रह्मरूपमयं, तदतिरिक्तं नान्यद् किञ्चिद् । अस्मद्भावो युष्मद्भावो एतद्भावश्च सर्वे एते आत्मस्वरूपभूता एव—

एकं समस्तं यदिहास्ति किञ्चित्तदच्युतो नास्ति परं ततोऽन्यत् ।
सोऽहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहम् ॥
(वि पु० अ० २ अ० १६ श्लो० २३)

ऋभुरपि द्वैतं निषिषेध—

एकमेवमिदं विद्धि न भेदि सकलं जगत् ।
(वि० पु० अ० २ अ० १५ श्लो० ३५)

ऋभोरुपदेशाद् निदाघस्याद्वैतनिष्ठा तत्रैवमुक्ता—

एवमुक्तो ययौ विद्वान् निदाघं स ऋभुर्गुरुः ।
निदाघोऽप्युपदेशेन तेनाद्वैतपरोऽभवत् ॥
( वि० पु० अ०२ अ० १६ श्लो० १६ )

## ६—श्रीव्यासस्य ब्रह्माद्वैतवादः

ब्रह्माद्वैतपरम्पराया व्यास एव आचार्यः । अयं पराशरस्य पुत्रोऽद्वैतनिष्ठाया अतीव पोषक आसीत् । अस्य ब्रह्मसूत्रमतीव प्रसिद्धो वेदान्तग्रन्थः । यद्यपि विशिष्टाद्वैतिनो द्वैतिनो वा ब्रह्मसूत्रस्य स्वानुरूपमर्थं कुर्वन्ति । किन्तु समन्वयदृष्ट्या व्यासस्य तयाभिप्रेतत्वेऽपि मुख्यं तात्पर्यं ब्रह्माद्वैतप्रतिपादनमेवास्ति । श्रीमदप्पयदीक्षितेन व्यासतात्पर्यनिर्णये एका युक्तिः प्रदर्शिता यत् सांख्यमीमांसापातञ्जलन्यायवैशेषिकपाशुपतवैष्णवदर्शनेषु ब्रह्मसूत्रस्य चर्चाऽप्राप्तिः । सर्वैरपि तैः स्वस्वसिद्धान्तान् स्थापयितुं ब्रह्मसूत्रस्य यत्खण्डनं कृतं तदद्वैतपरकत्वेनैव । अतो ब्रह्मसूत्रे व्यासतात्पर्यमद्वैतविषयकमेवेति सिध्यति । सांख्यसूत्रस्य वृत्तिकारेणानिरुद्धेनापि वेदान्तिपदेन एकान्तवादिन एव गृहीताः —

एक एवात्मेति वेदान्तिनः । ( सांख्यसूत्रवृत्तौ अ० १ )

भवभूतिनापि वेदान्तसिद्धान्तकथने ब्रह्माद्वैत एवोदाहृतः —

विद्याकल्पेन मरुता मेघानां भूयसामपि ।
ब्रह्मणीव विवर्तानां क्वापि प्रविलयः कृतः ॥
(उत्तररामचरिते ६।८)

भक्तिसूत्रकारः शाण्डिल्यः काश्यपस्य भेदवादं बादरायणस्याभेदवादमुल्लिख्य स्वीयं सिद्धान्तमस्थापयत् । तत्र व्यासमभेदवादिनममन्यत —

“आत्मैकपरां बादरायणः ।” ( भक्तिसूत्रे ३० सू० )

अत आचार्यशङ्करेण ब्रह्मसूत्रम् अद्वैतपरत्वं गमितम् । तेन ब्रह्मसूत्रोक्तः शाङ्करभाष्यसिद्धान्तित एवाद्वैतसिद्धान्तो व्यासस्याप्यस्ति । आचार्यशङ्करविषय इयं प्रसिद्धिर्यत् तेन सूतसंहितामष्टादशवारमधीत्य ब्रह्मसूत्रभाष्यमरचि —

तामष्टादशधालोच्य शङ्करः सूतसंहिताम् ।
चक्रे शारीरकं भाष्यं सर्ववेदान्तनिश्चितम् ॥[5]

व्यासस्याद्वैतदृष्टिर्ब्रह्मसूत्रतोऽवगम्यत एव किन्तु स्पष्टतया तद्दृष्टेरवगमनायात्र सूतसंहितोक्ताऽद्वैतवादोऽत्रोपस्थाप्यते । श्रीशङ्करेणयमेव ब्रह्माद्वैतदृष्टिर्ब्रह्म-

५—द्र०(क) म०म०श्रीगोपीनाथकविराजमहोदयस्य—'वेदान्तदर्शनकी भूमिका' ।
(ख) श्रीबलदेवोपाध्यायस्य—शङ्कराचार्यनामको ग्रन्थः पृ०२३ ।

सूत्रे गृहीता । सूतसंहिता स्कन्दपुराणान्तर्गता।[६] अत्र चत्वारि खण्डानि। प्रथमं शिवमाहात्म्यखण्डम्, द्वितीयं ज्ञानयोगखण्डम्, तृतीयं मुक्तिखण्डम्, चतुर्थं यज्ञवैभवखण्डम्. यज्ञवैभवखण्डस्य—द्वौ भागौ पूर्वभाग उत्तरभागश्च। उत्तरभागो ब्रह्मगीतासूतगीताभ्याम्, ब्रह्मगीताया द्वादशाध्याय सूतगीताया चाष्टौ अध्यायाः ।

अस्याः सूतसंहितायाष्टीका प्रसिद्धाद्वैतवेदान्तविदुषा विद्यारण्यापरनाम्केन श्रीमाधवाचार्येण कृता । ब्रह्मेश्वरजीवजगदविद्यामाक्षविषयेऽस्याः का दृष्टिरिति सक्षेपताऽत्र निरूप्यते ।

ब्रह्म

अद्वैतं परमानन्दं ब्रह्मवस्तु न चापरम् ।
( सू० स० यज्ञवैभवखण्डे १ भागे ३८ अ० २० श्लो० )

आत्मनस्तत्त्वविज्ञानात्तस्य ब्रह्मैव केवलम् ।
( सू० सं० ३ ख० ३ अ० १० श्लो० )

एकमेवाद्वितीयं सदित्याह श्रुतिरादरात् ।
मायामात्रमिदं द्वैतमिति चाह परा श्रुतिः ॥
(सू० सं० ४ ख० १ भा० १० अ० ५५ श्लो०)

ब्रह्मसत्यपरानन्दप्रकाशानन्तलक्षणम् ।
अप्रच्युतात्मभावेन संस्थितं सर्वदैव तु ॥
( सू० सं० ४ ख० १ भा० १२ अ० २ श्लो० )

चेतनाचेतनाकारौ ब्रह्मणो यौ प्रकल्पितौ ।
तौ शिवादन्यतो न स्त सम्यगर्थनिरूपणे ॥ १७ ॥

शुक्तिका रजताकारा यथा भाति स्वभावतः ।
तथा सर्वतया भाति शिवः सर्वावभासकः ॥
( सू स य वै १ भ १५ अ १५ श्लो )

६—स्कन्दपुराणस्य रचना श्रीशङ्कराचार्यात् पूर्वजाता द्र० "पुराणविमर्श" ले० श्री बलदेवोपाध्याय ।

भूतानि शम्भुः भुवनानि शम्भुर्वनानि शम्भुर्गिरयश्च शम्भुः ।
स एव सर्वं न ततोऽतिरिक्तं ततः ॥ एवं परमार्थमेतत् ॥१८॥

चिच्छक्तिर्नैकशक्तिश्च तद्भेदाश्च तथैव च ।
यदेव शङ्करो नित्यं तस्मै सर्वात्मने नमः ॥
(सू सं य १ ख ३८ अ ६ श्लो)

यं विना न जगत्सर्वं सदा साक्षात्मने नमः ।
यस्य भानं जगद्भानं स्वरूपेण विभासने ॥ ६ ॥

यद्देशकालदिग्भागैर्न भिन्नं सर्वदाऽद्वयम् ।
यदेव चिन्त्यं तद्ब्रह्म यथार्थं प्रणमाम्यहम् ॥१२॥

अनन्तमद्वयं पूर्णमेकमित्यामनन्ति यत् ।
आगमा अखिला नित्यं वन्दे तद्ब्रह्मसंज्ञितम् ॥ १३ ॥

अनर्थोऽस्त्यविद्यमानस्यार्थो व्यतिरिक्तार्थं ब्रह्म ।
तद्विचार्यविषयं ब्रह्म सत्यज्ञानगुणाद्वयम् ।
संसारके गुहायाम्ये मायाज्ञानादिसंज्ञिते ।
निहितं ब्रह्म यो वेद परमव्योमसंज्ञिते ।
(सू स य २ भा ३ अ ३१ श्लो)

प्रपञ्चज्ञानविज्ञानमायातत्त्वेऽस्तु साक्षिणम् ।
एकं ब्रह्म च पश्यन् साक्षाद् ब्रह्मविदुत्तमः ॥३३॥
एष ब्रह्मैव नान्यदस्ति मे निश्चिता मतिः ।
ऐतदात्म्यमिदं सर्वमित्याह हि पराश्रुतिः ।
(सू स य २ भा ५ अ ६६ श्लो)

ईश्वर

ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिव ।
विराडाद्याश्च देवाश्च यन्मात्रं तं नुम शिवम् ॥
(सू स य १ ख० ३८ अ. ७ श्लो)

ईश्वरो जगतः कर्ता मायया स्वीयया पुरा ।
अभेदेन स्थितः पूर्वकल्पवासनयान्वितः ॥
( सू. सं. य. २ भा. सू. गी. ४ अ. १ श्लो. )

कालकर्मानुगुण्येन स्वामिन्नस्वीयमायया ।
अभिन्नोऽपि तया स्वस्य भेदे कल्पयति प्रभुः ॥ २ ॥

मायाया गुणभेदेन रुद्रं विष्णुं पितामहम् ।
सृष्ट्वानुप्राविशत्तेषामन्तर्यामितया हरः ॥ ५ ॥
एक एव शिवः साक्षात्तिस्रो मूर्तीर्बधौ पुनः ।
( सू. सं. य. १ भा. २ अ. ४ श्लो. )

रजोगुणं समास्थाय ब्रह्मा स्यात् सृष्टिकारणम् ।
सत्वमास्थाय विष्णुः स्यात् पालनार्थं बृहस्पते ॥ ५ ॥
तमसा कालरुद्राख्यः सर्वसंहारकारणम् ॥ ६ ॥

जीवः

तस्माज्जीवः स्वतः साक्षाच्छिवः सत्यादिलक्षणः ॥
( सू. सं. य. १ भा. ३९, अ. ५० श्लो. )

स न मुक्तो न बद्धश्च न मुमुक्षुर्न चापरः ।
य एवमात्मनात्मानं सुदृढं वेद केशव ॥
( सू. स. २ ख. ३ अ. ५६ श्लो. )

अभिव्यक्त भवेदेतद् ब्रह्मं वात्मा विचारतः ॥
(सू. सं. ३ ख ३ अ ४ श्लो.)

पूर्णमेव स्वकं रूपमपूर्णं भाति मायया ।
पूर्णरूपतया मायां पश्यन् पूर्णो भवेत् स्वयम् ॥
( सू. स. य. १ भा. १३ अ ४४ श्लो )

स्वपूर्णात्मातिरेकेण जगज्जीवेश्वरादयः ।
न सन्ति नास्ति माया च तद्विशुद्धात्मवेदनम् ॥ ४९ ॥
तस्मादात्मैव विप्रेन्द्रा. नित्यं वस्तु न चापरम् ।
( सू. स. य १ ख. २० अ २८ श्लो. )

जीवब्रह्मैक्यविज्ञानं विशुद्धं वेदसम्भवम् ।
देवदेवस्य विप्रेन्द्रा महाप्रीतिकरं सदा ॥
( सू. सं. य. १ भा. ३१ अ. २ श्लो. )

जगत्

तथाऽऽत्माज्ञाननाशेन संसारश्च विनश्यति ।
तस्मादज्ञानमूलस्य संसारस्य क्षयो हरेः ॥
( सू सं ३ ख ३ अ ६ श्लो )

यद्यदस्तितया भाति यद्यन्नास्तितया तथा ।
तत्सर्वं महादेवमायया परिकल्पितम् ॥
( सू. सं. ४ ख. १ भा. १२ अ. १६ श्लो. )

अनघ संक्षेपमिदं शृणुध्वम्. जगत्समस्तं चिदचित्प्रभिन्नम् ।
स्वशक्तिक्लृप्तं शिवमात्रमेव, न देवदेवात्पृथगस्ति किञ्चित् ॥
( सू. सं. य. १ नं १३ अ. २८ श्लो. )

वीचितरङ्गफेनाद्या यथा भान्ति महोदधौ ।
महदादिविशेषान्तं जगद् भाति तथात्मनि ॥
( सू. स. य १ ख. १५ अ १७ श्लो )

ब्रह्मरूपात्मनस्तस्मादेतस्माच्छक्तिमिश्रितात् ।
अपञ्चीकृत आकाश संभूतो रज्जुसर्पवत् ॥
( सू० सं २ भा ३ अ ३४ श्लो. )

आकाशाद् वायुसंज्ञस्तु स्पर्शोऽपञ्चीकृत. पुन. ।
वायोरग्निस्तथा चाग्नेरापश्चाद्भ्यो वसुन्धरा ॥ ३५ ॥

तानि भूतानि सूक्ष्माणि पञ्चीकृत्य शिवाज्ञया ।
तेभ्य एव पुरा सृष्टं ब्रह्माण्डाख्यमिदं मया ॥ ३६ ॥

एकेनैव तु पिण्डेन मृत्तिकाया यथा सुरा ।
विज्ञातं मृण्मयं सर्वं मृदभिन्नत्वतः सदा ॥
( सू सं य २ भा ५ अ. ३ श्लो. )

अविद्या

अध्यस्ताज्ञानतत्कार्यनिवृत्तिद्वारतोऽद्वयम् ।
बोधयन्ति मुदा काश्चिच्छ्रुतयः पण्डितोत्तमा ॥
( सू. सं. य. १ भा. ३९ अ. २४ श्लो. )

जगत्कारणमापन्नः शिवो यो मुनिसत्तमाः ।
सा तस्यापि भवेच्छक्तिस्तया हीनो निरर्थकः ॥
( सू. सं. य. १ भा. १३ अ. ४ श्लो. )

मोक्षस्वरूपम्

स्वाज्ञानं तत्प्रसूतं च संसारं स्वात्मना ग्रसन् ।
सम्पूर्णशिवरूपेण स्वयमेवावशिष्यते ॥
( सू. सं. य. १ भा. ३६ अ. ५१ श्लो. )

शुक्तिकाकलधौतं तु शुक्तिकावेदनेन तु ।
शुक्तिकामात्ररूपेण यथा लोकेऽवशिष्यते ॥५२॥

अनन्तानन्दमोक्षाख्यब्रह्मप्राप्त्येकसाधनम् ।
( सू. सं. ज्ञान. २ ख. २ अ. २ श्लो. )

अन्या सायुज्यरूपोक्ता सुखदुःखविवर्जिता ।
( सू. सं. ३ ख. २ अ. २९ श्लो. )

षड्भावविक्रियाहीना शुभाशुभविवर्जिता ।
सर्वद्वन्द्वविनिर्मुक्ता सत्यविज्ञानरूपिणी ॥ ३० ॥
केवलं ब्रह्मरूपोक्ता सर्वदा सुखलक्षणा ॥ ३१ ॥

मोक्षोपाय

आत्मनः परमा मुक्तिर्ज्ञानादेव न कर्मणा ।
ज्ञानं वेदान्तवाक्यानां महत्तात्पर्यनिर्णयात् ॥
( सू. सं. ३ ख. १अ. २ श्लो. )

बहवोऽद्वैतविज्ञानाद् विमुक्ता भवबन्धनात् ।
अद्वैतज्ञानयज्ञेन न तुल्यो विद्यते क्वचित् ॥
( सू. स. ४ सं. १ भा. ११ अ. ६२ श्लो. )

स्वपूर्णात्मशिवानन्दनिष्ठामासाद्य मानवः ।
तदेव लभते मुक्तिं स्वपूर्णात्मशिवात्मिकाम् ॥
( सू. सं. य. १ ख. १४ अ ४६ श्लो )

वेदान्तः शङ्करं साक्षान्निर्विशेषाद्वयात्मना ।
( सू. सं. य १ ख. २२ अ. १६ श्लो. )

वक्ति मार्गान्तराण्येवं ततो विद्या तु वेदजा ।
अतो मार्गान्तराज्जाता मतयो मुनिसत्तमाः ।
अविद्या नैव विद्याः स्युरिति सम्यङ्निरूपणम् ॥ १७ ॥

प्रसादे सति देवस्य शिवस्य परमात्मनः ।
वैदिकानां तथान्येषामपि मुक्तिर्हि सिद्ध्यति ॥
( सू. सं. य १ ख. २३ अ. ३१ श्लो. )

स्वस्वरूपापरिज्ञानाद् बध्यते खलु मानवः ।
स्वस्वरूपपरिज्ञानात्कर्मभिर्न स बध्यते ॥
( सू. स. य. १ मा ४७ अ. २६ श्लो. )

स्वस्वरूपं तु शुद्धं हि सततं सर्वदेहिनाम् ।
स्वस्वरूपं तु चिन्मात्रं सर्वदा सर्वदेहिनाम् ॥
( सू स = १ मा. ४७. अ ३० श्लो. )

ब्रह्मवेदनमात्रेण ब्रह्माप्नोत्येव मानव. ।
अत्र नास्त्येव सन्देहस्त्रिर्वः शपथयाम्यहम् ॥
( सू स. य. २ मा. ३ अ ३० श्लो )

ज्ञात्वा तं मृत्युमत्येति नान्यः पन्था विमुक्तये ॥
(सू उ. य. २ मा. ८ १६ श्लो.)

अनेन प्रकारेण सूतसंहितायां परमार्थतत्त्वमेकं ब्रह्मैव, जीवस्तत्स्वरूप एव, जगज्ज्ञानमूलकम्, अविद्या, अध्यास, अनन्तानन्दो मोक्षः, मोक्षसाधनं केवलं ज्ञानमेवेत्येवं रूपोऽद्वैतसिद्धान्त प्रतिपादित ।

## ७—श्रीशुकाचार्यस्याद्वैतः

श्रीशुकाचार्यस्य वेदान्तविषयकः कश्चिद्ग्रन्थो वेदान्तग्रन्थेषु किञ्चिद् वाक्यं वा नोपलभ्यते।—किन्त्वयं प्रसिद्धिर्यदस्य कृपयैव श्रीगौडपादाचार्येण माण्डूक्योपनिषदो व्याख्यारूपो माण्डूक्यकारिकाग्रन्थोऽलेखि। अतः शुकस्य ब्रह्माद्वैतसिद्धान्त एव माण्डूक्यकारिकाग्रन्थेऽवलोक्यते।

## ८—कालिदासाश्वघोषभारविकाव्येषु ब्रह्माद्वैतवादः

अद्वैतसिद्धान्तो महाकविकालिदासाश्वघोषभारविकाव्येष्वप्युपलभ्यते। यथा रघुवंशमहाकाव्ये निर्गुणस्यैवस्याद्वितीयस्य विभोर्वर्णनम्—

नमो विश्वसृजे पूर्वं विश्वं तदनुबिभ्रते।
अथ विश्वस्य संहर्त्रे तुभ्यं त्रेधा स्थितात्मने॥ (र० व० १०।१६)

रसान्तराण्येकरसं यथा दिव्यं पयोऽश्नुते।
देशे देशे गुणेष्वेवमवस्थास्त्वमविक्रियः॥ १७॥

अत्र-अविक्रियः—निर्विकार इति मल्लिनाथः।

सर्वज्ञस्त्वमविज्ञातः सर्वयोनिस्त्वमात्मभूः।
सर्वप्रभुरनीशस्त्वमेकस्त्वं सर्वरूपभाक्॥ २०॥

त्वमात्मन एव भवतीत्यात्मभूः। न ते किञ्चित्कारणमस्तीत्ययः।
कुमारसम्भवे च महाकाव्ये त्वलमात्मैव परमार्थतत्त्वमित्युपपादितम्।
यथा—

जगद्योनिरयोनिस्त्वं जगदन्तो निरन्तकः।
जगदादिरनादिस्त्वं जगदीशो निरीश्वरः॥ (कु० स० २।६)

आत्मानमात्मना वेत्सि, सृजस्यात्मानमात्मना।
आत्मना कृतिना च, त्वमात्मन्येव प्रलीयसे॥ १०॥

परमात्मनः परं किञ्चिदपि नास्ति स चैक एव सर्वरूपेणावस्थित इति यदाह महाकवि कालिदासः—

त्वमेव हव्यं होता च भोज्यं भोक्ता च शाश्वतः।
वेद्यं च वेदिता चासि ध्याता ध्येयं च यत्परम् (कु० स० २।१५)

महाश्वविनाशवयोषेण सौन्दरनन्दकाव्ये अद्वयपरमार्थतत्त्वमात्मा ब्रह्मेति प्रतिपादितम् ।

आकाशसममात्मानं संक्षिप्य त्वपरो बुधः ।
तदेवानन्ततः पश्यन् विशेषमधिगच्छति ॥
( बुद्धचरित १२ स० ६२ श्लो० )

अध्यात्मकुशलेष्वन्यो निवर्त्यात्मानमात्मना ।
किञ्चिन्नास्तीति सम्पश्यन्नाकिञ्चन्य इति स्मृतः ॥ ६३ ॥

ततो मुञ्जादीषिकेव शकुनिः पञ्जरादिव ।
क्षेत्रज्ञो निःसृतो देहान्मुक्त इत्यभिधीयते ॥ ६४ ॥

एतत्तत्परमं ब्रह्म निर्लिङ्गं ध्रुवमक्षरम् ।
यन्मोक्ष इति तत्त्वज्ञाः कथयन्ति मनीषिणः ॥ ६५ ॥

सौन्दरानन्दमहाकाव्येऽध्यात्मप्रशंसाया महाश्वविनाशवभाषणात्तम्—

रिरंसा यदि ते तस्मादध्यात्मे धीयतां मनः ।
प्रशान्ता चानवद्या च नास्त्यध्यात्मसमा रतिः ॥ ( सौ० ११-३८ )

न तत्र कार्यं तूर्यैस्ते न स्त्रीभिर्न विभूषणैः ।
एकस्त्वं यत्र तत्रस्थस्तया रत्याभिरंस्यसे ॥ ( ११-३५ )

छिन्नस्य सुप्तस्य च निर्वृतस्य बाधं यथा सञ्जनयन्ति शब्दाः ।
अध्यात्ममैकाग्र्यमुपागतस्य भवन्ति बाधाय तथा वितर्काः ॥
( सौ० १७।४६ )

अथावितर्कं क्रमशोऽविचारमेकाग्रभावान्मनसः प्रसन्नम् ।
समाधिजं प्रीतिसुखं द्वितीयं ध्यानं तदाध्यात्मशिवं स दध्यौ ॥
( सौ० १७।४७ )

सद्वितर्कैरकुशलैर्नात्मानं हन्तुमर्हसि ।
सुशस्त्रं रत्नविकृतं मृद्धतो गां खनन्निव ॥ ( सौ० १५।२५ )
( एवं बहुषु स्थलेषु आत्मशब्दव्यवहारः )

किरातार्जुनीये महाकाव्ये महाकविर्भारविः ( ३-४ ईसवीये ) शङ्करसम्मत-ब्रह्मविषये उक्तवान्—

वीतजन्मजरसं परं शुचि ब्रह्मणः पदमुपैतुमिच्छताम् ।
आगमादिव तमोपहादितः सम्भवन्ति मतयो भवच्छिदः ॥
( कि ५।२२ )

न सुखं प्रार्थये नार्थमुदन्वद्वीचिचञ्चलम् ।
नानित्यताशनेस्त्रस्यन् विविक्तं ब्रह्मणः पदम् ॥ ( कि. ११।६६ )

सनिबद्धमपहर्तुमहार्यं भूरिदुर्गतिभयं भुवनानाम् ।
अद्भुताकृतिमिमामतिमायस्त्वं बिभर्षि करुणामय मायाम् ।
परितो दुरितानि यः पुनीते शिव तस्मै पवनात्मने नमस्ते (कि १८।३७)
भवतः स्मरतां सदासने जयिनि ब्रह्ममये निषेदुषाम् ।
दहते सर्वबीजसततिं शिखिनेऽनेकशिखाय ते नमः ॥ (कि. १८।३८)

यद्यप्येतेषां त्रयाणामपि कालिदासाश्वघोषभारवीणां महाकाव्येष्वात्मन एकत्वम्, विभुत्वम्, जगतः सृष्टिस्थितिसंहारकत्वम्, सर्वमयत्वं च सामान्यतो वर्णितम् । यतेनाद्वैतसिद्धान्तस्तु समायाति । किन्तु कालिदासीयं दर्शनं किञ्चिद् विलक्षण-मिवास्ति[७] । कुमारसम्भवस्य २।१० श्लोकेन जीवस्य जन्म ब्रह्मणि लयश्च मन्यते । अनेन कालिदासो भेदाभेदवादीव लक्ष्यते । अश्वघोषसिद्धान्तो निर्विशेषब्रह्माद्वैतः प्रतीयते । एतन्मते ब्रह्म आकाशसमः सामान्यविशेषवर्जितं विभु । मोक्षश्चात्म-ज्ञानेन भवति । सतो मुञ्जादीषिकेवेत्युक्तिः कठोपनिषदमनुसरति । निर्विकल्प-ब्रह्माद्वैतस्य सर्वोऽपि साराऽश्वघोषस्यैकस्मिन्नेव श्लोके—एवमात्मनः ब्रह्म०.......। ( बु० च० १२।६५ ) इत्यभाणत । भारवेरद्वैतस्तु शिवाद्वैतस्य निकटतरवर्तीव प्रतीयते ।

इत्थमत्र परिशिष्टे ब्रह्माद्वैतसम्प्रदायाचार्येषु नारायणब्रह्मवसिष्ठशक्तिपरा-शरव्यासशुकगौडपादगोविन्दपादेषु केषाञ्चित्साक्षाद्ग्रन्थाधारेण केषाञ्चन शिष्यपरम्परयैषां ब्रह्माद्वैतसिद्धान्तोऽत्र निरूपितः । प्राचीनकविषु केवलं प्रधानां कालिदासाश्वघोषभारवीणामेव महाकाव्ये विशेषरूपेणाद्वैतदर्शनसिद्धान्ता उपल-भ्यन्तेऽतः एतेषां मते यादृशोऽद्वैतसिद्धान्तः सोऽप्यत्र निरूपितः ।

---

७ द्र०—कालिदासीय दर्शनम्, ले० श्री टी० वी० रामचन्द्रदीक्षित, जर्नल आफ ओरि० रि० मद्रास १६२८ ई० पृ ६५-७८

एतेनेदं सुस्पष्टं भविष्यति यद् श्रीशङ्कराचार्यसमर्थितो निर्विशेषाद्वैत-सिद्धान्तोऽपीह प्राचीनमतं, नारायणादिसम्प्रदायाचार्यपरम्परयागतो ननु सौगतस्य विज्ञानाद्वयवादवदनौपनिषत्स्वारस्यम् । केवलं श्रीशङ्करेण समर्थितः प्रचारितश्चेति ।

विश्वव्यापी विश्वशक्तिः पिनाकी,
विश्वेशानो विश्वकृद् विश्वमूर्तिः ।
विश्वत्राता विश्वसंहारकारी,
विश्वाराध्यो साधयत्वीहितं नः ॥

( न्या० वा० तात्पर्यटीकायामादौ श्रीवाचस्पतिमिश्रस्य )

रसयुग्मवियन्नेत्रमिते वैक्रमवत्सरे ।
फाल्गुनाख्ये सिते ग्रन्थो दशम्यां पूर्णतामगात् ॥१॥
द्वारवङ्गमण्डलस्यान्तर्गतटीविपयवासिना ।
श्रीमुरलीधरस्येयं कृतिः स्याद्विदुषां मुदे ॥२॥
शाङ्करात्प्राक्तनाद्वैतवादस्य च निरूपणात् ।
यदवाप्तं महत्पुण्यं तस्मै तन्महसेऽर्पये ॥३॥

— o —

॥ श्रीहरि ॥

# सहायकग्रन्थाना सूची

## तथा ग्रन्थसङ्केताक्षरसूची


अ–

| | |
|---|---|
| १– अ० नि०– | अङ्गुत्तरनिकाय । |
| २– अ० सा०– | अट्ठसालिनी । |
| ३– अ० सि०– | अद्वैतसिद्धि । |
| ४– अ० सि० ल० च०– | अद्वैतसिद्धिटीका लघुचन्द्रिका—प्र० निर्णय-सागर प्रेस, बम्बई १९१७ ई०। |
| ५– अ० सि० गु० च०– | अद्वैतसिद्धिटीका गुरुचन्द्रिका—प्र० निर्णयसागर प्रेस, बम्बई १९३३ ई० । |
| ६– अ० र० र० | अद्वैतरत्नरक्षणम्—प्र० निर्णयसागर प्रेस, बम्बई १९१७ ई० । |
| ७– अ० ध० को० | अभिधर्मकोश । |
| ८– अ० धा० दी० | अभिधानप्पदीपिका । |
| ९– | अवेकनिंग आफ फेथ इन महायान– अनुवादक श्री टी० सुजुकी । |
| १०– अ० प्र०– | अष्टप्रकरणम् । |
| ११– अ० सा० पा० | अष्टसाहस्रिका पारमिता । |

आ –

| | |
|---|---|
| १२- | आउटलाईंस आफ महायान बुद्धिज्म—श्रीसुजुकी । |
| १३ आ० ध० सू०– | आपस्तम्बधर्मसूत्रम् उज्ज्वलावृत्तिसहितम् । |
| १४- आ० बो० | आत्मबोध । |
| १५- आ० मी० | आप्तमीमांसा । |
| १६- आ० शा० | आगमशास्त्रम् सं० श्रीविधुशेखरभट्टाचार्य । |

इ–

| | |
|---|---|
| १७- | इण्डियन फिलासफी– श्रीराधाकृष्णन् । |

| | |
|---|---|
| १८- | इन्डेक्स टु संस्कृत फिलासफी फिट्ज एडवर्ड हाल |
| १९- इ० सि० | इष्टसिद्धि विवरणसहिता– प्र० गायकवाड आरियण्टल सी० एल० १० वी० । |
| २०- ई० उ० | ईशावास्योपनिषद् । |
| उ– | |
| २१- उ० सा० | उपदेशसाहस्री । |
| ऋ– | |
| २२- ऋ० वे० | ऋग्वेदसंहिता । |
| ए– | |
| २३- | ए हिस्ट्री आफ संस्कृत लिटरेचर– कीथ । |
| ऐ– | |
| २४- ऐ० उ० | ऐतरेयोपनिषद् । |
| क– | |
| २५- क० उ० | कठोपनिषद् । |
| २६- का० नी० | कामन्दकीयनीतिसार । |
| २७- का० सि० द० | कालसिद्धान्तदर्शिनी । |
| २८- का० | काशिका । |
| २९- कि० | किरातार्जुनीयम् । |
| ३०- कु० स० | कुमारसम्भवम् । |
| ३१- के० उ०– | केनोपनिषद् । |
| ३२- | केमिन टु निर्वाण– पुसिन । |
| ३३- कौ० अ० | कौटिलीयार्थशास्त्रम् । |
| ३४- कौ० उ० | कौषीतक्युपनिषद् । |

च–

३६- च० श — चतु शतिका–श्रीहरप्रसादशास्त्रिसस्कृता ।

४०- च श० — चतु॰ शतकम्, स० श्रीविधुशेखरभट्टाचार्य, विश्वभारती बुकशाप कलकत्ता १६३१ ई० तथा स० श्री पी० एल० वैद्य, पेरिस प्रकाशनम् ।

४१- — चित्तविशुद्धिप्रकरणम्– प्रभुभाईपटलसस्कृतम्, विश्वभारती ।

छ–

४२- छा० उ० — छान्दोग्योपनिषद् ।

ज

४३- ज० र० स्त० — जगद्गुरुरत्नमालास्तव सदाशिवब्रह्मेन्द्रकृत, आत्मबोधेन्द्रसरस्वतीकृतवेदान्तप्रकरणोटीकासहित ।

४४- जै० सू० — जैमिनीयसूत्रम् प्र० श्रीविद्यायन्त्रालय कुम्भकोणम् ।

त–

४५- ज्ञा० सा० स०— — ज्ञानसारसमुच्चय ( भाटभाषायाम् )

४६- त० न० नि० वृ०— — तत्त्वनयनिर्णयवृत्तिः अघोरशिवाचार्यकृता ।

४७- त० वि० — तत्त्वबिन्दु

४८- त० मु० क०— — तत्त्वमुक्ताकलाप. सर्वार्थवृत्तिसहित ।

४९- त० रा० वा० — तत्त्वराजवार्तिकम्

५०- त० वा० — तत्त्ववार्तिकम्, चौखम्बा स सी बनारस १६०३ ई० ।

५१- त० वा० न्या० सु० — 'तत्त्ववार्तिकन्यायसुधा, चौखम्बा स सी

५२- त० स०- — १९०१ ई० तत्त्वसग्रह

५३- त० सू० — तत्त्वार्थसूत्रम् सर्वार्थसिद्धिसहितम्, प्र० महेन्द्रचन्द्रजैन, एटा, १९८५ वि० स० ।

५४- त० ज्वा० — तर्कज्वाला–मध्यमकहृदयकारिका ।

५५- तै० उ० — तैत्तिरीयोपनिषद्– आनन्दाश्रम पूना प्रका० १६२२ ई० ।

५६- तै० उ० भा० वा० — तैत्तिरीयोपनिषद्भाष्यवार्तिकम् ।

१८- इन्डेक्स टु संस्कृत फिलासफी फिट्ज एडवर्ड हाल

१९- इ० सि० इष्टसिद्धि विवरणसहिता— ग० गायकवाड ओरियण्टल सी० एल० १० वी० ।

२०- ई० उ० ईशावास्योपनिषद् ।

उ—

२१- उ० सा० उपदेशसाहस्री ।

ऋ—

२२- ऋ० वे० ऋग्वेदसंहिता ।

ए—

२३- ए हिस्ट्री आफ संस्कृत लिटरेचर— कीथ ।

ऐ—

२४- ऐ० उ० ऐतरेयोपनिषद् ।

क—

२५- क० उ० कठोपनिषद् ।

२६- का० नी० कामन्दकीयनीतिसार ।

२७- का० सि० द० कालसिद्धान्तदर्शिनी ।

२८- का० काशिका ।

२९- कि० किरातार्जुनीयम् ।

३० कु० स० कुमारसम्भवम् ।

३१- के० उ०— केनोपनिषद् ।

३२- कैमिन टु निर्वाण— पुसिन ।

३३- कौ० अ० कौटिलीयार्थशास्त्रम् ।

३४ कौ० उ० कौषीतक्युपनिषद् ।

ख—

३५ ख० ख० खा० खण्डनखण्डखाद्यम्— विद्यासागरीटीकासहितम् ।

३६ गौ० पा० गौडपाद श्रीमहादेवन् ।

३७- गौ० का० गौडपादकारिका— स० श्रीरघुनाथदामोदरकरमरकर ।

३८- गौ० ध० सू० गौतमधर्मसूत्रम् ।

च–

| | |
|---|---|
| ३९- च० श | चतु शतिका–श्रीहरप्रसादशास्त्रिसस्कृता। |
| ४०- च श० | चतु शतकम्, सं० श्रीविधुशेखरभट्टाचार्य, विश्वभारती बुकशाप कलकत्ता १९३१ ई० तथा स० श्री पी० एल० वैद्य, पेरिस प्रकाशनम्। |
| ४१- | चित्तविशुद्धिप्रकरणम्– प्रभुभाईपटेलसस्कृतम्, विश्वभारती। |

छ–

| | |
|---|---|
| ४२- छा० उ० | छान्दोग्योपनिषद्। |

ज

| | |
|---|---|
| ४३- ज० र० स्त० | जगद्गुरुरत्नमालास्तव सदाशिवब्रह्मेन्द्रकृत, आत्मबोधेन्द्रसरस्वतीकृतवेदान्तप्रकरणीटीकासहितः। |
| ४४- जै० सू० | जैमिनीयसूत्रम् प्र० श्रीविद्यायन्त्रालय कुम्भकोणम्। |

ज्ञ–

| | |
|---|---|
| ४५- ज्ञा० सा० स०-- | ज्ञानसारसमुच्चय ( भोटभाषायाम् ) |
| ४६- त० त्र० नि० वृ०– | तत्त्वत्रयनिर्णयवृत्तिः अघोरशिवाचार्यकृता। |
| ४७- त० बि० | तत्त्वबिन्दु |
| ४८- त० मु० क०-- | तत्त्वमुक्ताकलाप- सर्वार्थवृत्तिसहित। |
| ४९- त० रा० वा० | तत्त्वराजवार्तिकम् |
| ५०- त० वा० | तन्त्रवार्तिकम्, चौखम्बा स. सी बनारस १९०३ ई०। |
| ५१ त० वा० न्या० सु० | 'तन्त्रवार्तिकन्यायसुधा, चौखम्बा स सी. |
| ५२- त० स०- | १९०१ ई० तत्त्वसग्रह |
| ५३- त० सू० | तत्त्वार्थसूत्रम् सर्वार्थसिद्धिसहितम्, प्र० महेन्द्रचन्द्रजैन, एटा, १९८५ वि० स०। |
| ५४- त० ज्वा० | तर्कज्वाला–मध्यमकहृदयकारिका। |
| ५५- तै० उ० | तैत्तिरीयोपनिषद्– आनन्दाश्रम पूना प्रका० १९२२ ई०। |
| ५६- तै० उ० भा० वा० | तैत्तिरीयोपनिषद्भाष्यवार्तिकम्। |

| | |
|---|---|
| ५७- त्रि० | त्रिशिका भाष्यसहिता । |
| ५८- त्रै० प० | त्रैकाल्यपरीक्षा ( भोटभाषायाम् ) |

द—

| | |
|---|---|
| ५९- द० स० | दर्शनसर्वस्वम्— स्वामी श्रीचैतन्यभारती, प्र० सन्यासि स० म० काशी । |
| ६०- | दर आल्टरवेदान्त—श्रीवल्सर, हिडेलबर्ग, १९१० ई० । |
| ६१- दी० नि० | दीघनिकाय । |
| ६२- | दी प्रोवैबिल डेट आफ कम्पाजिशन आफ योग-वसिष्ठ, श्रीभीखणलाल आत्रेय । |
| ६३- दृ० दृ० वि० | दृग्दृश्यविवेक । |
| ६४ द्र० आ० द०— | द्रविडाम्नायदर्शनम्—श्रीरामशास्त्री पोलहम्, प्र० संस्कृत कालेज, मैलापुर मद्रास, १९५१ ई० । |

ध—

प–

| | |
|---|---|
| ७६- प्र० प० | प्रकरणपञ्चिका । |
| ७७- प० द० | पञ्चदशी । |
| ७८- प० पा० वि० | पञ्चपादिका विवरणसहिता प्रबोधपरिशोधिनीसहिता । च, ओरियण्टल गवर्नं०मैनुस्क्रिप्ट लाईब्रेरी मद्रास १९५८ ई० प्रका० । |
| ७९- प० पु० | पद्मपुराणम् |
| ८०- प्र० हृ० | प्रपञ्चहृदयम्—प्र० अनन्तशयनम्, राजकीयमुद्रणालयः त्रिवेन्द्रम् १९१५ ई० प्रका० । |
| ८१- प्र० च० | प्रबोधचन्द्रोदयः । |
| ८२- प्र० सु० | प्रबोधसुधाकर । |
| ८३- प्र० वा० | प्रमाणवार्त्तिकम् । |
| ८४- प्र० उ० | प्रश्नोपनिषद् । |
| ८५- प० स० | पराशरसंहिता । |
| ८६- पा० सू० | पाणिनीयसूत्रम् |
| ८७- पा० म०भा० | पातञ्जलमहाभाष्यम्—प्रदीपोद्योतसहितम्, प्र० निर्णय-सागर प्रेस, बम्बई । |
| ८८- पा० यो० सू० | पातञ्जलयोगसूत्रम्—व्यासभाष्यसहितम् । |

फ–

| | |
|---|---|
| ८९- | फर्ट इयर्स आफ इण्डियनिज्म—बार्थ । |
| ९०- | फिलासफी आफ उपनिषद्स—ड्यूसन । |
| ९१- | फिलासफी आफ दी वर्ड एण्ड मीनिंग—श्रीगौरीनाथ शास्त्री |

ब–

| | |
|---|---|
| ९२- बु० च० | बुद्धचरितम् |
| ९३- बृ आ उ शा भा | बृहदारण्यकोपनिषद्—शाङ्करभाष्यसहिता, प्र० आनन्दाश्रम, पूना, १९१४ ई० । |
| ९४- ०बृ०आ०उ०शा०भा०वा०- | बृहदारण्यकोपनिषद्भाष्यवार्त्तिकम्-प्र०आनन्दाश्रम, पूना । |
| ९५- बो० प०- | बोधपञ्चदशिका—अभिनवगुप्त । |
| ९६- बो० च० | बोधिचर्यावतार-पञ्जिकासहित । |

९७- बो० स०	बोधिसत्त्वभूमिः ।
९८- बौ० द० वे०	बौद्धदर्शन और वेदान्त- श्रीचन्द्रधरशर्मा ।
९९-	बृहती ।
१००- ब्र० जा० सू०	ब्रह्मजालसुत्त ।
१०१-ब्र० बि० उ०	ब्रह्मबिन्दूपनिषद् ।
१०२-ब्र०सि०	ब्रह्मसिद्धिः शङ्खपाणिव्याख्यासहिता-गवर्नं० ओरि० मैनु०ला० सी०नं० ४।१९३७ ई० ।
१०३- ब्र०सू०	ब्रह्मसूत्रम्-भामतीरत्नप्रभान्यायनिर्णयसहितम्, प्र०निर्णय सागरप्रेस, बम्बई ।
१०४- ब्र०सू०	ब्रह्मसूत्रम्-भास्करभाष्यसहितम् ।
१०५- ब्र०सू०	ब्रह्मसूत्रम् -श्रीभाष्यश्रुतप्रकाशिकासहितम् ।
१०६- ब्र० सू०	ब्रह्मसूत्रम्- श्रीभाष्यतत्त्वटीकासहितम्, प्र० ओरियण्टल लाईब्रेरी इन्स्टीच्यूट नं० ६ सुदर्शनप्रेस, काञ्जीवरम् ।

भ-

१०७- भ० गी०	भगवद्गीता ।
१०८- भ० कौ०	भगवन्नामकौमुदी ।
१०९-	भागवतम् ।

म—

११०- म० नि०	मज्झिमनिकायः ।
१११- म० वि० प्र०	मत्तविलासप्रहसनम् ।
११२- म० का०	मध्यमककारिका ।
११३- म० अ०	मध्यमकावतारः ।
११४- म० वृ०	मध्यमकवृत्तिः ।
११५- म० वि०	मध्यान्तविभाग ।
११६- म० म०	महार्थमञ्जरी-प्र०त्रिवेन्द्रम्
११७- म० ना० उ०	महानारायणोपनिषद्
११८- म० भा०	महाभारतम्, सं० गीताप्रेस गोरखपुर ।
११९- म० या० सू०	महायानसूत्रालङ्कार ।
१२०- म० सू० स०	महायानसूत्रसंग्रह
१२१- म० व्यु०	महाव्युत्पत्तिः

१२२- म० मे०  मणिमेखले -मणिमेखले ईन इट्स हिस्टोरिकल सैटिंग, श्री एस्० के० अयङ्गार ।
१२३- म० स्मृ०  मनुस्मृति ।
१२४- म० उ०  महोपनिषद् ।
१२५- मा० का०  माण्डूक्यकारिका ।
१२६- मा० उ०  माण्डूक्योपनिषद् ।
१२७- मा० र० वि०  माण्डूक्यरहस्यविवृति -श्रीसच्चिदानन्देन्द्रसरस्वतीविरचितः, प्र०अध्यात्मप्रकाशनकार्यालय, होलेनरसीपुर, मैसूर १९५८ ई०
१२८- मी० द०  मीमांसादर्शनम् ।
१२९- मी० अ०  मीमांसानुक्रमणिका ।
१३०-  मीमांसापादुकानयम्—श्रीवरदनाथसूरि ।
१३१- मु० उ०  मुण्डकोपनिषद् ।
१३२- मृ० आ० वृ०  मृगेन्द्रागम —वृत्तिसहित ।
१३३- मै० ब्रा० उ०  मैत्रायणब्राह्मणोपनिषद् ।

य—

१३४- १३५- य० स०  यतिराजसप्तति ।
१३५- य० म० दी०  यतीन्द्रमतदीपिका ।
१३६- या० स्मृ०  याज्ञवल्क्यस्मृति ।
१३७- या० नि०  यास्कनिरुक्तम्—सभाष्यम् ।
१३८- यो० वा०  योगवासिष्ठम् ।

र—

१३९- र० त्र—  रत्नत्रयम्—व्याख्यासहितम् ।
१४०-  रत्नावली ( बौद्धदर्शनस्य )

ल—

१४१- लं० अ० सू०  लङ्कावतारसूत्रम्, स० आर्थर प्रावम्थॅन, लन्दन प्र० १९२३ ई० ।
१४२- ल० वि०  ललितविस्तर, मिथिला प्र० १९५८ ई० ।

१२२- म० मे०   मणिमेखले -मणिमेखले ईन इट्स हिस्टोरिकल सैटिंग, श्री एस्० के० अयङ्गार ।

१२३- म० स्मृ०   मनुस्मृति ।

१२४- म० उ०   महोपनिषद् ।

१२५- मा० का०   माण्डूक्यकारिका ।

१२६- मा० उ०   माण्डूक्योपनिषद् ।

१२७- मा० र० वि० माण्डूक्यरहस्यविवृति -श्रीसच्चिदानन्द्रसरस्वतीविरचित, प्र०अध्यात्मप्रकाशनकार्यालय, होलेनरसीपुर, मैसूर १९५८ ई०

१२८- मी० द०   मीमांसादर्शनम् ।

१२९- मी० अ०   मीमांसानुक्रमणिका ।

१३०-   मीमांसापादुकानयम्—श्रीवरदनाथसूरि ।

१३१- मु० उ०   मुण्डकोपनिषद् ।

१३२ मृ० आ० वृ०   मृगेन्द्रागम —वृत्तिसहित ।

१३३ मै० ब्रा० उ०   मैत्रायणब्राह्मणोपनिषद् ।

य—

१३४ १३५ य० म०   यतिराजसप्तति ।

१३५ य० म० दी०   यतीन्द्रमतदीपिका ।

१३६ या० स्मृ०   याज्ञवल्क्यस्मृति ।

१३७- या० नि०   यास्कनिरुक्तम्-समाप्यम् ।

१३८ यो० वा०   योगवासिष्ठम् ।

र—

१३९ र० त्र—   रत्नत्रयम्—व्याख्यासहितम् ।

१४०   रत्नावली ( बौद्धदर्शनस्य )

ल—

१४१ लं० अ० सू०   लङ्कावतारसूत्रम, स० आर्थर प्रावस्थैन, लन्दन प्र० १९२३ ई० ।

१४२ ल० वि०   ललितविस्तर, मिथिला प्र० १९५८ ई० ।

१६३-श० लि० ध० सू० शङ्खलिखितधर्मसूत्रम्, भण्डारकरइन्स्टीच्यूट, पूना प्र० १९२६ ई० ।

१६४ श. दू. शतदूषणी

१६५ शतपथब्राह्मणम्– श्रीहरिस्वामिव्याख्यासहितम् ।

१६६ श. सा. शतसाहस्रिका

१६७ श. श्लो. शतश्लोकी ।

शब्दकौस्तुभम् ।

१६८ शा० मा० शाबरमास्यम्

१६९ शारीरकमीमांसाभाष्यवार्तिकम्–प्रका० आशुतोष सं. ग्रन्थमाला कलकत्ता ।

१७० शा. दी शास्त्रदीपिका ।

१७१ शिक्षासमुच्चय ।

१७२ शिवदृष्टिः ।

१७३ शिवार्कमणिदीपिका ।

१७४ शुक्सम्प्रदायसर्वेक्षणम् ( मराठीभाषायाम् ) ले. प्रा. एच. वी. भिडे, भारतेतिहाससंशोधनमण्डलम्, त्रैमा. प मा. ३३ ।

१७५ शुक्रनीति ।

१७६ श्रु. सा. स. श्रुतिसारसमुद्धरणम्–श्रीतोटकाचार्यविरचितम् ।

१७७ श्रीविद्यार्णव ।

१७८ श्वे. उ. श्वेताश्वतरोपनिषद् ।

१७९ श्लो वा. श्लोकवार्तिकम् ।

१८० शै. द वि. शैवदर्शनबिन्दु – श्रीकान्तिचन्द्रपाण्डेयः ।

१८७ सा. पा — साम्यकारिका।
१८८ सि बि. — सिद्धान्तबिन्दु – न्यायरत्नावलीटीकासहितः।
१८९ सि ले स. — सिद्धान्तलेशसङ्ग्रह, बनारस १९१६ ई० प्रका.।
१९० सि. सि. — सिद्धान्तसिद्धाञ्जनम्।
१९१ सि. त्र. — सिद्धित्रयम्, श्रीरामशास्त्रिटिप्पणीसहितम्।
१९२ — सुत्तनिपात, महाबोधि सारनाथ, काशी प्रका. १९५१ ई.
१९३ सू. सं. — सूतसंहिता स्कन्दपुराणान्तर्गता तात्पर्यटीकासहिता।
१९४ स्फो सि. — स्फोटसिद्धिः।

ह

१९५ — हर्षचरितम्, प्र श्रीजीवानन्द, कलकत्ता प्र०।
१९६ — हस्तामलकम्।
१९७ — हिस्ट्री आफ इण्डियन फिलासफी दासगुप्तः।

## सहायकपत्रिकाणां सूची

१ जर्नल आफ आल इण्डिया ओरियण्टल कान्फेन्स।
२. इण्डियन हिस्टोरिकल क्वाटर्ली।
३. जर्नल आफ दी अमेरिकन ओरियण्टल सोसाइटी।
४ जर्नल आफ दी रायल एसियाटिक सोसाइटी।
५ जर्नल आफ ओरियण्टल रिसर्च मद्रास।
६ न्या कामोमोरेशन।
७ दी इण्डियन इन्टीक्वारी।
८. जर्नल आफ भण्डारकर ओरियण्डल रिसर्च इस्टीट्यूट, पूना।
९. जर्नल बाम्बे ब्राच रायल एसियाटिक सोसाइटी।
१०. सारस्वती सुषमा, प्र वाराणसेय-संस्कृत-विश्वविद्यालय।